# पुराणसारस्य विषयदर्शिनी

— ० —

## अध्यायः—३



## अध्यायः—४

अध्यायः—५

## अध्यायः–६



## अध्यायः–७

## अध्यायः–८

### वैश्यधर्मनिरूपणम्



## अध्यायः–९

## अध्यायः–१०

## अध्यायः—११



## अध्यायः—१२

## अध्यायः–१३



## अध्यायः–१४

अध्यायः—१५

## अध्यायः—१६



## अध्यायः—१७

अध्यायः–१८



अध्यायः–१९



अध्यायः–२०

अध्यायः—३१



अध्यायः—३२

## अध्यायः-२३



## अध्यायः-२४

अध्यायः-२५

## अध्यायः—२६



## अध्यायः—२७

## अध्यायः—२८



## अध्यायः—२९

## अध्यायः–३०



## अध्यायः–३१

## अध्यायः–३२



## अध्यायः–३३

## अध्यायः—३४



## अध्यायः—३५

## अध्यायः—३६



## अध्यायः—३७

## अध्यायः–३८



## अध्यायः–३९

## अध्यायः—४०

## अध्यायः—४१

## अध्यायः-४२



## अध्यायः-४३

## अध्याय:–४४



## अध्याय:–४५

## अध्यायः–४६



## अध्यायः–४७



## अध्यायः–४८

## अध्यायः—४९



## अध्यायः—५०

## अध्यायः—५१



## अध्यायः—५२

## अध्यायः–५३

## अध्यायः-५४

## अध्यायः-५५



## अध्यायः-५६

## अध्यायः–५७



## अध्यायः–५८



## अध्यायः–५९



## अध्यायः–६०

## अध्यायः–६१

अध्यायः–६२



अध्यायः–६३

## अध्यायः-६४



## अध्यायः-६५



## अध्यायः-६६



## अध्यायः-६७



## अध्यायः-६८



## अध्यायः-६९

## अध्यायः–७०



## अध्यायः–७१

## अध्यायः–७२

## अध्यायः–७३



## अध्यायः–७४

## अध्यायः-७५



## अध्यायः-७६

## अध्यायः-७७



## अध्यायः-७८

अध्यायः-७९



अध्यायः-८०

अध्यायः-८१



अध्यायः-८२



अध्यायः-८३



अध्यायः-८४





श्री विद्यारण्यविरचितः

# पुराणसारः

# PURĀṆASĀRA

OF

Śrī VIDYĀRAṆYA

श्रीः

श्रीविद्यारण्यविरचितः

# पुराणसारः

## प्रथमोऽध्यायः

[ देवतास्तुतिप्रकरणम् ]

–०–

### गणेशस्तुतिः

*वागीशाद्यास्सुमनसस्सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम् ॥ १ ॥

यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथान्ये ।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनायकाय ॥ २ ॥

### सरस्वतीस्तुतिः

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
या सा कुन्देन्दुशङ्खस्फटिकपुटनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ ३ ॥

### व्यासस्तुतिः

तं वेदशास्त्रपरिनिष्ठितशुद्धबुद्धिं
चर्माम्बरं सुरमुनीन्द्रनुतं कवीन्द्रम् ।
कृष्णत्विषं कनकपिङ्गजटाकलापं
व्यासं नमामि शिरसा तिलकं द्विजानाम् ॥ ४ ॥

---

* प्रायेण विद्यारण्यस्य कृतिषु श्लोकोऽयमादावुपलभ्यते ।

[1]व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ ५ ॥

## शिवस्तुतिः

नमश्शिवाय साम्बाय ससुतायादिहेतवे[2] ।
[3]पञ्चावरणरूपाय प्रपञ्चेनावृताय ते ॥ ६ ॥

## विष्णुस्तुतिः

[4]शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ७ ॥

## नैमिशीयानामृषीणां सूतसन्निधौ पुराणजिज्ञासा

वर्तमाने समृद्ध्यर्थे सत्रे द्वादशवार्षिके ।
समासीनानभ्यगच्छद्ब्रह्मर्षीन् संशितव्रतान् ॥ ८ ॥

विनयावनतो भूत्वा कदाचिद्रोमहर्षणः ।
तमाश्रममनुप्राप्तं जटावल्कलधारिणम् ॥ ९ ॥

भस्मोद्धूलितसर्वाङ्गं त्रिपुण्ड्राङ्कितमस्तकम् ।
रुद्राक्षमालाभरणं जटामण्डलमण्डितम् ॥ १० ॥

सर्वशास्त्रार्थतत्त्वज्ञं सर्वभूतहिते रतम् ।
जितेन्द्रियं जितक्रोधं जीवन्मुक्तं जगद्गुरुम् ॥ ११ ॥

---

[1] अत्रैवं परम्परा→ब्रह्मा, वसिष्ठः, शक्तिः, पराशरः, व्यासः, (कृष्णद्वैपायनः) शुकः इति । [2] सेतवे (क)

[3] आवृत्तिरङ्गैराद्या हृल्लेखाद्याभिरनु वृषाद्यैश्च ।
मात्राशेषैरुक्तं पञ्चावरणं विधानमीशस्य ॥ प्रपञ्चसारः पटलः, २६ श्लो ६९

[4] श्लोकोऽयं गणेशपरतयापि पौराणिकैः पठ्यते ।
एतत् स्तुतिप्रकरणं 'ग' 'च' मातृकयोर्न दृश्यते ॥

व्यासप्रसादसम्पन्नं व्यासवद्विगतस्पृहम् ।
[1]वेदवेदाङ्गतत्त्वज्ञं पुराणार्थप्रवर्तकम् ॥ १२ ॥

नैमिशीया महात्मानो महा[2]भक्तिसमन्विताः ।
विष्णुविद्धो विशालाक्षो वत्सः [3]कुण्डिनपूरणः ॥ १३ ॥

जाबालो जमदग्निश्च भारद्वाजोऽथ गौतमः ।
उद्दालकश्शौनकश्च कौशिको भार्गवस्तथा ॥ १४ ॥

श्वेतबाहुर्महाप्राज्ञः श्वेताश्वतरसंज्ञकः ।
[4]येषां शिष्याः प्रशिष्याश्च [5]पाशविच्छेदने रताः ।
चित्राः श्रोतुं कथास्तत्र परिवव्रुः[6] समन्ततः । ॥ १५ ॥

अभिवाद्य मुनींस्तांस्तु सर्वानेव कृताञ्जलिः ।
[7]अपृच्छत्स तपोवृद्धिं ऋषिभिश्चाभिनन्दितः ॥ १६ ॥

अथ तेषूपविष्टेषु सर्वेष्वेव तपस्विषु ।
निर्दिष्टमासनं भेजे विनयाद्रोमहर्षणः ॥ १७ ॥

सुखासीनं ततस्तन्तु विश्रान्तमुपलक्ष्य च
[8]पुराणसंहितां पुण्यां पप्रच्छुः पुण्यगौरवात् ॥ ॥ १८ ॥

## ऋषिकृतसूतप्रशंसनम्

ऋषय ऊचुः ।
भवता भगवान् व्यासः सर्वज्ञः करुणानिधिः ॥ १९ ॥

---

[5] पाशः संसारबन्धनम् ।

[8] कूर्मपुराणस्यारम्भक्रमोऽप्येवमेव दृश्यते । कर्त्रात्र कूर्मपुराणमादृतं स्यात् ।

---

[1] वेदमार्गे सदा निष्ठं वेदमार्गप्रवर्तकम् (घ) [2] शक्ति (घ.च) [3] कुण्डिनजारुणिः (घ) कुण्डिन आरुणिः (च) [4] एषां (क,ग,घ) [6] समन्विताः (घ) [7] अपृच्छत्तत् (क)

इतिहासपुराणार्थं पुरा सम्यगुपासितः ।
तस्य ते सर्वरोमाणि तपसा हर्षितानि यत् ॥ २० ॥

द्वैपायनस्तु [1]भगवानतो वै रोमहर्षण[म्] ।
[3]भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः ॥ २१ ॥

मुनीनां संहितां वक्तुं सूतः पौराणिकीं पुरा ।
त्वं हि स्वायम्भुवे यज्ञे [4]सुत्याहे वितते सति ॥ २२ ॥

सम्भूतस्संहितां वक्तुं सूतः पौराणिकीं कथाम् ।
वक्तुमर्हसि वास्माकं पुराणार्थविशारद ॥ २३ ॥

मुनीनां वचनं श्रुत्वा सूतः पौराणिकोत्तमः ।
वक्तुमारभते[5] देवं नमस्कृत्य पिनाकिनम् ॥ २४ ॥

## सूतकृतदेवर्षिस्तोत्रम्

ओं नमोऽहंपदार्थाय [6]नमोऽहन्तास्वरूपिणे ।
भासकाय [7]समस्तस्य भवाय [8]भवहारिणे ॥ २५ ॥

नमो हिरण्यगर्भाय हरये शङ्कराय च ।
सरस्वत्यै नमो नित्यं विघ्नेशाय नमो नमः ॥ २६ ॥

पाराशर्यं परमपुरुषं विश्ववेदैकयोनिं
विश्वाधारं [9]विमलमतिदं [10]वेदवेदान्तवेद्यम् ।
शश्वच्छान्तं शमनविषयं शुद्धबुद्धिं विशालं
वेदव्यासं विमलयशसं सर्वदाहं नमामि ॥ २७ ॥

---

[4] यज्ञियाहोविशेषः सुत्याहः ।

---

[1] भगवांस्ततो (क,ग) [2] णः (क,ख,ग,घ,च) [3] भवन्तं भगवान् व्यास आजहार(ग)
[5] तेषां (च) [6] परहन्ता (घ,च) [7] नमस्तस्मै (घ) [8] भयहारिणे (क ख ग)
[9] विमलमनसं (ग) [10] वेदवेदाङ्ग

एवं देवान्नमस्कृत्य सूतः पौराणिकोत्तमः ।
अष्टादश पुराणानि तथान्यानि च सोऽब्रवीत् ॥ २८ ॥

## पुराणलक्षणम्

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥ २९ ॥

## महापुराणनामानि

ब्राह्मं पुराणं प्रथमं पाद्मं वैष्णवमेव च ।
शैवं भागवतञ्चैव भविष्यं नारदीयकम् । ॥ ३० ॥
मार्कण्डेयमथाग्नेयं [1]ब्रह्मकैवर्तमेव च ।
लैङ्गं तथा च वाराहं स्कान्दं वामनमेव च ॥ ३१ ॥
कौर्मं मात्स्यं गारुडञ्च ब्रह्माण्डं तदनन्तरम् ।

## उपपुराणनामानि

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ॥ ३२ ॥
आद्यं सनत्कुमारोक्तं नारसिंहं ततः[2] परम् ।
[3]स्कन्दसंज्ञं कुमारेण कथितं तदनन्तरम् ॥ ३३ ॥
चतुर्थं शिवधर्माख्यं पुराणं नन्दिनेरितम् ।
ततो दुर्वाससा प्रोक्तं नारदीयं ततः परम् ॥ ३४ ॥
कापिलं [4]वामनञ्चैव तथैवोशनसेरितम् ।
ब्रह्माण्डञ्च ततः पुण्यं वारुणाख्यं ततः परम् ॥ ३५ ॥

---

[1] कूर्मादिषु पुराणेषु ब्रह्मवैवर्त्तमिति प्रसिद्धमेतत् ।

[2] तथापरम् (क) [3] नान्दी (ख घ च) [4] मानव (घ च)

ततः कालीपुराणाख्यं कालकण्ठञ्च नामतः ।
ततो वासिष्ठलैङ्गाख्यं नाम्ना माहेश्वरस्य च ॥ ३६ ॥

ततस्साम्बपुराणाख्यं सुसूक्ष्ममिति चेरितम् ।
ततस्सौरपुराणाख्यं [1]सावित्रमिति चेरितम् ॥ ३७ ॥

पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ।
महाभारतयुक्तानि सेतिहासानि कृत्स्नशः ।
मुनीनां कथयामास सर्वेषां रोमहर्षणः ॥ ३८ ॥

## पुराणप्रामाण्यकथनम्

सूत उवाच —

वेदाः प्रमाणं प्रथमं त एव च ततः परम् ।
स्मृतयश्च पुराणानि भारतं मुनिपुङ्गवाः ॥ ३९ ॥

[2]पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ ४० ॥

पुराणमेकमेवासीत्तस्मिन्कल्पान्तरेऽनघाः ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ ४१ ॥

कालेनाग्रहणं दृष्ट्वा पुराणस्य महत्तया ।
चतुर्लक्षेण संक्षिप्तं व्यासेन द्वापरान्तरे ॥ ४२ ॥

## प्रतियुगं व्यासेन वेदभागकरणं पुराणनिर्मितिश्च

शृण्वन्तु मुनयः कल्पे ह्यस्मिन्वाराहसंज्ञिके ।
द्वापरे प्रथमे व्यासो मनुः स्वायम्भुवस्ततः

---

[2] मत्स्यपुराणस्य ५७ तमाध्यायस्य सङ्ग्रहः ।

---

[1] सवित्र (घ)

[1]बिभेद बहुधा वेदान् नियोगाद्ब्रह्मणः प्रभोः ॥ ४३ ॥

द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ।
तृतीये चोशना व्यासश्चतुर्थे च बृहस्पतिः ॥ ४४ ॥

सविता पञ्चमे व्यासः षष्ठे मृत्युः प्रकीर्तितः ।
सप्तमे तु तथैवेन्द्रो वसिष्ठश्चाष्टमे मतः ॥ ४५ ॥

सारस्वतश्च नवमे त्रिधामा दशमे मतः ।
एकादशे तु वृषभः शततेजास्ततः परम् ॥ ४६ ॥

त्रयोदशे तथा धर्मस्तरक्षुस्तु चतुर्दशे ।
त्र्य्यारुणिः पञ्चदशे षोडशे तु धनञ्जयः ॥ ४७ ॥

सप्तदशे क्षेमकरो ह्यष्टादश [2]ऋतञ्जयः ।
ततो व्यासो भरद्वाजस्तस्मादूर्ध्वन्तु गौतमः ॥ ४८ ॥

वाचश्रवाश्चैकविंशे [3]सोमश्शुष्मायणः परः ।
तृणबिन्दुस्त्रयोविंशे वाल्मीकिस्तत्परः स्मृतः ॥ ४९ ॥

पञ्चविंशे तथा शक्तिः षड्विंशे तु पराशरः ।
सप्तविंशे तथा व्यासो जातूकर्ण्यो महामुनिः ॥ ५० ॥

अष्टाविंशे पुनः प्राप्ते [4]तस्मिन्वै द्वापरे [5]द्विजाः ।
पराशरसुतो व्यासः कृष्णद्वैपायनोऽ[6]भवत्
स एव सर्ववेदानां पुराणानां प्रदर्शकः । ॥ ५१ ॥

## पुराणनिर्मितेरुद्देशः श्लोकसंख्यानिरूपणञ्च

पुराणमखिलार्थानां बोधकं श्रुतिसम्मितम्

---

[1] कूर्मपुराणे पूर्वार्द्धस्य ५२ तमाध्यायस्य सङ्ग्रहः ।

[2] ऋतुञ्जडः(क) [3] सोमशु (घ) [4] ह्यासन् (क ख घ) [5] प्रजाः(क) [6] महान् (क ग घ)

[1]अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ।
तदर्थोऽपि चतुर्लक्षः संक्षेपेण निगद्यते ॥ ५२ ॥
तदष्टादशधा कृत्वा भूलोकेऽस्मिन्प्रकाशितम् ।
मानतस्तानि वक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ॥ ५३ ॥
ब्रह्मणाभिहितं पूर्वं यावन्मात्रं मरीचये ।
ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्तितम् ॥ ५४ ॥
एवमेव च वै [2]पाद्ममभूद्धैरण्मयं जगत् ।
तद्वृत्तान्ताश्रयं तद्वत्पाद्ममित्युच्यते बुधैः
[3]पाद्मं च पञ्चपञ्चाशत्सहस्राणि निगद्यते । ॥ ५५ ॥
वाराहकल्पवृत्तान्तमधिकृत्य पराशरः
यान्प्राह धर्मानखिलान् तदुक्तं वैष्णवं विदुः ।
[4]विष्णवाख्यमष्टसाहस्रं तत्पुराणं विदुर्बुधाः ॥ ५६ ॥
श्वेतकल्पप्रसङ्गेन धर्मान्वायुरिहाब्रवीत् ।
यत्र [5]तद्वायवीयं स्याद्रुद्रमाहात्म्यमुच्यते
चतुर्विंशत्सहस्राणि पुराणं तदिहोच्यते । ॥ ५७ ॥
[5]यत्राधिकृत्य गायत्रीं वक्ष्यते धर्मविस्तरः

---

[1] मत्स्यपुराणात् संगृहीतोऽयं भागः अध्यायः ५३

[5] चतुर्थं शिवपुराणमिति बहुत्र पुराणेषु पाठः । नारदमत्स्यपुराणयोः वायु-पुराणमिति पाठः । ग्रन्थकर्त्राऽत्र मत्स्यपुराणपाठः गृहीतः स्यात् ।

[5] इदं लक्षणं देवीभागवते समन्वितं भवति । परन्तु महापुराणेषु तस्य गणना नादृता ।

---

[2] पाद्ममत्रद्धैरामयं (क) [3] अस्मात् श्लोकादारभ्य 72½ श्लोकपर्यन्तं पाठः क ग मातृकयोर्नास्ति । [4] ख्यं षष्ट (ख घ)

वृत्रासुरवधोपेतं तद्भागवतमुच्यते ।
[1]सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ॥ ५८ ॥

तद्वृत्तान्तोद्भवं यत्तद्भागवतमुच्यते ।
द्वादशैव सहस्राणि पुराणं तत्प्रकीर्तितम् ॥ ५९ ॥

शतानीकेन पृष्टेन व्यासशिष्येण धीमता ।
सौरधर्मास्तु यत्रैव व्याख्यातास्तु सुमन्तुना
अष्टादशसहस्राणि भविष्याख्यं तदुच्यते । ॥ ६० ॥

यत्राह नारदो धर्मान् बृहत्कल्पाश्रयांस्त्विह
चतुर्विंशत्सहस्राणि नारदीयं तदुच्यते । ॥ ६१ ॥

यत्राधिकृत्य शकुनीन् धर्माधर्मविचारणा
तद्द्वात्रिंशत्सहस्राणि मार्कण्डेयमिहोच्यते । ॥ ६२ ॥

यत्तदग्न्युद्भवञ्चेदं जगत्स्थावरजङ्गमम्
चयनानां समुत्पत्तिमिष्टकाचयनं तथा ।
अधिकृत्य प्रवृत्तञ्च क्रतुसंख्यादिकं तथा ॥ ६३ ॥

वसिष्ठस्याग्निना प्रोक्तमाग्नेयं तत्प्रचक्षते ।
आग्नेयञ्चाष्टसाहस्रं सर्वक्रतुफलप्रदम् ॥ ६४ ॥

यत्र वै वैष्णवा धर्मा वसिष्ठेन महात्मना ।
अम्बरीषस्य वै प्रोक्ताः सर्गो ब्राह्मस्तथैव च
प्रोच्यते ब्रह्मकैवर्तं तद्द्वादशसहस्रकम् । ॥ ६५ ॥

यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च

---

[1] इदं लक्षणं कृष्णचरितनिरूपके भागवते समन्वितं भवति । महापुराणेषु तस्यान्तर्भावः बहुत्र दृश्यते । अत्र द्वयोर्लक्षणयोर्निवेशेन ग्रन्थकृता महापुराणेषु कस्य भागवतस्य ग्रहणं कृतमिति प्रश्नः विद्वत्स्वेव निहितः ।

कल्पितं लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ।
तदेकादशसाहस्रमाख्यातं मुनिपुङ्गवाः ॥ ६६ ॥

वामनस्य प्रसङ्गेन कल्पस्य मुनिपुङ्गवाः ।
महावराहस्य पुनर्माहात्म्यमधिकृत्य च ॥ ६७ ॥

विष्णुनाभिहितं क्षौण्यै तद्वाराहमिहोच्यते ।
चतुर्विंशत्सहस्रं च तपुत्राणमिहोच्यते ॥ ६८ ॥

यत्र माहेश्वरं धर्ममधिकृत्य च षण्मुखः ।
कल्पे [1]तत्पुरुषे वृत्ते चरितैरुपबृंहितम् ॥ ६९ ॥

स्कान्दं नाम पुराणं तु निर्ममे तत्त्रयोदशम् ।
सहस्राणां शतञ्चैकमिति मर्त्येषु कीर्त्यते ॥ ७० ॥

त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ।
त्रिवर्गञ्च त्रिदैवत्यं वामनं तु प्रकीर्त्यते ॥ ७१ ॥

चतुर्दशसहस्रं च ख्यातं कल्पानुगं शिवम् ।
यत्र धर्मार्थकामानां मोक्षस्य च रसातले ॥ ७२ ॥

माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ।
इन्द्रद्युम्नप्रसङ्गेन ऋषिभ्यश्शक्रसन्निधौ
तत्कौर्मं षट्सहस्रं च लक्ष्मीकल्पानुषङ्गिकम् । ॥ ७३ ॥

श्रुतीनां यत्र कल्पादौ प्रवृत्यर्थं जनार्दनः
मत्स्यरूपी च मनवे नरसिंहोपवर्णितम् । ॥ ७४ ॥

अधिकृत्याब्रवीत्सप्तकल्पवृत्तं च [2]सुव्रताः
तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश । ॥ ७५ ॥

यदा तु गारुडे कल्पे विश्वाण्डं गरुडोद्भवम्

---

[1] तत्पुरुषैर्वृत्तैः (ख घ) [2] संव्रतम् (क) सुव्रतम् (ग)

अधिकृत्याब्रवीद्विष्णुः गारुडं तदिहोच्यते ।
तत्तु षोडशसाहस्रं पुराणं परिपठ्यते ॥ ७६ ॥
ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत्पुनः ।
तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ॥ ७७ ॥
भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः ।
चतुर्लक्षमिदं प्रोक्तं व्यासेनाद्भुतकर्मणा ।
इदं लोकहितार्थाय संक्षिप्तं परमर्षिणा ॥ ७८ ॥

### महाभारत-रामायणयोः श्लोकसंख्यानिरूपणम्

[1]अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ।
भारताऽऽख्यानमखिलं चक्रे तदुपबृंहितम् ॥ ७९ ॥
[2]लक्षेणैव सपादेन [3]चेत्येतत्परिबृंहितम् ।
एवं सपादाः पञ्चैते लक्षाः पुण्याः प्रकीर्तिताः ॥ ८० ॥
वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमुत्तमम् ।
ब्रह्मणाभिहितं तच्च शतकोटिप्रविस्तरम् ॥ ८१ ॥
आहृत्य [4]नारदायैव तेन वाल्मीकये पुनः ।
वाल्मीकिना च लोकेषु प्रकाशितमनुत्तमम् ।
चतुर्विंशतिसाहस्रं धर्मकामार्थसाधनम् ॥ ८२ ॥
अन्यान्यपि मुनिश्रेष्ठाः शास्त्राणि सुबहून्यपि ।
[5]वेदाविरोधतस्सर्वे[6] प्रमाणं नान्यवर्त्मना ॥ ८३ ॥

---

[5] ब्रह्मणा नारदाय प्रोक्तम् । नारदेन वाल्मीकये इति ज्ञेयम् ।
[6] हे सर्वे मुनिश्रेष्ठाः इत्यन्वयः ।

---

[1] अष्टादशपुराणानां कर्ता (क) [2] लक्षणं च (क) [3] वेदे (क)
[4] सर्वे वेदाविरोधेन (ख घ च)

## पुराणप्रामाण्यकथनं तत्प्रशंसा च

यश्चतुर्वेदविद्विप्रः पुराणं [1]वेत्ति नार्थतः ।
तस्माच्च भयमाप्नोति वेदो मां प्रहरिष्यति[2] ॥ ८४ ॥

पुराणेनैव वेदार्थो [3]विशिष्टो ज्ञायते खलु ।
यश्च वेदविरुद्धोंऽशः पुराणेष्वखिलेषु च ।
तदंशस्तु परित्याज्यः सर्वथा सकलैरपि ॥ ८५ ॥

वेदविज्ञानलाभाय वेदानामुपबृंहितम् ।
पुराणमभ्यसेन्नित्यं ब्राह्मणो विगतस्पृहः ॥ ८६ ॥

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
[4]वेदव्यासादहं श्रुत्वा भवतां [5]पापनाशिनीम् ।
ऊचिवान्वै भवद्भिश्च [6]दातव्या धार्मिके जने ॥ ८७ ॥

यां श्रुत्वा पापकर्मापि [7]गच्छते परमां गतिम् ।
[8]न नास्तिके कथां पुण्यामिमां ब्रूयात्कदाचन ॥ ८८ ॥

## पुराणज्ञपरम्परानिरूपणम्

[9]ईशानः सर्वविद्यानां स एवादिगुरुर्बुधाः ।
तस्य शिष्यो महाविष्णुः सर्वज्ञानमहोदधिः ॥ ८९ ॥

तस्मादात्तपरिज्ञानो ब्रह्मा सर्वजगत्प्रभुः ।
सनत्कुमारो भगवान् ब्रह्मणः [10]श्रुतवेदनः ॥ ९० ॥

---

[2] अनर्थकरणेनायं अपुराणज्ञः मां घातयेदिति वेदपुरुषस्य भयम् । [4] इयं पुराणसंहितेत्यर्थः [7] आर्षमात्मनेपदम् । [10] श्रुतं वेदनं ज्ञानं अस्यास्तीति ।
[9] ईश्वर एव सकलशास्त्राणां स्रष्टेति ज्ञेयम् ।

---

[1] वेद (क) [3] विस्पष्टो (ख च) [4] वेदवादमहं (क) [5] पापनाशनम् (क)
[8] श्लोकार्धः (क घ) मातृकयोर्नास्ति ।

सनत्कुमारात्सर्वज्ञात्कृष्णद्वैपायनो मुनिः ।
अवाप्ताखिलविज्ञानः तस्मादेव श्रुतं मया ॥ ९१ ॥

मत्तो लब्धपरिज्ञाना यूयं सत्यपरायणाः ।
विदित्वैवं भवद्भिश्च दातव्या धार्मिके जने ॥ ९२ ॥

आयुष्मन्तः सर्व एव ब्रह्मभूता हि मे मताः ।
कृतकृत्याश्च शुचयः कृतजप्या हुताग्नयः ॥ ९३ ॥

भवन्त आसते [1]स्वस्था ब्रवीमि किमहं द्विजाः ।
इत्येवमुक्त्वा भगवान् सूतो वै विरराम ह ॥ ९४ ॥

इति श्रीमत्पुराणसारे [2]अष्टादशपुराणोपबृंहणं नाम
प्रथमोऽध्यायः ।

* * * *

---

[1] ऽत्रस्थाः (च) [2] पुराणोपवर्णनं (च)

## द्वितीयोऽध्यायः

### ( अद्वैतप्रतिपादनम् )

(पुराणानामेककर्तृकत्वे ऋषीणां सन्देहः)

[1]ऋषयः

सूत सूत महाप्राज्ञ वद नो वदतां वर ।
यत्तु पृच्छाम सन्देहास्त्वदुक्तेषु महामते ॥ १ ॥

अष्टादशपुराणानां कर्ता सत्यवतीसुतः ।
त्वयोक्तस्सर्ववेदज्ञो भारतस्यापि वै मुनिः ॥ २ ॥

प्रतिपाद्या भवेदेका देवता ह्येककर्तृके ।
दृश्यते मतभेदोऽत्र कथं तदनुवर्णय ॥ ३ ॥

[2]कथ्यते दशभिस्सूत पुराणैः परमेश्वरः ।
चतुर्भिर्भगवान्विष्णुः द्वाभ्यां ब्रह्मा जगत्पतिः ॥ ४ ॥

एकेनाग्निस्तथैकेन भगवांश्चण्डभास्करः ।
कस्य प्राधान्यमित्येवं तद्भवान्वक्तुमर्हति ॥ ५ ॥

सर्वे चेज्जगदीशाः स्युः कथं सृष्टिः प्रवर्तते ।
परस्परविरोधेन भिन्ना [3]सृष्टिर्न किं भवेत् ॥ ६ ॥

दृश्यते ह्येकरूपेण जगच्चक्रं महामते ।
वेत्सि त्वं तत्त्वतः कृत्स्नं व्यासस्य मतमुत्तमम् ॥ ७ ॥

---

[2] शिव–भविष्य-मार्कण्डेय–लिङ्ग-वाराह–स्कन्द–मत्स्य–कूर्म–वामन-ब्रह्माण्डेषु परमेश्वरपारम्यम् । विष्णु-भागवत–नारद-गरुडेषु विष्णुपारम्यम् । ब्रह्म-पद्मयोः ब्रह्मपारम्यम् । अग्निपुराणे अग्निपारम्यम् । ब्रह्मवैवर्ते सूर्यपारम्यम् ।

---

[1] क, ख, घ मातृकासु नास्ति । [3] सृष्टिः कथं (क)

ब्रूयुरात्तस्य शिष्यस्य [1]गुह्यं वा गुरवः स्फुटम् ।
[2]भारद्वाजो [3]महास्त्राणां रहस्यं च किरीटिने ॥ ८ ॥
प्रोक्तवान्न तथा [4]तस्मै पुत्रायामिततेजसे ।
तस्मात्प्रब्रूहि नस्तत्वं सन्देहार्थनिवृत्तये ॥ ९ ॥
इति तेषां वचः श्रुत्वा प्रतिनंद्य महामतिः ।
प्रत्युवाच ऋषीन्[5] विप्राः शृणुध्वमिति सादरम् ॥ १० ॥
भवद्भिर्विदितं सर्वं बुद्धिमद्भिर्महात्मभिः ।
तथापि पृष्टः प्रब्रूयां व्यासस्य वचनं यथा ॥ ११ ॥

## वेदस्य धर्मज्ञानहेतुत्वप्रतिपादनम्

सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम् ।
वेदो हि निष्ठा सर्वस्य यद्यदस्ति न चास्ति च[6] ॥ १२ ॥
नान्यतो ज्ञायते धर्मो वेदादेवैष निर्बभौ ।
तस्मात्सर्वप्रयत्नेन धर्मार्थी वेदमाश्रयेत् ॥ १३ ॥
[7]अवाच्य एव वेदार्थस्सर्वथा[8] सर्वचेतनैः ।
तथापि वक्ष्ये युष्माकं भक्तानां शृणुतादरात् ॥ १४ ॥

## नामभेदे सत्यपि देवतैक्यप्रतिपादनम्

एक एव परो ह्यात्मा वेदेषु प्रतिपाद्यते ।
पुराणेष्वपि शास्त्रेषु स एव कथितो बुधैः ॥ १५ ॥

---

[2] भरद्वाजपुत्रो द्रोणः । स च घृताचीदर्शनात् स्खलितरेतसः भरद्वाजस्यर्षेः पुत्रः । द्रोणकलशे रेतोनिधापनात्तत्रोत्पन्नः । तस्य शिष्येषु प्रधानोऽर्जुनः । पुत्रोऽश्वत्थामा । [6]. लोके यदस्ति तद्वेदेऽस्ति । अत्र यन्नास्ति तल्लोके नास्ति

---

[1] गुरवो गुह्यमप्युत (क ग) [3] यथाह्यस्त्र (च) [4] तस्य (ख) [5] विप्रान् (क ग)
[7] अवार्य [ख घ] स वाच्य [क] [8] दा [क]

आत्मसंज्ञः शिवः शुद्धः एक एवाद्वयस्सदा[1] ।
समो [2]वाप्यधिको [3]वापि प्रकाशात्मा प्रकाशते ॥ १६ ॥
[4]स्वयमेव न मानेन वागादीनामगोचरः ।
अप्राप्य यं निवर्तन्ते वाचो वै मनसा सह ॥ १७ ॥
आनन्दमिति [5]यं प्राहुः स कदा केन दृश्यते ।
यद्भासा भासितस्सूर्यः सर्वं भासयति[6] स्वयम् ।
चन्द्रोऽग्निश्च ग्रहाश्चान्ये भासयन्ति ततस्ततः* ॥ १८ ॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो [7]निर्गुणश्च ॥
एकस्य नामभेदेन रूपभेदोऽत्र[8] कथ्यते ।

## परमात्मनः स्वेच्छाकृतसृष्टिनिरूपणम्

अग्रे सर्वमिदं विप्रा आसीत्तन्मात्रमास्तिकाः ।
ततो नाऽन्यन्निमषत्किञ्चित्स पुनः कालपाकतः ॥ २० ॥
प्राणिनां कर्मसंस्कारात्स्वशक्तिगतसत्वतः ।
स[9] ऐक्षत जगत्सर्वं सृजेयमिति सर्वगः ॥ २१ ॥
स पुनस्सकलानेतान् लोकानात्मीयशक्तितः ।
यथापूर्वक्रमेणैव पुरा ह्यसृजत प्रभुः ॥ २२ ॥
अचेतनं जगत्सर्वं यश्चेतयति चेतनः ।
सर्वस्य सर्वभूतानामन्तरात्मा परः पुमान् ॥ २३ ॥
देहेन्द्रियमनोबुद्धिप्राणानामन्तरात्मनि ।
संस्थिते कर्मणां तेषामध्यक्षोऽपि निरञ्जनः ॥ २४ ॥

---

* मानः प्रमाणम् । चन्द्रादयो जगद्भासयन्ति तत एवाप्तभासः ।

---

[1] स्तथा (ख घ च) [2,3] ना (च) [4] स्वयमेवानु (च) [5] यत् (क) [6] ते (क)
[7] ज्ञप्तिमात्रः (च) [8] स्य (ख घ) [9] ईक्षत (क ग)

[1]फलदाता विभज्यैभ्यो जीवेभ्यः परमेश्वरः ।
असाङ्कर्येण विप्रेन्द्राः पुण्यापुण्यविवेचनः ॥ २५ ॥

### परमात्मनः सर्वभूताश्रयत्वनिरूपणम्

सर्वाणि यस्मिन्भूतानि निवसन्ति [2]यथात्मनि ।
अम्बरे वायुवत्तेन सर्वभूताश्रयः परः ॥ २६ ॥

[3]ईक्षते सर्वभूतानां शुभाशुभमशेषतः ।
निवारयति नैवैतदुदासीनोऽ[4]पि चेष्टितम् ।
सदा चेतनरूपत्वात्साक्षित्व[5]मुपपद्यते ॥ २७ ॥

स्वमायया विसृष्टेषु ब्रह्मान्तस्थावरादिषु ।
अन्तः प्रविष्टो नाभाति गूढोऽग्निरिव दारुणि[6] ॥ २८ ॥

कल्पयन्ति विशुद्धस्य केवलस्यागुणस्य हि ।
नित्यशुद्धाद्वयानन्दबोधैकरसविग्रहम् ।

### एकस्यैव परमात्मनः रूपबहुत्वनिरूपणम्

एकं [7]सद्बहुधा विप्रा वदन्त्यग्न्यादिभेदतः ॥ २९ ॥

तं हरं केचिदिच्छन्ति केचिद्विष्णुं द्विजोत्तमाः[8] ।
ब्रह्माणं केचिदिच्छन्ति केचिदिन्द्राग्निदेवताः[9] ॥ ३० ॥

केचित्प्रधानं त्रिगुणं स्वतन्त्रं केवलं जडम् ।
अणूंश्च केचिदिच्छन्ति शब्दं केचन मोहिताः ॥ ३१ ॥

---

[6] दारुणि वृक्षे इति । औचित्याच्छमीवृक्ष इति ज्ञेयम् ।

---

[1] फलदानं (क) [2] तथा (ख च) [3] ईहते (ख) [4] विचेष्टितः (ख) [5] मुपयुज्यते (ख) चारतः (क ग घ) [7] बहुत्रिधा (ख) [8] इदं लोकहितार्थाय संक्षिप्तं परमर्षिणा इति (ख घ) मातृकयोरधिकः पाठः अत्र । [9] देवताम् (ख)

## भ्रान्तचेतसां सोपानक्रमतः वेदप्राप्तिनिरूपणम्

क्षणप्रध्वंसि विज्ञानं केचन भ्रान्तचेतसः ।
शून्यसंज्ञं द्विजाः केचिन्निरूपाख्यं विमोहिताः ॥ ३२ ॥

केचिद्भूतानि नेच्छन्ति न सर्गं केचन भ्रमात् ।
तत्र तत्रैव तर्कांश्च प्रवदन्ति यथाबलम् ॥ ३३ ॥

वेदान्तेषु च सर्वेषु ज्ञानानन्दात्मको मतः ।
सर्वे वेदाः श्रुतिस्मृत्योर्विरोध इति मे [या] मतिः ॥ ३४ ॥

पापिष्ठानां तु जन्तूनां तत्र तत्र द्विजर्षभाः ।
[1]प्राक्संस्कारवशादेव [2]जायते रुचिरास्तिकाः ॥ ३५ ॥

तेषां वै (ये) यानि कर्माणि प्राक् सृष्ट्या प्रतिपेदिरे ।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥ ३६ ॥

हिंस्राहिंस्रे मृदुक्रूरे [3]धर्माधर्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ ३७ ॥

[4]कर्मजालविपाकेन श्रद्धया पूतयापि च ।
पुरातनेन पुण्येन [5]देवानाञ्च प्रसादतः ॥ ३८ ॥

कालेन महता विप्राः सोपानक्रमतः पुनः ।
[6]तेऽपि वेदमिमं पुण्यं प्राप्नुवन्ति चिरन्तनम् ॥ ३९ ॥

---

[1] सृष्टिनिरूपणावसरे पुराणान्तरेषु नरकिन्नरादीनां कर्माणि प्राक्संस्कारानुगतानीति दृश्यते । अत्र प्रसङ्गवशादयमंशः संयोजित इति भाति । (विष्णुपुराणं–प्रथमांशे ५ अध्यायः । कूर्मपुराणं–पूर्वार्धे ७ अध्यायः ।)

[6] पापिनो जन्तव इति ज्ञेयम् ।

---

[1] जायन्ते (ख च) [3] धर्माधर्मे ऋतानृते (क) धर्माधर्मनृतानृते (च) [4] कर्मकाल (क ग घ च) [5] वेदानां (क ग)

## स्वेच्छया परमात्मकृतमहदादिसृष्टिक्रमवर्णनम्

[1]स ईक्षतैको बहुधा भवेयं
ततो जनिष्ये बहुरूपरूपः ।
इत्यात्ममायां [2]त्रिगुणां स्वशक्त्या
मायाऽऽख्यया सौ सह संविवेश ॥ ४० ॥

पुमांसमेनं प्रवदन्ति जीवं
क्षेत्रज्ञमित्याद्युपधानभेदैः ।
स कालमायागुणकर्मशक्तिः
ससर्ज तत्त्वं महदाख्यमीशः ॥ ४१ ॥

तस्मादहङ्कार इति प्रसिद्धं
तत्त्वं तृतीयं [3]त्रिगुणं बभूव ।
सत्त्वं रजश्चाथ तमोगुणश्च
साम्येन तस्थौ सहितो [4]महाख्ये ॥ ४२ ॥

[5]तस्मादभूत्खं किल तामसांशात्
तच्छब्दसंज्ञेन गुणेन [6]युक्तम् ।
[7]तस्मादभू[8]त्स्पर्शगुणोऽथ वायुः
स्वकारणस्यापि गुणेन युक्तः ॥ ४३ ॥

---

[1] सन्धिरार्षः ।
[3] वैकारिकस्तैजसो भूतादिरिति त्रिविधः अहङ्कारः त्रिगुणः । [5] अहङ्कारादिति ज्ञेयम् । [7] तस्मादाकाशादित्यर्थः । 'आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह' इति कूर्मोक्तेः (कू. ४-२५ पूर्वार्धम्) ।

---

[1] संरक्षतैको (क) [2] त्रिगुणः (ग) [4] समाख्ये (ख ग) [6] जुष्टम् (क)
[12] सर्गगुणो (घ) त्स्वर्गगुणो (ग)

[1]शब्देन [2]तस्मादभवत्तथाग्निः
वायोः पराभ्यां स्वगुणेन युक्तः ।
[3]रूपेण विप्राः त्रिगुणात्तथाग्नेः
संजज्ञिरेऽम्भांसि परैस्त्रिभिश्च ॥ ४४ ॥

रसेन युक्तानि चतुर्गुणानि।
तेभ्यो मही गन्धगुणा च जज्ञे ।
परैर्गुणैः पञ्चगुणा मही स्यात्
शब्दादिकै[5]श्चापि दशेन्द्रियाणि ॥ ४५ ॥

संजज्ञिरे बुद्धियुतानि कर्म-
संज्ञानि तस्मादपि राजसांशात् ।
श्रोत्रं त्वगक्षिद्वयमत्र जिह्वा
घ्राणं च बुद्धीन्द्रिय[6]संज्ञकानि ॥ ४६ ॥

वाक्पाणिपादावथ गुह्यपायू
कर्मेन्द्रियाणीति मनोऽनुगानि ।
वदन्ति तेषां विषयाश्च[7] (शब्द
[स्पर्शौ तथा रूपरसौ च गन्धः][8] ॥ ४७ ॥

---

[1] शब्दाख्येन गुणेनेत्यर्थः । [2] वायोरिति। [3] स्वगुणेन अग्निगुणेन रूपेणेति ।
[4] नपुंसकमार्षम् । [8] ग मातृकां विहाय सर्वास्वपि स्पर्शस्यानिरूपितत्वात् तत्पाठः अपपाठः स्यात् । ग मातृकायां स्पर्शस्य सत्वेऽपि छन्दोभङ्गः दृश्यते ।

---

[4] श्चाथ (ग) [5] सञ्ज्ञितानि (क), सञ्ज्ञिकानि (च)
[6] पञ्च शब्दं तथा रूपमसौ च गन्धम् (कख घ) । [7] पञ्च शब्दस्पर्शं रूपरसौ च गन्धम् (ग) पञ्च शब्दं तथा रूपरसौ च गन्धम् (च) ।

बुद्धीन्द्रियाणामपि पञ्च, तद्वत्
कर्मेन्द्रियाणां वचनं तथैव ।
आदानगन्तव्यविसर्गसौख्यान्
वदन्ति [1]तेषां विषयाश्च पञ्च ॥ ४८ ॥

तथैव देवा दश सात्विकांशात्
संजज्ञिरे [2]दिक्पवनो रविश्च ।
अपाम्पतिश्चार्कभवौ च दस्रौ[3]
तथाग्निशक्रावथ विष्णुमित्रौ ॥ ४९ ॥

प्रजापतिश्चेति बभूवुरेव
तेभ्योऽभवद्धैममयं तथाण्डम् ।
तस्मादसावेव जगत्सिसृक्षुः
जज्ञेऽब्जयोनी रजसोपपन्नः ॥ ५० ॥

हिरण्यगर्भो भगवान् स उक्तः
चतुर्मुखः सर्वमिदं ससर्ज ।
चतुर्विधं भूतगणं स लोकान्
वेदांश्च साङ्गान् ससुरान् मनुष्यान् ॥ ५१ ॥

[4]सत्त्वोपपन्नः पुनरेव विष्णुः
सृष्टं च पात्यत्ति च रुद्ररूपः ।
तमः [5]प्रधानोऽथ विभीषणाख्यः
सर्वं जगत्तूलमिवाग्निरिद्धः ॥ ५२ ॥

---

[2] दिक्पवनः, दिगभिमानी पवनः । [3] नासत्यौ अश्विनीरूपिण्यां संज्ञायां सूर्यादुत्पन्नौ । अर्कभवाविति विशेषणं तयोः ।

---

[1] विप्राः (ख घ च) [4] सत्वोपपन्नं (क) [5] प्रधानोऽतिविभीषणाख्यः (घ)

सृष्ट्वा समस्तं पुनरात्मलीलः[1]
स्वात्मानुभूतिश्च [2]शयिष्यति स्म ।
बालस्य [3]चेष्टेव हि तस्य चेष्टां
महेश्वरस्याहुरिमां मुनीन्द्राः ॥ ५३ ॥

इति श्रीमत्पुराणसारे अद्वैतप्रतिपादनं नाम
द्वितीयोऽध्यायः

* * * *

---

1 लीनः (ख ग च) 2 नं शिष्यति स्म (क) 3 चेष्टं वि हि [घ]

## तृतीयोऽध्यायः

### [1]सृष्टिनिरूपणम्

[सूतं प्रति ऋषीणां सृष्टिविषयकः प्रश्नः]

ऋषय ऊचुः —

श्रुत्वैतद्वचनं तस्य परमार्थार्थसंयुतम् ।
प्रोचुर्विमुक्तसन्देहा ऋषयस्सूतमादरात् ॥ १ ॥

[2]पृच्छामहे सूत पुनश्च तस्य
माहात्म्यदद्भुतमादरेण ।
यत्सात्विकं रूपमजस्य शुद्धं
तदेव नो वर्णय वर्णनीयम् ॥ २ ॥

[सूतकृतमीश्वरवन्दनम्]

यो ब्रह्माणं विदधाति पूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै ।
[3]तꣳह देवमात्मबुद्धिप्रकाशं
[4]कृपानिधिं शरणमहं प्रपद्ये ॥ ३ ॥

इति स नत्वा जगदीश्वरेश्वरं
सूतः कथां भागवतीं बभाषे ।
शृणुध्वमीशस्य मुनीन्द्रमुख्याः
कथां पुरा मे यदुवाच कृष्णः[5] ॥ ४ ॥

---

[1] सृष्टिनिरूपणात्मको भागः ४ ३त्तमश्लोकमारभ्य समाप्त्यन्तं कूर्मपुराणस्य सप्तमाध्यायात्संगृहीतः । [2] आर्षमात्मनेपदम् । [4] श्वेताश्वतरोपनिषदि 'मुमुक्षुर्वै शरणमहं प्रपद्य' इति पाठः । [5] श्रीमद्भागवते श्रीकृष्णप्रोक्ता कथेति ज्ञेयम् ।

---

[3] तन्देव त्वमात्मबुद्धिप्रसादं (च)

## जगत्सिसृक्षोर्ब्रह्मणः तपोवर्णनं तस्मै भगवत्साक्षात्कारश्च

[1]स आदिदेवो [2]जगतां [3]पतिर्गुरुः
स्वधिष्ण्यमास्थाय [4]सिसृक्षयैक्षत ।
तां नाध्यगच्छद् दृशमत्र सम्मतां
प्रपञ्चनिर्माणविधि[5]र्यथा भवेत् ॥ ५ ॥

स चिन्तयन् द्व्यक्षरमेकदाम्भ-
स्युपाशृणोद् द्विर्गदितं [6]तपः पदम् ।
निशम्य तद्वक्तृदिदृक्षया दिशो
विलोक्य तत्रान्यदपश्यमानः ॥ ६ ॥

स्वधिष्ण्यमास्थाय विमृश्य तद्धितं
तपस्युपादिष्ट इवादधे मनः ।
दिव्यं सहस्राब्दममोघदर्शनो
[7]जितानिलात्मा [8]विजितोभयेन्द्रियः ॥ ७ ॥

अतप्यत स्माखिललोक[9]पावनः
तपस्तपीयांस्तपसा समाहितः ।
तस्मै स्वलोकं भगवान् सभाजितः
सन्दर्शयामास पदं न यत्परम् ॥ ८ ॥

व्यपेतसंक्लेशविमोहसाध्वसं
संदृष्टवद्भिर्विबुधैरभिष्टुतम् ।

---

[1] अयमुपरितनो भागः भागवतद्वितीयस्कन्धस्य नवमाध्यायात्संगृहीतः नवम-श्लोकपर्यन्तम् । [8] ज्ञानकर्माख्योभयमिन्द्रियजातम् ।

---

[2] भगवान् [क ग] [3] परो गुरुः [क ग] [4] सिसृक्षुरैक्षत [ख घ] [5] र्यतो [ग]
[6] ततः परम् [क ग च] [7] चितानिलात्मा [क ग] [9] तापनः [ग]

आयामतो विस्तरतः स्वदेह-
मानेन लोकत्रयसंग्रहेण ॥ ९ ॥

## परमात्मनः स्वरूपवर्णनं विविधनामनिरुक्तिश्च

वदन्ति मुनयः केचित्कर्मणा तस्य [1]सम्मतम् ।
कर्मणा कल्पितं रूपं सम्भूतं स्वेच्छयैव तु ॥ १० ॥

द्यौर्मूर्धा तु विभोस्तस्य खं नाभिः परमेष्ठिनः
सोमसूर्याग्नयो नेत्रं दिशः श्रोत्रे महात्मनः ॥ ११ ॥

[2]चरणे चैव पातालं समुद्रास्तस्य चाम्बरम् ।
[3]वेदास्सर्वे भुजास्सर्वनक्षत्राणि च भूषणम् ॥ १२ ॥

प्रकृतिस्तस्य पत्नी च पुरुषो लिङ्गमुच्यते ।
तथैव लिङ्गी योगीशः परमात्मा सदाशिवः ॥ १३ ॥

तमेकरूपं विप्रेन्द्राः वदन्ति बहुधा मतैः ।
[4]आदित्वादादिदेवोऽसावजातत्वादजः स्मृतः ॥ १४ ॥

बृहत्वाच्च स्मृतो ब्रह्मा वेदत्वादोमिति स्मृतः ।
तारणात्सर्वभूतानां तारकः परिगीयते ॥ १५ ॥

अन्तो नास्तीत्यनन्तोऽसौ नीलत्वान्नीललोहितः ।
विष्णुर्व्यापनशीलत्वाच्छं करोतीति शङ्करः ॥ १६ ॥

च्युतिर्न विद्यते यस्मादच्युतस्स उदाहृतः ।
कृषिर्भूवाचकः [5]प्रोक्तो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ १७ ॥

---

[4] एतानि निर्वचनानि कूर्मपुराणे प्रथमेऽंशे चतुर्थाध्याये वर्तन्ते ।

---

[1] सङ्गतिम् (क ग) [2] चरणं (क ग च) [3] देवाः (ख घ) [5] शब्दो (क ग)

न रिष्यते नैव विनश्यतीति
नरं पुमांसं परमं वदन्ति ।
नश्यत्सु भूतेषु सहेतुकेषु
तान्येव तत्त्वानि नरोद्भवानि
वदन्ति नाराणि तदाश्रयत्वा-
न्नारायणं तं प्रवदन्ति सन्तः ॥ १८ ॥

सर्वत्रासौ समस्त च वसत्यत्रेति वै यतः ।
अतस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ १९ ॥

ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य धीमतः ।
पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ।
तेषां पतित्वाद्भगवानीशः पशुपतिः स्मृतः ॥ २० ॥

विशुद्धाशेषकल्याणगुणैकनिधिरीश्वरः ।
शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥ २१ ॥

रुद्दुःखं दुःखहेतुर्वा तद्द्रावयति यत्प्रभुः ।
रुद्र इत्युच्यते तस्माच्छिवः परमकारणम् ॥ २२ ॥

भगवान् सर्वविज्ञानात्सर्वः सर्वमयो यतः ।
एवं नाम्नां विभेदोऽयं वाच्यमेकं तदव्ययम्[1] ॥ २३ ॥

## ब्रह्मकृता परमात्मस्तुतिः

दृष्ट्वा तं परमात्मानं प्रत्यक्षं विश्वरूपिणम् ।
विश्वपादशिरोग्रीवं विश्वेशं विश्वभावनम् ।
तुष्टाव [2]वाग्यतो ब्रह्मा विस्मयं परमं गतः ॥ २४ ॥

---

[1] अव्ययं परं ब्रह्म । [2] अन्यवाग्भिः निवृत्त इत्यर्थः ।

नमस्ते सर्वलोकेश सर्वकारणकारण ।
भूतावास नमस्तेऽस्तु सर्वावास वरप्रद ॥ २५ ॥

[1]सहस्रशीर्षं देवं सहस्राक्षं च पूरुषम् ।
नमस्येऽहं सहस्राङ्घ्रिं सहस्रकरपङ्कजम् ॥ २६ ॥

सहस्रादित्यसङ्काशं नमस्ये बहुरूपिणम् ।
स भूमिं सर्वतो वृत्त्वा अत्यतिष्ठद्दशाङ्गुलम् ॥ २७ ॥

तेनैवं सर्वभूतानां हृदिस्थं प्रणमाम्यहम् ।
यद्भूतं यच्च वै भव्यं वर्तमानमिदं च यत् ॥ २८ ॥

[2]त्वमेव [3]सर्वः पुरुषो मृतामृतफलेश्वरः ।
भूम्यम्बरादेः [4]प्रथमो नासौ [5]न त्वं तिरोहितः ॥ २९ ॥

एतावत्तव माहात्म्यमतो ज्यायोऽसि सर्वतः ।
[6]पदैकेन जगद्व्याप्य त्रिपादेन दिविस्थितः ॥ ३० ॥

स्वांशेन सर्वभूतानां [7]हृदये त्वं व्यवस्थितः[8] ।
निरंशोऽपि स्वशक्त्या वै मायया गुणसर्गया ॥ ३१ ॥

स्वे महिम्नि परे नित्ये विज्ञानैकरसेऽव्यये ।
निर्द्वन्द्वे त्वं परेऽनन्ते स्वानुभूत्या व्यवस्थितः ॥ ३२ ॥

---

[1] ऋग्वेददशममण्डले नवतितमसूक्तस्याधारेणायं स्तोत्रभागः ग्रथितः । वेदपादस्तववद् दृश्यते । [2] उतामृतत्वस्येशानो (ऋग्वेदः मं 10 सू 90-2

---

[3] सर्वः पुरुषो श्रुताश्रुतफलेश्वर (च) [4] परमो (क ग) [5] तत्वतिरोङ्गितम् (क) तत्वतिरोङ्गतम् (ग) [6] पादेनैव (क ग) [7] हृदिस्थं प्रणमाम्यहम् (ख ग)

[8] अस्मादनन्तरं काचनाधिका पङ्क्तिः ख ग च मातृकासु दृश्यते ' यं यद्भूतं यच्च भव्यं च वर्तमानमिदञ्च यत् (ख ग) यद्भूतं यच्च भव्यं च वर्तमानमिदञ्च यत् (च) इति सा प्रकृतेऽसङ्गता ।

क्षराक्षरमिदं सर्वं त्वया सृष्टं त्वयि स्थितम् ।
[1]त्वय्येवान्ते लयं याति [2]त्वन्मयं च जगत्तथा ॥ ३३ ॥

त्वन्मायामोहितधियः सर्वभूतगुहाशयम्[3] ।
त्वां न पश्यन्ति [4]पश्यन्तः स्वपरासद्ग्रहा जनाः[5] ॥ ३४ ॥

पितृपुत्रसुहृद्भ्रातृमातृबन्धुमयीमिमाम् ।
यन्मायां नालमुत्तर्तुं जगत्तस्मै नमो नमः ॥ ३५ ॥

[6]तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥ ३६ ॥

स्तुत्वेत्थं सर्वभूतानां ईशमब्जसमुद्भवः ।
स्वात्मानन्दानुभावेन विरराम महामतिः ॥ ३७ ॥

## भगवता ब्रह्मणे सृष्ट्यर्थमाज्ञापनम्

ततस्तमाह भगवान् मेघगम्भीरया गिरा ।
सस्मितः [7]पद्मजं वीक्ष्य तदभीष्टं दिशन्निव ॥ ३८ ॥

त्वयाहं तोषितस्सम्यग्वेदगर्भ सिसृक्षया ।
[8]चिरंभृतेन तपसा दुस्तोषः [9]कूटयोगिनाम् ॥ ३९ ॥

[10]मनीषि(णो)ऽनुभावोऽयं मम लोकावलोकनम् ।
ब्रह्मन् श्रेयःपरिश्रामः पुंसां मद्दर्शनावधिः ॥ ४० ॥

---

[3] सर्वभूतानां गुहासु हृत्सु स्थित इति ।

[5] स्वः परः इति असत्रूपो ग्रहो येषां ते ।

[9] कूटयोगिनः केवलं योगित्वप्रदर्शकाः । न वस्तुतो योगरताः ।

---

[1] त्वय्येवातो (क ग) [2] यन्मयत्वं जगच्च ह (क ग) [4] पश्यन्तं (ख घ च)

[6] क ग च मातृकासु श्लोकोऽयं नास्ति । [7] पङ्कजं (क ग) [8] चिरम्भूतेन (क ग)

[9] स्फुटयोगिनाम् (ग) [10] मनीषिता (क) मदीषिता (ग)

सृष्टस्त्वं सृष्टये पूर्वं सृज शक्त्या ममाधुना ।
इत्युक्त्वान्त[1]र्दधे देवस्तैलाभावे प्रदीपवत् ॥ ४१ ॥

इति तप्त्वा तपो ब्रह्मा ससर्ज विविधं जगत् ।

## ब्रह्मकृतविविधसृष्टिवर्णनम्

प्रादुर्भूतो महादेवस्याज्ञयैव [2]तमोमयः ॥ ४२ ॥
तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ ४३ ॥

## मुख्यसर्गनिरूपणम्

पञ्चधावस्थितस्सर्गः प्रवृत्तस्तमसा द्विजाः ।
अन्तर्बहिश्च वेदज्ञास्त्वप्रकाशस्तथैव च ॥ ४४ ॥
[3](मुख्या नगा इति प्रोक्ता मुख्यसर्गस्तु स स्मृतः ।)

## तिर्यग्सर्गनिरूपणम्

तद् दृष्ट्वा भगवान् ब्रह्मा सिसृक्षुस्सर्वमास्तिकाः ।
[4]असाधकमिति ज्ञात्वा पुनस्स परमेश्वरः ॥ ४५ ॥
अमन्यत च वेदज्ञा ब्रह्मणो ध्यायतः पुनः ।
सर्गोऽवर्तत दुःखाढ्यस्तिर्यक्स्रोतः प्रजापतेः ॥ ४६ ॥

---

[2] कूर्मादिपुराणेषु तमोमयस्यैव कथितत्वात् तपोमय इति मातृकारूपं विमर्शनीयं भवेत् । [3] मुख्यसर्गस्य अस्मिन् सारेऽग्रहणात्कूर्मपुराणपाठोऽत्र निवेशितः । (कूर्मपुराणं ७,७) अन्यथा पञ्चविधायाः सृष्टेः निरूपणमसङ्गतं भवति । [4] असम्पूर्णमिति ज्ञेयं साधनाशक्त्या ।

---

[1] र्हिता (च) [2] तपोमयः (क ख ग घ च)

पश्वादिः स तु विज्ञेयः तिर्यक्स्रोतस्स तामसः ।

### ऊर्ध्वसर्गनिरूपणम्

तं त्वसाधकमित्येवं [1]ज्ञात्वामन्यत स प्रभुः ॥ ४७ ॥

पुनश्चिन्तयतस्तस्य सात्विकोऽवर्तत द्विजाः ।
[2]ऊर्ध्वस्रोत इति ख्यातः सर्गोऽतीव सुखावहः ॥ ४८ ॥

देवसर्ग इति ख्यातः श्रुतसत्यपरायणाः ।

### अर्वाक्सर्गनिरूपणम्

तमप्यसाधकं बुध्वा ब्रह्मा ब्रह्मविदां वराः ॥ ४९ ॥

अमन्यतापरं सर्गं राजसं वैदिकोत्तमाः ।
तस्य चिन्तयतः सृष्टिः [3]प्रादुरासीच्छिवाज्ञया ॥ ५० ॥
[4]अर्वाक् स्रोत इति ख्यातः सर्गो विप्राः स मानुषः ।

### भूतसर्गनिरूपणम्

पुनश्चिन्तयतस्तस्य ब्रह्मणः परमेष्ठिनः ॥ ५१ ॥

महादेवाज्ञया विप्राः सर्गो भूतादिको मतः ।
इति पञ्चविधा सृष्टिः प्रवृत्ता परमेष्ठिनः ॥ ५२ ॥
प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ।
[5]तन्मात्राणां द्वितीयश्च भूतसर्गो हि स स्मृतः ॥ ५३ ॥
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ।
इत्येष प्राकृतस्सर्गः सम्भूतो बुद्धिपूर्वकः ॥ ५४ ॥

---

[1] ज्ञावान्यतमसः (ख घ च) [2] और्ध्वस्रोत (क ख) [3] प्रवृत्ता परमात्मनः (क) प्रवृत्ता परमात्मनः (क) प्रवृत्ता परमेष्ठिनः (ग) [4] अमुमारभ्य द्वौश्लोकौ 'क ग' योर्न स्तः । [5] [illegible] (च)

मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।
तिर्यक्स्रोतश्च यः प्रोक्तस्तैर्यग्योन्यः स उच्यते ॥ ५५ ॥

ततोर्ध्वस्रोतसः षष्ठो देवसर्गस्तु स स्मृतः ।
ततोर्वाक्स्रोतसां सर्गः सप्तमस्स तु मानुषः ॥ ५६ ॥

अष्टमोऽनुग्रहस्सर्गो भूतप्रेतादि[1]संज्ञितः ।
पञ्चैते वैकृतास्सर्गाः [2]प्राकृतास्तु त्रयः स्मृताः ॥ ५७ ॥

प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ।
इत्येते वै समाख्याताः नव सर्गाः प्रजापतेः ॥ ५८ ॥

प्राकृता वैकृताश्चैव जगतो मूलहेतवः ।
एषामवान्तरो भेदो मया वक्तुं न शक्यते ।
अल्पत्वादुपयो[3]गस्य द्विजा [4]नाद्य वदाम्यहम् ॥ ५९ ॥

## ऋषिसृष्टिनिरूपणम्

सनकञ्च द्विजश्रेष्ठाः तथैव च सनातनम् ।
सनन्दनसमाख्यञ्च ससर्ज ब्रह्मवित्तमाः ॥ ६० ॥

[5]ऋषिं सनत्कुमारञ्च ससर्जाग्रे प्रजापतिः ।
ब्रह्मणो मानसाः पुत्राः इमे ब्रह्मसमा द्विजाः ॥ ६१ ॥

अकर्मात्मानुसन्धानाज्जाता एते प्रजापतेः ।
शिवध्यानैकमनसो न सृष्टौ चक्रिरे मतिम् ॥ ६२ ॥

---

[5] ऋषिरित्यपि पञ्चस्वन्यतमः । कूर्मादिपुराणेषु ऋभुरिति क्रतुरिति वा प्रसिद्धः ।

---

[1] संज्ञकः (ख ग) संज्ञिकः (च) [2] प्राकृतस्तु ततः स्मृतः (ख घ च)
[3] ग्यस्य (ख घ च) [4] नान्यद्वदा (ख घ च)

## रुद्रसृष्टिनिरूपणम्

सृष्ट्यर्थं भगवान् ब्रह्मा लोकानामम्बिकापतेः ।
मुमोह मायया सद्यः तद् दृष्ट्वा [1]पुरुषोत्तमः ॥ ६३ ॥

बुबोध पुत्रं ब्रह्माणं द्विजा नारायणः [2]पिता ।
प्रबोधितश्चतुर्वक्त्रः विष्णुना विश्वयोनिना ॥ ६४ ॥

महाघोरं तपश्चक्रे ध्यायन्विष्णुं सनातनम् ।
एवं चिरगते काले न किञ्चित्प्रत्यपद्यत ॥ ६५ ॥

ततः क्रोधो महानस्य ब्रह्मणोऽजायतास्तिकाः ।
क्रोधेन तस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ॥ ६६ ॥

एतस्मिन्समये तस्य ब्रह्मणः परमेश्वरः ।
कृपया [3]त्वददादबुद्धिं भगवान् करुणानिधिः ॥ ६७ ॥

स पुनर्देवदेवस्य प्रसादादम्बिकापतेः ।
ततापं परमं घोरं तपो विप्राश्चतुर्मुखः ॥ ६८ ॥

सृष्ट्यर्थं ब्रह्मणस्तस्य भ्रुवोर्घ्राणस्य मध्यतः ।
[4]अविमुक्ताभिधाद्देशात्स्वकीयात्तु विशेषतः ॥ ६९ ॥

त्रिमूर्तीनां महेशस्य द्विजा वेदार्थवित्तमाः ।
[5]अंशभूतो महादेवः सर्वभूतनमस्कृतः ।
अर्धनारी[6]श्वरो भूत्वा प्रादुरासीद्घृणानिधिः ॥ ७० ॥

---

[1] कूर्मपुराणे सृष्टिप्रकरणे परमेष्ठिनो ललाटान्नीललोहितस्याविर्भावप्रकारो दृश्यते (कूर्मपुराणं ७-२६)

---

[1] परमेश्वरः (ख घ च) [2] सुतम् (च) [3] ददादद्बुद्धिं (क ख ग घ)
[4] अभिमुक्ता (क) [5] असम्भूतो (ख घ च) [6] धरो (ख ग घ)

तमजश्शङ्करं साक्षात्तेजोराशिमुमापतिम् ।
सर्वज्ञं सर्वकर्तारं नीललोहितसंज्ञिकम् ॥ ७२ ॥

दृष्ट्वा नत्वा महाभक्त्या स्तुत्वा हुत्वा प्रजापतिः ।
उवाच देवदेवेशं सृजेमा विविधाः प्रजाः ॥ ७२ ॥

ब्रह्मणो वचनं देवः श्रुत्वा विश्वजगत्पतिः ।
ससर्ज स्वात्मना तुल्यान् शिवो रुद्रान् द्विजोत्तमाः ॥ ७३ ॥

तं पुनश्चाह देवेशं ब्रह्मा विश्वजगत्पतिः ।
जन्ममृत्युजराविष्टा सृज देव प्रजा इति ॥ ७४ ॥

एवं श्रुत्वा महादेवः प्रहस्य करुणानिधिः ।
प्रोवाच [1]शोभनाः स्रक्ष्ये नाहं ब्रह्मन् प्रजापते ॥ ७५ ॥

[2]महादुःखोदधौ मग्ना उद्धरामि प्रजा इमाः ।
सम्यग्ज्ञानप्रदानेन गुरुमूर्तिपरिग्रहात् ॥ ७६ ॥

त्वमेव [3]सृज दुःखाढ्याः प्रजाः सर्वाः प्रजापते ।
इत्युक्त्वा [4]न्तर्दधे श्रीमान्भगवान्नीललोहितः ॥ ७७ ॥

ततस्तस्य [5]वचः श्रुत्वा निवार्य कमलासनः ।
रुद्रानत्यन्तकल्याणान् प्रजासृष्टौ प्रवर्तकान् ॥ ७८ ॥

शब्दादीनि च भूतानि पञ्चीकृत्य प्रयत्नतः ।
व्योम स्थूलान्तरं वायुं वह्निं चैव जलं महीम् ॥ ७९ ॥

---

[1] अत्र अशोभना इति कार्यमन्यथोत्तरत्र विरुद्धार्थः स्यात् ।

---

[2] महादुःखादयो (क ग) [3] सर्वदुःखाढ्या सृज सर्वाः (ख घ च)
[4] न्तर्हितः, (ख घ च) [5] प्रसादेन विनाग्र्य करुणानिधिः (च)

पर्वतांश्च समुद्रांश्च वृक्षादीनपि सुव्रताः ।
[1]कलादियुगपर्यन्तान्कालानन्यानपि प्रभुः ॥ ८० ॥
सृष्ट्वा प्रजापतिर्मुख्यान् साधकानसृजत्पुनः ।

## साधकर्षीणामुत्पत्तिनिरूपणम्

मरीचिनं स्वनेत्राभ्यां हृदयाद्भृगुमेव च ॥ ८१ ॥
शिरसोऽङ्गिरसं चैव तथोदानाद् द्विजोत्तमाः ।
पुलस्त्यं पुलहं व्यानादपानात्क्रतुमीश्वरः ॥ ८२ ॥
दक्षं [2]प्राणात्तथैवात्रिं श्रोत्राभ्यां मुनिपुङ्गवाः ।
समानाच्च वसिष्ठाख्यं ससर्ज ब्रह्मवित्तमाः ॥ ८३ ॥
एवमेतानजः श्रीमानसृजत्साधकोत्त[3]मान् ।
पुनस्तदाज्ञया विप्रा धर्मं सङ्कल्पमेव च ।
[4]मानवं रूपमापन्नः साधकस्तु प्रजापतिः ॥ ८४ ॥

## ब्रह्मकृतविविधसृष्टिनिरूपणम्

ततश्चतुर्मुखश्चैव जघनादसुरान् द्विजाः ।
सृष्ट्वा मूर्तिं पुनस्त्यक्त्वा शरीरान्तरमाप्तवान् ॥ ८५ ॥
[5]सापि च ब्रह्मणा त्यक्ता रात्रिरूपाभवन्नृणाम् ।
पुनर्ब्रह्माऽऽत्तदेहोऽसौ मुखात्सत्त्वविजृम्भितान् ॥ ८६ ॥
सृष्ट्वा देवांस्ततस्तच्च शरीरं त्यक्तवान् प्रभुः ।
तत्पुनर्वेदविन्मुख्या अभून्नृणां शुभं दिनम् ॥ ८७ ॥

---

[1] कूर्मपुराणे लवादीनां विस्तरेण वर्णनं दृश्यते । (अध्यायः ७)
[2] कूर्मपुराणे अत्रेः सृष्टिः नेत्राभ्यां दृश्यते । (अध्यायः ७)

---

[1] कालादि (च) [3] माः (ख घ च) [4] मानसं रूपसम्पन्नः (च) [5] सोऽपि (ख)

पुनश्च सत्व[1]सम्पन्नं शरीरं भगवानजः ।
अभजद्ब्रह्मविन्मुख्याः पितॄन् सृष्ट्वा विहाय तत् ॥ ८८ ॥

शरीरान्तरमापन्नः चतुर्वक्त्रः शिवाज्ञया ।
[2]त्यक्ता मूर्तिर्द्विजास्सास्य सन्ध्यैव समभूत्तदा ॥ ८९ ॥

ब्रह्मणो विग्रहादेव रजसा परिवेष्टितात् ।
जज्ञिरे मनुजास्सर्वे संत्यक्तं विग्रहं पुनः ॥ ९० ॥

ज्योत्स्नारूपेण निष्पन्नं, पुनर्देहान्तरं गतः ।
[3]प्रजापतेः शरीरात्तु रजसा सहिता द्विजाः ॥ ९१ ॥

क्षुत्पिपासाभिभूताश्च राक्षसा पन्नगास्तथा ।
भूतगन्धर्वयक्षाश्च समुत्पन्ना महाबलाः ॥ ९२ ॥

पुनर्देहान्तरं गत्वा ततो विश्वं जगत्पतिः ।
सृष्ट्वा सगर्दभानश्वान् मातङ्गान् रासभान्मृगान् ॥ ९३ ॥

ससर्जान्यांश्च विश्वात्मा तथैवो[4]द्गात्रमेव च ।
[5]ऋचश्चैव त्रिवृ[6]त्स्तोमं तथैवं च रथन्तरम् ॥ ९४ ॥

[7]अचीक्लृपत्स वै लोकान् [8]सपालान्वेदपूर्वकम् ।
यज्ञांश्च तेषां [9]सिद्ध्यर्थं अकल्पयदमोघधीः ॥ ९५ ॥

यज्ञनिष्पत्तये ब्रह्मा साधनान्युपकल्पयत् ।
[10]ग्राम्यारण्यानपि पशून् यवव्रीह्यादयश्च ये ॥ ९६ ॥

---

[2] पितृसृष्ट्यर्थं पूर्वं गृहीत्वानन्तरं त्यक्ता तनूरिति ज्ञेयम् ।
[3] रक्षसादीनां सृष्ट्यर्थं ब्रह्मा तमोरजःप्रायां मूर्तिमग्रहीदिति कूर्मे । अध्यायः-७

---

[1] सयुक्तं (क ख ग च) [4] द्गत (क ख) द्गात (घ) [5] ऋचं चैव (घ) [6] त्सोमं (घ)
[7] अभीक्लृपत् (ख) [8] सशालान् (क ग) [9] विध्यर्थं (क ग) [10] ग्राम्यानपि पशून् यक्षान् (क ग)

ब्राह्मणादीन्सवर्णस्थान् गुणकर्मानुरूपतः ।
मुखबाहूरुपादेभ्यो यज्ञनिष्पत्तयेऽसृजत् ॥ ९७ ॥

सृष्ट्वैवमखिलं यज्ञैरयजद्यज्ञमब्जभूः ।
यज्ञेश्वरं पुराणेशं तथान्यांश्च प्रजेश्वरान् ॥ ९८ ॥

इति संक्षेपतः प्रोक्तं विष्णोर्माहात्म्यमुत्तमम् ।
अन्यत्र [1]विस्तृतं विप्राः किमन्यत्कथयामि वः ॥ ९९ ॥

शृण्वन्ति ये [2]चाथ पठन्ति विप्राः
पुण्यामिमां लोकविसृष्टिमद्भुताम् ।
संसारचक्रं प्रविहाय ते नराः
प्रयान्ति धन्यास्त्रिपुरारिमन्दिरम् ॥ १०० ॥

इति श्रीमत्पुराणसारे सृष्टिनिरूपणं नाम
तृतीयोऽध्यायः ।

* * * *

[1] विस्तरं (घ च) [2] चापि (घ च)

## [1]चतुर्थोऽध्यायः

[ प्रणवोत्पत्तिनिरूपणम् ]

### ऋषीणां वेदस्वरूपजिज्ञासा

[2]ऋषयः

सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम्
इत्युक्तं हि त्वया तस्य स्वरूपं वक्तुमर्हति ॥ १ ॥

इति तेषां वचः श्रुत्वा प्रणिपत्य महेश्वरम् ।
स सूतः कथयामास वेदं प्रणवपूर्वकम् ॥ २ ॥

### प्रणवशब्दनिरुक्तिः तत्स्वरूपवर्णनञ्च

[3]प्रणवं सम्प्रवक्ष्यामि [4]समासेन न विस्तरात् ।
परापरविभागेन प्रणवस्तद्द्विधा मतः ॥ ३ ॥

परं परतरं ब्रह्म प्रज्ञानन्दादिलक्षणम् ।
प्रकर्षेण नवं [5](यत्तु) परं ब्रह्म स्वभावतः ॥ ४ ॥

अपरः प्रणवः साक्षाच्छब्दरूपस्स निर्मलः ।
प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ॥ ५ ॥

परमप्रणवप्राप्तिहेतुत्वात्प्रण[6]वोऽथवा ।

### लिङ्गाविर्भावनिरूपणम्

पुरा प्रजापति[7]स्साक्षाद्देवानामिदमुक्तवान् ॥ ६ ॥

---

[1] अस्मिन्नध्याये लिङ्गाविर्भावविषयसङ्ग्रहः लिङ्गपुराणात्कृत इति ज्ञायते । लिङ्गोत्पत्तेः विस्तृतं वर्णनं तत्र सप्तदशेऽध्याये दृश्यते ।

[2] मुनयः (च) [3] प्रभवं (क ग) [4] प्रभावेन (क ग) [5] यस्मात् (क ग) यस्तु (ख घ च) [6] वः स्मृतः (च) [7] स्रष्टा क)

चतुर्युगसहस्रान्ते संवृत्ते भूतसंक्षये ।
विष्णुर्योगं समास्थाय सुष्वापैकार्णवेऽम्भसि ॥ ७ ॥

तथा शयानं तं दृष्ट्वा मोहितस्तस्य मायया ।
कस्त्वं वदेति हस्तेन प्राबोधयमहं हरिम् ॥ ८ ॥

प्रबुद्धस्स समुत्थाय दृष्ट्वा मामग्रतः स्थितम् ।
प्रहस्य भगवान् किञ्चिदुवाच मधुरं वचः ॥ ९ ॥

अपि ते स्वागतं वत्स पितामह महाद्युते
तस्य तद्वचनं श्रुत्वा स्मितपूर्वं सुरर्षभाः ॥ १० ॥

रजसा बद्धवैरोऽहं तमावोचं जनार्दनम् ।
भाषसे वत्स वत्सेति सृष्टिस्थित्यन्तकारिणम् ।
मामाहाल्प[1]स्मितं कृत्वा गुरुः शिष्यमिवागतम् ॥ ११ ॥

अज्ञानममावतीर्णस्त्वं वत्स वत्सेति भाषसे ।
अथवा नापराधस्ते माया मम दुरत्यया ॥ १२ ॥

शृणु [2]सत्यं चतुर्वक्त्र सर्वदेवेश्वरो ह्यहम् ।
कर्ता भर्ता च हर्ता च न मयास्ति समो विभुः ॥ १३ ॥

इत्युक्तवति तस्मिंस्तु मयि चामर्षरूषिते ।
आवयोरभवद्युद्धं रजसा बद्धवैरयोः ॥ १४ ॥

एतस्मिन्नन्तरे लिङ्गमावयोर्मध्यतोऽभवत् ।
विवादशमनार्थञ्च प्रबोधार्थञ्च भास्वरम् ॥ १५ ॥

तस्य ज्वालासहस्रेण मोहितो भगवान् हरिः ।
मोहितश्चाहमभवं मामुवाच च माधवः ॥ १६ ॥

---

[1] स्थितं [2] सर्वं (ख ग च)

## लिङ्गाद्यन्तदर्शनार्थं ब्रह्मविष्णुभ्यां ऊर्ध्वाधोगमनम्

[1]अधो गमिष्याम्यस्याहं त्वमूर्द्ध्वं गन्तुमर्हसि ।
एवं व्याहृत्य विश्वात्मा वाराहमकरोद्वपुः ॥ १७ ॥

अहं हंसत्वमापन्नो विश्वतः [2]पक्षसङ्गतिः ।
तदा प्रभृति मामाहुः हंस हंसो विराडिति ॥ १८ ॥

दिव्यं वर्षसहस्रन्तु त्वरन्विष्णुरधो गतः ।
अहमूर्ध्वं गतो वेगात्तस्यान्तं ज्ञातुमिच्छ[3]या ॥ १९ ॥

आवामदृष्ट्वा तस्यान्तं श्रान्तौ पुनरुपागतौ ।
प्रणिपत्य च तल्लिङ्गं पार्श्वयोरुभयोः स्थितौ ॥ २० ॥

## लिङ्गस्य पार्श्वतः ओंकारश्रवणं तस्य वर्णस्थाननिरूपणञ्च

तदा समभवत्तत्र [4]स नादः शब्दलक्षणः
ओमोमिति सुरश्रेष्ठाः सुव्यक्तः प्लुतलक्षणः ॥ २१ ॥

किमिदं त्विति सञ्चित्य विस्मयस्तिमितावुभौ
लिङ्गस्य दक्षिणे भागे दृष्टवन्तौ सनातनम् ॥ २२ ॥

आद्यं वर्णमकारन्तु उकारं [5]चोत्तरे ततः ।
मकारं मध्यतश्चैव नादान्तं तस्य चोमिति ॥ २३ ॥

सूर्यमण्डलवद् दृष्ट्वा वर्णमाद्यन्तु दक्षिणे ।
उत्तरे पावकप्रख्यं उकारं [6]पुरुषर्षभाः ॥ २४ ॥

शीतांशुमण्डलप्रख्यं मकारं मध्यतस्तथा ।
तस्योपरि तथा बिन्दुमानन्दस्यापि कारणम् ॥ २५ ॥

---

[1] ख घ च मातृकासु श्लोकार्धः नास्ति । [2] पक्षिसन्ततिः (ख घ) पक्षिसहतिः (च)
[3] ता (क ग) [4] सनादं शब्दलक्षणम् सुव्यक्तं प्लुतलक्षणम् इति मातृकासु पाठः ।
उपर्यादृतः पाठः लिङ्गपुराणादुद्धृतः (अध्यायः १७) [5] चोत्तरं (ख घ च) [6] परमर्षभाः ।

[1]तुरीयातीतममृतं निष्कलं निरुपप्लवम् ।
निर्द्वन्द्वं केवलं शून्यं बाह्याभ्यन्तरवर्जितम् ॥ २६ ॥

[2]मात्रास्तिस्रस्तथाऽमात्रानादाख्यं ब्रह्मसंज्ञितम् ।
ऋग्यजुस्सामवेदाश्च मात्रारूपेण संस्थिताः ॥ २७ ॥

अथ तत्र यजूंष्याहुरोमोमिति सुरोत्तमाः ।
यजुषां वचनं श्रुत्वा ऋचः सामानि चैव हि ॥ २८ ॥

एवमेव हरे ब्रह्मन् इत्याहुश्चावयोस्तदा ।
आकर्ण्य वाक्यं वेदानां आवाभ्याममरोत्तमाः[3] ।
प्रणवात्मकमेवेदं परं ब्रह्मेति निश्चितम् ॥ २९ ॥

इति प्रजापतिः पूर्वं त्रिदशानामभाषत ।
संक्षिप्याहं प्रवक्ष्यामि तदेव[4] भवतां द्विजाः ॥ ३० ॥

अकारश्च तथोकारो मकार[5]श्चेति सुव्रताः ।
त एकधा समभवदज ओमित्यपि प्रभुः ॥ ३१ ॥

### ओंकारस्य सर्ववस्त्ववभासकत्वम्

तस्मिन्नेव शिवस्साम्बः सर्ववस्त्ववभासकः ।
प्रतिबिम्बितवांस्तेन प्रणवस्तस्य वाचकः ॥ ३२ ॥

---

[1] तुरीयं चतुर्थं अत एवातीतं गुणत्रयपरं. अमृतं नाशशून्यं निष्कलं भागशून्यम्

[2] मात्रास्तिस्रस्त्वर्धमात्रं नादाख्यं इति लिङ्गपुराणपाठः । मात्रास्तिस्रः अकारोकारमकाररूपाः अर्धं मात्राया अर्धमात्रः । एवं च प्रणवशब्दरूपम् । लिङ्गपुराणं ५२-५७ (आशुतोषिणीव्याख्या) अमात्रेति प्रसङ्गात् अर्धमात्रा ।

[3] अमरान्प्रति सम्बोधनं, पूर्वं ब्रह्मणास्योपाख्यानस्य कथितत्वात् युज्यते ।

---

[4] भगवान् (ग ग च) [5] श्च त्रिसंहताः (क)

तप्तलोहादिवच्छम्भोः अभेदात्प्रणवोऽपि सः ।
सर्वावभासको नित्यं अभवत्पण्डितोत्तमाः ॥ ३३ ॥

ज्ञातार्थे ज्ञानमित्येवं वक्तव्ये सति तद्विना ।
ओमिति प्राह लोकोऽयं तेन ज्ञातस्य वाचकः ॥ ३४ ॥

[1]अज्ञातार्थे तथाज्ञातमिति प्राप्ते तु वाचके ।
ओमिति प्राह लोकोऽयं तेनाज्ञातस्य वाचकः ॥ ३५ ॥

सन्दिग्धार्थे तु सन्दिग्धमिति प्राप्ते तु वाचके ।
ओमिति प्राह लोकोऽयं तेन सन्दिग्धवाचकः ॥ ३६ ॥

आकाशादिपदार्थानां ये शब्दा वाचका भुवि ।
विना तानखिलान् शब्दा लोक ओमिति भाषते ॥ ३७ ॥

अतः प्रयोगबाहुल्यात् घटकुड्यादिशब्दवत् ।
आकाशादिपदार्थानां वाचकः प्रणवः स्मृतः ॥ ३८ ॥

सर्वावभासकत्वेन ब्रह्मणा सदृशः स्मृतः ।
सर्वावभासकं मन्त्रं इमं जपति यो द्विजः ॥ ३९ ॥

## विस्तरेण प्रणवनिरूपणं जपविधिश्च

सर्वमन्त्र[2]जपस्योक्तं फलं स लभतेऽचिरात् ।
अतस्सर्वं परित्यज्य सदा मन्त्रमिमं जपेत् ॥ ४० ॥

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
परमात्मा [3]शिवः शम्भुः देवता परिकीर्तिता ॥ ४१ ॥

अकारो बिन्दुसंयुक्तः [4]शक्तिरस्य द्विजोत्तमाः ।
उंकारश्च मकारश्च द्वयं बीजं [5]प्रकीर्तितम् ॥ ४२ ॥

---

[1] इतःपरं द्वौ श्लोकौ क ग मातृकयोर्न दृश्येते । [2] फलस्योक्तं (क ग)
[3] भिधः (क ग) [4] शरीरस्य (क ग) [5] प्रतिष्ठितम् (क ग)

मोक्षार्थे विनियोगोऽस्य प्रोक्तो वेदान्तवेदिभिः ।
अग्निश्चन्द्रश्च सूर्यश्च वर्णानां मुनयः क्रमात् ॥ ४३ ॥

गायत्रं च तथा त्रिष्टुप् जगती च यथाक्रमम् ।
छन्दांसि ब्रह्मविच्छ्रेष्ठाः वर्णानां [1]च यथाक्रमम् ॥ ४४ ॥

ब्रह्मा विष्णुश्च रुद्रश्च वर्णानां देवताः क्रमात् ।
रक्तः शुक्लश्च कृष्णश्च क्रमाद्वर्णा [2]उदाहृताः ॥ ४५ ॥

जाग्रत्स्वप्नसुषुप्तिश्चावस्थाः प्रोक्ता यथाक्रमम् ।
[3]भूम्यन्तरिक्षस्वर्गाश्च स्थानानि क्रमशो विदुः ॥ ४६ ॥

उदात्तप्रमुखा विप्राः स्वराः प्रोक्ता मनीषिभिः ।
ऋग्यजुस्सामसंज्ञाश्च वेदाः प्रोक्ता यथाक्रमम् ॥ ४७ ॥

अग्नयो गार्हपत्याग्निर्दक्षिणाग्निस्तथैव च ।
प्रोक्ताश्चाहवनीयाग्निः वर्णानां क्रमशो द्विजाः ॥ ४८ ॥

प्रातर्मध्यन्दिनं सायङ्काल उक्तो यथाक्रमम् ।
[4]सृष्टिःस्थितिश्च संहारक्रियाः प्रोक्ता यथाक्रमम् ॥ ४९ ॥

उत्पत्तौ च स्थितौ नाशे विनियोग उदाहृतः ।
अङ्गुष्ठादिकनिष्ठान्तं अङ्गुलीनां च सन्धिषु ॥ ५० ॥

क्रमाद्वर्णत्रयन्यासः कर्तव्यः सिद्धिमिच्छता ।
अङ्गुलीषु च सर्वासु प्रणवन्यास ईरितः ॥ ५१ ॥

---

[1] कीर्तितानि तु (ख घ च)  [2] दशाहृताः [क ग]  [3] एतत्प्रभृति तिस्रः पङ्क्तयः क ग मातृकयोर्न विद्यन्ते ।  [4] एका पङ्क्तिः कगयोः न विद्यते ।

भूरग्न्यात्मन इत्यादिमन्त्राश्च क्रमशो द्विजाः ।
विन्यस्तव्याश्च सिद्ध्यर्थं अङ्गुलीषु द्विजन्मनः ॥ ५२ ॥

क्रमाद्वर्णत्रयन्यासो नाभौ हृदि च मूर्द्धनि ।
कर्तव्यः सर्वयत्नेन प्रणवेन तथैव च ॥ ५३ ॥

हृदयादिप्रदेशेषु क्रमेणैव द्विजोत्तमाः ।
[1]भूरग्न्यात्मन इत्यादिमन्त्राणां न्यास ईरितः ॥ ५४ ॥

एवं न्यासविधानेन ध्यात्वा साम्बं त्रियम्बकम् ।
जपेन्मन्त्रं परं भक्त्या लक्षाणां दशकं द्विजाः ॥ ५५ ॥

ततस्सिध्यति मन्त्रोऽयं सत्यमेव न संशयः ।
षट्कर्माणि प्रसिद्ध्यन्ति तथैवाष्टविभूतयः ॥ ५६ ॥

अपवर्गस्ततस्सिद्धः पापैस्सर्वैः प्रमुच्यते ।
सर्वविद्यालयो भूत्वा यथेष्टफलमाप्नुयात् ॥ ५७ ॥

## वेदविभागकरणनिरूपणम्

वेदानां वैभवं विप्राः कः पुमान् वक्तुमर्हति ।
ब्राह्मणानां च वेदानां वैभवं केवलैर्नृभिः ॥ ५८ ॥

शक्यते नैव विज्ञातुं कल्पकोटिशतैरपि ।
तथापि वक्ष्ये युष्माकं प्रसादादेव शूलिनः ॥ ५९ ॥

अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः ।
व्यञ्जकः केवलं विप्राः नैव कर्ता न संशयः ॥ ६० ॥

ब्रह्माणं[2] मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान् वेदान् विप्रा आत्मनि[3] संस्थितान् ॥ ६१ ॥

---

[1] पङ्क्तिरियं कगयोर्नास्ति । [2] जनयन् (ख घ च) [3] प्रदितान् (क घ च)

ब्रह्मणा चोदितो विष्णुः व्यासरूपी द्विजोत्तमाः ।
वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य वै ॥ ६२ ॥

हिताय सर्वभूतानां वेदभेदान् करोति सः ।
प्रकाशपिण्डमाम्नायमशेषार्थावभासकम् ॥ ६३ ॥

चतुर्धा कृतवान् व्यासो यथापूर्वं सनातनम् ।
[1]एकविंशतिभेदेन ऋग्वेदं कृतवान् प्रभुः ॥ ६४ ॥

शाखानां तु शतेनैव यजुर्वेदमथाकरोत् ।
सामवेदं सहस्रेण शाखानाञ्च बिभेद सः ॥ ६५ ॥

अथर्वणमथो वेदं बिभेद नवधैव तु ।

## वेदश्रवणार्थं वेधसा शिष्यग्रहणम्

अथ शिष्यान् स जग्राह चतुरो वेदपारगान् ॥ ६६ ॥

सुमन्तुं जैमिनिं पैलं वैशम्पायनमेव च ।
ऋग्वेदश्रावकं पैलं जग्राह स महामुनिः ॥ ६७ ॥

यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ।
जैमिनिं सामवेदस्य सुमन्तु[2]मितरस्य च ॥ ६८ ॥

इतिहासपुराणानि प्रवक्तुं मामयोजयत् ।
ऋग्वेदस्य तु शाखानां श्रावकानेक[3]विंशतिम् ॥ ६९ ॥
[4]यजुः शाखाशतस्यापि श्रावकाणां शतं मुनिः ।
[5]सामशाखासहस्रस्य मुनीनां च सहस्रकम् ॥ ७० ॥

---

[1] कूर्मपुराणपूर्वार्धे ५२ तमाध्यायात्सङ्गृहीतो भागः । [2] इतरस्याथर्वण-स्येत्यर्थः ।

---

[3] विंशतिः [क ग] [4] इयं पङ्क्तिः [illegible] [5] [illegible] [क ग]

जग्राह मुनिशार्दूलः कृष्णद्वैपा[1]यनो मुनिः ।
वेदानामपि शाखानां श्रावका ये मुनीश्वराः ॥ ७१ ॥

शिष्येभ्यः प्रददुस्तांश्च जगृहस्तेऽप्यनुक्रमात् ।
इत्येताः प्रतिशाखाभ्योऽप्यनुशाखाः प्रकीर्तिताः ।
एवं व्यासेन मुनिना श्रुतिर्व्यस्ता सनातनी ॥ ७२ ॥

### श्रुतिरूपायाः धेनोः स्वरूपवर्णनम्

[2]सर्वस्याधारभूतेयं विप्रा धेनुस्त्रयीमयी ।
यस्यां प्रतिष्ठितं विश्वं विश्वहेतुश्च वै यतः ॥ ७३ ॥

ऋक्पृष्ठासौ यजुर्मध्या सामवक्त्रशिरोधरा ।
इष्टापूर्तविषाणा च साधुसूक्ततनूरुहा ॥ ७४ ॥

शान्तिपुष्टिशकृन्मूत्रा वर्णाः पादाः प्रतिष्ठिताः ।
उपजीव्या [3]च जगतां सा च या नापचीयते ॥ ७५ ॥

स्वाहाकारः स्वधाकारो वषट्कारश्च वै द्विजाः ।
हन्तकारस्तथैवान्यो तस्याः स्तनचतुष्टयम् ॥ ७६ ॥

स्वाहाकारस्तनं देवाः पितरश्च स्वधामयम् ।
मुनयश्च वषट्कारं देव[4]भूताः सुरेश्वराः ॥ ७७ ॥

हन्तकारं मनुष्याश्च पिबन्ति सततं स्तनम् ।
एवमाप्याययत्येषा [5]सुरादीनखिलांस्त्रयी ॥ ७८ ॥

---

[2] इत उत्तरं अष्टौ श्लोकाः मार्कण्डेयपुराणे दृश्यन्ते । अध्यायः–२६

---

[1] नान्मुनेः [क] [3] पि (क ग) [4] भूत (क ग) [5] देवादीन् (ग)

तेषामुच्छेदकर्ता यः पुरुषोऽत्यन्तपापकृत् ।
स [1]तमस्यन्धतामिस्रे तामिस्रे च निमज्जति ॥ ७९ ॥

यस्त्वे[2]तां मानवो धेनुं स्वैर्वत्सैरमरादिभिः ।
पाययत्युचिते काले [3]स स्वर्गायोपपद्यते ॥ ८० ॥

## स्वाध्यायविधानं वेदबाह्यस्य निन्दनं च

अधीयीत सदा नित्यं ब्रह्मविद्यां समाहितः[4] ।
योऽन्यत्र कुरुते [5]निष्ठां अनधीत्य श्रुतिं द्विजाः ।
स वै मूढो न सम्भाष्यो वेदबाह्यो द्विजातिभिः ॥ ८१ ॥

इमं मन्त्रं द्विजातीनां साधूनामात्म[6]नस्य च ।
सुहृदां च जपेत्कर्णे शिष्यस्यानुचरस्य च ॥ ८२ ॥

न दद्यान्नास्ति[7]केभ्यस्तु यदि दद्यात्पतत्यधः ।
यश्चेदं शृणुयान्नित्यं सर्वदा प्रयतः शुचिः ।
जातिस्मरत्वं लभते नाकपृष्ठे विराजते ॥ ८३ ॥

इति श्रीमत्पुराणसारे प्रणवोत्पत्तिर्नाम
चतुर्थोऽध्यायः

---

1 तमिस्रान्धतामिश्रः (क ग) 2 षां (क ग) 3 संसर्गा (क ग) 4 ताः (ख घ)
5 नित्यं (क ग) 6 अस्य तु (क ग) 7 [illegible] (क ग)

## पञ्चमोऽध्यायः

[ जातिनिर्णयप्रकरणम् ]

– ० –

### ऋषीणां जातिविषयजिज्ञासा

ऋषयः —

भगवन् सर्वशास्त्रार्थपरिज्ञानवतां वर ।
[1]जातिनिर्णयमस्माकं वद वेदैकदर्शितम् ।
कृतादियुगधर्मांश्च सूतं त्वं वक्तुमर्हसि ॥ १ ॥

सूतः —

वक्ष्ये लोकोपकाराय जातिनिर्णयमादरात् ।
अगस्त्योऽपि पुराऽपृच्छत् प्रणम्य [2]वृषभध्वजम् ॥ २ ॥

### विष्णोर्नाभिकमलाद्ब्रह्मण उत्पत्तिः तस्माच्चतुर्णां वर्णानामुत्पत्तिश्च

[3]पुरा सर्वे मुनिश्रेष्ठाः प्रलये विलयं [4]गते ।
अन्धकारावृते लोके विष्णोरंशो महाद्युतिः ॥ ३ ॥
सहस्रशीर्षा पुरुषो विश्वो नारायणो हि सः ।
क्षीराब्धौ चिन्तयन् रुद्रं [5]स्वप्स्यते [6]मुनिसत्तमाः ॥ ४ ॥

---

[1] ब्राह्मणोऽस्य मुखमासीत् इत्यादि श्रुतिः । (ऋग्वेदे १०-९०-१२)

[3] जातिनिर्णयविषये संग्रहकारेण सूतसंहितायाः द्वादशाध्यायः समादृतः । अत्रस्थजातिवृत्तिवर्णनं तु तत्र न दृश्यते । (सूतसंहिता शिवमाहात्म्यखण्डः १२ अध्यायः)

---

[2] वृषवाहनम् (ख घ च) [4] गताः (क ग) [5] स्वस्वान्ते (ख घ ग) [6] ब्रह्मवित्तमा (च)

कदाचित्पङ्कजं विप्रास्तरुणादित्यसन्निभम् ।
तस्य सुप्तस्य देवस्य नाभ्यां जातं महत्तरम् ॥ ५ ॥

हिरण्यगर्भो भगवान् ब्रह्मा विश्वजगत्पतिः ।
आस्थाय परमां मूर्तिं तस्मिन्पद्मे समुद्बभौ ॥ ६ ॥

तस्य वेदविदां श्रेष्ठाः ब्रह्मणः परमेष्ठिनः ।
महादेवाज्ञया भूयो वासनासहि[1]तान्मुखात्[2] ।
ब्राह्मणा [3]ब्राह्मणस्त्रीभिस्सह जातास्तपोधनाः ॥ ७ ॥

तस्य हस्तात्सह स्त्रीभिः जज्ञिरे पृथिवीभुजः ।
ऊरुभ्यां सहिताः स्त्रीभिः जाता वैश्याः शिवाज्ञया ॥ ८ ॥

पद्भ्यां शूद्राः सह स्त्रीभिः जज्ञिरे वेदवित्तमाः ।
[4]ततः प्रभृति लोकेऽस्मिन् मिथुनोत्पत्तिरीरिता ॥ ९ ॥

## वर्णसदृशानां निरूपणम्

[5]सवर्णास्वनुलोमासु नारीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूताः [6]जात्या ज्ञेयास्त एव ते ॥ १० ॥

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान् ।
तादृशानेव तानाहुर्मातृदोषविगर्हितान् ॥ ११ ॥

## विप्रवृत्तिनिरूपणम्

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।

---

२ वासना भावना । महादेवाज्ञया समुत्पन्नसृष्टिविषयकवासना वा प्रलयात्पूर्वस्थितायाः भावनायाः पुनरपि वासनारूपेण आविष्कारो वा ।

५ वर्णसादृश्यविषये मनुस्मृतिः (अध्यायः १ श्लो. ८८-९२)

---

[1] तं [ख घ]  [3] ब्राह्मणस्त्रीभि (च)  [4] तदा (च)  [6] जाता (घ)  ज्ञात्वा (ख)

स्वाध्यायो यजनं दानं याजनाध्यापने तथा ।
प्रतिग्रह[1]श्च विप्रस्य षट्कर्माणि तु वृत्तये[2] ॥ १२ ॥

## क्षत्रियवृत्तिनिरूपणम्

यागाध्ययनदाना[नि][3] प्रजारक्षा[4]ऽऽहवादि च ।
दण्डनीतिर्धनुर्वेदः क्षत्रियस्य तु वृत्तये ॥ १३ ॥

शौर्यं तेजो धृतिर्दा[5]ढ्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च [6]क्षात्रकर्म स्वभावजम् ॥ १४ ॥

## वैश्यवृत्तिनिरूपणम्

स्वाध्यायादीनि कर्माणि [7]कुसीदं [8]पशुपालनम् ।
कृषिक्रिया च वाणिज्यं वैश्यकर्माण्यमूनि तु ।

## शूद्रवृत्तिनिरूपणम्

परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ १५ ॥

## ॥ सवर्णासु चौर्यजातानां निरूपणम् ॥
## तत्र कुण्डगोलयोर्लक्षणम्

ब्राह्मण्यां सधवायां तु [9]जाराज्जातस्स कुण्डकः ।
विधवायां तु गोलः स्यादेतौ श्राद्धे बहिष्कृतौ[10] ॥ १६ ॥

---

[2] वृत्तिः जीविका । [7] कुसीदं वृद्ध्यर्थं धनव्यवहारः । [9] अयं जारः सवर्णीयः । [10] श्राद्धे पित्रादिस्थानेषु बहिष्कृता इत्यर्थः ।

---

[1] स्य (ख घ) [3] स्तु (क) श्च (च) [4] विवादि (च) [5] र्स्य (क) [6] क्षात्र (घ) [8] परि [क स ग घ]

### भोजलक्षणम्

[1]भूपायां क्षत्रियाज्जातः चौर्याद्भोज इति स्मृतः[2] ।
नाभिषेकः [3]कटधरो राजके रक्षयेत्प्रजाः[4] ॥ १७ ॥

### मणिकारलक्षणम्

वैश्यायां वैश्यतश्चौर्यान्मणिकारश्च जायते ।
मुक्तानां वेधनं शङ्खवलयं रत्नरञ्जनम् ।
अस्यैव मणिकारस्य त्रीणि कर्माणि वृत्तये ॥ १८ ॥

### माणवकलक्षणम्

शूद्रायां शूद्रतश्चौर्याज्जातो माणवको भवेत् ।
अश्वानां तृणदानेन वर्त्तयेदेष नित्यशः ॥ १९ ॥

### ॥ अनुलोमसन्ततिनिरूपणेऽनन्तरस्त्रीषु जाताः ॥

### तत्र सवर्णब्राह्मणलक्षणम्

नृपायां विप्रतो जातः सवर्णब्रह्मणो भवेत् ।
आयुर्वेदाथर्व[5]वेदधनुर्वेदान् सदा पठेत् ।
गजाश्वारोहणं तस्य सवर्णस्य विधीयते ॥ २० ॥

### नक्षत्रजीवकलक्षणम्

अस्यामनेन चौर्येण जातो नक्षत्रजीवकः ।

---

[4] अस्य राजत्वप्रापकः अभिषेकविधिर्नास्ति । कटयति प्रकाशयति क्रियामिति क्रियाकारः । पट्टधर इति पाठे शोभनवस्त्रोष्णीशयुक्त इति ।

---

[1] नृपा (ख घ च) [2] नृपायां विप्रतो जातः सवर्णब्राह्मणो भवेत इति च मातृकायां अधिका पंक्तिः । [3] पट्ट (क स ग घ) [5] वेदान् (क)

[1]देवतानाडिकानान्तु स करोति दिने दिने ॥ २१ ॥

### सवर्णक्षत्रियाम्बष्ठस्य लक्षणम्

क्षत्रियाद्वैश्यकन्यायां माहिषोऽम्बष्ठ इत्यसौ ।
आयुर्वेदमथाष्टाङ्गं पठेदेष स्ववृत्तये ॥ २२ ॥

### आश्विकलक्षणम्

अस्यामनेन चौर्येण जातश्चाश्विक उच्यते ।
अश्वानां विक्रयस्तेषां शुश्रूषावृत्ति[2]रस्य तु ॥ २३ ॥

### वैश्यसवर्णस्योग्रकस्य लक्षणम्

वैश्यतः शूद्रकन्यायां उग्रको नाम जायते ।
मेषाविविक्रयश्चास्य वृत्ति[3]स्ताम्बूलविक्रयः[4] ॥ २४ ॥
[5]अन्तःपुराणि वा रक्षेन्नृपाणामाज्ञया सदा ।

### कटकारलक्षणम्

चौर्येण कटकारः स्यात्क्रयविक्रयकर्मवान् ॥ २५ ॥

### अनुलोमसन्ततौ एकान्तरस्त्रीषु जातानां निरूपणम्

ब्राह्मणाद्वैश्यकन्यायां निषादो नाम जायते ।
मन्त्रौषधिक्रियां कुर्यान्नित्यं शालिक्यकर्म च[6] ॥ २६ ॥

---

[1] देवतानाडिकाव्यवहारं तेन जीवनमिति च ज्ञेयम् । एतदपि स्थूलदृशा ज्योतिःशास्त्रवत् । वस्तुतस्तु अत्र शास्त्रतोऽपि कापटिकव्यवहारः प्रच्छन्नो दृश्यते । [4] प्रकरणवशादत्र कम्बलविक्रयः तस्य वृत्तिः स्यादिति ज्ञायते ।
[6] शालिक्यकर्म वस्त्राणां स्यूतिः ।

---

[1] इयं पंक्तिः ख घ च मातृकासु न दृश्यते । [2] रिष्यते (च) [3] स्तां बलविक्रयः (क ग)
[5] अतः पुराणी (क ग) [6] एतत्प्रभृति तिस्रः पंक्तयः क प्रतौ न सन्ति ।

## [1]कटकारलक्षणम्

चौर्येण कटकारः [2]स्यादूर्ध्वनापित एव सः ।
नाभ्यूर्ध्ववपनं वृत्तिः कुम्भानां करणं मृदा ॥ २७ ॥

## दौष्यन्तलक्षणम्

क्षत्रियाच्छूद्रकन्यायां जातो दौष्यन्त उच्यते ।
वनौकसां संग्रहणं मत्स्यानां ग्रहणं तथा ।
खड्गादिशस्त्रकरणं दौःषन्तस्य विधीयते ॥ २८ ॥

## शूलिकलक्षणम्

अस्यामनेन चौर्येण [3]शूलिको जायते नरः ।
नित्यं शूलरतश्चैव राज्ञा दण्ड्यांस्तु घातयेत्[4] ॥ २९ ॥

## अनुलोमसन्ततौ व्यन्तरस्त्रियां जातयोर्निरूपणम्

ब्राह्मणाच्छूद्रकन्यायां जातः पार[5]शवः स्मृतः ।
भद्रकाल्यर्चनं तस्य नृत्तं वाद्यं च वृत्तये ॥ ३० ॥

## निषादलक्षणम्

अस्यां वै चोरसंवृत्या निषादो जायते सुतः ।
जीवेद्दम्भेन [6]मानेन मृगाणां हिंसयापि वा ॥ ३१ ॥

## अनुलोमसन्तत्यानुलोमस्त्रीजाताः तत्र आग्नेयनर्तकलक्षणम्

अम्बष्ठायां[7] सवर्णेन जातश्चाग्नेयनर्तकः ।
द्विजानामग्निकार्येषु नर्तनेनैष वर्तयेत् ॥ ६२ ॥

---

[1] अयं कुम्भकार इति उशनः स्मृतिः (श्लो. ३२-३३)

[2] देहोर्ध्वभागक्षौरकर्मकर इति ।

[4] अयं न शूलनिर्माता । अपि तु वधस्थाने शूलवेधनकर्मणि व्यापृतः ।

---

[3] शूलिको (क) [5] वशः (घ) [6] कानेन (क) [7] त्व (ख घ च)

## रथकारलक्षणम्

[1]माहिषादुग्रकायां तु रथकार[2]स्तु जायते ।
अस्य [3]पर्यायनामानि तक्षा[4]शिल्पी च वर्धकिः ।
लोहकारः कर्मकारो विद्यते यजनं तथा ॥ ३३ ॥

उपनी[5]तिविधानेन कुर्यादाधानमप्यसौ ।
वास्तुशास्त्रमधीयानः प्रासादप्रतिमादिकान् ॥ ३४ ॥

यज्ञपात्रं द्विजातीनां हैमान्याभरणानि च ।
कृष्युपस्करणं लेख्यं कर्माण्यस्योदितानि[6] तु ॥ ३५ ॥

प्रतिलोमसन्ततिनिरूपणम् । प्रातिलोम्येनानन्तरस्त्रीषु जाताः ।

## तत्र सूतलक्षणम्

अवरैरुत्तमस्त्रीषु जातः स्यात्प्रतिलोमजः ।
क्षत्रियाद्विप्रकन्यायां सूतो नाम प्रजायते ।
प्रतिलोमनिवासेषु विष्णोरभ्यर्चनं तथा ॥ ३६ ॥

धर्मावबोधनं तस्य सार[7]थ्यं कटविक्रयः ।
नित्यं द्विजवदाचारः इति सूतस्य वृत्तयः ॥ ३७ ॥

## मागधलक्षणम्

नृपायां वैश्यतो जातश्चलितो मागधश्च सः ।
नृपप्रशंसनं कुर्यात्तन्त्रीवीणाश्च [8]वादयेत् ॥ ३८ ॥

## पुलिन्दलक्षणम्

[9]अस्यामनेन चौर्येण पुलिन्दो नाम [10]जायते ।

---

[9] नृपायां वैश्येनेति ज्ञेयम् ।

---

[1] माहिष्यात्करणायां (ख च) [2] श्च (च) [3] वर्गाय (क) [4] शीलेन (क) [5] त (क)
[6] च (क ग च) [7] स्य (क) [8] वे (ग) [10] जातितः (ग)

हिंसया दुष्टसत्वानां अरण्ये वर्तयेदयम् ॥ ३९ ॥

## आयोगवलक्षणम्

वैश्यायां शूद्रसंसर्गाज्जातः पत्तनवासिकः ।
आयोगवश्च तस्यैवं नामवृत्तिर्निगद्यते ॥ ४० ॥

[1]गोऽजा[2]विपालनं लोहधमनं [3]तन्तुविक्रयः ।
प्रस्थादिमा[4]नं पात्राणां करणं कट[5]कर्म च ॥ ४१ ॥

## चक्रिकलक्षणम्

अस्यामनेन चौर्येण चक्रिको जायतेऽधमः ।
तैलपिण्याकलवणविक्रयेणैष वर्तयेत् ॥ ४२ ॥

[6]अभोज्यान्नस्त्वयं शूद्रैरस्पृश्योऽपि भवत्युत ।
ग्रामादिष्वपराह्णेषु प्रविशन्दण्डमर्हति ॥ ४३ ॥

## प्रातिलोम्येनैकान्तरस्त्रीषु जातानां निरूपणम्

## तत्र क्षत्तृलक्षणम्

वैश्याद्ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते ।
चर्मणां संस्कृतिर्वृत्तिरस्यान्तःपुररक्षणम् ॥ ४४ ॥

असादस्यां तु चौर्येण म्लेच्छो नाम प्रजायते ।
सस्त्रीकः पट्टचित्राासिं दर्शयन्नेव वर्तयेत् ॥ ४५ ॥

---

[1] अविः मेषः । लोहधमनं तप्तलोहेन कृषियुद्धादिकृते आयुधनिर्माणमिति ज्ञेयम् ।

---

[2] श्व (च) [3] तक्र (क) तन्तुविक्रमः [ख] [4] न मात्राणां [च] [5] वर्म [क ग]
[6] एतदारभ्य त्रयः श्लोकाः क ग मातृकयोर्न सन्ति ।

## वैदेह-पुल्कसलक्षणम्

राजन्यां वैश्यतो जातो वैदेहश्चैव पु[1]ल्कसः ।
[2]मधूनि वृक्षादादाय विक्रीणीत सकांस्यकम् ॥ ४६ ॥

## वैणवलक्षणम्

शूद्र[3]जारेण राजस्त्री वैणवं सूयते सुतम् ।
वेण्वग्रनर्तनेनैव[4] सकुटुम्बं चरेत्सदा ॥ ४७ ॥

## प्रातिलोम्येन व्यन्तरस्त्रीषु जातानां निरूपणम्
## तत्र चण्डाललक्षणम्

शूद्राद्विप्राङ्गना सूते चण्डालमधमं नृणाम् ।
[5]वसां कण्ठे तु सम्बध्य कक्षे धृत्वा तु वल्ल[6]कीम् ॥ ४८ ॥
पूर्वाह्णे ग्राममासाद्य मलं सर्वं विशोधयेत् ।
अपराह्णे प्रविष्टश्चेद्वध्य एव न संशयः ।
कृष्णायसमलङ्कारो यानं तस्य च गर्दभः ॥ ४९ ॥

## बाह्यलक्षणम्

तस्यां वञ्चनजातस्तु बाह्यजातिस्स जायते ।
[7]अर्कांशुनार्दितस्त्वेष बहिर्भावेन वर्तयेत् ।
गणितं प्रश्नसूत्रं वा निकृष्टानां वदेदयम् ॥ ५० ॥

---

[7] वस्त्रादिभिस्तस्य अङ्गप्रावरणं निषिद्धं स्यात् ।

---

[1] ष्क (ग) [2] आम्रानि (च) [3] चा (क) [4] ष (ख) [5] न सां कुण्डेन्दु (ख)
[6] की (ख)

## चौर्यसन्ततिलक्षणम्

स्वजातिं वञ्चयित्वा हि [1]संसर्गं कुरुते [2]तु यः ।
चौ[3]र्यजातास्तु तत्पुत्रा विज्ञेया जातिवञ्च[4]नात् ॥ ५१ ॥

## आन्तरसन्ततिनिरूपणम्- तत्र तक्षकलक्षणम्

वर्णस्त्रीष्वनुलोमानां जायन्तेऽभ्यन्तरालिकाः ।
उग्राज्जातस्तु विप्रायां तक्षवृत्ति[5]स्तु कीर्त्यते ।
राजाज्ञया वनं छित्वा जीवेद्दण्डारवाहकः ॥ ५२ ॥

## सामुद्रलक्षणम्

[6]वैश्यायां तु महावै[7]श्यात्सामुद्रो नाम जायते ।
वर्तयेद्वाविनिर्दिष्ट [8]पुनर्मत्स्यादिविक्रयः ॥ ५३ ॥

## नापितलक्षणम्

[9]निषादाद्ब्राह्मणी सूते नापितं नाम जातितः ।
नावा समुद्रमत्स्यांस्तु गृहीत्वा विक्रयेदयम् ।
औषधं प्रतिलोमानां कुर्याद्वा[10]पि स्ववृत्तये

---

[6] वैश्यायामुग्रतः जातस्य समुद्र इति नामधेयम् । अत्र महावैश्य इति उग्रस्यैव नामान्तरं स्यात् (सूतसंहिता शिवमाहात्म्यखण्डः अध्याय १२ श्लो. ३१)

[9] सूतसंहितायां अयं नापित इत्येव निर्दिष्टः । परन्तु अस्य वृत्यनुसारेण अयं नाविकः स्यादित्यपि ऊह्यते ।

---

[1] सर्गान् (क ग) [2] हि सः (क ग) [3] र्याज्जाता (ख च) [4] नाः (च) [5] श्च कीर्तितः (ख च) [7] श्यः (ख च) [8]पूर्वमग्न्यादिविक्रयम् (क ग)
[10] [illegible] (च)

### अधोनापितलक्षणम्

निषादात्क्षत्रकन्यायामधोनापित उच्यते ।
सूताकाशौच[1]मोक्षेषु वपेन्नाभेरधस्तथा ॥ ५५ ॥

### वेणुकलक्षणम्

माहिष्येण तु विप्रायां वेणुको नाम जायते ।
[2]वंशगानं तथा कुर्याज्जीवनार्थमिदं स्मृतम् ॥ ५६ ॥

### कर्मकारलक्षणम्

राजाङ्गनायां स्तेयेन कर्मकारो[3] हि जायते ।
[4]नावा[दि]ना स्वनिर्दिष्टं कृत्वा जीवेत्स नित्यशः ॥ ५७ ॥

### वलगण्डलक्षणम्

दौष्यन्ताद्विप्रकन्यायां [5]वलगण्डोऽभिजायते ।
प्रशंसाजीवनं तस्य विचरेत्स इतस्ततः ॥ ५८ ॥

### निषादलक्षणम्

निषादाद्वैश्यकन्यायां [6]निषादो जायते सुतः ।
[7]आनायेन सदा मत्स्यान् गृहीत्वा विक्रयेदयम् ॥ ५९ ॥

### व्रात्यसन्ततिनिरूपणम् तत्र विप्रव्रात्येषु रजकलक्षणम्

वर्णा[8]सु प्रतिलोमेभ्यो जाता व्रात्या इतीरिताः ।
वैदेहकेन ब्राह्मण्यां रजको नाम जायते[9] ।
वासोरजोमलानां च शुद्धिं कुर्यात्स वृत्तये ॥ ६० ॥

---

[6] असौ निषादो भिद्यते पूर्वस्मात् । अयं अनुलोमसन्तत्या वर्णस्त्री जातः ।
[7] आनायः मत्स्यग्रहणजालम् ।

---

[1] मुख्येषु (क) [2] वंश (ग) [3] ऽभि (ख घ) [4] नावादीनां (क ख ग घ च)
[5] फल (क) [8] र्णास्सम्प्रति (क) [9] इतःपरं चतस्रः पङ्क्तयः कगमातृकयोर्न दृश्यन्ते ।

## श्वपचलक्षणम्

ब्राह्मण्यामेव चण्डालात् श्वपचो जायते सुतः ।
श्वमांसं भक्षयित्वैव श्मशाने निवसेत्सदा ॥ ६१ ॥

## गुहकलक्षणम्

श्वपचेन तु विप्रायां गुहको नाम जायते ।
शैलकान्तारपार्श्वेषु निवसेत्स इतस्ततः ।
प्रतिप्रश्नप्रलापी च विक्रयेदौषधं यतः ॥ ६२ ॥

## दन्तकवेल्लकलक्षणम्

चण्डालाद्विप्रकन्यायां [1]जातो दन्तकवेल्लकः ।
श्रामको दण्डदारूणां वर्णा(ना)रोपयेत्सदा ॥ ६३ ॥

## आश्रयकलक्षणम्

अस्मादाश्रयकं नाम शूद्रात्सूतेऽङ्गना सुतम् ।
बिलौकसां खनित्रेण खात्वा वृत्यर्थमाचरेत् ॥ ६४ ॥

## क्षत्रियायां प्रतिलोमोत्पन्नाः-तत्र उद्बन्धकलक्षणम्

[2]खनकस्य नृपायां तु जात उद्बन्धकः स्मृतः ।
कारुरित्यपि वर्णानां वस्त्रशुद्धिं समाचरेत् ॥ ६५ ॥

## चर्मकारलक्षणम्

आयोगवाद्ब्राह्म[3]णस्त्री चर्मकारं प्रसूयते ।

---

[2] नृपायां मागधाज्जातः खनकः परिकीर्तितः । (सूतसंहिताशिवमाहात्म्य-खण्डः अध्यायः-१२ श्लो. ३९) मागधः प्रतिलोमजः अतः खनकोऽपि परम्परया प्रतिलोमजः ।

---

[1] जायते दन्तवेल्लकः (ख घ) दन्तवत्सलः (च) [3]णी तु (च)

## पट्टधानलक्षणम्

[1]दौःषन्तात्पटधानस्तु विप्रव्रात्या इतीरिताः ॥ ६६ ॥

## क्षत्रव्रात्यानां लक्षणम्

नृपाज्ञयान्यराष्ट्राणां व्यभिचारं हि कुर्वते ।
क्षत्रव्रात्यान्नृपायां तु कल्लो कल्लात्तु मल्लकः ॥ ६७॥

मल्लात्तु लिच्छिविर्जातो लिच्छिवेर्जायते नटः ।
नटात्करण उत्पन्नः स एव खष एव तु ॥ ६८ ॥

[2]खषात्तु द्रविडस्तस्मान्नृपायामेव जायते ।
क्षुद्रमण्डलिकाश्चैते जीवेयुर्नृत्तदर्शना:[3] ॥ ६९ ॥

नटनं लास्यवन्नाटयं नाट्यवेदाधिकार[4]कम् ।
गीतमप्यस्य निर्दिष्टं नामाप्यस्यार्यवृत्तकः ॥ ७० ॥

## वैश्यव्रात्यसन्ततिलक्षणम्

वैश्यव्रात्यात्तु वैश्यायां सुधन्वा नाम जायते ।
तस्मादाचार्य आचार्या[5]द्भारुषो भारुषादपि ॥ ७१ ॥

द्विजन्मा तु ततो मैत्रो मैत्रात्सात्वत एव च ।
शिवपूजार्चनं कृत्वा तेन जीवन्ति नित्यशः ॥ ७२ ॥

द्विजन्मा सूतिकादेशे शान्ति कृत्वा[6]नुवर्तयेत् ।

---

[1] क्षत्रियाच्छूद्रकन्यायां जातत्वात् दौषन्तः अनुलोमजः । अत्र व्रात्यसन्तति-मध्ये तस्य गणना कथमिति विमर्शनीयम् ।

---

[1] दौःषन्तात्पाट्टधानस्तु ब्राह्मण्यामेव जायते । वैश्यायां पाट्टधानात्तु विप्रव्रात्य उदीरित) (ख घ च) अनन्तरं नृपाज्ञयेत्यादि श्लोकः । [2] शखात्तु (च) [3] काः (ख घ च)
[4] णम् (क) [5] हारुषो हारुषादपि (क ग घ) [6] तु (च)

मैत्रो भूतपिशाचादिशान्त्युच्चाटनकर्मवान् ।
[1]सात्वतो वैष्णवीं पूजां सदा वृत्त्यर्थमाचरेत् ॥ ७३ ॥

### आवृतलक्षणम्

[2]दौष्यन्त्यां ब्राह्मणाज्जातः [3]आवृतो नाम [4] जायते ।
तृणदानेन जीवेत सर्वदैष गवादिषु ॥ ७४ ॥

### [5]दिग्भस्यलक्षणम्

आयोगव्यान्तु तस्माच्च [6]दिग्भो नाम च जायते ।
चर्मणां चैव संस्कारक्रियां कुर्यात्स नित्यशः ॥ ७५ ॥

### मातङ्गसूतवायसानां लक्षणम्

वैदेहकात्तु [7]तत्रापि मातङ्गो नाम जायते ।
[8]सूताद्दस्युरिति ज्ञेयो वनजीवी च वाय[9]सः ॥ ७६ ॥

### कैवर्तलक्षणम्

[10]प्रतिलोमनिषादात्तु कैवर्ता नाम जायते ।
नदीसन्तारवृत्तिश्च नावासौ मांसविक्रयी ॥ ७७ ॥

### नीलकारलक्षणम्

[11]नीलकारः स्त्रियां चौर्यादायोगव्यान्तु जायते ।
नीलादिवर्णविक्रेता जीवनञ्च तदेव तु ॥ ७८ ॥

---

[2] अयमावृतः अनुलोमस्त्रियां ब्राह्मणेन जातः ।

[5] मनुरेनं धिग्वणमिति निर्दिशति । ब्राह्मणा .... .... आयोगव्यान्तु धिग्वणः मनुस्मृतिः X–15 । [7] आयोगव्यामिति प्रकरणाज्ज्ञेयम् ।

[10] मनुरमुं कैवर्तं अनुलोमनिषादजं मनुते । (मनुः X–34 ।

[11] आयोगव्यां प्रतिलोमनिषादाच्चौर्यज इति ज्ञेयम् ।

---

[1] सान्त्रतो (क) श्रोत्रतो (घ) [3] आप्रीतो (ख घ च) [4] जातितः (ख च)
[6] धिग्लो (घ च) धिग्धो (ख) [8] स्युः ... विज्ञेयो [क] [9] समू [क]

## काररवलक्षणम्

कारारवो निषादेन चर्मजीवी च सूयते ।
अतो वैदेहकाज्जातः तस्य वृत्तिर्निगद्यते ।
हेमादिशकलान् भूमौ मग्नानादाय जीवति ॥ ७९ ॥

## वर्णभेदनिरूपणम्

वर्णाश्चाप्यनुलोमा प्रतिलोमाश्चान्तराश्च ।
व्रात्या इति पञ्चविधाः तत्प्रभवास्तु ह्यनेके च ॥ ८० ॥
अर्थाश्रयाद्वा कामाद्वा वर्णानां ह्यप्यनिर्णयः ।[1]
अज्ञानाद्वापि वर्णानां जायते जातिसङ्करः ॥ ८१ ॥
इत्येते सङ्करा जात्या पितृमातृव्यतिक्रमात् ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्यास्तु कर्मभिः ॥ ८२ ॥
स्वस्वजातेर्हि यत्कर्म कथितं तेन वर्तयेत् ।
अन्यथा वर्तमानो हि सत्यं पतति जातितः ॥ ८३ ॥
इत्येवं जातिसम्भूतिः प्रवृत्ति[2]श्चोदिता मया ।
राजा तु धार्मिकः सर्वान् स्वे स्वे कर्मणि योजयेत् ॥ ८४ ॥
स्वजात्युक्तं विना कर्म योऽन्यवृत्या तु जीवति ।
चोरवद्दण्डयेत्तं च पापात्मानं महीपतिः ॥ ८५ ॥

इति श्रीमत्पुराणसारे जातिनिर्णयो नाम
पञ्चमोऽध्यायः

---

[1] इतःपरं पञ्चपंक्तयः क मातृकायां न दृश्यन्ते । [2] श्च मयोदिता (ख घ च)

## षष्ठोऽध्यायः

### कृतादियुगधर्मनिरूपणप्रतिज्ञा

सूतः —

कृतादियुगधर्मांश्च कालमानपुरस्सरम् ।
प्रवक्ष्यामि समासेन शृणुध्वं मुनिपुङ्गवाः ॥ १ ॥

### [1]कालमाननिरूपणम्

लघ्वक्षरचतुर्भागः [2]तृटिरित्यभिधीयते ।
तृटिद्वयं लवः प्रोक्तः निमेषस्तु लव[3]द्वयम् ॥ २ ॥

काष्ठा पञ्चदशाऽऽख्याता निमेषा मुनिसत्तमाः ।
काष्ठा[4]स्त्रिंशत्कला त्रिंशत्कला मौहूर्तिकी गतिः ॥ ३ ॥

[5]तावत्संख्यैरहोरात्रं मुहूर्तैर्मानुषं स्मृतम् ।[6]
पित्र्ये रात्र्यहनी मासः प्र[वि]भागस्तयोः पुनः ॥ ४ ॥

कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्वरी ।
[7]तैः षड्भिरयनं वर्षं द्वेऽयने [8]मानुषं स्मृतम् ॥ ५ ॥

[9]एतद्दिव्यमहोरात्रमित्येषा वैदिकी श्रुतिः ।
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम् ॥ ६ ॥

---

[1] अस्याध्यायस्य मुख्यांशाः विष्णुपुराणस्य प्रथमांशतृतीयाध्यायात्संगृहीताः ।
[5] त्रिंशत्संख्याकैर्मुहूर्तैरिति ज्ञेयम् । [7] मासैरिति । [9] मानुषं द्वादशमासात्मकं वर्षं दिव्यमहोरात्रं भवति ।

---

[2] स्तुडि (क) स्तृडि (ग) [3] त्रयम् [च] [4] विंशत [च] [6] एतदनन्तरं विष्णुपुराणस्य श्लोकर्धस्य पठनेन अर्थसौलभ्यं भवति । स च ‘ अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः । ’ इति (विष्णुपुराणं अंशः १ अध्यायः ३)
[8] दक्षिणोत्तरे इति विष्णुपुराणे ।

## युग-सन्ध्या-सन्ध्यांशनिरूपणम्

[1]दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ।
चतुर्युगं द्वादशभिः तद्विभागं निबोधत ॥ ७ ॥

चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्र[2]मम् ।
दिव्याब्दानां सहस्राणि युगे[3]ष्वाहुः पुराविदः ॥ ८ ॥

[4]तत्प्रमाणशतं सन्ध्या पूर्वा तत्राभिधीयते ।
सन्ध्यांशकश्च तत्तुल्यो युगस्यानन्तरो हि सः ॥ ९ ॥

सन्ध्यासन्ध्यांशयो[5]रन्तर्यः कालो मुनिसत्तमाः ।
युगाख्यस्स तु विज्ञेयः कृतत्रेतादिसंज्ञितः ॥ १० ॥

कृतं त्रेता द्वापरश्च कलिश्चैव चतुर्युगम् ।
प्रोच्यते तत्सहस्रं च ब्रह्मणो दिवसं[6]द्विजाः ॥ ११ ॥

## चतुर्दशमनूनां नामानि

ब्रह्मणो दिवसे विप्राः मनव[7]स्तु चतुर्दश ।
स्वायम्भुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा ॥ १२ ॥

उत्तमस्ता[8]मसश्चैव रैवतश्चाक्षुषस्तथा ।
वैवस्वतश्च सावर्णिः दक्षसावर्णिरेव च ॥ १३ ॥

---

[1] दिव्यैर्द्वादशभिर्वर्षसहस्रैश्चतुर्युगमित्यन्वयः । [4] तेषां सहस्राणां यत्प्रमाणं चत्वारि त्रीणि द्वे चैकमित्युक्तं तत्प्रमाणैस्तत्संख्यैश्शतैः परिमिता युगस्य पूर्वभाविनी सन्ध्या (विष्णुचित्तीव्याख्या अध्यायः ३, अंशः १, पत्रं १२) ।

---

[2] मः (ख घ) [3] प्राहुर्मनीषिणः (च) [5] र्मध्यः स्वकालो (च) [6] ज्ञिकाः (ख) [7] श्च (ख) [8] पस (क)

दशमो ब्रह्मसावर्णिः धर्मसावर्णिरेव च ।
द्वादशो रुद्रसावर्णिः [1](रौच्यनामा) त्रयोदशः । ॥ १४ ॥
[2]भौ(म)श्चतुर्दशः प्रोक्तो भवन्ति मनवः क्रमात् ।
कथ्यते भागशस्तेषां परिमाणं निबोधत ॥ १५ ॥

सप्तर्षयस्सुरास्सेन्द्रा मनुस्तत्सूनवो नृपाः ।
एककाले च सृज्यन्ते संह्रियन्ते च पूर्ववत् ।
चतुर्युगानां संख्याता [3]साधिका ह्येकसप्ततिः ॥ १६ ॥

## मन्वन्तरकथनम्

मन्वन्तरं मनोः कालः सुरादीनां च सत्तमाः ।
[4]अष्टौ शतसहस्राणि दिव्यया संख्यया स्मृ[5]तम् ॥ १७ ॥
त्रिंशत्कोट्यस्तु सम्पूर्णाः संख्यया द्विजसत्तमाः ।
सप्तषष्टिस्तथान्यानि नियुतानि मुनीश्वराः ॥ १८ ॥
[6]विंशतिस्तु सहस्राणि कालोऽयं साधिकं विना ।
मन्वन्तरस्य संख्येयं मानुषैर्वत्सरैर्द्विजाः ॥ १९ ॥

---

[1] त्रयोदशो रुचिर्नामा भविष्यति मुने मनुः । भौमश्चतुर्दशश्चात्र .... .... । (विष्णुपुराणं अंशः ३ अध्यायः २) अतः मातृकापाठापेक्षया विष्णुपुराणाहृतः पाठः समीचीन इति भाति ।

[3] चतुर्युगसहस्रप्रमाणस्य ब्रह्मदिनस्य चतुर्दशधा विभागे प्रतिभागमेकसप्ततिश्चतुर्युगानि भवन्ति । अवशिष्यते चतुर्युगषट्कम् । तस्य चतुर्दशांशो यथावद्गणितः प्रतिमन्वन्तरं एकसप्ततेरधिक इत्यर्थः । (विष्णुपुराणे १.३-१७ श्रीधरीयव्याख्या)

---

[1] रोचमान (क ख ग घ च) [2] भौत्य (क ख ग घ च) [4] अष्टादश (च) [5] तः (च)
[6] ...ं (क ग च)

## ब्रह्मण आयुःप्रमाणकथनम्

चतुर्दशगुणो ह्येष द्विजा ब्राह्ममहः स्मृतम् ।
ब्राह्मो नैमित्तिको नाम [1]तस्यान्ते प्रतिसञ्चरः[2] ॥ २९ ॥

तदा हि दह्यते सर्वं त्रैलोक्यं भूर्भुवादिकम् ।
[3]जनं प्रजान्ति [4]तापार्ताः महर्लोकनिवासिनः ॥ २१ ॥

ब्राह्ममेकमहः कल्पस्तावती रात्रि[5]रुच्यते ।
चतुर्युगसहस्रं तु कल्पमाहुर्मनीषिणः ॥ २२ ॥

त्रीणि कल्पशतानि स्युः तथा षष्ठिर्द्विजोत्तमाः
ब्रह्मणः कथितं वर्षं एवमे[6]कं द्विजोत्तमाः ॥ २३ ॥

पञ्चाशद्भिस्तथा वर्षैः परार्धमभिधीयते ।
तस्यान्तोऽभून्महाकल्पः पाद्म इत्यभिसंज्ञितः ॥ २४ ॥

द्वितीय[7]स्य परार्द्धस्य वर्तमानस्य वै द्विजाः ।
वाराह इति कल्पोऽयं प्रथमः परिकीर्तितः ॥ २५ ॥

इत्थं वर्षशतं धातुः परमायुरिहोदितम् ।
तस्यान्ते सर्व[8]सत्वानां स्व[9]हेतौ प्रकृतौ लयः ॥ २६ ॥

समाशतं तु यत्तस्य दिनमेकन्तु तद्धरेः ।
श्रीमच्छ्रीकण्ठनाथस्य दिनं स्यात्तत्समाशतम् ॥ २७ ॥

न दिनं नास्य वा रात्रिर्विद्यते परमार्थतः ।
अनादिरेष भगवान् कालः कविरिति श्रुतिः[10] ॥ २८ ॥

---

[2]प्रतिसञ्चरः, प्रलयः । [3] जनर्लोकमित्यर्थः स च चतुर्थो लोकः ।

---

[1] कथ्यते (ख ग घ च) [4] का वार्ता (क) [5] रियष्ते (ख घ च) [6] द (क)
[7] स्या (क) [8] त (क) [9] गः (क) [10] तः (क)

भूमिर्नद्यो नगाः शैलाः सिद्धा देवर्षयस्तथा ।
कालं समनुवर्तन्ते तथा भावा युगे युगे ॥ २९ ॥

सूतः ।

## युगानुसारेण धर्मह्रासनिरूपणम्

[1]कृते चतुष्पात्सकलो निर्व्याजोपाधिवर्जितः ।
[2]वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्पुरा ॥ ३० ॥

धर्मः पादविहीनस्तु त्रिभिरंशैः प्रतिष्ठितः ।
त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म उच्यते ।
त्रिपादहीनस्तिष्ये [3]तु सत्तामात्रेण [4]तिष्ठति ॥ ३१ ॥

## सङ्ग्रहेण चतुर्युगकृत्यम्

[5]ध्यानं श्रुतं कृतयुगे त्रेतायां ज्ञानमध्वरः ।
द्वापरे यज्ञदानन्तु दानमेव कलौ युगे ॥ ३२ ॥

## चतुर्युगप्रधानदैवतानि

ब्रह्मा कृतयुगे देवः त्रेतायां भगवान् रविः ।
द्वापरे दैवतं विष्णुः कलौ रुद्रो महेश्वरः ॥ ३३ ॥

## वर्णभेदेन युगप्रशस्तिः

ब्राह्मं कृतयुगं प्रोक्तं त्रेता च क्षत्रियं युगम् ।
वैश्यं द्वापरमित्याहुः शूद्रं कलियुगं स्मृतम् ॥ ३४ ॥

## कृतयुगस्वरूपनिरूपणम्

---

[1] इतः प्रभृति लिङ्गपुराणाधारेण विषयः संगृहीत इति दृश्यते । (लिङ्गपुराणं अध्यायः ३९) [2] धर्मस्य वृषरूपत्वेनावस्थितिः कृतादियुगमारभ्य ।

[3] पु (क) [4] विष्ठितः (क) [5] दानं (क ग घ च)

[1]ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव तपोधनाः ।
[2]द्विजोत्तमास्तदा शान्ताः निर्वैराः सुहृदस्समाः ॥ ३५ ॥

यजन्ति तपसा देवं शमेन च दमेन च ।
अनिच्छाद्वेषसंयुक्ताः प्रजास्ताः स्थिरयौवनाः ॥ ३६ ॥

तुल्यरूपायुषस्सर्वा [3]अधमोत्तमतां विना ।
अरोगास्सर्वसिद्धार्थाः चतुर्वर्षशतायुषः[4] ॥ ३७ ॥

मानवास्तत्र जीवन्ति [5]न च क्लेशविपत्तयः ।
महीरुहा द्विजास्तेषां अभीष्टफलदाश्शुभाः ॥ ३८ ॥

न तेषां प्रतिघातोऽस्ति न[6] द्वेषो नापि मत्सरः ।
तृप्तिः स्वाभाविकी विप्राः विषयेषु कृते युगे ॥ ३९ ॥

पर्वतोदधिसेविन्यः त्वनिकेताश्च सर्वशः ।
प्रजा निष्कामचारिण्यो नित्यं मुदितमानसाः ॥ ४० ॥

ततः कालेन वैराग्यं तेषामाकस्मिकं भवेत्[7] ।
मासे मास्यार्तवोत्पत्त्या गर्भोत्पत्तिः पुनः पुनः ॥ ४१ ॥

---

[1] कृतयुगस्वरूपकथनमारभ्याध्यायसमाप्तिपर्यन्तं प्रायः कर्त्रा लिङ्गपुराणस्य ३९ तमोऽध्यायः वायुपुराणस्य अष्टमोऽध्यायः कूर्मपुराणस्य २९ तमोऽध्यायश्चाधारत्वेन गृहीत इति भाति । [2] द्विजोत्तमा इति सम्बोधनम् ।

[4] चतुश्शतं वर्षाणि परमायुः कृते युगे । कल्पवृक्षस्तेषां जीवनाधारः । युगान्ते गृहभूतानां वृक्षाणां विनाशः पाप प्रवेशात् । एवमेव ह्रासः क्रमेण अन्येषु युगेषु । [5] जातिविषयकः कलहः तारतम्यं वा तदा नासीदिति एतादृशीनां भावनानां सार्वकालीनं मौल्यमस्ति ।

[7] अभवदिति भूतार्थकः प्रयोगः ।

---

[3] [illegible] (क) [5] [illegible] (क) [6] [illegible] (ख ग घ)

गर्भोत्पत्या ततस्तेषां वृक्षास्ते [1]गृहसंज्ञिताः ।
प्रणेशुरपरे चासंश्चतुश्शाखा महीरुहाः ॥ ४२ ॥

## त्रेतायुगस्वरूपनिरूपणम्

त्रेतायुगे तदा सर्वे मनुष्या लोभमोहिताः ।
अनिच्छाद्वेषसंयुक्ताः [2]वर्तयन्ते परस्परम् ॥ ४३ ॥

ते तदा मनुजा देवं सर्वदेवमयं हरिम् ।
यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ ४४ ॥

विशोकास्सत्वबहुला मानुषास्त्रिशतायुषः ।
न च ज्येष्ठाः कनिष्ठेभ्यस्तदा श्राद्धानि कुर्वते[3] ॥ ४५ ॥

[4]वस्त्राणि च प्रसूयन्ते फलान्याभरणानि च ।
याः शाखाः कल्पवृक्षाणां [5]त्रेतायुगमुखे तथा ॥ ४६ ॥

[6]तास्वेव जायते तेषां गन्धवर्णरसान्वितम् ।
[7]अमाक्षिकं महावीर्यं पुटके पुटके मधु ।
तेन ता वर्तयन्ति स्म मुखे त्रेतायुगस्य वै[8] ॥ ४७ ॥

ततः कालान्तरेणैव पुनर्लोभावृतास्तथा ।
वृक्षांस्तान्पर्यगृह्णन्ति मधु वा माक्षि[9]कं बलात् ॥ ४८ ॥

तासां तेनापचारेण [10]तथा लोभकृतेन च ।
फलानि [11]न प्रसूयन्ते रसवन्ति[12] बह्वन्यपि ॥ ४९ ॥

---

[2] वर्तनं जीविका, जीवन्तीत्यर्थः । [3] बालमरणं सर्वथा असम्भाव्यमासीदिति ।

---

[1] मुनिसंश्रिताः (क) [4] त्रेताणि (क ग) [5] गन्वर्णरसान्वितम् (ख च) [6] इयं पंक्तिः खगयोर्नास्ति । [7] समाक्षिकं (ख) [8] च (क ख) [9] के (क ग) [10] पुनर्लोभ (ख ग) [11] च (ख ग) [12] बहूनि च (ख घ)

ततो द्वन्द्वान्यजायन्त [1]शीतोष्णक्षुन्मुखानि वै ।
तास्तु द्वन्द्वोपघातार्थं [2]चक्रुः पूर्वं पुराणि तु ॥ ५० ॥

[3]मरुधन्वसु [4]दुर्गेषु पर्वतेषु नदीषु च ।
संश्रयन्ति च दुर्गाणि धान्यं पार्वतमौदकम् ॥ ५१ ॥

निकेतनानि द्वन्द्वानां चक्रुश्चोपशमाय वै ।
कृत्वा द्वन्द्वोप[5]घातार्थं वार्तोपायमचिन्तयन् ॥ ५२ ॥

[6]नष्टेषु मधुना सार्द्धं कल्पवृक्षेषु वै तदा ।
ततः प्रादुर्बभौ तासां सिद्धिस्त्रेतायगे पुनः ॥ ५३ ॥

अपां भूमेश्च संयोगा[7]दोषध्यस्तासु चाभवन् ।
[8]अकृष्टपच्या पृथिवी [9]बहुसस्यसमन्विता ।
अजायत [10]तदा विप्राः सर्वकामप्रदायिनी ॥ ५४ ॥

## द्वापरस्वरूपनिरूपणम्

द्वापरे मनुजा विप्राः पुनर्लोभान्विताश्च ते ।
नरा दानेषु नियता व्रतेषु नियमेषु च ॥ ५५ ॥

---

[1] शीतोष्णक्षुत्प्रभृतीनि इति ज्ञेयम् । [2] चक्रुरावरणानि च इति वायुपुराणस्थः पाठः युक्त इति भाते । (वायुपुराणं अध्यायः ७ श्लो. ९२) [4] निम्नेषु इति वायुपुराणम् । (श्लो. ९४) [7] ओषध्यस्तासु इति वायुपुराणपाठः समीचीन इति भाति । 'ख च' मातृकयोः 'दोषध्वस्तास्तदाभवन्' इति पाठः प्रकृते न सङ्गच्छते । (वायुपुराणम् अध्यायः ८ श्लो. १२७)

[8] अकृष्टपच्या कर्षणादिकं विनैव फलवती ।

---

[3] मिरुधन्वा सुदुर्धर्षः (क ग) मधूदन सुदुर्गेषु (ख) मधूदन्न सुदुर्गेषु (च) [5] तापार्थं (क)
[6] क ग घ प्रतिषु एतत्प्रभृति तिस्रः पंक्तयः न सन्ति । [9] सर्वं (ख च) [10] सदा (ख च)

जपयज्ञपरा विप्राः धर्मकामा मुदा युताः ।
परमायुश्च भवति पूर्णं वर्षशतद्वयम् ॥ ५६ ॥

ब्राह्मणास्साधवश्चैव मुनयश्च तपस्विनः ।
आश्रमानभि पाषण्डाः स्थिताः सत्ये जना यथा ।
जायन्ते सर्वबीजानि उप्यमानानि चैव हि[1] ॥ ५७ ॥

रक्षणे निरता भूपाः व्यवहार[2]रता विशः ।
शुश्रूषायां [3]रताश्शूद्राः तथा वर्णत्रयस्य च ॥ ५८ ॥

ततः [4]कालान्तरेणैव रागलो[5]भावृते पुनः ।
द्वापरे [6]त्वथ भिद्यन्ते मतिभेदास्तथा नृणाम् ॥ ५९ ॥

लोभो [7]भृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः ।
वेदशाखाऽप्रणयनं धर्माणां सङ्करास्तथा ॥ ६० ॥

वर्णाश्रमपरिध्वंसः कामद्वेषौ तथैव च ।
अवृष्टि[8]र्मरणञ्चैव तथैव [9]व्याध्युपद्रवाः ॥ ६१ ॥

वाङ्मनःकायजैर्दुःखैर्निर्वेदो जायते नृणाम् ।
एवं रजस्तमोयुक्ता वृत्तिर्वै द्वापरे नृणाम् ॥ ६२ ॥

इति श्रीमत्पुराणसारे कृतादियुगधर्मो नाम
षष्ठोऽध्यायः ।

---

[1] कृते प्रतिघातादिरहित ओषधिप्ररोहः । स्वयमुद्भिन्नः । त्रेतायां अकृष्टपच्या पृथिवी । द्वापरे कर्षणादिभिरेव धान्यसंग्रहः । इति क्रमतः सर्वस्यापि ह्रासः ।

---

[2] प्रभा (ख घ) [3] यता (ग) [4] कल्पा (च) [5] भ (ख घ च) [6] त्रिभिद्यन्ते (च)
[7] भृतिं वर्णोद्यक्तं (क) भृतिं वणिभ्युत्थं (ग) [8] मन्त्रणं (ख) [9] स्यादुपद्रवः (क ग)

## सप्तमोऽध्यायः
[ कलियुगधर्मनिरूपणम् ]

सूतः ।

[1]कलेः स्वरूपं वक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ।
वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम् ।
न साम [2]यजुऋ[3]ग्वर्णविनिष्पादनहैतुकी ॥ १ ॥

विवाहा न कलौ धर्म्या न शिष्यगुरुसंस्थितिः ।
न दाम्पत्यक्रमो नैव [4]वह्निदेवादिका क्रिया ॥ २ ॥

### कलौ द्विजधर्मनिरूपणम्

स्नानं होमं [5]जपो दानं देवतानां तथार्चनम् ।
अन्यानि चैव कर्माणि न कुर्वन्ति द्विजातयः ॥ ३ ॥

माया चैवानृतं विप्रा वधश्चैव तपस्विनाम् ।
एते स्वभावास्तिष्यस्य[6] साधयन्ति च तान् प्रजाः ॥ ४ ॥

एषोऽधर्मः स्थितः कृत्स्नो धर्मश्च परिहीयते ।
विनिन्दन्ति महादेवं ब्राह्मणान् पुरुषोत्तमम् ।
[7]आम्नायं धर्मशास्त्राणि पुराणानि कलौ युगे ॥ ५ ॥

---

[1] अस्याध्यायस्य विषयाः प्रायः विष्णपुराणात्कूर्मपुराणाच्च उद्धृताः (विष्णुपुराणं अंशः ६ अध्यायः १, कूर्मपुराणं पूर्वर्द्धम् अध्यायः ३०)

[4] अग्निहोत्रादियजनरूपाः आराधनरूपाश्च । [5] जपं इति ज्ञेयम् ।

[6] तिष्यं कलियुगम् । [7] आम्नाया वेदाः

---

[2] ऋग्यजुर्धर्म इति विष्णुपुराणे ६-१-१० । इयं पूर्णा पंक्तिः क ख घ मातृकासु न दृश्यते ।

[3] स्वर्ग [घ]

[1]दधीचशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ।
ये चान्ये शापनिर्दग्धाः गौतमस्य महात्मनः ॥ ६ ॥

सर्वे तेऽवतरिष्यन्ति ब्राह्मणाद्यासु योनिषु ।
वेदबाह्यव्रताचाराः दुराचारा वृथाश्रमाः ।[2]
मोहयित्वा जनान् सर्वान् दर्शयित्वा फलानि तु[3] ॥ ७ ॥

वामाः पाशुपताचाराः तथा वै पाञ्चरात्रिकाः ।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ॥ ७ ॥

अधर्मिका अनाचारा महाकोपाल्पतेजसः ।
अनृतं वदन्ति लुब्धाश्च तिष्यजाताश्च[4]दुष्प्रजाः ॥ ९ ॥

शूद्राणां [5]मन्त्रयोनिस्तु सम्बन्[6]धो ब्राह्मणैस्सह ।
भविष्य[7]ति कलौ तस्मिन् शयनासनभोजनैः ॥ १० ॥

---

[1] पुरा दक्षेण स्वकृतयज्ञे शिवो नाहूतः । तदसहमानः दधीचश्शिवभक्तः दक्षं शप्त्वा यज्ञवाटान्निर्गतः इति कथा शिवपुराणस्थानुसन्धेया शिवपुराणं रुद्रसंहिता अध्यायः ३९ । एतदर्थे लिङ्गपुराणे ३६ तमे अध्यायेऽपि काचित्कथा दृश्यते । विष्णुमायां दृष्ट्वा कुपितो दधीचः क्षुपं राजानं, देवानृषींश्च एवं वक्ष्यमाणप्रकारेण शपते ।

'रुद्रकोपाग्निना देवाः सदेवेन्द्रा मुनीश्वरैः ।
ध्वस्ता भवन्तु देवेन विष्णुना च समन्विताः ॥ '( ३६-७३)

[2] वृथाश्रमत्वं वृथाश्रमो वृथा आश्रमो वा तं परिगृह्येति ।

[3] फलानि मायया वामाचारेण इन्द्रजालादिभिर्वा ।

[5] मन्त्रयोनिः मन्त्रजात इति । शयनासनादिभिरपि सम्बन्धो भवति ।

---

[4] दुःखजाः (क ग) [6] न्धा (क ग) [7] न्ति (क ख ग घ च)

[1]वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे ।
तपोयज्ञफलानाञ्च विक्रेतारो द्विजोत्तमाः ॥ ११ ॥

[2]यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ।
सेवावसरमालोक्य द्वारि तिष्ठन्ति वारिताः ॥ १२ ॥

[3]ब्राह्मणाः क्षत्रिया वैश्याः नशिष्यन्ति द्विजोत्तमाः ।
बहुवर्णस्तदा लोको भविष्यति कलौ युगे ॥ १३ ॥

## कलौ क्षत्रियधर्मनिरूपणम्

[4]अरक्षितारो लुब्धाश्च तेनाहङ्कारदर्पिताः ।
अल्पवीर्यबलाः स्तब्धाः क्षत्रिया लोककण्टकाः ॥ १४ ॥

[5]यो योऽश्वरथनागाढ्यः स स राजा भविष्यति ।
यश्च यश्चाबलस्सर्वः स स भृत्यः कलौ युगे ॥ १५ ॥

अरक्षितारो भर्तारः शुल्कव्याजेन पार्थिवाः ।[6]
हारिणो जन[7]वित्तानां [8]वर्तयन्ति कलौ युगे ॥ १६ ॥

यो यो ददाति बहुलं[9] स स स्वामी [10]तदा नृणाम् ।
स्वामित्वहेतुसम्बन्धो न विद्याभिजनस्तथा ॥ १७ ॥

---

[1] वेदविक्रयः भृत्यर्थं वेदपाठनरूपः । तीर्थं पवित्रं क्षेत्रम् । तस्यापि व्यवहाररूपेण विक्रेतार इति । [2] यतिचिह्नभाक्त्वमत्र विवक्षितम् ।

[5] धनमेकमेव स्थानवैशिष्ट्यहेतुः । इतरत्सर्वं गौणं भवति । विद्यायाः वयसश्च गौरवं नास्त्येवेति ज्ञेयम् । [6] एतच्छुल्कं च कररूपम् । 'तपः षड्भागमक्षय्यं ददत्यारण्यका हि नः ' इति शाकुन्तलोक्तेः परिहासोऽयम् ।

---

[3] एतत्प्रभृति तिस्रः पंक्तयः क गयो र्न सन्ति । [4] अरिजितारो (ख) [7] नृ (क)
[8] वर्तन्ते च (क ख ग घ) [9] [illegible] [10] [illegible]

## कलौ वैश्यधर्मनिरूपणम्

वैश्याः कृषिवणिज्यादि सन्त्यज्य निजकर्म यत् ।
शूद्रवृत्त्या प्रवत्स्यन्ति [1]कारुकर्मोपजीविनः ॥ १८ ॥
न यक्ष्यन्ति [2]न [3]होष्यन्ति हेतुवादविलो[4]भिताः ।[5]
विप्रा[6]न् विप्रलपन्ति स्म [7]विप्रस्वानि च भुञ्जते ॥ १९ ॥

## कलौ शूद्रधर्मनिरूपणम्

भैक्षव्रतास्तथा शूद्राः [8]प्रव्रज्यालिङ्गिनोऽधमाः[9]
पाषण्डसंश्रयां वृत्तिं संश्रयिष्यन्त्यसत्कृताः ।
शूद्रा धर्मं प्रवक्ष्यन्ति लोभमोहमदान्विताः ॥ २० ॥

## कलौ स्त्रीधर्मनिरूपणम्

परित्यजन्ति भर्तारं वित्तहीनं तथा स्त्रियः ।
[10]भर्ता भविष्यति कलौ वित्तवानेव योषिताम्[11] ॥ २१ ॥
[12]उभाभ्यामथ पाणिभ्यां शिरः कण्डूयनं स्त्रियः ।[13]
कुर्वन्त्यो गुरुभर्तृणामाज्ञां भेत्स्यन्त्यनादृताः ॥ २२ ॥

---

[1] कारुकर्म शिल्पकर्म । [5] दुष्टतर्कविलोभनेन सद्वृत्तिनिन्दात्र विवक्षिता ।
[9] अत्र वर्णाश्रमाचारव्यवस्थायाः सङ्कीर्णता भङ्गो वा विवक्षितः ।
[11] श्रीमच्छङ्करभगवत्पादानां 'यावद्वित्तोपार्जनसक्तः' इत्याद्युक्तिसन्दोहः स्मरणीयः । [13] शिरःकण्डूयनं दारिद्र्यद्योतकम् ।

---

[2] चा (ख) [3] भोक्ष्यन्ति (क ग) [4] हि (क) [6] नपलयन्ति (ख घ) [7] ब्रह्म (ख घ) [8] प्रव्रत्या (क ग) [10] खचयोः पंक्तिरियं न दृश्यते ।
[12] 'घ' प्रतौ पंक्तिर्नास्ति ।

दु शीलाः कष्टशीलेषु कुर्वन्त्यः सततं स्पृहाम् ।
[1]परुषानृतभाषिण्यो भविष्यन्ति कलौ स्त्रियः ॥ २३ ॥

## कलौ नराणामायुःप्रमाणनिरूपणम्

अधर्मवृत्त्या लोकानामल्पमायुर्भविष्यति ।
परमायुः शतन्त्वेकं मनुष्याणां कलौ स्मृतम् ॥ २४ ॥

जनाः शतायुषः [2]पञ्च भवन्ति न भवन्ति च ।
अशीतिका[3]श्च विद्यन्ते केचित्सप्ततिका नराः ॥ २५ ॥

परमायुःस्थितिः षष्टिस्तदप्यत्र न निश्चितम् ।
नातिजीवन्ति वै केचित् तदा वर्षाणि विंशतिम् ॥ २६ ॥

गर्भस्थाश्च [4]म्रियन्ते च तथा जाता म्रियन्ति च ।
[5]भवित्री योषितां सूतिः पञ्चषट्सप्तवार्षिकी ॥ २७ ॥

नवाष्टादशवर्षाणां मनुष्याणां कलौ तथा ।
परमायुश्च भवति तदा[6] वर्षाणि षोडश ॥ २८ ॥

## कलिदुर्गतिवर्णनम्

अशास्त्रविहितं घोरं तप्यमानेषु वै तपः ।
नरेषु नृपदोषेण बालमृत्युर्भविष्यति[7] ॥ २९ ॥

अनावृष्टिभयप्रायाः प्रजाः क्षुद्भयकातराः

---

[2] शते पञ्च भवेयुर्वा नापि भवेयुः । पूर्णायुषां स्थितिरेव सन्दिग्धेत्यर्थः ।
[5] यदा परमायुः षोडशवर्षाणि तदा स्त्रीणां शिशुप्रसवहेतुक यौवनं पञ्चमे वर्षे एव प्राप्तं भवति । [7] 'राजा कालस्य कारणम्' इति रक्षितृदोषः ।

---

[1] पुरुषा (ख ग घ) [3] तत्र (ख घ) [4] पि म्रिय (ख) [6] क्रि (ख घ) [8] या (ख घ)

भविष्यन्ति सदा सर्वा गगनासक्तदृष्टयः[1]
दुर्भिक्षमेव सततं सदा क्लेशो भविष्यति । ॥ ३० ॥

[2]अल्पज्ञाना [3]वृथालिङ्गा दुष्टान्तःकरणाः कलौ
यतस्ततो वि[न]ं[4]क्ष्यन्ति कालेनाल्पेन मानवाः ॥ ३१ ॥

स्वल्पाम्बुवृष्टिः पर्जन्यः सस्यं स्वल्पफलं तथा
फलं तथाल्पसारञ्च विप्राः ! प्राप्ते कलौ युगे । ॥ ३२ ॥

न कश्चित्कस्यचिच्छ्रोता न कश्चित्कस्यचिद्गुरुः ।
न प्रीतिर्वेदवादेषु पाषण्डेषु यदा रतिः ।
कलेर्वृद्धि[5]स्तदा प्राज्ञैरनुमेया द्विजोत्तमाः ॥ ३३ ॥

किं देवैः किं द्विजैर्वेदैः किं शौचे[6]नाम्बुजन्मना ।
इत्येवं हि प्रवक्ष्यन्ति पाषण्डोपहता जनाः ॥ ३४ ॥

[7]शणप्रायाणि वस्त्राणि शमीप्राया महीरुहाः ।
अणुप्रायाणि धान्यानि वर्तन्ते च कलौ युगे ॥ ३५ ॥

कस्य माता पिता कस्य [8]यदा कर्मात्मकः पुमान् ।
इति चोदाहरिष्यन्ति श्वशुरानुगता नराः । ॥ ३६ ॥

यद्यद्दुःखाय तत्सर्वं कलिकाल इतीरितः
एवं चतुर्युगाणाञ्च धर्माश्च कथिता मया । ॥ ३७ ॥

---

[1] सन्दिग्धायां वृष्टौ कदा वा वृष्टिर्भवेदिति कातरता । [3] वृथालिङ्गं चिह्नं ऊर्ध्वपुण्ड्रकाषायादिरूपम् । [7] शणः तन्तुविशेषः । तज्जानि वस्त्राणि अतिशिथिलानि । शमीप्रायाः अल्पप्ररोहाः अल्पपत्राश्च । इयं सर्वापि क्षीणदशा ।

---

[2] अल्प वर्ता लिङ्ग (च) [4] श्य (क) [5] स्तथा (ख घ) [6] नात्म (क ग घ) [8] कदा (घ)

सङ्कोच्य भूसुरश्रेष्ठाः किमन्यच्छ्रोतु[1]मिच्छथ ॥ ३८ ॥

## कलियुगप्रशंसा

[2]ऋषयः ।

अधर्मोऽयं सुसम्पूर्णः कलिकाले प्रवर्तते ।
धर्मश्चैकेन पादेन तिष्ठतीति त्वयोदितम् ।
तस्य वै गुणमत्यल्पं वद सूत महामते ॥ ३९ ॥

## कलिगुणशुश्रूषया ऋषिकृतं व्यासदर्शनम्

[3]व्यासश्चाह महाबुद्धिः यदत्रैव हि वस्तुनि ।
तच्छ्रूयतां महाभागा [4]गदतो मम सत्तमाः ॥ ४० ॥
[5]कस्मिन्कालेऽल्पको धर्मो ददाति सुमहत्फलम् ।
[6]मुनीनां पुण्य[7]वादोऽभूत्कैश्चासौ क्रियते सुखम् ॥ ४१ ॥
सन्देहनिर्णयार्थाय वेदव्यासं महामुनिम् ।
ययुस्ते संशयं प्रष्टुं सर्वज्ञं मुनिपुङ्गवाः ॥ ४२ ॥
ददृशुस्ते मुनिं तत्र जाह्नवी[8]सलिले द्विजाः ।
वेदव्यासं महाभागं अर्धस्नातं महामुनिम् ॥ ४३ ॥
स्नानावसानं ते तस्य [9]प्रतीक्षन्तो महर्षयः ।
तस्थुस्तटे महानद्यास्तरुषण्डमुपाश्रिताः[10] ॥ ४४ ॥

---

[3] अयं भागः विष्णुपुराणादुद्धृतः (विष्णुपुराणं अंशः ६ अध्यायः २)

[6] पुण्यवादोत्र अल्पप्रयासेन फलबाहुल्यप्राप्तिरूपः धर्मविषयकः ।

[9] आर्षं शतृजन्तम् । [10] षण्डं समूहः ।

---

[1] मर्हथ (ख) [2] खघयोर्न दृश्यते । [4] 'धर्मज्ञानं महामुनिम्' । एतत्पंक्त्यनन्तरं 'वेदव्यासं महाभागं' इत्यन्तो भागः 'च' प्रतौ न दृश्यते । [5] त (क ख घ)
[7] वेहो (क) [8] स्थलिले (क ख घ)

मग्नोऽथ जाह्नवीतोयादुत्थाया[1]ह [2]महामुनिः ।
[3]व्यासस्साधुः कलिस्साधुः इत्येवं शृण्वतां वचः ॥ ४५ ॥

तेषां मुनीनां भूयश्च ममज्ज स नदीजले ।
उत्था[4]य साधु साधुश्च शूद्रस्साध्विति चाब्रवीत् ॥ ४६ ॥

निमग्नश्च समुत्थाय [5]पुनः प्राह महामुनिः ।
योषितस्साधु धन्यास्ताः ताभ्यो धन्यतरोऽस्ति कः ॥ ४७ ॥

ततः स्नात्वा यथान्यायं [6]स्वाचान्तं च कृतक्रियम् ।
[7]उपतस्थुर्महाभागाः मुनयस्ते महामुनिम् ॥ ४८ ॥

कृतसंवन्दनांश्चाह कृतासनपरिग्रहान् ।
किमर्थमागता यूयं इति सत्यवतीसुतः ॥ ४९ ॥

तमूचुः संशयं प्रष्टुं भवन्तं वयमागताः ।
अलं ते[8]नास्तु तावन्नः कथ्यतामपरं त्वया ॥ ५० ॥

कलिस्साध्विति यत्प्रोक्तं शूद्रस्साध्विति योषितः ।
यश्चाह भगवान् साधु धन्याश्चेति पुनः पुनः
तत्सर्वं श्रोतुमिच्छामो न चेद्गुह्यं महामते । ॥ ५१ ॥

इत्युक्तो मुनिभिर्व्यासः प्रहस्येदमथाब्रवीन् ।

**व्यासकृतकलियुगनिरूपणम्**

श्रूयतां [9]तन्मुनिश्रेष्ठाः यदुक्तं साधु साध्विति ॥ ५२ ॥

---

[2] महामुनिर्व्यासः इत्यन्वयः । [6] सुष्ठुकृताचमनक्रियम् । कृतक्रियता च अर्घ्यादिरूपा ।

---

[1] थ (क ग घ च) [3] साधु (ख घ) [4] याथ साधुश्च (च) [5] पुनश्चाह (ख घ)
[7] [illegible] [8] तेऽस्तु (क) [9] तु (क)

यत्कृते दशभिर्वर्षैः त्रेतायां हायनेन तत् ।
द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ[1] ॥ ५३ ॥

[2]तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः ।
प्राप्नोति पुरुषस्तेन कलिस्साध्विति भाषितम् ॥ ५४ ॥

ध्यायन् कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥ ५५ ॥

धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ ।
[3]स्वल्पायासेन धर्मज्ञाः तेन तुष्टोऽस्म्यहं कलौ ॥ ५६ ॥

व्रतचर्यापरैर्ग्राह्या वेदाः [4]पूर्वं द्विजातिभिः ।
ततः स्वधर्मं सम्प्रा[5]प्तैः यष्ट[6]व्यं विधिवज्जनैः ॥ ५७ ॥

स्वधर्मस्याविरोधेन नरैर्ल[7]ब्धं धनं सदा ।
[8]प्रतिपादनीयं पात्रेषु यष्टव्यं च यथाविधि ॥ ५८ ॥

[9]तस्या[10]र्जने महान् क्लेशः पालने च द्विजोत्तमाः ।
तथा सद्विनियोगा[11]र्थं [12]विज्ञेयं [13]ग्रहणं नृणाम् ॥ ५९ ॥

एभिरन्यैस्तथा क्लेशैः पुरुषो द्विजसत्तमाः ।
निजान् जयति वै लोकान् [14]प्राजापत्यादिकान् क्रमात् ॥६०॥

## कलियुगे शूद्रसाधुत्वस्य प्रतिपादनम्

द्विजशुश्रूषयैवैषः पाकयज्ञाधिकारवान् ।

---

[1] पुण्यप्राप्तेः कृतादियुगेषु सौलभ्यं प्रदर्शितम् । [8] प्रतिपादनं दानम् ।
[9] तस्य धनस्येति । [14] प्राजापत्यादिकाः ब्रह्मलोकादिलोकाः ।

---

[2] आवासो (क ग) [3] स्वल्पा (ख घ च) [4] पूर्व (ख घ च) [5] प्तो (ख) [6] व्यो (ख)
[7] ब्धुं (क) [10] र्चं (क) [11] र्थ (क ख ग घ)[1] [3] वित्तेयं (क ग च) [13] गर्हणं (ख घ)

निजान् जयति वै लोकान् शूद्रो धन्यतरः स्मृतः ॥ ६१ ॥

भक्ष्याभक्ष्येषु नास्यास्ति पेयापेयेषु वा पुनः ।
नियमो मुनिशार्दूलाः तेनास्मिन्साध्वितीरितम् ॥ ६२ ॥

इति धर्मस्वरूपञ्च रहस्यं भूसुरोत्तमाः ।
नारदः प्राह देवर्षिः [1]वीणापाणिश्च मां प्रति ॥ ६३ ॥

## शूद्रधर्मनिरूपणे नारदेन स्वानुभवविवरणम्

[2]अहं पुरातीतभवेऽभवं मुने
दास्यास्सुतः कश्चन वेदवादिनाम् ।
निरूपितो बालक एव योगिनां
शुश्रूषणे प्रावृषि [3]निर्विविक्षताम्[4] ॥ ६४ ॥

ते मय्यपेताखिलचापलेऽ[5]र्भके
दान्ते यतक्रीडनकेऽ[6]नुवर्तिनि ।
चक्रुः कृपां यद्यपि तुल्यदर्शनाः
शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥ ६५ ॥

उच्छिष्टलेपादनुमो[7]दितो द्विजैः
सकृच्च भुङ्क्ते तदपास्तकिल्बिषः ।
एवं प्रवृत्तस्य विशुद्धचेतसः
स[8]त्कर्मणैवात्मरुचिः प्रजायते ॥ ६६ ॥

---

[1] वीणापाणिरिति नारदविशेषणम् । [2] भागोऽयं भागवतादुद्धृतः भागवतम् स्कन्धः १ अध्यायः ५-६ । अतीतभवः कल्पान्तरम् । [4] प्रावृषि निर्विविक्षा चातुर्मास्यार्थं एकदेशवासः ।

---

[3] तद्विविक्ष (ख ग) [5] ज्ञके (क ग च) [6] त्रिवर्तिनि (क ग) [7] हितो (ख)
[8] कारणे (क)

त[1]त्रान्वहं कृष्णकथाः प्रगायतां
अनुग्रहेणाश्रृणवं मनोहराः ।
तैः श्रद्धया मेऽनुपदं विश्रृण्वतः
[2]प्रियश्रवस्याङ्ग ममाभवद्रतिः ॥ ६७ ॥

तस्यैव मेऽनुरक्तस्य प्र[3]णीतस्य हतैनसः ।
श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च ॥ ६८ ॥

दान्तं गुह्यतमं यत्तत् साक्षाद्भगवतोदितम् ।
अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥ ६९ ॥

नमो भगवते तुभ्यं वासुदेवाय धीमहि ।
प्रद्युम्नायानिरुद्धाय नमस्सङ्कर्षणाय च ॥ ७० ॥

श्रुत्वा तदहमीशस्य भक्तानां शमभीप्सतः ।
अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम् ॥ ७१ ॥

एक एवाभियातोऽहं तृट्परीतो बुभुक्षितः ।
स्नात्वा पीत्वा ह्रदे नद्यामुपविष्टो गतश्रमः ॥ ७२ ॥

नामान्यनन्तस्य गतश्रमः पठन्
गुह्यानि भद्राणि कृतानि[4] च स्मरन् ।
[5]गां पर्यटन् तुष्टमना गतस्पृहः
कालं प्रतीक्षन्विमदो विमत्सरः ॥ ७३ ॥

---

[2] प्रियश्रवाः–श्रीकृष्णः । [3] प्रणीतः प्रकर्षेण निर्मितः । हतैनाः गतपापः ।
[4] कृतानि चरितानि । [5] गां भूमिम् ।

---

[1] तत्राहं (क ग) [2] प्रियतम (क ग ज)

एवं कृष्णमतेर्ब्रह्म[1]न्नसक्तस्यामलात्मनः ।
कालः प्रादुरभूत्काले तटित्सौदामनी यथा ॥ ७४ ॥

कल्पान्त [2]इदमादाय शयानेऽम्भस्युदन्वतः ।
[3]शिशयिषोरनुप्राणं विवेशान्तरहं प्रभोः ॥ ७५ ॥

सहस्रयुगपर्यन्तं[4] उत्थायेदं सिसृक्षतः ।
मरीचिमिश्रा[5] ऋषयः प्राणेभ्योऽहं[6] च जज्ञिरे ॥ ७६ ॥

अनुग्रहान्महाविष्णोः अनुज्ञातमतिः क्वचित् ।
देवदत्तामिमां वीणां नादब्रह्मविभूषिताम् ॥ ७७ ॥

[7]मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम् ।
एवं सम्भाष्य भगवान् नारदो मां द्विजोत्तमाः ॥ ७८ ॥

आमन्त्र्य वीणां रणयन् ययौ यादृच्छिको यतिः ।
तस्मात्कलिश्च विप्रेन्द्राः शूद्रस्साधुरितीरितः ॥ ७९ ॥

## कलौ स्त्रीसाधुत्वस्य प्रतिपादने अरुन्धतीकथानके पतिशुश्रूषामाहात्म्यनिरूपणम्

[8]पुरा सप्तऋषीणान्तु पत्नीर्दृष्ट्वा तु पावकः ।
मनस्तासु विनिक्षिप्य कामयानो वनं गतः ॥ ८० ॥

---

[5] मिश्रशब्दो गौरवसूचकः विद्वत्ताप्रदर्शको वा । [7] मूर्च्छनं रागावसानरीतिः ।
[8] इयं कथा महाभारतस्य मार्कण्डेयसमस्यापर्वण उद्धृता । (महाभारतम्—वनपर्वणि मार्कण्डेयसमस्यापर्व २१३—२१४ अध्यायौ)

---

[1] न्मद्ब्र (च) [2] इवमास्था (क ख ग घ) [3] शिशयाषो (क घ) [4] न्ते (क ग च)
[6] वि (क ग च)

कामसन्तप्तहृदयो देहत्यागे [1]सुनिश्चितः ।
स्वाहा [2]तच्छिद्रमन्विष्य मनस्येवमचिन्तयत् ॥ ८१ ॥

अहं सप्तर्षिपत्नीनां [3]कृत्वा रूपाणि पावकम् ।
रमयिष्यामि कामार्थं तासां रूपेण मोहितम् ॥ ८२ ॥

एवं कृते प्रीतिरस्य कामावाप्तिर्भवेदिति ।
षण्णामेव हि सा देवी ऋषीणां भावितात्मनाम् ॥ ८३ ॥

पत्नीस्वरूपता कृत्वा रमयामास पावकम् ।
दिव्यं रूपमरुन्धत्या कर्तुं न [4]शकितं तया ।
तस्यास्तु शीलवृत्ताभ्यां भर्तृशुश्रूषणेन च ॥ ८४ ॥

तस्मात् स्त्रीभिरनायासात् पतिशुश्रूषयैव हि ।
अवाप्यते [5]परं श्रेयः परत्रेह च दुर्लभम् ॥ ८५ ॥

तृतीयं व्याहृतं तेन मया साध्विति योषितः ।
एतद्वः कथितं विप्राः यन्निमित्तमिहागताः ॥ ८६ ॥

## कलिप्रशंसा

इति तस्य वचः श्रुत्वा प्रशशंसुः पुनः पुनः ।
यथागतं [6]तथा जग्मुः व्यासोक्तिकृतनिश्चयाः ॥ ८७ ॥

सूतः ।

तस्मात्स्वल्पेन [7]यत्नेन धर्मस्संसिध्यते कलौ ।
[8]जनैरात्मगुणाम्भोभिः क्षालिताशेष[9]किल्बिषैः ॥ ८८ ॥

---

[1] अभूदिति शेषः । [4]शक धातुः दिवादिः ।

---

[1] वि (क ग) [2] स (ख घ) [3] रूपं कृत्वा तु (घ) [5] भृशं (क ग)
[6] द्विजा (क ग) [7] धर्मेण अर्थस्संसाध्यते (ख) [8] कले (ख) [9] कल्मषैः (ख)

अत्यन्तदुष्टस्य कलेरयमेको महान्गुणः ।
तस्मात्सर्वप्रयत्नेन प्राप्य [1]माहेश्वरं युगम् ॥ ८९ ॥

विशेषाद्ब्राह्मणो नित्यमीशानं शरणं व्रजेत् ।
यश्चेत्थं तत्वतो वेत्ति युगधर्ममशेषतः ॥ ९० ॥

दोषं कलियुगस्यास्य गुणं चान्यत्र दुर्लभम् ।
न लिप्यते स तद्दोषैर्नाकपृष्ठे विराजते ॥ ९१ ॥

इति श्रीमत्पुराणसारे [2]कलिप्रशंसा शूद्रप्रशंसा नाम
सप्तमोऽध्यायः

---

[1] माहेश्वरं युगं कलियुगम् । कलौ रुद्रस्य प्रामुख्यकथनात् ।

---

[2] कलियुगप्रशंसा [illegible] नाम (क ग)

# अष्टमोऽध्यायः

[1] [ वैश्यधर्मनिरूपणम् ]

---

## वैश्यधर्मजिज्ञासया ऋषीणां सूतं प्रति प्रश्नः

ऋषयः ।

सूत सूत महाभाग तव सूक्तिसुधारसम् ।
कर्णाञ्जलिपुटैः पीत्वा प्राज्ञः को वा न तृप्यति[1] ॥ १ ॥

वयं तु न वितृप्यामः श्रुत्वा [2]त्वद्भापितं वचः ।
यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥ २ ॥

मन्ये तान् जडमूकान्धान् मृतकल्पानचेतसः ।
कथायां विमुखा ये स्युः त्वयोक्तायां महामते ॥ ३ ॥

कलिधर्मप्रसङ्गेण शूद्राणां धर्म ईरितः ।
इदानीं ब्रूहि नस्तत्त्वं वैश्यानां धर्म[3]मुत्तमम् ।
क्षत्रियाणां महाबुद्धे विप्राणा[4]ञ्च विशेषतः ॥ ४ ॥

## वैश्यधर्मविवरणम्

सूतः ।

स्वाध्यायं यजनं दानं कुसीदं पशुपालनम् ।
गोरक्षं[6] कृषिवाणिज्यं कुर्याद्वैश्यो यथाविधि ॥ ५ ॥

---

[1] कलियुगप्राशस्त्यं दर्शयितुं व्यतिक्रमेणादावेव शूद्रधर्मनिरूपणं कृतमिति भाति ।

---

[2] ते (क) [3] त (क ख ग घ) [4] उत्तमम् (ग) [4] चैव सर्वशः (क)
[5] क्षा (क ग च)

[1]कामदम्भविनिर्मुक्तः सत्यवा[2]गनसूयकः ।
स्वदारनिरतो दान्तः परदारविवर्जितः ॥ ६ ॥

वीतरागभयक्रोधो लोभ[4]मोहविवर्जितः ।
दाता यज्वा देवभक्तो गोब्राह्मणहिते रतः ॥ ७ ॥

त्रिवर्ग[5]सेवी सततं वणिक्कर्मण्यवञ्चकः ।
धनैर्विप्रान् समर्चेत [6]यज्ञकाले [7]त्वयाचितः ॥ ८ ॥

पितृकार्यं च तत्काले सर्वदेवार्चनं तथा ।
एवं धर्मपरो वैश्यः प्राप्नोति परमां गतिम् ॥ ९ ॥

## [8]स्वधर्मनिरतस्य वैश्यस्य श्रैष्ठ्यप्रतिपादने जाजलिकथा

पुरा वै [9]सागरोपान्ते जाजलिर्नाम वै द्विजः ।
तपस्तेपे महाघोरं वायुभक्षस्समाहितः ॥ १० ॥

तस्य वर्षाण्यनेकानि [10]स्थाणुभूतस्य तिष्ठतः ।
[11]कुलिङ्गशकुनावेत्य नीडं शिरसि चक्रतुः ॥ ११ ॥

स तौ दयावान् ब्रह्मर्षिरुपप्रैक्षत दम्पती ।
ततस्तौ सुखविश्वस्तौ तत्राण्डानि व्यमुञ्चताम् ॥ १२ ॥

---

[1] कामेन दम्भेन चेति । [3] स्वदारनिरतस्यापिपरदारप्रसङ्गः कदाचिज्जायेतेति परदारप्रसङ्गनिषेधः । [5] त्रिवर्गो धर्मकामार्थाख्यः । [6] यज्ञार्थं श्रवणमात्रेण दानं महाफलम् । [8] महाभारतस्य शान्तिपर्वणि इयं कथा स्वीकृता स्यात् । श्लोकेषु व्यत्यासो दृश्यते । कथाप्यत्र संगृहीता वर्तते । शान्तिपर्व अध्यायाः २५३–२५६ । [9] सागरसमीपे इति । सागरनाम नोक्तम् । [10] स्थाणुभावः निश्चलता । [11] कुलिङ्गः चटकः ।

---

[2] न (क) [4] मत्सर (क ग) [5] समबुद्धिश्च (ख च) [7] प्र (च)

अण्डेभ्यस्त्वथ पुष्टेभ्यो व्यजायन्त शकुन्तकाः ।
व्यवर्धयंश्च तत्रैव न चचाल स जाजलिः ॥ १३ ॥

कदाचिज्जातप[1]त्रास्ते समुत्पत्य विहङ्गमाः ।
अन्यत्र वसतिं चक्रुः विचरन्तो वनान्तरे ॥ १४ ॥

तदा तु जातपक्षाश्च गतास्ते तु विहङ्गमाः ।
नैवाजग्मुर्यदा विप्रा अतस्सम्प्रययौ द्विजः ॥ १५ ॥

[2]अथास्फोट्य म[3]दाविष्टः प्रोवाच न मया समः ।
लोकेऽस्मिंस्तपसा कश्चित्ततः शुश्राव खे वचः ॥ १६ ॥

धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ।
वाराणस्यां निवसति तुलाधारो महामतिः ।
सोऽप्येवं नार्हते वक्तुं [4]यथा त्वं भाषसे द्विज ॥ १७ ॥

अधोधो दर्शने [5]कस्य महिमा नोप[6]चीयते ।
उपर्युपरि पश्य[7]न्तः सर्व एव दरिद्रति[8] ॥ १८ ॥
[9]तच्छ्रुत्वामर्षितस्सोऽथ तुलाधारदिदृक्षया ।

## तुलाधारादिदृक्षया जाजलेः वाराणसीगमनम्

अचिरेणैव कालेन प्राप्तो वाराणसीं पुरीम् ॥ १९ ॥

[10]तत्रापश्यत्तुलाधारं विक्रीणन्तं रसान्बहून् ।
कुलीनं सत्क्रियं [11]देवद्विजसपर्या[12]पूजनम् ॥ २० ॥

---

[2] अङ्गुलिमास्फोट्येति । गर्वसूचकोऽयं क्रमः । [8] दरिद्रादुर्गतौ इति धातुः क्षीणा भवन्तीति । [12] पूजकमिति ।

---

[1] क्षा (ख घ) [3] हारि (ख घ) हावि (च) [4] त (क) [5] त (ख घ च) [6] जा (ख ग च)
[7] न्तु (ख ग ख) [9] गर्हर्षिस्सोऽथ तच्छ्रुत्वा (ख घ) [10] तत्रागत्य तु (च)
[11] चैव (ख घ च) [12] पूर्वक (ख घ च)

कृषिवाणिज्यकर्तारं क्रयविक्रयतत्परम् ।
गो[1]घोटकमहिष्यादियोनिपोषणतत्परम् ॥ २१ ॥

पयो दधीनि तक्राणि गोमयानि तृणानि च ।
काष्ठानि फलमूलानि लवणं जातिपिप्पली ॥ २२ ॥

धान्यानि शाकतैलानि वस्त्राणि विविधानि च ।
धातूनिक्षुविकारांश्च[2] विक्रीणन्तं च सर्वदा ॥ २३ ॥

तुलाधारोऽपि तं दृष्ट्वा प्रत्युत्थायाभिवाद्य च ।
अर्घ्यपाद्यादिभिस्सम्यक्पूजयित्वाब्रवीदिदम् ॥ २४ ॥

[3]तुलाधारः ।

[4]आयानेवासि विदितो मया त्वं द्विजसत्तम ।
[5]यच्चेहागमने कार्यं तदप्यवगतं मया ॥ २५ ॥

तप[6]तस्ते समुद्रान्ते जाता मूर्ध्नि विहङ्गमाः ।
ततस्त्वां विस्मयाविष्टं खे वागुक्ता च मां प्रति ॥ २६ ॥

तां श्रुत्वा च महर्षे त्वं मां दिदृक्षुरिहागतः ।
[7]तद्वदाशु द्विजश्रेष्ठ प्रियं किं करवाणि ते ॥ २७ ॥

जाजलिः ।

विक्रीणतः सर्वरसान् सर्वगन्धांश्च नित्यशः ।
कथं ते नैष्ठिको धर्मो[8] [9]विदितस्तद्वदस्व मे ॥ २८ ॥

---

[1] घोटकोऽश्वः । [2] इक्षुविकारः गुडशर्कराखण्डशर्करादिरूपः ।
[4] आगच्छन्नेवेति । [8]विदितोऽभूदिति ।

---

[2] विक्रीणाति (च) [3] ख घ च मातृकासु एतदारभ्य पंक्तिरेका नास्ति ।
[4] तद्व (ग) [6] स्तेपे (क ग) [7] त्वद्वादाच्च (क ग च) [9] विहि (क च)

[1]एवमुक्तस्तुलाधारो ब्राह्मणेन यशस्विना ।
उवाच निज[2]धर्मां[श्च] वैश्यो धर्मार्थतत्त्ववित् ॥ २९ ॥

## तुलाधारेण स्वाचारनिरूपणम्

यद्ददामि न तन्न्यूनं [3]यद्गृणामि न चाधिकम् ।
विक्रीणामि रसांश्चाहं मद्यवर्जममायया[4] ।
क्रीत्वा वै प्रतिविक्रीणे [5]परहास्ताद्धनं बहु ॥ ३० ॥
[6]यः करोति [7]जडान् साधून् वणिक्कर्मणि वञ्चनाम् ।
स याति नरकं घोरं धनं [8]च परिहीयते ॥ ३१ ॥
सर्वेषामपि देवानां ब्राह्मणानां गवां तथा ।
करोमि[9] नित्यं शुश्रूषां पाषण्डानामुपेक्षकः ॥ ३२ ॥
अद्रोहेणैव भूतानां कर्मणा मनसा गिरा ।
या वृत्तिः परमो धर्मः तेन जीवामि जाजले ॥ ३३ ॥
एतान्धर्मांस्तुलाधारः कथयित्वा तु जाजलेः ।
ततोऽस्य दर्शयामास [10]समीपस्थान् शकुन्तकान् ॥ ३४ ॥
एते शकुन्तका विप्र प्रसूतास्तव मूर्धनि ।
[11]आह्वयैतान् द्विजश्रेष्ठ त्वमेषां धर्मतः पिता ॥ ३५ ॥
ततो जाजलिना ते [12]तु समाहूतास्शकुन्तकाः ।
वाचं प्रत्याहारन्दिव्यां धर्मस्य वचनात्किल ॥ ३६ ॥

---

[1] यशस्विना ब्राह्मणेनोक्तः तुलाधारो वैश्य इति । यशश्च महातपः प्राप्तम् ।
[4] माया चात्र वाणिज्ये कापाटिकत्वम् । [6] साधून् जडान् करोति, वञ्चनां च करोतीत्यन्वयः ।

---

[2] धर्माणि (क ख ग घ च) ‘ उवाच धर्मसूक्ष्माणि ’ इति महाभारतम् । शान्तिपर्व अध्याय १५४ [3] नगृह्णामि (ख घ) [5] प्रति (ख च) [4] जरा (क) [8] तत्य वि (ख च) [9] ति (च) [10] विपश्ची (क) मिपश्च ग) [11] आहुश्चै (क ग च) [12] न (ख ग घ)

शकुन्तकाः ।

## जाजलये शकुन्तकानामुपदेशः

त्यज स्पर्धामिमां ब्रह्मन् [1][मा]त्मना विस्मयं ग[2][मः] ।
शमे मनस्समाधत्स्व ततो [3]ज्ञास्यसि तत्पदम्[4]		॥ ३७ ॥

सुदुःखार्जितमेतत्ते तपः क्षरति विस्मयात् ।[5]
तपसि क्षरिते विप्र न प्राप्स्यसि परां गतिम्		॥ ३८ ॥

तस्मात्स्मयं परित्यज्य तपसः क्षयकार[6]कम् ।
[7]शमे मनस्समाधाय ध्यानयोगपरो भव		॥ ३९ ॥

चीरवासा जटी वापि त्रिदण्डी मुण्ड एव वा ।
वृथा क्लिश्यति स ब्रह्मन् यस्य शान्तं न मानसम्		॥ ४० ॥

भूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः ।
समस्सर्वेषु भूतेषु न लिङ्गं[8] धर्मसाधनम्		॥ ४१ ॥

वनेऽपि दोषाः [9]प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रह[10]स्तपः ।
[11]अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम्		॥ ४२ ॥

यदा विरागाय कृतोद्यमो नरः
तदा विरक्तं ध्रुवमस्य मानसम् ।

---

[4] तत्पदं श्रेष्ठ स्थानं मोक्षमिति भावः ।   [5] विस्मयो अद्भुतजन्माहङ्कारः ।
[8] चीरवासादिकं चिह्नमिति ।   [11] कुत्सनं गर्हा । तद्विरुद्धं धार्मिकमिति ।

---

[1] ना (क ख ग घ च)   [2] तः (क ख ग घ च)   [3] यास्यति (च) यास्यति (ख घ)
[6] कः (ख घ)   [7] कगयोः एतदारभ्य पञ्चपंक्तयः न दृश्यन्ते ।   [9] प्रवद (क ग घ च)
[10] हं (त ख)

यदा विरक्तं ध्रुवमस्य मानसं

तदा तु विष्णोः परमं पदं ध्रुवम् ॥ ४३ ॥

वयं स्नेहादिह प्राप्ताः तव धर्मदिदृक्षया ।

शान्तो भव त्यज स्पर्धामित्युक्त्वा खं ययुः खगाः ॥ ४४ ॥

## जाजलेः परमपदप्राप्तिः

एवं तैरनु[1]शिष्टोऽसौ तुलाधारेण च द्विजाः ।

शममास्थाय [2]नियतो जगाम परमां गतिम् ॥ ४५ ॥

## तुलाधारस्य परमपदप्राप्तिः

तुलाधारोऽपि मतिमान् सत्यवा[3]गनसूयकः ।

स्वधर्मोक्तं तु कुर्वाणो जगाम परमां गतिम् ॥ ४६ ॥

## स्वधर्मप्रशंसनम्

स्व[4]वर्त्मनि स्थितस्तस्माद्वरीयानेव सुव्रताः ।

[6]यः स्व[7]धर्मपरित्यागी स निकृष्टो नराधमः ॥ ४७ ॥

य इदं शृणुयान्नित्यं पुण्यमाख्यानमुत्तमम् ।

सर्वपापविनिर्मुक्तः स गच्छेत्परमां गतिम् ॥ ४८ ॥

इति श्रीमत्पुराणसारे वैश्यधर्मकथनं नाम

अष्टमोऽध्यायः ।

---

[6] स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः इति भगवद्गीता स्मरणीयात्र ।

---

[1] शिष्टस्तु (क) [2] निर (च) [3] न (क) [4] धर्मणि (च) [5] कर्म (ख घ च)

## नवमोऽध्यायः

[ राजधर्मनिरूपणप्रकरणम् ]

सूतः ।

अथातस्सम्प्रवक्ष्यामि क्षत्रियाणामनु[1]क्रमात् ।
सोमसूर्यप्रसूतानां धर्मचारित्रमुत्तमम् ॥ १ ॥

### सूर्यवंशपरम्परानिरूपणम्

अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मान्मरीचिस्संजज्ञे दक्षश्चैव प्रजापतिः ॥ २ ॥

मरीचेः कश्यपः पुत्रो दक्षस्य दुहिता दितिः ।
[2]अदितेः कश्यपाज्जज्ञे [3]विवस्वान्नाम वै [3]मनुः ॥ ३ ॥

[4]तस्य वैवस्वतस्तस्मादिक्ष्वाकुर्नाम वै सुतः ।
[5]इला नामाभवत्पुत्री [6]मान्यस्तस्य महात्मनः[7] ॥ ४ ॥

इक्ष्वाकोरभवन्पुत्राः शतमुत्तमधन्विनः ।
तेभ्यो हि जज्ञिरे चान्ये तेभ्यो जातास्सहस्रशः ।
तैः पार्थिवैर्मुनिश्रेष्ठाः सूर्यवंशो व्यवर्धत ॥ ५ ॥

---

[5] वैवस्वतमनोर्दशपुत्रेषु प्रथमः इलः । जातु स शरवणे दिग्विजयार्थं गतः परमेश्वरशापवशात् स्त्रीभावं प्राप्तः । अयमिल एवेला । इक्ष्वाकुकृताश्वमेधपुण्यवशात् सा मासमेकं पुम्भावं मासमेकं स्त्रीभावं च क्रमशः सम्प्राप्य, स्त्रीभावे बुधसंसर्गात् पुरूरवसं जनयामास इति मत्स्यपुराणे कथा दृश्यते । मत्स्यपुराणं अध्यायौ ११–१२ ।

---

[1] क्रमम् (क ग) [2] विवस्वात्कश्यपात् (ख च) [3] वैवस्वतो (ख च) [4] मनोः (ख च)
[6] मनोः (ख च) [7] महादेवाज्ञया मुक्ताः स्त्रीभावादतिगर्हिताः चप्रतौ अधिकः पाठः

## चन्द्रवंशपरम्परानिरूपणम्

ब्रह्मणोऽत्रिरभूत्पुत्रः तस्य सोमोऽभवत्सुतः ।
तस्य पुत्रो बुधो जज्ञे बुद्धिमान् लोकविश्रुतः ॥ ६ ॥

इलायामथ मानव्यां बुधस्य नृपसत्त[1]मः ।
पुरूरवा महाबाहुः सोमवंशधुरन्धरः ॥ ७ ॥

महादेवाज्ञया मु[2]क्ता स्त्रीभावादतिगर्हितात्[3] ।
इला सम्प्राप्य पुंभावं सुद्युम्न इति विश्रुतः ॥ ८ ॥

तस्य पुत्रा बभूवुर्हि [4]षडिन्द्रसमतेजसः ।
तेषां चासन् महावीर्याः पुत्रास्सन्तानवर्धनाः ॥ ९ ॥

एष तूद्देशतः प्रोक्तः सन्तानश्शशिसूर्ययोः[5] ।
निखिलो वेदितुं शक्यो न हि वर्षशतैरपि ॥ १० ॥

एतेन क्रमयोगेन मनुपुत्रैर्वसुन्धरा ।
आकीर्णाभूत्स्वधर्मस्थैर्महाबलपराक्रमैः ॥ ११ ॥

## भार्गवहते क्षत्रियलोके पुनः क्षत्रसन्तानवृद्धिनिरूपणम्

कृतवीर्यसुतद्रोहाद्भार्गवेणातिकोपिना ।
[6]त्रिस्सप्तकृत्वः पृथिवी कृता निःक्षत्रिया[7]ततः ॥ १२ ॥

---

[4] षण्णामपि नामानि विष्णुपुराणे एवं दृश्यन्ते । आयुर्धीमान् अमावसुः विश्वावसुः, श्रुतायुः शतायुः अयुतायुरिति । विष्णुपुराणं अंशः ४, अध्यायः ७ । [5] चन्द्रवंशवर्णनं मत्स्यपुराणे विस्तरेण दृश्यते मत्स्य-पुराणं ११–१२ अध्यायौ । [6] महाभारतस्य आदिपर्वणि स्वीकृतोऽयं भागः आदिपर्व, अध्यायः ५८ ।

---

[1] म (च) [2] क्ताः (ख च) [3] तान् (क) [7] कृता (ख)

तदा निःक्षत्रिये लोके भार्गवेण कृते सति ।
ब्राह्मणान् क्षत्रियानार्यो गर्भार्थि[1]न्योपचक्रमुः ॥ १३ ॥

ताभिस्सह [2]समापेतुः ब्राह्मणास्संशितव्रताः ।
तेभ्यस्तु लेभिरे [3]गर्भान् क्षत्रियास्तास्सहस्रशः ॥ १४ ॥

ततस्सुषुविरे पुत्रान् क्षत्रियान्वीर्यस[4]म्मितान् ।
कुमारांश्च कुमारीश्च पुनः क्षत्रप्रवृद्धये ॥ १५ ॥

एवं तद्ब्राह्मणैः क्षत्रं क्षत्रिया[5]सु तपस्विभिः ।
जातमृध्यत धर्मेण सुदीर्घेणायुषान्वितम् ॥ १६ ॥

[6]कृतोऽथ कुलसङ्कल्पः क्षत्रियैर्वसुधाधिपैः ।
[7][निदेशवाग्भिस्तच्चेह] विदितं द्विजसत्तमाः ॥ १७ ॥

[8]ऐलस्येक्ष्वाकुवंशस्य प्रकृतिं परिरक्षते ।
राजानः श्रेणिबद्धाश्च ततोऽन्ये क्षत्रिया भुवि ॥ १८ ॥

[9]ऐलवंश्यास्तु ये विप्रास्तथैवेक्ष्वाकवो नृपाः ।
तानि [10]चैकशतं वित्त कुलानि पृथिवीभुजाम् ॥ १९ ॥

विप्रे[11]न्द्रास्त्रिविधां योनिं राज्ञां तत्र निबोधत ।
तत्कुलीनश्च शूरश्च यश्च सेनां प्रकर्षति ॥ २० ॥

---

[1] अत्र सन्धिरार्षः । [2] समापतनं यौनः संबन्धः । [6] सभापर्व २–१३ ।
[5] स्वीकृतः पाठः महाभारतस्थः सभापर्व २-१३-३

---

[3] सर्वान् क्षत्रियांस्तान् (ख च) [4] त्तमान् (ख च) [5] स्तु (ख) [7] निर्देशताभिस्तच्चेह (क ख घ) निर्देहभाग्भिः (ग) निर्देशिभाग्भिः (च) [8] स्वीकृतः पाठः महाभारतस्थः सभापर्व । येनेक्ष्वाकु हि (क ख घ च) येलेक्ष्वाकु हि (ग) [9] येन (क ख घ ङ)
[10] चैवं गतिं वित्तं (ख) [11] न्द्रो (क ख घ च)

दुष्करः क्षत्रियः [1]सृष्टो बाहुवीर्योपि[2][जीवकः] ।
[3]क्रूराय कर्मणे नित्यं प्रजानां परिपालने ।
क्षत्रियो हि स्वधर्मेण श्रियं प्राप्नोति भूयसीम् ॥ २१ ॥

### राज्ञः प्रशंसा तत्कर्तव्यनिरूपणं च

दण्डनीत्या यदा राजा सम्यक्कार्त्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालः[4] श्रेष्ठः प्रवर्तते ॥ २२ ॥

कालो वा कारणं राज्ञः राजा वा कालकारणम् ।
इति वः संशयो माभूद्राजा कालस्य कारणम् ॥ २३ ॥

राजा कृतस्य वै स्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ २४ ॥

श्रीश्च राज्यं च कोशश्च क्षत्रियाणां द्विजोत्तमाः ।
विहितं दृश्यते तेषां सागरान्ता च मेदिनी ॥ २५ ॥

प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम् ।
वर्तमानः [5]स्वधर्मेण क्षत्रियो रक्षति प्रजाः ॥ २६ ॥

दस्युभिर्ह्रियमाणं च धनं दारांश्च सर्वशः ।
सर्वेषामेव वर्णानां त्राता भवति वै द्विजाः ॥ २७ ॥

[6]राजा चरति चेद्धर्मं देवतायै प्रकल्पते ।
स चेदधर्मं चरति नरकायैव गच्छति ॥ २८ ॥

भर्तृशुश्रूषणं धर्मो यथा स्त्रीणां परो मतः ।
नृपाज्ञापालनं धर्मः प्रजानां च तथा द्विजाः ॥ २९ ॥

---

[1] स्पृष्टो (ख) [2] जीविका (क ग घ च) जीविता (ख) [3] कृत्य (च) [4] श्रेयः (ख)
[5] स (क ग) [6] क ग मातृकयोर्न दृश्यन्ते एतत्प्रभृति चतस्रः पंक्तयः ।

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ॥ ३० ॥

न कुलं न धनं [2]नाज्ञा नाचारोऽपि भवेन्नृणाम् ।
अराजकेषु लोकेषु तस्माद्राजा परा गतिः ॥ ३१ ॥

## राजगुणकथनम्

पिता माता गुरुश्शास्ता वह्निर्वैश्रवणो यमः ।
सप्त राजगुणानेतान् मनुराह प्रजापतिः ॥ ३२ ॥

पिता हि राजा लोकस्य प्रजानां योऽनुकम्पिता ।
सम्भावयति मातेव दीनमभ्यवपद्यते ॥ ३३ ॥

गुरुर्धर्मोपदेशेन शास्ता च परिपालनात् ।
दहत्यग्निरिवा[3]निष्टं दमयत्यहितांस्तथा ॥ ३४ ॥

[4]तुष्टेषु विसृजत्यर्थान् कुबेर इव कामदः ।
[5]नमस्येयुश्च तं भक्त्या शिष्या इव [6]गुरुं सदा ॥ ३५ ॥

देवा मानुषरूपेण चरन्त्येते महीतले ।
तान्न हिंसेन्न चाक्रोशेन्नाक्षिपेन्नानृतं वदेत् ॥ ३६ ॥

यस्याभावेन भूतानामभावः स्यात्समन्ततः ।
भावे[7] तु भावो नियतः कस्तं न प्रतिपूजयेत् ॥ ३७ ॥

---

[2] आज्ञाकर्तुरभावात्सर्वत्र स्वातन्त्र्यं प्रवर्तेत इत्याशयः ।
[5] यतो राजा पित्रादीनां गुणैरुपेतः भवति अतः तं नमस्येयुरित्यन्वयः ।
राज्ञः सप्तगुणेषु मध्ये अहितदमनं यमस्य गुणः स्यात् ।

---

[1] रा (च) [3] रिष्टान् (ख घ च) [4] कृष्टेषु (क) कष्टेषु (च) [6] शुभं (क)
[7] षु (ख घ)

## राज्ञः तेजोविशेषकथनम्

बालोऽपि नावमन्तव्यो राजा पथ्यं [1]प्रतीच्छता ।
वह्निः स्फुलिङ्गमात्रोऽपि दहेद्ग्राममुपेक्षितः ॥ ३८ ॥

पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न हि भूपतौ ॥ ३९ ॥

बालोऽपि नावमन्तव्यो मनुष्य[2] इति भूपतिः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ४० ॥

विष्णुर्विरिञ्चो गिरिशः इन्द्रो वायुर्यमो रविः ।
पर्जन्यो धनदः सोमः क्षितिरग्निरपां पतिः ॥ ४१ ॥

एते चान्ये च ये देवाः शापानुग्रहकारिणः ।
नृपस्य ते शरीरस्थाः सर्वदेवमयो नृपः ॥ ४२ ॥

यस्मादेषां सुरेन्द्राणां अंशेभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ ४३ ॥

स्वं बलं क्षत्रियाणाञ्च बाह्वोर्धाता न्यवेशयत् ।
सदा यस्य प्रसादे श्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्व [3]देवमयो हि यः ॥ ४४ ॥

परो[5]क्षदेवताः सर्वा राजा प्रत्यक्षदेवता ।
प्रसादश्च प्रकोपश्च प्रत्यक्षो यत्र[6] दृश्यते ॥ ४५ ॥

---

[1] प्रतिष्ठि (क ग च) [2] इव भूमिपः (क ग) [3] तेज़ो (क ग च) [4] क्षा (ग घ च)
[6] स्य (ग घ च)

राजा प्रजानां प्रथमं त्वरीरं
प्रजाश्च राज्ञः प्रथमं शरीरम् ।
राज्ञा विहीना न भवन्ति देशा
देशैर्विहीना न नृपा भवन्ति[1] ॥ ४६ ॥

इति श्रीमत्पुराणसारे [2]सोमसूर्यवंशप्रशंसा नाम
नवमोऽध्यायः

---

[1] मनुस्मतेर्याज्ञवल्क्यस्मृतेश्च अत्र वर्णितेन राजधर्मेण साकं भूयान् संबन्धः न दृश्यते । तत्रत्यानि द्वित्राणि पद्यानि केवलमत्र पठ्यन्ते ।

[2] ख घ चं प्रतिषु एतत्पदं न दृश्यते ।

# दशमोऽध्यायः

[1][ राजधर्मनिरूपणप्रकरणम् ]

## अभिषिक्तस्य राज्ञः कर्तव्यम्

सूतः ।

[2]द्विजा राज्ञाभिषिक्तेन प्रजारञ्जनमादितः ।
कर्तव्यमविरोधेन स्वधर्मस्य महीभृता ॥ १ ॥

[3]रञ्जनात्खलु राजत्वं प्रजानां पालनादपि ।
नृपाणां परमो धर्मः प्रजानामेव पालनम् ।
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥ २ ॥

## पौरुषप्रशंसनम्

धैर्योत्साहसमापन्नः सत्ववान् सत्यनिश्चयः ।
नृपः पुरुषकारेण दैवमप्यतिवर्तते ॥ ३ ॥

स्वमेव कर्म दैवाख्यं [4]विच देहान्तरार्जितम् ।
तस्मात्पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥ ४ ॥

प्रतिकूलं तथा दैवं पौरुषेण विहन्यते ।
दैवमेव विजानन्ति नराः पौरुषवर्जिताः ॥ ५ ॥

---

1 राजधर्मवर्णनप्रकरणे कर्त्रा प्रायः मत्स्यपुराणमेव आधारतया परिगृहीतम् । मत्स्यपुराणे २१५ तममध्यायमारभ्य २४३ तमाध्यायपर्यन्तं विस्तरेण राजधर्मवर्णनं दृश्यते । प्रायस्तत्रत्याः श्लोका एवात्र दृश्यन्ते । उत्तरत्र वक्ष्यमाणायाः चण्डालयुधिष्ठिरसंवादात्मिकायाः कथायाः मूलं न प्राप्तम् ।

2 द्विजा इति सम्बोधनम् ।

3 एतदारभ्य सार्धषोडशश्लोकाः 'च' मातृकायां न दृश्यन्ते ।

4 वित्तेति क्रियापदम् । अवगच्छतेति ।

तस्माच्च काले[1] संयुक्तं दैवं [2]च सफलं भवेत् ।
पौरुषं दैवसम्पत्या काले फलति भूसुराः ॥ ६ ॥
दैवं पुरुषकारश्च कालश्च मुनिसत्तमाः ।
[3]त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलावहम् ॥ ७ ॥
कृषिवृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः ।
ताश्च कालेन दृश्यन्ते नैवाकाले कथञ्चन ॥ ८ ॥
तस्मा[4]त्सदैवं कर्तव्यं [5]स्वधर्मं पौरुषं नृभिः ।
क्रियावतां हि पश्यध्वं परलोके फलं ध्रुवम् ॥ ९ ॥
नालसाः प्राप्नुवन्त्यर्थं न च दैवपरायणाः ।
तस्मात्सर्वप्रयत्नेन पौरुषे यत्नमाचरेत् ॥ १० ॥

### व्यसनदूषणम्

व्यसनानि च सर्वाणि नृपतिः परिवर्जयेत् ।
मित्रैर्वापि समानार्थैः बान्धवैरपि वा हितैः ।
[6]लोकसंग्रहणार्थाय कृतकव्यसनी भवेत् ॥ ११ ॥

### मन्त्रक्रमनिरूपणम्

मन्त्रिभिर्हितसंयुक्तैः समर्थैः मन्त्रनिर्णये ।
सहितो मन्त्रयित्वै[7]व कर्मारम्भं प्रवर्तयेत् ॥ १२ ॥

### उत्तममन्त्रलक्षणम्

ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ।
मन्त्रिणो यत्र निरताः तमाहुर्मन्त्रमुत्तमम् ॥ १३ ॥

---

[3] दैवादीनां त्रयाणां पिण्डनं नाम समापत्तिः. तेनैव कार्यं फलतीत्यर्थः ।
[6] स्वयं व्यसनीव आचरेत् । तेन लोकज्ञानं साधितं भवेत् ।

---

[1] ल (क ग च) [2] तु (क ग च) [4] त्तदैव (क ग च) [5] स (क ग च) [7] वं (ख घ)

## मध्यममन्त्रलक्षणम्

बहवोऽपि [1]मतयो भूत्वा मन्त्रिणामर्थनिर्णये ।
पुनर्यत्रैकतां प्राप्ताः स मन्त्रो मध्यमो मतः ॥ १४ ॥

## अधममन्त्रलक्षणम्

अन्योन्यमतिमास्थाय यत्र सम्प्रतिभाष्यते ।
न चैकमत्ये श्रेयोऽस्ति मन्त्रस्सोऽधम उच्यते ॥ १५ ॥

तस्मात्सुमन्त्रितं कार्यं राज्ञा [2]नीतिविदा सदा ।
राजा रिपुभ्यः संरक्षेद्बहिर्मन्त्रविनिर्गमात् ॥ १६ ॥

## राज्ञो रिपुजयक्रमनिरूपणम्

ततः कामादयः पूर्वं विजेतव्या महीभृता ।
तज्जये हि जयो राज्ञो राजा नश्यति तै[3]र्जितः ॥ १७ ॥

कामः क्रोधश्च लोभश्च मदो मानस्तथैव च ।
हर्षश्च शत्रवो ह्येते नाशाय च महीभुजाम् ॥ १८ ॥

प्रागात्मा मन्त्रिणश्चैव ततो भृत्या महीभृता ।
जेयाश्चानन्तरं पौराः विरुध्येत ततोऽरिभिः ॥ १९ ॥

यश्चैतानविनिर्जित्य वैरिणो विजिगीषते ।
सोऽजितात्माऽजितामात्यः शत्रुवर्गेण बाध्यते ॥ २० ॥

## रिपुजयेऽनुसरणीयानां कोलादीनां कथनम्

कोलकोकिलभृङ्गाणां बकव्यालशिखण्डिनाम् ।
हंसकुक्कुटसिंहानां शिक्षेत चरितं नृपः ॥ २१ ॥

गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ।
नासम्यक्कृत्यकारी स्यादुपक्रम्य कदाचन ॥ २२ ॥

---

[1] च तथा यत्र (ख घ) [2] नीतिविशारदः ( (ख घ) [3] र्द्विजः (ख घ)

बकवच्चिन्तयेदर्थात् सिंहवच्च पराक्रमेत् ।
वृकवच्चाव[1]लुण्ठीत शशवच्च विनिष्पतेत् ॥ २३ ॥
दृढप्रहारी च भवेत् तथा सूकरवन्नृपः ।
चित्रकारश्च शिखिवत् दृढभक्तिस्तथा [2]श्ववत् ॥ २४ ॥
भवेच्च मधुराभाषो तथा कोकिलवन्नृपः ।
काकशङ्की भवेन्नित्यं अज्ञातवसतिं [3]वसेत् ॥ २५ ॥
नापरीक्षितपूर्वन्तु भोजनं शयनं चरेत् ।
[4]न गाहेज्जनसम्बाधं [5]नावगाहेज्जलाशयम् ॥ २६ ॥
नारोहेत्कुञ्जरं व्यालं न यानं तुरगं तथा ।
नाविज्ञातां स्त्रियं गच्छेन्नैव[6] देवोत्सवे वसेत्[7] ॥ २७ ॥

## मन्त्रिलक्षणम्

राज्ञा सन्मन्त्रिणः कार्याः पृथिवीपालने[8]च्छुना ।
षाड्गुण्यविधितत्त्वज्ञा देशकालविशारदाः ॥ २८ ॥
वाक्याभिप्रायकुशलाः सर्वशास्त्रविशारदाः ।
अर्थशास्त्रेषु निपुणाः धर्म[9]शास्त्रेषु तत्पराः ॥ २९ ॥
समाः शत्रौ च मित्रे च धीराः सर्वजनप्रियाः ।
कुलीनास्सत्यनिरताः स्वामिभक्ता दृढव्रताः ॥ ३० ॥
[10]यथार्हं तांश्च सुहृदो नानाकर्मसु योजयेत् ।

---

[4] अत्रापि अपरिक्षितपूर्वमित्यनुनेयम् । जनसम्बन्धाश्च उत्सवादिषु सम्भूयमानः । व्यालः मदान्धो हस्ती । [7] देवोत्सवे चिरकालवसतिं न कुर्यात् ।

---

[1] घुर्णीत (क) लुर्णीत (ग) [2] ध्रुवम् (ख घ च) [3] वसन् (क ग) [5] न च (ख घ)
[6] चे चोत्सवे (ख घ च) [8] प्सु (ख घ) [9] शास्त्रविशारदाः (ख घ च)
[10] यथार्हतांश्च सम्भृता (ख घ)

## नियोज्यानां नियोगक्रमः

धर्मिष्ठान् धर्मकार्येषु [1]शठान् संग्रामकर्मसु ॥ ३१ ॥
निपुणानर्थकृत्येषु सर्वत्र च तथा शुचीन् ।
स्त्रीषु षण्ढान् नियुञ्जीत तीक्ष्णान् दारुणकर्म[2]सु ॥ ३२ ॥
धर्मे चार्थे च कामे भवेत[3] द्विजसत्तमाः ।
राजा यथार्हं कुर्वीत [4]उपधाभिः परीक्षितान् ॥ ३३ ॥
यस्मिन्कर्मणि यस्य स्याद्विशेषेणैव [5]कौशलम् ।
तस्मिन्कर्मणि तं राजा परीक्ष्य विनियोजयेत् ॥ ३४ ॥
ना[6]स्ये सर्पस्य रुधिरं [7]नास्ति दुष्टं कलेवरे ।
न प्रजासु भूपा[8]ले [9]धनदुष्टेऽधिकारिणि[10] ॥ ३५ ॥
पितृपैतामहान् शुद्धान् सर्वकर्मसु योजयेत् ।
परराजगृहात्प्राप्तं जनसंग्रहकाम्यया ।
दुष्टं वाप्यथवाऽदुष्टं नाश्रयेत प्रयत्नतः ॥ ३६ ॥

## प्रजाभ्यः करग्रहणप्रकारः

मासानष्टौ यथा सूर्यः तोयं हरति रश्मिभिः ।

---

[3] मत्स्यपुराणे 'भवेत' इत्यस्य स्थाने 'नये च' इति पाठः दृश्यते । स समीचीन इति भाति (मत्स्यपुराणं अध्यायः २१५) । द्विजसत्तमान् नियुञ्जीत इति युक्तं स्यात् । [4] उपधा नाम, उपदीयते शुद्धिशानमत्रेति । धर्मार्थकामादिद्वारा परीक्षा । [10] धतदुष्टेऽधिकारिणि सर्वत्र विषमिति ज्ञेयम् ।

---

[1] गुरून् (क ग) [2] णि (ख च) [5] केव (ख घ च) [6] स्यै (क ग)
[7] न च दृष्टे(क ग) [8] लो (च) ला (ख घ) [9] धनं दुष्टाधिकारिणः(ख घ)

[1]सूक्ष्मेणैवाभ्युपायेन तथा शुल्कादि[2]कं नृपः ॥ ३७ ॥
वर्णधर्माः प्रमोदन्ते यस्य राष्ट्रे [3]यथाश्रमाः ।
एतद्राज्ञः परं कृत्यं तथैतद्वृत्तिकारणम् ॥ ३८ ॥

## हरिभक्तिमतो राज्ञः मनोरथसिद्धिनिरूपणम्

नित्यं महीपतीनान्तु राज्यं पालयतामथ ।
आराध्यो भगवन्विष्णुः केशवः पापनाशनः ॥ ३९ ॥
अनाराध्य जगन्नाथं सर्वपापहरं हरिम् ।
सद्ग[4]तिः केन सम्प्राप्ता राज्ञा भो[5]गा मनोरथाः ॥ ४० ॥

## [6]हरिभक्तिपरायणस्य राज्ञः प्रशंसायां चण्डालयुधिष्ठिरकथा

[7]धर्मोपदेशादचलां वहन्भक्तिं जनार्जने ।
सशरीरो गतः स्वर्गं धर्मपुत्रो युधिष्ठिरः ॥ ४१ ॥
राज्यं शासति धर्मज्ञे धर्मपुत्रे युधिष्ठिरे ।
तस्यै[8]वं वैश्वदेवान्ते चण्डालोऽभ्यागमत्किल ॥ ४२ ॥
उपसृत्य गृहं तस्य धर्मपुत्रस्य विस्मितः ।
उवाच श्वपचो द्वाःस्थः प्रश्रयावनतः स्थितः ॥ ४३ ॥
कस्यैतद्भवनं दिव्यं मणिरत्नविभूषितम् ।
शुद्धस्फटिकसोपानं मणिकाञ्चनतोरणम् ॥ ४४ ॥

---

[1] सूक्ष्म उपायः प्रजामनोऽविरोधतः । यथा प्रजाः न क्रुध्येरन् तथा कार्य उपायः शुल्कादिग्रहणे । [6] अस्याः कथायाः मूलं मृग्यम् ।

---

[2] कान् (ख घ) [3] त (ख घ) [4] तिं (ख घ) [5] गमनोरथैः ( (ख घ) [7] कगयोः अयं श्लोकः नास्ति । [8] व (क ग)

प्रतीहारः ।

अष्टाशीतिसहस्राणि ब्राह्मणानां दिने दिने ।
युधिष्ठिरमृते भूपं भुञ्जते कस्य वेश्मनि ॥ ४५ ॥

कथमेत[1]न्न जानीषे चन्द्रबिम्बमिवापरम् ।
युधिष्ठिरस्य भवनं देवराजगृहोपमम् ॥ ४६ ॥

[2]चण्डालः ।

अबलस्य बलं राजा बालस्य रुदितं बलम् ।
[3]बलं मूर्खस्य मौनत्वं तस्करस्यानृतं बलम् ॥ ४७ ॥

गच्छ जल्पस्व राजानं प्रतीहार वचो मम ।
दुःखार्तः कार्यवान् राजन् चण्डालो द्वारि तिष्ठति ॥ ४८ ॥

इत्युक्तो धर्मराजस्य [4]प्रतीहारो यथोदितम् ।
[5]निवेदयामास स तं धर्मराजोऽब्रवीदिदम् ॥ ४९ ॥

युधिष्ठिरः ।

ब्रूहि गच्छ दुराचारं चण्डालं पापकर्मिणम् ।
देवकार्यस्य वेलायां कुतस्त्वं प्रत्युपस्थितः ॥ ५० ॥

चण्डालं [6]पतितं दृष्ट्वा नरः [7]पश्येत भास्करम् ।
[8]स्नातस्त्वैतान्समालोक्य [9]सचैलं स्नानमर्हति ॥ ५१ ॥

इत्याज्ञप्ते तथोक्तस्तु चण्डालस्तेन वै ततः ।
प्रत्युवाच प्रतीहारमीषन्मन्यु[10]परिप्लुतः ॥ ५२ ॥

---

[6] आचारभ्रष्टम् । [7] आर्षमात्मनेपदम् । [9] चेलं वस्त्रम् ।

---

[1] न्नु (क च) [2] ख घयोर्नास्ति पदम् । [3] कगचप्रतिषु पंक्तिर्नास्ति । [4] कुतः सम्प्रत्युपस्थितः । [5] सार्धः श्लोकः कगयोर्नास्ति । [8] अर्धः श्लोकः कगयोर्नास्ति ।
[10] परीप्सितः (ख च)

## चण्डालेन युधिष्ठिरभर्त्सनम्

चण्डालः ।

किं देवकार्येण नराधिपस्य
कृत्वा हि मन्युं विषये[1] स्थितानाम् ।
तद्देवकार्यं स च यज्ञहोमो
यदश्रुपाता न पतन्ति राष्ट्रे ॥ ५३ ॥

त्यागिनः किं विचारेण गुणवन्निर्गुणेष्वपि ।
समं वर्षति पर्जन्यः सस्येष्वपि तृणे[2]ष्वपि ॥ ५४ ॥

निर्गुणेष्वपि सत्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चन्द्रश्चण्डालवेश्मनि ॥ ५५ ॥

इत्येतद्वचनं श्रुत्वा निर्जगाम युधिष्ठिरः ।
प्रत्युवाच च चण्डालं ईषत्कोपसमन्वितः ॥ ५६ ॥

## चण्डालदुःखकारणजिज्ञासा

युधिष्ठिरः ।

[3]कुतस्ते भयमुत्पन्नं येन त्वं गृहमागतः ।
आबाधकारणं सर्वं यथावत्कथयस्व मे ॥ ५७ ॥

## चण्डालेन स्वदुःखकारणनिरूपणम्

[4]न भुञ्जते ब्राह्मणा मे सर्वश्चोद्विजते जनः ।
प्राणिहिंसा च नो वृत्तिः [5]देवा मुष्णन्ति मां नृप[6] ॥ ५८ ॥

---

1. विषये राष्ट्रे   4. ब्राह्मणाः मत्कृतपाकं न भुञ्जते इति ।
6. देवैरेवाहं मुषितः । मानुषत्वेऽपि चण्डालत्वप्राप्त्या इत्यर्थः ।

---

2. पु च (च)   3. अ (क)   5. दिवा (ख घ)

अनेकजन्मसहस्रैः प्राप्य संसारपद्धतिम् ।
मानुष्ये कुत्सितां जातिमापन्नो मुषितोऽस्मि भोः ॥ ५९ ॥

कर्मभूमिमिमां राजन् प्रार्थयन्ति दिवौकसः ।
तां संप्राप्य वृथाजन्मा मुषितोऽस्मि कुरूत्तम ॥ ६० ॥

दुःखे दुःखाधिकान् पश्येत्सुखे पश्येत्सुखाधिकान् ।
[1]आत्मानं शोकहर्षाभ्यां [2]शत्रुभ्यामिव नार्पयेत् ॥ ६१ ॥

सोऽहमिच्छामि विज्ञा[3]तुमिति दुष्कृतकर्मकृत् ।
वक्तुमर्हसि धर्मज्ञ कः पापिष्ठतरो मया ॥ ६२ ॥

चण्डालो [4]ह्यभवं राजन् सर्ववर्णबहिष्कृतः ।
अभक्ष्यं नास्ति मे किञ्चित् कः पापिष्ठतरो मया ॥ ६३ ॥

## युधिष्ठिरेण चण्डालादपि पापिष्ठानां लक्षणकथनम्

युधिष्ठिरः ।

अध्वना सुपरिश्रान्तं ब्राह्मणं गृहमागतम् ।
अनर्चयित्वा यो भुंक्ते स पापिष्ठतरस्त्वया ॥ ६४ ॥

मातरं पितरञ्चैव विकलं नेत्रदुर्बलम् ।
यो नाभ्युद्धरते पुत्रस्स पापिष्ठतरस्त्वया ॥ ६५ ॥

[5]ब्राह्मणः क्षत्रियो वापि वैश्यः शूद्रोऽपि वा पुनः ।
स्वधर्मं सन्त्यजेद्यस्तु स पापिष्ठतरस्त्वया ॥ ६६ ॥

---

[1] आत्मनः शोकहर्षाभ्यां दानं स्वहान्यै भवति ।

---

[2] शता (च)   [3] नमति (ख घ)   [4] स्मिन्भवे (ख घ) पि भवे (च)   [5] एतदारभ्य त्रयः श्लोकाः क्रमभेदेन सन्ति ।

विवाहयित्वा यः कन्यां कुलजां शीलमण्डनाम् ।
विना त्यजति दोषेण स पापिष्ठतरस्त्वया ॥ ६७ ॥

आशाकरश्च यो दाता दातुश्च प्रतिषेधकः ।
दत्तं च कीर्तयति यः स पापिष्ठतरस्त्वया ॥ ६८ ॥

गोगणस्य तृषार्तस्य जलार्थमभिधावतः ।
विघ्नमाचरते यस्तु स पापिष्ठतरस्त्वया ॥ ६९ ॥

**आतिथ्यस्वीकरणविषये चण्डालयुधिष्ठिरसंवादः**

चण्डालः ।

कृतार्थोऽस्मि गमिष्यामि यशोधर्ममावाप्नुहि ।
तुष्टोऽस्म्यहं महाराज मत्तः प्रोक्तास्त्वयाधमाः ॥ ७० ॥

युधिष्ठिरः ।

[1]देवतानामृषीणाञ्च पितॄणाञ्च कृतं मया ।
साम्प्रतं देशकालोऽ[2]यं त्वमेवात्र भवातिथिः ॥ ७१ ॥

चण्डालः ।

चण्डालोऽहं महाराज पतितो लोकगर्हितः ।
कथं नु हीनो वर्णेभ्यः भोक्ष्यामि भवतो गृहे ॥ ७२ ॥

युधिष्ठिरः ।

चण्डालो भव [3]पापो वा शत्रुर्वा पितृघातकः ।
देशका[4]लेऽभ्युपगतो भरणीयो मतो मम ॥ ७३ ॥

---

[1] पूजादिकर्म कृतमिति ।

---

[2] यस्त्व (क ग च) [3] पापी (च) [4] ला (क ख ग घ)

## चण्डालेन राजपरिग्रहस्य निराकरणम्

दशसूनासम[1]श्चक्री दशचक्रिसमो[2]ध्वजी ।
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः ॥ ७४ ॥

दशसूनासहस्राणि यो वाहयति सौनिकः ।
तेन तु[3]ल्यः स्मृतो राजा घोरस्त[4]स्य परिग्रहः ॥ ७५ ॥

[5]युधिष्ठिरः ।

नाना गोत्राभिचरणाः भुञ्जते ब्राह्मणा मम ।
न ते [6]वदन्ति वाग्दुष्टं यथैतत्कीर्तितं त्वया ॥ ७६ ॥

चण्डालः ।

लोभात्मानो न जानीयुः ब्राह्मणा राजकिल्बिषम् ।
वरं [7]श्वमांसमत्तुं वै न तु राज[8]परिग्रहः ॥ ७७ ॥

राजकिल्बिषदग्धानां ब्राह्मणानां युधिष्ठिर ।
स्विन्नानामिव बीजानां पुनर्जन्म न विद्यते ॥ ७८ ॥

राजप्रतिग्रहो घोरो [9]माध्वीस्वादो विषोपमः ।
बुधेन परिहर्तव्यः श्वमांसस्येव भक्षणम् ॥ ७९ ॥

अधीत्य चतुरो वेदान् सर्वशास्त्रार्थतत्त्ववित् ।
नरेन्द्रभवने भुक्त्वा विष्ठायां जायते क्रिमिः ॥ ८० ॥

---

[1] सूना प्राणिवधस्थानम् चक्री तैलिकः । [2] ध्वजी शौण्डिकः । इति मन्वर्थमुक्तावली मनुस्मृतिः ४-८५ [9] माध्वीति सुराभेदः ।

---

[3] ल्यांशतो (ख घ च) [4] स्मात्प्रति (ख घ च) [5] क घ च मातृकासु नास्ति पदम् ।
[6] पतन्निवोद्धुष्टं (क) [7] च (ख घ) [8] प्रति (क ख घ च) [9] मध्वा (क ग)
[12] भृन (च)

## युधिष्ठिरस्य चण्डालस्वरूपजिज्ञासा

युधिष्ठिरः ।

[1]निन्दसे सर्वराज्ञस्त्वं न चात्मानं प्रशंससि ।
भवानुपेन्द्रः शक्रो वा शर्वो वा त्वं पिनाक[2]धृक् ॥ ८१ ॥

## चण्डालरूपिणा धर्मेण युधिष्ठिरसान्त्वनं तथा हरिपूजनमाहात्म्यकथनम्

[3]धर्म ।

ज्ञातोऽस्मि पृथिवीपाल तुष्टश्च तव दर्शनात् ।
नन्दन्तु भूमि[4]भागस्ते येषां त्वमवनीपतिः ।
निर्जित्य परसैन्यानि क्षितिं धर्मेण पालय ॥ ८३ ॥

युधिष्ठिरः ।

किं मे राज्येन[5] मे तात विषयैर्जीवितेन वा ।
योऽहं सूनासहस्रैस्तु दशभिः परिवेष्टितः ॥ ८४ ॥

धर्मः ।

मा विषादं कुरुश्रेष्ठ समुपेहि युधिष्ठिर ।
[6]यज्ञेश्वरं यज्ञमूर्तिं त्वं वै विष्णुं समा[7]श्रय ॥ ८५ ॥
येषां न विषये विप्राः यज्ञैर्यज्ञपतिं हरिम् ।
यजन्ते भूभुजां [8]तेषामेतत्सूनोदितं फलम् ॥ ८६ ॥

---

[1] आर्षमात्मनेपदम् । [6] वैश्वदेवस्य सूनादुष्फलनिवृत्तिहेतुत्वात् तत्कर्तुः युधिष्टिरस्य पापाभावकथनम् ।

---

[2] भृत् (च) [3] खघयोर्नास्ति पदम् । [4] भाज (क ख घ) [5] भो (क ख ग घ)
[7] श्रितः (क ग) [8] तेषां तस्य सू (ख)

येषां पाषण्डसङ्कीर्णं राष्ट्रं न ब्राह्मणोत्कटम् ।
ते तत्सूनासहस्राणां दशानां भागिनो नृप ॥ ८७ ॥

येषां न [1]यज्ञपुरुषः कारणं पुरुषोत्तमः ।
ते तु पापसमाचाराः [2]सूनापापौघभागिनः ॥ ८८ ॥

अथ पातकभीतस्त्वं सर्वभावेन भारत ।
वि[3]मुक्तान्यसमाचारो नारायणपरो भव ॥ ८९ ॥

परः पराणामाद्यो यो योगिध्येयो जनार्दनः ।
तदर्थं चापि कर्माणि कुर्वन् पापं व्यपोहति ॥ ९० ॥

लोभादिव्याप्तहृदयो यः पापं[4] कुरुते नरः ।
विलयं याति तत्सर्वं अच्युते हृदयस्थिते ॥ ९१ ॥

[5]शमायालं जलं वह्नेस्तमसां[6] भास्करोदयः ।
[7]क्षान्तिः कलेरघौघस्य नामसङ्कीर्तनं हरेः ॥ ९२ ॥

एवमुक्त्वा सुतं धर्मस्तत्रैवान्तरधीयत ।
इति धर्मोपदेशेन सर्वदेवमयं हरिम् ॥ ९३ ॥

आराध्य पाण्डवो यातः सशरीरः सुरालयम् ।
तस्मात्पालयता राज्यं हरिः पूज्यो विशेषतः ॥ ९४ ॥

[8]दैवतामर्चयित्वा हि ब्राह्मणांश्च महीपतिः ।
आनृण्यं याति धर्मस्य लोकेन च समर्च्यते ॥ ९५ ॥

इति श्रीमत्पुराणसारे [9]राजधर्मे युधिष्ठिरधर्मसंवादो नाम
दशमोऽध्यायः ।

---

[1] ज्ञः (ख घ य)  [2] सूनाः (च घ)  [3] र (क घ)  [4] रं (क)  [5] क्ष (क ख घ)
[6] सो (क ख ग)  [7] का (घ)  [8] तावतानर्चयित्वा (क)  [9] पदमेतत कगयोर्नास्ति ।

## एकादशोऽध्यायः

[ राधर्मप्रकरणे रामोपाख्यानम् ]

### धार्मिकस्य राज्ञः प्रशंसा

सूतः ।

श्रीः श्लाघ्या तस्य भूभर्तुः द्वारि यस्य न सीदति[1] ।
दुर्बलः करुणाक्रन्दी बलवत्पीडितो जनः ॥ १ ॥

[2]आलस्योपहतः पादः पादः [3]पाषण्डमाश्रितः ।
[4]राजानं सेवते पादः पादः कृषिमुपाश्रितः ॥ २ ॥

भक्षयन्ति त्रयः पादाः पादमेकं निरन्तरम् ।
तस्मात्सर्वप्रयत्नेन पादो रक्ष्यो महीभृता ॥ ३ ॥

वर्णानामाश्रमाणां च राजा भवति पालकः ।
स्वे स्वे धर्मे नियुञ्जानः प्रजाः सम्पालयेत्सदा ॥ ४ ॥

पालनेनैव भूतानां कृतकृत्यो महीपतिः ।
सम्यक्पालयिता भागं धर्मस्याप्नोति पुष्कलम्[5] ॥ ५ ॥

समीक्ष्य पालकः सम्यक् सर्वा रञ्जयति प्रजाः ।
स्वधर्मचलितान् सर्वान् नृपतिर्धर्मतत्परः ।
दण्डेनापि प्रसह्यैतान् शनकैर्वशमानयेत् ॥ ६ ॥

न लोभार्थैर्न कामार्थैः नार्थार्थैर्यस्य मानसम् ।
परार्थैः कृष्यते धर्मः स राजा स्वर्गमृच्छति ॥ ७ ॥

---

[1] न सीदति दुर्बल इत्यन्वयः । [2] अत्र प्रकरणाद्धर्मस्य पाद इति ज्ञेयम् ।
[5] पुष्कलं धर्मभागं नाम समग्रप्रायमिति ।

---

[3] कृषिमुपासते (क च) [4] कचयो एका पंक्तिर्नास्ति ।

[1]उत्पथग्राहिणो मूढान् स्वधर्माच्च परिच्युतान् ।
यः करोति निजे धर्मे स राजा स्वर्गमृच्छति ॥ ८ ॥

### [2]निजधर्मरतस्य राज्ञः प्रशंसायां श्रीरामचन्द्रकथानकम्

अस्मिन्नर्थे पुरावृत्तमाख्यानं कथयामि वः ।
अयोध्या नाम नगरी सर्वलक्षणसंयुता ।
त्रिषु लोकेषु विख्याता सूर्यान्वयविवर्धिनी ॥ ९ ॥

आसीत्तस्यां द्विजवरा रामो वै भ्रातृभिस्सह ।
प्रमुमोद सुखी राज्यं धर्मेण परिपालयन् ॥ १० ॥

### मृतं पुत्रं गृहीत्वा राजद्वारि ब्राह्मणस्य विलापः

ततः [3]कतिपयाहस्सु गतेषु [4]जरठो द्विजः ।
[5]शवं बाल[6]कमादाय राजद्वारमुपागमत् ॥ ११ ॥

रुदन् बहुविधा वाचः स्नेहाक्षरसमन्विताः ।
असकृत्पुत्र पुत्रेति वाक्यमेतदुवाच [7]ह ॥ १२ ॥

किन्नु मे दुष्कृतं कर्म पूर्वं देहान्तरे कृतम् ।
यदहं पुत्रमेकं त्वां पश्यामि निधनं [8]गतम् ॥ १३ ॥

---

[1] उत्पथः कुमार्गः धर्मापेतः ।

[2] इयं कथा वाल्मीकिरामायस्य त्तरकाण्डस्थ ७३ तममध्यायमारभ्य ७६ तम-पर्यन्तं विवृता यथावदत्र समाहृता दृश्यते । पुराणसारे रामायणादाहृतेय-मेकैव कथा संग्रहरूपेण प्रकरणानुसारं संदृश्यते ।

[4] जरठः वृद्धः । [5] मृतमितितात्पर्यम् ।

---

[3] क्षत्रियराज्येषु (च) [6] मुपा (ख घ च) [7] यत् (ख घ) [8] सुत (च)

अप्राप्तयौवनं बालं पञ्चवर्षसमन्वितम् ।
अकाले कालमा[1]पन्नं दुःखाय मम पुत्रकम्[2] ॥ १४ ॥

न स्मरा[3]म्युक्तं नृतं न च हिंसां स्मराम्यहम् ।
[4]सर्वेषां [5]प्राणिनां पापं न कदाचन विद्यते ॥ १५ ॥

केन मे दुष्कृतेनाद्य बाल एव ममात्मजः ।
अकृत्वा पितृकार्याणि नीतो वैवस्वतक्षयम्[6] ॥ १६ ॥

रामस्य दुष्कृतं [7]किञ्चिन्महदस्ति न संशयः ।
[8]राजद्वारि मरिष्येऽहं पत्न्या सार्धमनाथवत् ॥ १७ ॥

भ्रातृभिस्सहितो राजन् दीर्घमायुरवाप्नुहि ।
राजदोषैर्विपद्यन्ते प्रजा[9]ह्यविधिपालिताः ॥ १८ ॥

असद्वृत्ते तु नृपतौ अकाले म्रियते जनः ।
सुव्यक्तं राजदोषोऽयं भविष्यति न संशयः ॥ १९ ॥

एवं बहुविधैर्वाक्यैर्निन्दयानो[10] मुहुर्मुहुः ।
राजानं दुःखसन्तप्तः सुतं तमुपगूहति[11] ॥ २० ॥

तथा तु करुणं तस्य द्विजस्य[12]परिदेवितम् ।
शुश्राव राघवः सर्वं दुःखशोकसमन्वितः ॥ २१ ॥

---

[4] सर्वेषां प्राणिनां कृतां हिंसा न स्मरामीत्यर्थः । [6] वैवस्वतक्षयं यमक्षयं आत्यन्तिकविनाशं, मरणमित्यर्थः । [8] सोल्लुण्ठमेतद्वचो ब्राह्मणस्य । [9] अविधितापालनं शास्त्रविरुद्धेन मार्गेणेति भाव्यम् । [10] निन्दन्निति ज्ञेयम् । [11] उपगूहनमालिङ्गनम् । [12] परिदेवनं–विलापः ।

---

[1] न्नो (क ग च) [2] कः (क ग च) [3] द्रात्तनं नृत्तं (क ग) [4] पूर्वे (क ग)
[5] पापि (क ग) [7] किं खि (क ग च)

## रामस्य द्विजविलापजिज्ञासा

स दुःखेनाभिसन्तप्तो मन्त्रिणस्तु [1]समाह्वयत् ।
ततो द्विजा वसिष्ठेन सार्धमष्टौ प्रवेशिताः ॥ २२ ॥

मार्कण्डेयोऽथ मौद्गल्यः वामदेवश्च काश्यपः ।
कात्यायनोऽथ जाबालिर्गौतमो [2]नारदस्तथा ॥ २३ ॥

एते द्विजर्षभास्सर्वे चासनेषूपवेशिताः ।
तेषां समुपविष्टानां सर्वेषां दीप्ततेजसाम् ॥ २४ ॥

राघवः सर्वमाचष्टे द्विजोऽयमुपरोदिति ।
तस्य तद्वचनं श्रुत्वा राज्ञो दीनस्य नारदः ।
प्रत्युवाच शुभं वाक्यमृषीणां सन्निधौ नृपम् ॥ २५ ॥

## नारदेन बालमृत्योः कारणनिरूपणम्

शृणु राजन् यथाऽकाले प्राप्तोऽयं राजसंक्षयः ।
श्रुत्वा कर्तव्यतां राम कुरुष्व रघुनन्दन ॥ २६ ॥

पुरा कृतयुगे राम ब्राह्मणा वै तपस्विनः ।
अब्राह्मणस्तदा राजन् न तपस्वी [3]कथञ्चन ॥ २७ ॥

त्रेतायुगे त्ववर्तन्त ब्राह्मणाः क्षत्रिया[4]श्च ये ।
तपोऽतप्यन्त ते[5] सर्वे शुश्रूषामपरे जनाः ॥ २८ ॥

ततो द्वापरसंज्ञे तु तपो वैश्यान् समाविशत् ।

---

[2] अयं न देवर्षिर्नारदः । रामसभायां कश्चन धर्मद्रष्टा । विश्वामित्रस्यापि नारद इति एकः पुत्रोऽस्ति ।

---

[1] स्सुसमाहिताः (च) [2] कदाचन (च) [3] स्तथा (क घ च) [5] वै (क ख घ च)

युगेषु त्रिषु विप्रेन्द्राः धर्मं चक्रु[1]र्द्विजातयः ॥ २९ ॥
[2]भविता शूद्रयोन्यां हि तपश्चर्या कलौ युगे ।
न शूद्रो लभते धर्ममुग्रं तप्तुं नरर्षभ ॥ ३० ॥
एको [3]विषयपर्यन्ते तव राजन् महातपाः ।
शूद्रस्तप्यति दुर्बुद्धिः तेन बालवधो ह्ययम् ॥ ३१ ॥
यो [4]ह्यधर्ममकार्यं वा विषये पार्थिवस्य हि ।
करोति नृपशार्दूल [5]पुरे वा दुर्मतिर्नरः ॥ ३२ ॥
क्षिप्रं स नरकं याति स च राजा न संशयः ।
स त्वं पुरुषशार्दूल मार्गस्व विषयं स्वकम् ॥ ३३ ॥
[6]दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर ।
एवं ते धर्मवृद्धिश्च नृणां चायुर्विवर्धनम् ।
भविष्यति नरश्रेष्ठ बालश्चायं हि जीवति ॥ ३४ ॥
नारदस्य तु तद्वाक्यं श्रुत्वाऽमृतमयं तथा ।
प्रहर्षमतुलं लेभे लक्ष्मणश्चेदमब्रवीत् ॥ ३५ ॥

### बालस्य शरीररक्षणार्थं लक्ष्मणाय रामाज्ञा

[7]रामः ।

गच्छ सौम्य द्विजश्रेष्ठं समाश्वासय लक्ष्मण ।
बालस्य च शरीरन्तु तैलद्रोण्यां निधापय ॥ ३६ ॥
यथा न क्षीयते बालः तथा सौम्य विधीयताम् ।
एवं सन्दिश्य काकुत्स्थो लक्ष्मणं शुभलक्षणम् ॥ ३७ ॥

---

[3] देशसीमनि । [6] दुष्कृतस्य निग्रहार्थं प्रयत्नं कुर्वित्यर्थः ।

---

[1] र्वि (क ग च) [2] भवितं (क ग) [4] स्य (क ग च) [5] पुत्रो (ख घ)
[7] खघयोर्नास्ति पदम् ।

## रामेण शम्बूकान्वेषणम्

मनसा पुष्पकं दध्यावागच्छेति महायशाः ।
आजगाम मुहूर्तेन समीपं राघवस्य [1]तत् ॥ ३८ ॥

अभिवाद्य [2]महर्षींस्तान् विमानं सोऽध्यरोहत ।
धनुर्गृहीत्वा [3]तूणीं च खड्गं च रुचिरप्रभम् ॥ ३९ ॥

प्रायात्प्रतीचीं विमलां विचिन्वंश्च समन्ततः ।
उत्तरामगमच्छ्रीमान् दिशं हिमव[4]तावृताम् ॥ ४० ॥

[5]अपश्यमानस्तत्रापि स्वल्पमप्यथ दुष्कृतम् ।
पूर्वामपि दिशं सर्वामथापश्य[6]न्नराधिपः ।
प्रविशुद्धसमाचारामादर्शमिव निर्मलाम् ॥ ४१ ॥

दक्षिणां दिशमाक्रम्य ततो राजर्षिनन्दनः ।
[7]सुशैलस्योत्तरे [8]पार्श्वे ददर्श [9]च महासरः ॥ ४२ ॥

तस्मिन्सरसि तप्यन्तं तापसं सुमहत्तपः ।
ददर्श राघवः श्रीमांल्लम्बमानमधोमुखम् ॥ ४३ ॥

## रामेण शम्बूकवधः

राघवस्तमुपागम्य तप्यन्तं तप उत्तमम् ।
उवाच [10]च नृपो वाक्यं धन्यस्त्वमसि सुव्रत ॥ ४४ ॥

---

[5] शानजन्तत्वं आर्षमिति साधु ।

---

[1] हि (ख घ) [2] ऋषींस्तांस्तु (ख घ) [3] तूणीं (ख घ) [4] दा (क ख ग)
[6] न्नृपा (च) [7] स (घ) [8] भागे (क ख ग च) [9] सुमहत्सरः (घ)
[10] राघवो (क ग च)

[1]ब्राह्मणो वासि भद्रं ते क्षत्रियो वासि दुर्जयः ।
वैश्यो वा यदि वा शूद्रः सत्यमेतद्ब्रवीहि मे ।
कौतूहलात्त्वां पृच्छामि रामो दाशरथिर्ह्यहम् ॥ ४५ ॥

तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः ।
[2]अवाक् शिरा[3]स्ततो भूत्वा वाक्यमेतदुवाच [4]ह ॥ ४६ ॥

शूद्रं मां विद्धि काकुत्स्थ शम्बुकं नाम नामतः ।
देवत्वं प्रार्थये राम सशरीरो महा[5]तपाः ॥ ४७ ॥

[6]भाषतस्तस्य भगवान् खड्गं सुरुचिरप्रभम् ।
विकृष्य कोशाद्विमलं शिरश्चिच्छेद राघवः ॥ ४८ ॥

## देवकृतरामप्रशंसनम्

तस्मिंच्छूद्रे हते देवाः सेन्द्राः साग्निपुरोगमाः ।
साधु साध्विति काकुत्स्थं प्रशशंसुर्मुहुर्मुहुः ॥ ४९ ॥

सुप्रीताश्चाभवन्देवा रामं सत्यपराक्रमम् ।
सुरकार्यमिदं सौम्य सुकृतं ते महामते ।
गृहाण त्वं वरं राम यत्त्वमिच्छस्यरिन्दम ॥ ५० ॥

देवानां भाषितं श्रुत्वा राघवस्तु समाहितः ।
उवाच प्राञ्जलि[7]र्वाक्यं सहस्राक्षपुरोगमान् ॥ ५१ ॥

---

[1] त्रेतायां युगधर्मानुरोधेन ब्राह्मणक्षत्रियावेव तपोऽधिकारयुतौ । अत एव तावुद्दिश्य भद्रत्वोक्तिः । [6] भाषमाणस्य शम्बूकस्य शिर इति ज्ञेयम् ।

---

[1] राघवो (क ग च) [2] अर्वा (ख घ ग्र) [3] था (ख घ च) [4] तम् (ख घ च)
[5] यशाः (क ग) [7] देवान् (ख घ च)

यदि देवाः प्रसन्ना मे द्विजपुत्रस्स जीवतु ।
दिशन्तु वरमेतन्मे ईप्सितं [1]परमं [2]मम ॥ ५२ ॥

राघवस्य तु तद्वाक्यं श्रुत्वा विबुधसत्तमाः ।
[3]प्रत्यूचू राघवं प्रीताः देवाः शक्रपुरोगमाः ॥ ५३ ॥

यस्मिन्मुहूर्ते काकुत्स्थ शूद्रोऽयं विनिपातितः ।
तस्मिन्मुहूर्ते विप्रोऽसौ जीवेन समयुज्यत[4] ॥ ५४ ॥

स्वस्ति प्राप्नुहि भद्रन्ते [5]साधु याम नरर्षभ ।
इत्युक्त्वा प्रययुर्देवाः रामोऽपि स्वपुरीं ययौ ॥ ५५ ॥

## विप्रकृतरामप्रशंसनम्

दृष्ट्वा द्विजसुतं तत्र लब्धप्राणं निरामयम् ।
प्रहर्षमतुलं लेभे सानुजो राघवस्तदा ॥ ५६ ॥

संहृष्टाः सङ्घशो विप्राः प्रशशंसुश्च राघवम् ।
अहो धन्योऽसि राजेन्द्र यत्ते धर्ममतिर्भृता ।
धर्मे धीर्दुर्लभा नृणां विशेषेण महीभृताम् ॥ ५७ ॥

यः क्षत्रियः स्वधर्मेण पृथिवीमनुशास्ति वै[6] ।
स लोके लभते वीर यशः प्रेत्य च सद्गतिम् ॥ ५८ ॥

ब्रह्मण्यश्चास्त्रविच्चापि शूरश्च त्वं रघू[7]त्तम ।
अप्रमत्तः सदा दक्षः पृथिवीं परिपालय ॥ ५९ ॥

एवं संवर्धितो विप्रै रामो राज्यमपालयत् ।

---

[1] तु वरं (ख घ) [2] मतम् (क) [3] प्रशंशू (क) [4] ते (च) [5] साधयाम (ग)
[6] हि (ख घ) [7] द्वह (ख घ)

## राजकृतरक्षाया आवश्यकतानिरूपणम्

[1]तस्माद्राजा प्रजाः सर्वाः पाल[2]येन्निजपुत्रवत् ॥ ६० ॥
अन्धे तमसि मज्जेरन् न कृषिर्न[3]वणिक्तथा ।
मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत् ॥ ६१ ॥
वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत् ।
[4]समत्वं च न विन्देयुः यदि राजा न पालयेत् ॥ ६२ ॥
[5]न यज्ञाः सम्प्रवर्तेरन् विधिवत्स्वाप्तदक्षिणाः ।
[6]न विवाहः समो विप्राः यदि राजा न पालयेत् ॥ ६३ ॥
त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम् ।
क्षणेन वि[7]चलेत्सर्वं यदि राजा न पालयेत् ॥ ६४ ॥
तद्विप्रा राजसिंहानां नान्यो धर्मस्सनातनः ।
ऋते [8]रक्षां सुविस्पष्टां रक्षा लोकस्य [9]कारणम् ॥ ६५ ॥

इति श्रीमत्पुराणसारे [10]राजधर्मे रामोपाख्यानं नाम[10]
एकादशोऽध्यायः

---

[1] एतदारभ्याध्यायान्तं यावत् विषयसंग्रहः महाभारतात्कृतो दृश्यते । (महाभारतम् , शान्तिपर्व राजधर्मपर्व अध्यायः ६८) [3] वणिक्तथेत्यत्र वणिक्पथ इति पाठः साधु भवेत् । [6] विवाहस्य समत्वं शास्त्रानुवर्तित्वम् ।

---

[2] य (ख घ) [4] म (क) [5] खघचप्रतिषु श्लोकः न दृश्यते । [7] लये (ख घ च)
[8] राज्ञां हि विस्पष्टं (च) [9] धा (ख घ च) [10] खघयोर्नास्ति ।

## द्वादशोऽध्यायः

[ राजधर्मप्रकरणे शिबिराजोपाख्यानम् ]

### शरणागतपरित्राणप्रशंसनम्

सूतः ।

राज्ञा दयार्द्रचित्तेन निजधर्मानुवर्तिना ।
अपि स्वदेहमुत्सृज्य त्रातव्यः शरणागतः ॥ १ ॥

हेमधेनु[1]धनादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके सर्वजीवदयापरः ॥ २ ॥

अग्निष्टोमादियज्ञानां कालेन क्षीयते फलम् ।
भीताभयप्रदानस्य क्षय एव न विद्यते ॥ ३ ॥

### शरणागतपरित्यागे दोषबाहुल्यकथनम्

लोभाद्द्वेषाद्भयाद्वापि यस्त्यजेच्छरणागतम् ।
[2]ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः ।
अस्मिन्नर्थे पुरा[3]वृत्तं [4]ब्राह्मणाः कथयामि वः ॥ ४ ॥

[5]न चास्य बीजं रोहति बीजकाले
न चास्य वर्षं वर्षति वर्षकाले ।
भीतं प्रपन्नं प्रददाति शत्रवे
न सोऽन्तरे लभते [6]प्राणमिच्छन् ॥ ५ ॥

---

[2] पञ्चमहापातकेष्वन्यतमा ब्रह्महत्या । पातकस्य गुरुत्वात्तस्य निष्कृतेरपि बहुकष्टसाध्या स्मृतिषु निर्दिष्टा । (मनुस्मृतिः १२–७१)

[5] बीजवपनकाले वर्षाकाले सर्वत्रापि अयं विफलो भवति ।

---

[1] धरा (ख ग घ च) [3] गीतं (क ख ग घ) [4] ब्रह्मणा (ग) [6] त्रा (च)

मोधमन्नं विन्दति चाप्र[1]चेताः
स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्टः ।
भीतं प्रपन्नं प्रददाति शत्रवे
सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ ६ ॥

## ऋषिभिः शरणागतरक्षकस्य पुण्यफलश्रवणेच्छा-प्रकटनम्

ऋषयः ।

यो रक्षेत्प्राणिनं विद्वन् भयार्तं शरणागतम् ।
तस्य पुण्यफलं यत्स्यात्तन्नः कथय[2] सूतज ॥ ७ ॥

## [3]शरणागतपरित्राणप्रशंसने शिबिकथानिरूपणम्

[4]सूतः ।

[5]एकतः क्रतवस्सर्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणि[6]नः प्राणरक्षणम् ॥ ८ ॥
[7]अत्रैवोदाहरन्तीमं इतिहासं पुरातनम्[8] ।
इन्द्रस्याग्नेश्च संवादं शिबेरौशीनरस्य च[9] ॥ ९ ॥

---

[2] सूतजः सूत एव । [3] इयं कथा महाभारतस्य श्येनकपोतीयमिति भागादुद्धृता । केषुचित्स्थलेषु संग्रहरूपेणान्यत्र विस्तरेण च अत्र सङ्कलिता दृश्यते । (महाभारतम् अरण्यपर्व अध्यायः १३१)
[6] प्राणिनः भीतस्य प्राणरक्षणं नाम सर्वक्रतुफलसमम् ।
[9] उशीनरस्य स्वभार्यायां माधव्यां जातः शिबिः । दृशद्वत्यामिति वायुपुराणे । (२३७-१७-१४)

---

[1] मत्ताः (च) [4] खघयोर्नास्ति पदम् । [7] नां (ख घ) [8] चप्रतौ न दृश्यते पंक्तिः ।

### शिबिसमीपे श्येनकपोतयोरागमनम्

वर्तमाने महायज्ञे जिज्ञासार्थं शिबिं नृपम् ।
इन्द्रः श्येनः कपोतोऽग्निः भूत्वा तत्रोपजग्मतुः ॥ १० ॥

अथैनं नृपतिं प्राप्य कपोतः श्येनजाद्भयात् ।
दूरं तस्य समासाद्य [1]निलिल्ये[2] भयविह्वलः ॥ ११ ॥

ततः शनैरुपाग[3]त्य श्येनरूपी सुरेश्वरः ।
राजानं सुमहात्मानं प्रोवाचेदं वचस्तदा ॥ १२ ॥

### श्येनकृतराजनिन्दा

श्येनः ।

धर्मात्मानमिति प्राहुस्त्वामेकं सर्वदेहिनाम् ।
स त्वं धर्मविरुद्धं हि कथं कर्म चिकीर्षसि ॥ १३ ॥

विहितं भक्षणं राजन् पीड्यमानस्य मे क्षुधा ।
[4]मा [5]भांक्षीः धर्मलोभेन धर्ममुत्सृज्य [6]मा नशीः ॥ १४ ॥

### राज्ञा शरणागतपरित्राणरूपस्यात्मनः कृत्यस्य प्रतिपादनम्

शिबिः ।

संत्रस्तरूपस्त्राणार्थी त्वत्तो भीतो विहङ्गमः ।
मत्सकाशमनुप्राप्तः प्रा[7]णिगृध्नु[8]रयं खगः ॥ १५ ॥

तदेवमागतस्याऽस्य कपोतस्याऽभयार्थिनः ।
कथमस्मद्विधस्त्यागं कुर्यात्सद्भिर्विगर्हितम् ॥ १६ ॥

---

[2] लीङ्श्लेषणे, दिवादेः लिट्, सोपसर्गरूपम् । [4] भांक्षीरिति महाभारतस्थः पाठः । [8] गृधु अभिकांक्षायां क्नुप्रत्ययान्तं रूपम् ।

---

[1] विलिल्ये (ख घ च) बिलिप्य (क) [3] म्य (च) [5] रक्षीः (क ख ग घ च)
[6] न्मा (ग) [7] ण (ख)

शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
न दृष्टा निष्कृतिः क्वाऽपि शरणागतघातिनाम् ॥ १७ ॥

[1]यथा च ते जीवितमात्मनः प्रियं
तथा परेषामपि जीवितं प्रियम् ।
त्वं [2]रक्षसे जीवितमा[3]त्मनो यथा
तथा परेषामपि रक्ष जीवितम् ॥ १८ ॥

तस्मान्नाहमिमं भीतं [4]त्यक्ष्ये दीनं कपोतकम् ।
यदत्र युक्त[5]मन्यत्ते वक्तुं श्येनाशु तद्वद ॥ १९ ॥

## श्येनेनाहारापहारस्याधार्मिकत्वप्रतिपादनम्

श्येनः ।

आहारात्सर्वभूतानि सम्भवन्ति महीपते ।
आहारेणैव सर्वे ते तेन जीवन्ति जन्तवः ॥ २० ॥

शक्यते दुष्करेऽप्यर्थे[6] [7]चिररात्राय जीवितुम् ।
न त्वाहारविहीनेन शक्यं वर्तयितुं क्वचित् ॥ २१ ॥

भक्षाद्विलोपितस्याऽस्मान्मम [8]प्राणा विशांपते ।
विसृज्य कायं यास्यन्ति पन्थानमपुनर्भवम् ॥ २२ ॥

मृते च मयि सर्वं मे [9]पुत्रदारं मरिष्यति ।
रक्षमाणः कपोतं त्वं बहून् प्राणान् [10]हरिष्यसि ॥ २३ ॥

---

[2] आत्मने पदमार्षम् । [7]बहुकालपर्यन्तम् इत्यर्थे अव्ययम् ।
[9] पुत्राश्च दाराश्च पुत्रदारम् ।

---

[1] त (क) [3] त्मनः प्रियं (ख घ) [4] त्यजेद्देनं (ख घ च) [5] मर्थं ते (क ग) मेतत्ते (च) [6] चिर त्राणाय (क ख घ च) [7] प्राणो ( ) [10] न रक्षसि (ख घ)

धर्मं यो बाधते धर्मो न स धर्मः परन्तप ।
अविरोधी तु यो धर्मः स धर्मः सद्भिरुच्यते ॥ २४ ॥

तस्माद्विरोधे धर्मस्य विचिन्त्य गुरुलाघवम् ।
यतो भूयांस्ततो राजन् कुरु धर्मविनिर्णयम् ॥ २५ ॥

## राज्ञा कपोतदानस्य निराकरणम्

राजा ।

बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ।
सुपर्णः पक्षि[1]राड्किं त्व धर्मज्ञ त्वं विभाषसे ॥ २६ ॥

न तेऽस्त्यविदितं किञ्चिदिति त्वां लक्षयाम्यहम् ।
[2]शरणैषिपरित्यागं कथं साध्विति मन्यसे ॥ २७ ॥

[3]गोवृषो वा वराहो वा [4]मृगो वा महिषोऽपि वा ।
त्वदर्थमत्र क्रियतां यद्वान्य[5]मभिकांक्षसे ॥ २८ ॥

दत्तमिष्टं तपस्तप्तं [6]तीर्थं [7]वेदः श्रुतं तथा ।
सर्वाण्यभयदानस्य कलां नार्हन्ति षोडशीम् ॥ २९ ॥

चतुस्सागरपर्यन्तां यो दद्यात्पृथिवीमिमाम् ।
अभयं यश्च भूतेभ्यः तयोरभयदो[8]ऽधिकः ॥ ३० ॥

अपि [9]त्यजे राज्यमहं शरीरं वाऽपि दुस्त्यजम् ।
न [10]त्विमं भयसंत्रस्तं त्यक्ष्ये दीनं कपोतकम् ॥ ३१ ॥

---

[2] शरणं इच्छतीति । इषु इच्छायामित्यस्य धातोरूपम् ।
[6] तीर्थसंसेवनमित्यर्थः । [9] आर्षमात्मनेपदम् ।

---

[1] राड्वक्रधर्मं ज्ञात्वामि (क ग) [3] गौ (कग) [4] महिषो वा मृगोऽपि वा (ख घ च)
[5] द (ख घ) [7] वेदो श्रुतं मया (क ग च) [8] वरः (च) [10] चाहं (च)

न चाऽहं कामये राज्यं न स्वर्गं [1]नाऽपुनर्भवम्[2] ।
प्राणिनां दुःखतप्तानां कामये दुःखनाशनम् ॥ ३२ ॥

आहारार्थे समारम्भः तव चा[3]यं विहङ्गम ।
तद्यथेष्टं त[4]वाहारं अन्यदेव ददाम्यहम् ॥ ३३ ॥

## श्येनेन कपोतभक्षणहेतुकथनम्

श्येनः ।

चराणामचरा ह्यन्नं [5]अदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतां अन्नं शूरस्य कात[6]राः ॥ ३४ ॥

' श्येनाः कपोतान् खादन्ति ' श्रुतिरेषा सनातनी ।
मा राजन् सुदृढं ज्ञात्वा [7]कदलीस्तम्भमारुह ॥ ३५ ॥

य [8]एव विहितोऽस्माकं धात्रा भक्ष्यः कपोतकः ।
तमेवोत्सृज नाहारैः कार्यमस्त्यपरैर्मम ॥ ३६ ॥

## राज्ञा प्राणिदयाप्रशंसनम्

राजा ।

नाहं कुशास्त्रमार्गेण क्वचिद्वर्ते विहङ्गम ।
शास्त्रैरेव प्रदिष्टोऽयं धर्मः स[9]त्यदयापरः ॥ ३७ ॥

सर्वसत्वेषु यद्दानं एकसत्वे [10]तु या दया ।
सर्वसत्वप्रदा[11]नात्तु दयैक[12]स्मि[13]न्विशिष्यते ॥ ३८ ॥

---

[2] अपुनर्भवो मोक्षः । [5] दंष्ट्राविरहिताः प्राणिन इति । अन्नमिति सर्वत्रान्वयः [7] कदलीस्तम्भारोहणमात्मनो विनाशकरमिति ज्ञेयम् । प्राणिदयाप्रदशन सुदृढमूलो धर्मः न भवतीति श्येनस्याभिमतम् ।

---

[1] वा (ख घ) [3] हं (ख घ) [4] था (ख घ) [6] रः (च) [8] एक (ख घ च)
[9] त्व (ख घ) [10] पु (घ च) [11] नं तु (क ग) [12] विवक्ष्यते (क ग)

प्राणिनं वध्यमानं तु यः शक्तः समुपेक्षते ।
स याति नरकं घोरमिति प्राहुर्मनीषिणः ॥ ३९ ॥

## श्येनप्रार्थनया राज्ञा तस्मै स्वमांसदानम्

श्येनः ।

[1]यदि राजन् कपोतेऽत्र[2]सुदृढा [3]भक्तिरीदृशी ।
ततः कपोततुल्यानि स्वमांसानि प्रयच्छ मे ॥ ४० ॥

राजा ।

अनुग्रहमि[4]मं मन्ये यन्मां श्येनाऽभियाचसे ।
एतत्ते सम्प्रयच्छामि स्वमांसं तुलया धृतम् ॥ ४१ ॥

अध्रुवेण शरीरेण प्रतिक्षणविनाशिना ।
ध्रुवं यो नाऽर्जयेद्धर्मं स शोच्यो मूढचेतनः ॥ ४२ ॥

यदि प्राण्युपकाराय देहोऽयं चोपयुज्यते ।
ततः किमुप[5]चारेण प्रत्यहं क्रियते मया ॥ ४३ ॥

एवमुक्त्वा स्वमांसानि समुत्कृत्य स पार्थिवः ।
प्रहृष्टस्तुलयामास कपोतेन समं प्रभुः ॥ ४४ ॥

ध्रियमाणस्तु तुलया कपो[6]तो व्यतिरिच्यते[7] ।
पुनश्चोत्कृत्य मांसानि ततः प्रादात्स पार्थिवः ॥ ४५ ॥

न विद्यते यदा मांसं कपोतेन समं क्वचित् ।
ततः प्रक्षीणमांसोऽसौ आरुरोह तुलां स्वयम् ॥ ४६ ॥

परदुःखातुरा नित्यं सर्वभूतहिते रताः ।

---

[7] व्यतिरेकः अन्यापेक्षया अधिकभावः ।

---

[1] इति (घ) [2] सुरूढा (घ) [3] भक्तिरीरिता (च) [4] दं (क ग) [5] रोऽस्य (घ)
[6] ते ह्मति (च)

[1]नाऽपेक्षन्ते महात्मानः स्वसुखानि महान्त्यपि ॥ ४७ ॥

[2]ततस्तस्मिन् समारूढे तुलामौशीनरे [3]नृपे ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात [4]ह ॥ ४८ ॥

समालक्ष्य ततस्तस्मिन् अनन्यसुलभां स्थितिम् ।
शक्रः स्वरूपमास्थाय वाक्यमेतदभाषत ॥ ४९ ॥

## इन्द्राग्निभ्यां शिबिप्रशंसनम्

इन्द्रोऽहमस्मि भद्रं ते कपोतो हव्यवा[5]डहन् ।
जिज्ञासमानौ त्वां राजन् इमं यज्ञमुपागतौ ॥ ५० ॥

या परार्थैककल्याणी [6]स्वाश्रयेऽत्यन्तनिष्ठुरा ।
त्वय्येव केवलं राजन् कुरुते करुणा पदम् ॥ ५१ ॥

स्वकर्मपाशैः सुदृढैः [7]बद्धं कृत्स्नमिदं जगत् ।
त्वं जगद्दुःखमोक्षार्थं [8]बद्धः करुणया नृप ॥ ५२ ॥

आत्मप्राणैः परप्राणान् यो नरः परिरक्षति ।
स याति परमं स्थानं यतो नावर्तते पुनः ॥ ५३ ॥

पशवोऽपि हि जीवन्ति केवलात्मोदरम्भराः ।
स पुनर्जीवति श्लाघ्यो यः परार्थं हि जीवति ॥ ५४ ॥

किं वात्र चित्रं यत्सन्तः परानुग्रहतत्पराः ।
न हि स्वदे[9]हशैत्याय जायन्ते चन्दनद्रुमाः ॥ ५४ ॥

यत्ते मांसानि गात्रेभ्यः समुत्कृत्तानि पार्थिव ।
एषा ते शाश्वती कीर्तिः लोकाननुगमिष्यति ॥ ५७ ॥

दिव्यरूपधरश्चैव पालयित्वा तु मेदिनीम् ।

---

[1] नो (ख घ) [2] न तु त (क ग) [3] सुते (च) [4] च (ख घ च) [5] हनः (च)
[6] स्ता (क ख ग घ) [7] वन्धं (क ग) [8] गन्धः (क ग) [9] हे (क ग)

दिव्यरूपधरश्चैव पालयित्वा तु मेदिनीम् ।
सर्वान् लोकानतिक्रम्य [1]ब्रह्मलोकं गमिष्य[2]ति ॥ ५७ ॥

## इन्द्राग्न्योरन्तर्धानं साधारणधर्मप्रशंसनञ्च

सूतः ।

एवमुक्त्वा तमिन्द्रा[3]ग्नी जग्मतुस्त्रिदशालयम् ।
राजा च क्रतुमिष्ट्वा [4]वै मुमुदे देववच्चिरम्
एष राज्ञामशेषाणां धर्मः साधारणो मतः । ॥ ५८ ॥

## धर्मस्य मूलरूपाणां द्विजानां प्रशंसनम्

राजा वृक्षो द्विजा मूलं मन्त्री शाखा प्रजाः फलम् ।
तस्य मूलं सुरक्ष्यं हि तेन वृक्षः प्रवर्धते ॥ ५९ ॥

क्षत्रियः शतवर्षी च दशवर्षी च ब्राह्मणः ।
पितापुत्रौ तु विज्ञेयौ तयोस्तु ब्राह्मणः पिता ॥ ६९ ॥

अपि देवांशसम्भूतो राजा विप्रान्प्रपूजयेत् ।
उत्पत्तिस्थितिनाशानां कर्ताप्युक्तं हि विष्णुना ॥ ६१ ॥

दैवाधीनं जगत्सर्वं मन्त्राधीनं तु दैवतम् ।
तन्मन्त्रं ब्राह्मणाधीनं [5]ब्राह्मणो मम देवता ॥ ६२ ॥

[6]ब्राह्मणानेव सेवन्ते सततं हि तदुत्तमम् ।
ब्राह्मणान्सेवमानस्य राज्ञः सर्वं प्रसीदति ॥ ६३ ॥

तस्माद्राजापि वान्यो वा नावमन्येत वै द्विजान् ।
मोहादप्यवम[8]न्ता चेन्महद्दुःखं प्रसूयते ॥ ६४ ॥

---

[1] सर्वं (ख घ) [2] सि (क ग च) [3] ग्निर्नं (घ) [4] ऽसौ (घ च)
[5] तस्माद्ब्राह्मणदैवतम् (क ख ग च) [6] क ख ग च मातृकासु न विद्यन्ते तिस्रः पंक्तयः ।
[7] न्तश्चे (च)

हन्युः क्रुद्धा महात्मानो ब्राह्मणाश्च तपस्विनः ।
[1]अकोपनापराधेन[2] भूयो नरकमश्नुते ॥ ६५ ॥

इति श्रीमत्पुराणसारे राजधर्मे शरणागतपरित्राणं नाम
द्वादशोऽध्यायः ।

---

[2] अकोपनाः नास्ति कोपो येषु ते । द्विजाः ।

---

[1] अकोपनापराधेन (क ख ग घ)

# त्रयोदशोऽध्यायः

[ राजधर्मप्रकरणे द्विजावमानदोषनिरूपणम् ]

[1][ नहुषोपाख्यानम् ]

## इन्द्रस्य ब्रह्महत्यादोषप्राप्तिः नहुषस्येन्द्रपदप्राप्तिश्च

सूतः ।

[2]अत्र [3]वः कथयिष्यामि इतिहासं पुरातनम् ।
हत्वा [4]त्वाष्ट्रं पुरा [5]शक्रे ब्रह्महत्याभया[6]र्दिते ॥ १ ॥

अराजकं जगत्सर्वमभिभूतमुपद्रवैः ।
ऋषयोऽथाब्रुवन् सर्वे देवाश्च त्रिदिवेश्वराः ॥ २ ॥

अयं वै नहुषः श्रीमान् देवराज्येऽभिषिच्यताम् ।
ते गत्वाथाब्रुवन् सर्वे राजा नो भव पार्थिव ॥ ३ ॥

नहुषस्तद्वचः श्रुत्वा प्राप्य राज्यं त्रिविष्टपम् ।
धर्मात्मा सततं भूत्वा कामात्मा सम्प्रपद्यत ॥ ४ ॥

शचीं संदृश्य दुष्टात्मा प्राह सर्वान्सभासदः ।
इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति ॥ ५ ॥

---

[1] इयं कथा महाभारतस्य उद्योगपर्वणि दृश्यते। इन्द्रविजयोपाख्याने प्रस्तुतेयं संग्रहरूपेणात्र निबद्धा । (महाभारतम् उद्योगपर्व—इन्द्रविजयोपाख्यानम्— अध्यायाः १०—१५)

[4] त्वष्टा देवशिल्पी । विश्वरुपस्त्वाष्ट्रः तस्य त्रिशिरोविश्वरूपत्रिश्चकर्माख्येषु त्रिषु पुत्रेष्वन्यतमः ।

---

[2] अथ (क ख ग) [3] ते (घ च) [5] शक्रो (घ) [6] द्रुतः (घ) द्रुतम् (च)

### नहुषभीतया शच्या देवेन्द्रस्यान्वेषणम्

तच्छ्रुत्वा दुर्मना देवी विललाप सुदुःखिता ।
यदि दत्तं यदि हुतं गुरवस्तोषिता यदि ।
एकभर्तृकता मेऽस्तु सत्यं यद्यस्ति वा मयि ॥ ६ ॥
अथैनां रूपिणीं साध्वीमुपातिष्ठदुपश्रुतिः[1] ।
इन्द्राणी सम्प्रहृष्टा सा सम्पूज्येदमुवाच ताम् ॥ ७ ॥
यत्रास्ते देवराजो मे तं देशं दर्शयस्व मे ।
तथेति प्रस्थितां देवीमिन्द्राणीं सा समन्वगात् ॥ ८ ॥
आससाद महाद्वीपं नानाद्रुमलता[2] युतम् ।
तत्रापश्यत्सरो दिव्यं नानाशकुनिभिर्वृतम् ॥ ९ ॥

### इन्द्रं दृष्ट्वा शच्या स्वदुःखनिवेदनम्

पद्मस्य भित्वा नालं सा विवेश सहिता[3] तया ।
[4]बिसतन्तुप्रविष्टन्तु तत्रापश्यच्छतक्रतुम् ॥ १० ॥
इन्द्रं तुष्टाव सेन्द्राणी विश्रुतैः पूर्वकर्मभिः ।
ततः सा कथयामास नहुषस्य विचेष्टितम् ॥ ११ ॥
[5]जहि रौद्रं महाबाहो नहुषं पापनिश्चयम् ।
तेजः समाप्नुहि विभो देवराज्यं प्रशाधि [6]भोः ॥ १२ ॥

---

[1] उपश्रुतिर्नाम काचन देवी । [3] उपश्रुत्या सहेत्यर्थः । [4] अत्रैवं कथा–स्वगुरुः विश्वकर्मसुतः त्वाष्ट्रः विश्वरूपः स्वोद्दिष्टयज्ञे राक्षसेभ्यः अवदानं विशिष्य ददौ इति इन्द्रः वज्रेण तस्य शिरोऽच्छिनत् । यतस्स ब्राह्मणोऽत एव इन्द्रं ब्रह्महत्या प्राविशत् । स भीतो धावन् सरोवरे पद्मनाले न्यलीयतेत्यादि स्कान्दपुराणम्–माहेश्वरखण्डः १–१५ ।

---

[2] कुल (ख च) [4] बिलं (क ग) [5] न हि (ख ग) [6] च (क ख ग घ)

## इन्द्रेण नहुषशिक्षार्थमुपायसूचनम्

एवमुक्तस्तु भगवान् शच्या वचनमब्रवीत् ।
विक्रमस्य न कालोऽयं नहुषो बलवत्तरः ॥ १३ ॥

नीतिमत्र विधास्यामि देवि [1]तां कर्तुमर्हसि ।
गत्वा नहुषमेकान्ते ब्रूहि त्वं तनुमध्यमे ॥ १४ ॥

ऋषियानेन दिव्येन मामुपेहि जगत्पते ।
एवं तव वशीभूता भविष्यामीति तं वद ॥ १५ ॥

इत्युक्ता देवराजेन पत्या सा कमलेक्षणा ।
एवमस्त्वित्यथोक्त्वा तं जगाम नहुषं प्रति ॥ १६ ॥

## शचीनहुषयोः संवादः

नहुषस्तां ततो दृष्ट्वा विस्मितो वाक्यमब्रवीत् ।
भक्तं मां भज कल्याणि किमिच्छसि मनस्विनि ॥ १७ ॥

शची ।

इच्छाम्यहमिहापूर्वं वाहनं ते सु[2]राधिप ।
वहन्तु त्वां महाराज मुनयः सङ्गता विभो ।
सर्वे शिबिकया राजन् एतद्धि मम रोचते ॥ १८ ॥

नहुषः ।

अपूर्वं वाहनमिदं त्वयोक्तं वरवर्णिनि ।
न ह्यल्पवीर्यो भवति यो वाहान् कुरुते मुनीन् ॥ १९ ॥

अहं तपस्वी बलवान् भूतभव्यभवत्प्रभुः ।
सप्तर्षयो [3]वहिष्यन्ति सर्वे ब्रह्मर्षयश्च माम् ॥ २० ॥

---

[3] वक्ष्यन्ति इति साधुप्रयोगः ।

---

[1] त्वां [illegible] (क) त्वं (ग) [2] [illegible] (क घ) [illegible] (ख) [3] [illegible] (ख)

एवमुक्त्वा तु तां देवीं विसृज्य च वराननाम् ।

**सप्तर्षिभिर्नहुषयानवहनं नहुषस्याजगरत्वप्राप्तिश्च**

स तु दर्पेण महता परिभूय महामुनीन् ॥ २१ ॥
विमाने योजयित्वा [1]तान् मुनीन् नियममास्थितान् ।
कामवृत्तः स दुष्टात्मा वाहयामास तानृषीन् ॥ २२ ॥
[2]तत्राप्यगस्त्यं पादेन वहन्तं स्पृष्टवान् मदात् ।
[3]सर्प सर्पेति चोवाच तेन क्रुद्धोऽभवन्मुनिः ॥ २३ ॥
रुषा परमया युक्तो ध्वंस सर्पेति चाऽब्रवीत् ।
ततस्तस्माद्विमानाग्रात्प्रच्युत श्च्युतभूषणः ॥ २४ ॥
[4]प्रापतद्भुवुधे मानं व्या[5]लभूतो ह्यधोमुखः ।
अयाचत ततो विप्रं शापस्यान्तो भवेदिति ॥ २५ ॥

**नहुषस्य शापनिवृत्तिकथनम्**

अज्ञानात्सम्प्रवृत्तस्य भगवन् क्षन्तुमर्हसि ।
ततः स तमुवाचेदं [6]प्रपतन्तं कृपान्वितः ॥ २६ ॥
ध्रुवो राज्यान्मदो [7]राज्ञः मोहश्चाऽपि [8]मदाद्ध्रुवः ।
मोहाद् ध्रुवश्च नरको राज्यं निन्दन्त्यतो बुधाः ॥ २७ ॥
राज्यं ते बहु मन्यन्ते भूपा विषयलोलुपाः ।

---

[2] अयं कथाभागः आरण्यपर्वणि आजगरपर्वणि, सर्पात्मना स्थितेन नहुषेण कथ्यमानो दृश्यते । [3] सर्पेति सृप्लृगतौ इति धातोः लोट् मध्यमपुरुषरूपम् ।

---

[1] च (ख घ च) [2] द (च घ च) [4] प्रयतन्बुधे (ख घ) [5] ली (ग ख घ)
[6] वृतवन्तः (ग) [7] राज्ञां (ख घ) [8] महान् (ख)

मनीषिणस्तु पश्यन्ति तदेव नरकोपमम् ॥ २८ ॥

तस्माल्लोंक[1]त्रयध्वंसी न कर्तव्यो मद[2]स्त्वया ।
यदीच्छसि महाराज शाश्वतीं गतिमात्मनः ॥ २९ ॥

द्विजाश्च नाऽवमन्तव्यास्त्रैलोक्यैश्वर्यपूजिताः ।
देववद्वन्दनीयाश्च दानमानार्चनादिभिः ॥ ३० ॥

युधिष्ठिरो [3]महाराजः शापात्त्वां मोचयिष्यति ।
एवं शापान्तमासाद्य सर्पो भूत्वा [4]वने स्थितः ॥ ३१ ॥

[5]स च कालेन नहुषः शापान्मुक्तो दिवं ययौ ।
इति विप्रावमानेन पूर्वै[6]रपि महात्मभिः । ॥ ३२ ॥

अनुभूतं महद्दुःखं किमुतान्येन [7]देहिना ।
तेषामेव हि सम्मानान्मह[8]त्सुखमवाप्यते ॥ ३३ ॥

इति श्रीमत्पुराणसारे [9]ब्राह्मणावमानदोषनिरूपणं नाम
त्रयोदशोऽध्यायः

---

[5] द्वापरे सम्भूते अस्य शापक्षयोऽभूत् । इयं कथा महाभारते वनपर्वणि द्रष्टव्या ।

---

[1] द्वय (ख च) [2] स्ततः (च) [3] धर्म (ख घ च) [4] व्यव (क ग)
[6] रिति (ख घ) [7] हेतुना (क ग) [8] द्दुःख (च) [9] राजगुण (ख) च प्रतौ नास्ति ।

# चतुर्दशोऽध्यायः

[ राजधर्मप्रकरणे विप्रसम्माननफलनिरूपणम् ]

## आरुणिसमीपे व्याधस्य तपश्चरणम्

सूतः ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
[1]ब्राह्मणश्च पुराकल्पे [2]आरुणिर्नाम नामतः ।
सोऽरण्यमगमत्किञ्चित्तपो[3]ऽर्थं द्विजसत्तमः ॥ १ ॥

तपस्तेपे ततस्तस्मिन् उपवासपरायणः ।
देविकायास्तटे [4]रम्ये स वसन् ब्रह्म[5]वित्तमः ॥ २ ॥

कदाचिदभिषेकाय [6]जगाम स महानदीम् ।
ततः स्नात्वा जपन्विप्रो ददर्शायान्तमग्रतः ।
व्याधं महाधनुष्पाणिं रक्तनेत्रं सुभीषणम् ॥ ३ ॥

तं द्विजं हन्तुमायात्स वल्कलानां जिघृक्षया[7] ।
[8]तं दृष्ट्वा क्षुभितो विप्रो व्याधस्य स भयार्दितः ॥ ४ ॥

ध्यायन्नारायणं देवं तस्थौ तत्रैव स द्विजः ।
तं तथैव स्थितं दृष्ट्वा व्याधो भीत इवाग्रतः ।
विहाय स[9]शरं चापं ततो वचनमब्रवीत् ॥ ५ ॥

---

[1] इयं कथा वराहपुराणस्था नारायणमन्त्रप्रभावप्रदर्शनार्थं तत्र निरूपिता दृश्यते । अत्र पदभेदः केवलं दृश्यते । (वराहपुराणम् ३७ अध्यायः)

[7] जिघृक्षा गृहीतुमिच्छा ।

---

[2] अ (ख च)  [3] र्थी (ख घ)  [4] पुण्ये (ख घ)  [5] वत्सलः (ख घ)  [6] स जगाम (ख)
[8] तद्दृष्ट्वा (ख)  [9] रश्चापं (क ग च)

व्याधः ।

हन्तुमिच्छुरहं ब्रह्मन् भवन्तं प्रागिहा[1]गतः ।
इदानीं दर्शना[2]त्तुभ्यं सा मतिः क्वापि मे गता ॥ ६ ॥

पुरुषाणां सहस्राणि नारीणामयुतानि[3] च ।
निहतानि म[4]या ब्रह्मन् वृत्तिहेतोः कुटुम्बिना ॥ ७ ॥

न च मेह्यधिकं [5]वित्तं कदाचिदपि जायते ।
इदानीं तप्तुमिच्छामि तपोऽहं त्वत्समीपतः ॥ ८ ॥

उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ।
एवमुक्तस्तदा विप्रः नोत्तरं [6]प्रत्यपद्यत ।
ब्रह्महा पापकर्मेति [7]मत्वा ब्राह्मणपुङ्गवः ॥ ९ ॥

अनुक्तोऽपि स धर्मेप्सुः व्याधस्तत्रैव तस्थिवान् ।
तस्याश्रमे द्विजस्यैव वृक्षमूलमुपाश्रितः ॥ १० ॥

## विप्रं हन्तुमुद्यतस्य व्याघ्रस्य व्याधेन हननम्

कस्यचित्त्वथ कालस्य तां नदीमगमत्किल ।
व्याघ्रः क्षुधान्वितं साधुं तं विप्रं हन्तुमुद्यतः ॥ ११ ॥

अन्तर्जलगतं विप्रं यावद्व्याघ्रो जिघृक्षति ।
तावद्व्याधेन विद्धोऽसौ सद्यः प्राणैर्वियोजितः ॥ १२ ॥

विप्रो ह्यन्तर्जलगतः श्रुत्वा तं शब्दमाकुलम् ।

---

[2] तव दर्शनात् इति षष्ठ्यर्थे चतुर्थी ।  [3] अयुतं दशसहस्रम् ।

---

[1] व्रतः (ख घ च)  [4] हा (क ग च)  [5] किञ्चित (ख घ च)  [6] प्रतिपद्यते (क च)
[7] न (क ख ग)

### नारायणमन्त्रश्रवणात् व्याघ्रस्य स्वजन्मनो मुक्तिः

नमो नारायणायेति मन्त्रमुच्चैरुवाच ह ॥ १३ ॥

व्याघ्रेणाऽपि श्रुतो मन्त्रः प्राणैः कण्ठगतैर्द्विजाः ।
तस्माद्व्याघ्रशरीरात्तु उत्थाय पुरुषः किल ॥ १४ ॥

अब्रवीद्यामि तं देशं यत्र विष्णुः सनातनः ।
[1]त्वत्प्रसादा[2]न्मुनिश्रेष्ठ मुक्तपाप्मा निरामयः ॥ १५ ॥

इत्युक्तो ब्राह्मणः प्राह कोऽसि त्वं पुरुषर्षभ ।

### व्याघ्रस्य पूर्वजन्मेतिहासः

सोऽब्रवीदस्मि राजेन्द्रो दीर्घबाहुरिति श्रुतः ॥ १६ ॥

अहं जानामि [3]वेदांश्च अहं वेद्मि शुभाशुभम् ।
ब्राह्मणैर्नैव मे कार्यं किं वस्तु ब्राह्मणा इति ॥ १७ ॥

तस्यैवंवादिनो विप्राः सर्वे क्रोधसमन्विताः ।
ऊचुः शापं दुराध[4]र्षं क्रूरो व्याघ्रो भविष्य[5]सि ॥ १८ ॥

ततस्ते ब्राह्मणाः सर्वे प्रणिपत्य प्रसादिताः ।
उक्ताश्चानुग्रहार्थं तु त [6]ऊचुर्मामिदं पुरा ॥ १९ ॥

[7]यदैव लब्ध्वा घातं तु प्राणैः कण्ठगतैर्भवान् ।
श्रोष्यसे द्विजमुख्यात्तु नमो नारायणेति [8]च ॥ २० ॥

तदा स्वर्गगतिस्तुभ्यं भविता नात्र संशयः ।
विप्रद्वेषफलं भुक्त्वा सुखी च तव दर्शनात् ॥ २१ ॥

---

[1] त (क ख ग घ) [2] द्द्विज (ख घ) [3] देवां (क ग च) [4] र्षाः (क ख ग च)
[5] ति (च) [6] दू (घ) [7] यदेषुघातुकं लब्ध्वा (ख घ च) [8] ह (ख घ च)

## विप्रप्रशंसनम्

ब्राह्मणः सम्भवेनैव देवानामपि दैवतम् ।
प्रमाणं सर्वलोकस्य ब्रह्मा[1]ऽत्रैव हि कारणम् ॥ २२ ॥
यस्याऽऽस्येन सदाऽश्नन्ति हव्यानि[2]त्रिदिवौकसः ।
कव्यानि चैव पितरः किं भूतमधिकं ततः ॥ २३ ॥
वैशिष्ट्यात्प्रकृति[3]श्रैष्ठ्यात् नियमस्य च धारणात् ।
संस्कारस्य च बाहुल्याद्वर्णानां ब्राह्मणो गुरुः ॥ २४ ॥
यः पुनर्ब्राह्मणान् पूज्यान्मनोवाक्कायकर्मभिः ।
सन्तोषयति विप्रेन्द्र स योगी वीतकिल्बिषः ॥ २५ ॥
अविद्यो वा [4]सविद्यो वा ब्राह्मणो दैवतं महत् ।
[5]प्रणीतश्चाऽप्रणीतश्च यथाऽग्निर्दैवतं महत् ॥ २६ ॥

## द्विजश्रेष्ठत्वप्रतिपादने गरुडकथानकम्

[6]पुरा किल महाविद्यो मातरं विनतासुतः ।
दासीभावे स्थितां दृष्ट्वा सविषादमुवाच ह ॥ २७ ॥
किं कारणं मया मातः कर्तव्यं [7]सर्पभाषितम् ।

## विनतया स्वदुःखकारणकथनम्

[8]विनता ।
दासीभूताऽस्म्यनार्यायाः भगिन्याः पतगोत्तम ।

---

[5] अग्नेः प्रणयनं च होमाद्यर्थं आहूय स्थिरीकरणम् । संस्करणमिति ।

[6] अयं कथाभागः महाभारतस्यादिपर्वणः संगृहीतः । (महाभारतम्–आदिपर्व आस्तीकपर्व २३ अध्यायः)

---

[1] चैव (ख घ) [2] ति (क ग च) [3] श्रेष्ठा (क) [4] सु (क ग) [7] किं वदस्व मे (क ग) [8] घप्रतौ नास्ति पदम् ।

[1]पणं वितथमास्थाय सर्पैरुपधिना[2] कृतम् ॥ २८ ॥

## गरुडस्यामृताहरणार्थमुद्योगः

तस्मिंस्तु कथिते मात्रा कारणे गगनेचरः ।
उवाच वचनं सर्पांस्तेन दुःखेन दुःखितः ॥ २९ ॥

[3]किमाहृत्य विदित्वा वा किं वा कृत्वैव पौरुषम् ।
दास्याद्वो विप्रमु[4]च्येऽहं सत्यं शंसत लेलिहाः[5] ॥ ३० ॥

श्रुत्वैवमब्रु[6]वन् सर्पा आहृत्यामृतमोजसा ।
तदा दास्या[7]द्विप्रमोक्षो भविता तव खेचर ॥ ३१ ॥

इत्युक्तो गरुडः [8]सर्पैस्ततो मातरमब्रवीत् ।
गच्छाम्यमृतमाहर्तुं भक्ष्यमिच्छामि वेदितुम् ॥ ३२ ॥

## विनतया द्विजस्यावध्यत्वनिरूपणम्

विनता ।

समुद्रकुक्षावेकान्ते निषादालयमुत्तमम् ।
शब[9]रांस्तत्र सुबहून्भुक्त्वाऽमृतमिहाऽऽनय ॥ ३३ ॥

न [10]तु ते [11]ब्राह्मणान् हन्तुं कार्या बुद्धिः कथञ्चन ।
अवध्यः सर्वभूतानां ब्राह्मणो ह्यनलोपमः ॥ ३४ ॥

---

[1] पणः द्यूतम् । [2] उपधिः कपटः । [5] लेलिहानः सर्पः लिह आस्वादने इत्यस्य धातो रूपम् । आत्मनेपदि शानजन्तो लेलिहानशब्दः । अत्र दीति लिहः ।

---

[3] किं वा हृत्वा (ख घ च) [4] च्योऽयं (क ग) [6] वीतसर्वा (क ग) [7] मोक्षोऽहं (क)
[8] वैं (क) [9] राजत्र (ख घ) [10] कुतो (क ग) [11] ब्राह्मणं (ख घ)

अग्निरर्को विषं शस्त्रं विप्रो भवति को[1]पितः ।
भूतानामग्रभुग्विप्रो वर्णश्रेष्ठः पिता गुरुः ॥ ३५ ॥

## ब्राह्मणलक्षणनिरूपणम्

गरुडः ।

यथाहमभिजानीयां ब्राह्मणं लक्षणैः शुभैः ।
तन्मे कारणतो मातर्वक्तुमर्हसि पृच्छतः ॥ ३६ ॥

विनता ।

यस्ते कण्ठमनुप्राप्तो निगीर्णं [2]बडिशं यथा ।
दहेदङ्गानि तत्पुत्र तं विद्याद्ब्राह्मणर्षभम् ॥ ३७ ॥

## आहारार्थं गरुडेन निषादभक्षणम् । आहारमध्ये कण्ठप्राप्तस्य द्विजस्य मोक्षः

ततस्स मातुर्वचनं निशम्य
वितत्य पक्षौ सहसोत्पपात ।
ततो निषादान्बलवानुपागमत्
बुभुक्षितः काल इवान्तकोपमः ॥ ३८ ॥
ततः स चक्रे महदाननं तदा
निषादमार्गान्प्रतिरुध्य पक्षिराट् ।
ततो निषादा विविशुस्तदाननं
सरित्प्रवाहा इव सागरान्तम् ॥ ३९ ॥

---

[2] बडिशः मत्स्यग्रहणार्थं उपयुज्यमानकण्टः । तत्र मत्स्यभक्ष्यं निधाय जले पातयन्ति सशलाकम् ।

---

[1] विदः (क) पतः (च)

तस्य कण्ठमनुप्राप्तः कश्चन ब्राह्म'णब्रुवः[2] ।
दहन् दीप्त इवाङ्गारस्तमुवाचान्तरिक्षगः ॥ ४० ॥
द्विजोत्तम बहिर्गच्छ तूर्णमास्यादपावृतात् ।
न हि मे ब्राह्मणो वध्यः [3]पापेष्वभिरतस्सदा ॥ ४१ ॥
ब्रुवाणमेवं गरुडं ब्राह्मणः प्रत्यभाषत ।
निषादी मम भार्येयं निर्गच्छतु मया सह ॥ ४२ ॥

[4]गरुडः ।

एतामपि निषादीं त्वं [5]प्रतिगृह्याशु निष्पत ।
तूर्णं सम्भावया[6]ऽऽत्मानं अजीर्णं मम तेजसा ॥ ४३ ॥

## गरुडेन मातुः दास्यमोचनम्

ततस्स विप्रो निष्क्रान्तो निषादीसहितस्त[7]दा ।
[8]वर्धयित्वा च गरुडमिष्टान् देशान् जगाम सः ॥ ४४ ॥
तदाशीर्वादसामर्थ्यान्निष्प्रत्यूहः[9] खगेश्वरः ।
विजित्यामरदैतेयान् सोममाहृतवान् [10]बली ॥ ४५ ॥
तेन मातुस्त[11]दा दास्यं मोचयित्वा ननन्द सः ।

## राज्ञा दीर्घबाहुना द्विजप्रशंसनम्

तस्मात्सर्वात्मना पूज्यो यादृक्तादृगपि द्विजः ॥ ४६ ॥

---

[2] ब्राह्मणनाममात्रधारी । वृत्त्या न तादृशः । [3] पापेष्वभिरतोऽपि इति ज्ञेयमथवा पापेष्वपि रत इति पाठोऽपि स्यात् ।
[8] आशिषो दत्वेत्यर्थः । [9] निर्विघ्नः ।

---

[1] णाधमः (ख घ च) [4] खघयोर्नास्ति पदम् । [5] परि (ख घ च) [6] मास आत्मानं (क ग) [7] था (ख घ) [10] बलात् (च) [11] तो (ख घ च)

ब्राह्मणाः कस्य वक्तव्याः कस्य वा छन्दचारिणः ।
गुणैरेव वसन्त्येते [1]कामगाः पक्षिणो यथा ॥ ४७ ॥

अष्टौ पू[2]र्वनिमित्तानि नरस्य विनाशिष्यतः ।
ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ ४८ ॥

ब्राह्मण[3]स्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ ४९ ॥

[4]नैतान् स्मरति कृत्येषु याचित[5]श्च ह्यसूयति ।
सत्यं सत्यं पुनः सत्यं उद्धृत्य भुजमुच्यते ॥ ५० ॥

[6]अनिन्द्या ब्राह्मणा वेदाः स्मर्तव्यः पुरुषोत्तमः ।
सत्यं सत्यं पुनः सत्यं उ[7]द्धृत्य भुजमुच्यते ॥ ५१ ॥

[8]जङ्गमा ब्राह्मणा देवाः कूटस्थः पुरुषोत्तमः ।
एवमुक्त्वा गतः स्वर्गं स राजा वीतमत्सरः ॥ ५२ ॥

## विप्रेण व्याधाय शास्त्रोपदेशकरणं सत्यतपा इति तस्य नामप्राप्तिश्च

ब्राह्मणोऽपि मुदा युक्तः तं व्याधं प्रत्यभाषत ।
अहं त्वया पुरा पुत्र प्रार्थितोऽस्मि तपोऽर्थिना ।
बहुपातकयुक्तेन घोररूपेण [9]चाऽनघ ॥ ५३ ॥

इदानीं तव पापानि देविकाऽभिषवेण च ।
मद्दर्शनेन च [10]चिरं मम शुश्रूषणेन च ॥ ५४ ॥

नष्टानि शुद्धदेहोऽसि साम्प्रतं नात्र संशयः ।
तपः कुरु[11]ष्व साधो त्वं नियतो मम सन्निधौ ॥ ५५ ॥

---

[1] ग्रा (ख च) [2] र्वै (ख घ च) [3] स्तानि ना (ख घ) [4] ए (क)
[5] श्चाभ्य (ख ग घ च) [6] अनित्या (क) [7] द्क्षिप्य (ख घ च) [8] जगामा (ख च)
[9] वा (क) [10] परं (च) [11] च (ख घ)

एवमुक्तस्स विप्रेण द्विजभक्तः समाहितः ।
तपस्तेपे निराहारः तं गुरुं मनसा स्मरन् ॥ ५६ ॥

अथ कालेन स मुनिः सुप्रीतस्तपसाऽस्य वै ।
तम[1]स्थिशेषं व्याधं तु क्षुधादुर्बलतां गतम् ॥ ५७ ॥

उवाच सर्वशास्त्राणि सर्ववे[2]दान् ससंग्रहान्[3] ।
[4]ब्रह्मविद्यापुराणानि प्रत्यक्षाणि भवन्तु ते ॥ ५८ ॥

एवं प्रादाद्वरं तस्मै द्विजोऽसौ नाम चाकरोत् ।
भवान् सत्यतपा नाम ऋषिराद्यो भविष्यति ॥ ५९ ॥

एवं दत्तवरो व्याधः कृतकृत्योऽभवद्द्विजाः ।
ब्राह्मणस्य प्रसादेन किं न सिध्यति भूसुराः ॥ ६० ॥

तस्मात्पालयता राज्यं विशेषेण महीभुजा ।
पूजनीया द्विजश्रेष्ठाः पूजिताः सर्वसिद्धिदाः ॥ ६१ ॥

यो वा शृणोत्यखिलमेतदहो पठेद्वा
देवालयेषु भवनेषु च धार्मिकाणाम् ।
सोऽपि त्रिपूरुषयुतोऽ[5]स्तमलो महात्मा[6]
[7]यात्यक्षयं परममाधव[8]धाम[9] धन्यः ॥ ६२ ॥

इति श्रीमत्पुराणसारे ब्राह्मणसम्मानफलं नाम
चतुर्दशोऽध्यायः ।

---

[3] संग्रहश्च वेदाङ्गादीनाम् । [6] पुरुषत्रयपर्यन्तां शुद्धिं अवाप्य महात्मा भवतीति।
[9] परमश्चासौ माधवः । तस्य धाम वैकुण्ठः । स एव मुमुक्षुगम्यः ।

---

[1] स्त्व (क ग च) [2] दाः समं ग्रहाः (क ग) [4] धर्म (क ग च) [5] विमलो (ख घ)
[7] यावत्यमी (क ग) [8] मा (ख)

# पञ्चदशोऽध्यायः

[ ब्राह्मणधर्मनिरूपणम् ]

## ब्राह्मणलक्षणम्

सूतः ।

तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं [1]पितृदेवानां धर्मसंरक्षणाय च ॥ १ ॥

ब्राह्मणानां गवां चैव कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ॥ २ ॥

सत्यं दानं क्षमा शीलं आनृशंस्यं दमो घृणा ।
दृश्यन्ते यत्र विप्रेन्द्राः स ब्राह्मण इति स्मृतः ॥ ३ ॥

[2]क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तमाः ।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ४ ॥

जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः ।
कामक्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः ॥ ५ ॥

[3]यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः ।
सर्वं धर्मेण चरति तं देवा ब्राह्मणं विदुः ॥ ६ ॥

योऽध्यापये[4]दधीयेद्वा याजयेद्वा यजेत वा ।
दद्या[5]द्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः ॥ ७ ॥

---

[1] पितॄणां देवानां चेति । [2] ब्राह्मणलक्षणनिरूपणात्मको भागः महाभारतादुद्धृतः । (महाभारतम् अरण्यपर्व अध्यायः ९७)

[4] अधीयीतेति महाभारतपाठः । अधीयेदित्यार्षं रूपमपपाठो वा स्यात् ।

---

[3] क ख घ पत्रेषु न दृश्यते पंक्तिरियम् । [5] देव (ख घ)

अहेरिव ऋणाद्भीतः सम्मानान्मरणादिव[1] ।
[2]कुणपादिव च स्त्रीभ्यः तं देवा ब्राह्मणं विदुः ॥ ८ ॥

येन केनचिदा[3]च्छन्नो येनकेनचिदा[4]धृतः ।
यत्र क्वचन [5]शायी स्यात्तं देवा ब्राह्मणं विदुः ॥ ९ ॥

क्षमा दया च विज्ञानं सत्यं चैव दमः शमः ।
अध्यात्मनिरतं ज्ञानं एतद्ब्राह्मणलक्षणम् ॥ १० ॥

न हिंस्यात्सर्वभूतानि नाऽनृतं वा वदेत्क्वचित् ।
[6]विहिता या भवेद्धिंसा सा त्वहिंसैव कीर्तिता ॥ ११ ॥

नाऽहितं नाऽप्रियं वाक्यं [7]न स्तेनः स्यात्कदाचन ।
न राज्ञः प्रतिगृह्णीयान्न शूद्रा[8]त्पतिताच्च न ॥ १२ ॥

वेदनिन्दापरांन्मर्त्यान् देवनिन्दापरांस्तथा ।
द्विजनिन्दापरांश्चैव मनसाऽपि न चिन्तयेत् ॥ १३ ॥

## ब्राह्मणवासयोग्यस्थाननिरूपणम्

न शूद्रराज्ये निवसेन्न पाषण्डजनैर्वृते ।
हिमवद्विन्ध्ययोर्म[9]ध्ये पूर्वपश्चिमयोः शुभम् ।
मुक्त्वा समुद्रयोर्देशं [10]नान्यत्र निवसेद्द्विजः ॥ १४ ॥

कृष्णो वा यत्र चरति मृगो [10]नित्यं स्वभावतः ।
[12]पुण्याश्च विश्रुता नद्यः तत्रैव निवसेद्द्विजः ॥ १५ ॥

---

[1] सम्मानो ब्राह्मणस्य मरणतुल्यः । [2] कुणपो राक्षसः । [5] शायीं शेते इति।
[6] यागादिषु पशुविशसनादि विहिता हिंसा । [7] वदेदित्यध्याहारः ।
[12] 'इम मे गङ्गेत्यमुने सरस्वति' इत्यादिमन्त्रोद्दिष्टा पुण्या नद्यः ।

---

[3] च्छिन्न (क ग च) [4] श्रि (क ग च) [5] शादी (क ग च) [8] च्च कदाचन (च)
[9] ध्यं (ख ग घ) [10] अ (क ग) [11] यत्र (क ग)

## ब्राह्मणकर्तव्यनिरूपणम्

[1]न धर्मं [2]लोपयेद्विद्वान् न पापं [3]गूहयेदपि ।
कुर्वीताऽऽत्महितं नित्यं सर्वभूतानुक[4]म्पनम् ॥ १६ ॥

व[5]यसः कर्मणोऽर्थस्य श्रुतस्याऽभिजनस्य च ।
वेषवाग्बुद्धिसारूप्यमा[6]चारं विचरेत्सदा ॥ १७ ॥

श्रुतिस्मृत्युदितं [7]सम्यक् साधु कार्यं च सेवितम् ।
तमाचारं निषेवेत [8]नेहेताऽन्यत्र कर्हिचित् ॥ १८ ॥

येनाऽस्य पितरो याता येन याताः पितामहाः ।
[9]तेन यायात्सतां मार्गं तेन गच्छन्न[10]रिष्यति ॥ १९ ॥

नित्यं [11]स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतवान् ।
सत्यवादी जितक्रोधो ब्रह्मभूयाय[12] कल्पते ॥ २० ॥

वेदोदितं स्वकं कर्म नित्यं कुर्याद[13]तन्द्रितम् ।
अकुर्वाणः पतत्याशु [14]निरयानतिभीषणान् ॥ २१ ॥

अविरोधेन भूतानां वृत्तिं[15]लिप्सेत वै द्विजः ।
सद्भ्य आगतविज्ञानः शिष्टः शास्त्रविचक्षणः ।
वीतहर्ष[16]मदक्रोधो ब्राह्मणो नावसीदति ॥ २२ ।

---

[1] ब्राह्मणकर्तव्यनिरूपणात्मको भागः कूर्मपुराणादुद्धृत इति भाति । कूर्मपुराणं उत्तरार्धं अध्यायः १५६) [3] गूहेदित्यर्थः । [8] ईहा इच्छा नेच्छेदित्यर्थः । [10] रिष्यति विनश्यतीत्यर्थः । [11] स्वाध्यायः वेदाध्ययनम् । [12] ब्रह्मणो भावः ब्रह्मत्वम् ब्रह्मभूयम् । [14] निरयो नरकः ।

---

[2] ख्याप (ख घ च) [3] शृणुये (क ग) [4] म्पि (क ग) [5] च (क ग)
[6] चरेद् (ख घ च) [7] कर्म (ख घ च) [9] ये (क ग) [13] निन्दितम् (ख घ च)
[15] लिप्सेत (क ग) [16] भय (च)

## ब्राह्मणस्य तेजःकारकगुणनिरूपणं दमप्रशंसा च

दानमध्ययनं यज्ञः तपो ह्रीरार्जवं[1] दमः ।
एतैर्विवर्धते तेजः पाप्मानं चापकर्षति ॥ २३ ॥

दमं निःश्रेयसं प्राहुः वृद्धा निश्चयदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मस्सनातनः ॥ २४ ॥

एक एव दमे दोषो द्वितीयो नोपपद्यते ।
यदेनं दमसंयुक्तमशक्तं मन्यते जनः ॥ २५ ॥

क्षमया विविधा लोका दुर्लभा हि सहि[2]ष्णुता ।
किमरण्येन दान्तस्या दान्तस्य च किमाश्रमैः ।
यत्र यत्र वसेद्दान्तः तदरण्यं तदाश्रमम् ॥ २६ ॥

स्वकर्मधर्मार्जित[3]भोजनानां
स्वदारसन्तुष्टगृहे रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणां
गृहेऽपि मोक्षो नियमस्थितानाम् ॥ २७ ॥

## शमप्रशंसनम्

शमः पवित्रमतुलं शमस्सुखमनुत्तमम् ।
शमः सुखमसङ्ख्येयं शमः पाप[4]हरः[5]परः ॥ २८ ॥

## नरकहेतुवर्गनिरूपणम्

त्रिविधं नरक[6]स्यैतद्द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत् ॥ २९ ॥

---

[1] ऋजुता सारल्यम् । दमश्च शान्तीभावः ।

---

[2] ष्णवः (च) [3] यो (क ख घ) [4] हरिं (क ग) [5] शुभः (च) [6] स्येह (ख च)

## रागदूषणम्

रागान्धो हि जनस्सर्वो न पश्यति हिताहितम् ।
रागं तस्मान्न कुर्वीत य इच्छेदात्मनो हितम् ॥ ३० ॥

## क्रोधदूषणम्

सञ्चितस्याऽपि तपसः क्रोधो नाशकरः परः ।
क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि ॥ ३१ ॥
क्रुद्धः परुषया वाचा नरस्साधूनधिक्षिपेत् ।

## क्रोधस्य दोषताख्यापने यवक्रीतकथा

अस्मिन्नर्थे पुरावृत्तं [1]कथयामि निबोधत ॥ ३२ ॥
[2]आसीद्ब्रह्मनदीतीरे रैभ्यो नाम महानृषिः ।
तदाश्रमोप[3]कण्ठे [4]च भरद्वाजो महातपाः ।
भरद्वाजश्च रैभ्यश्च सखायौ संबभूवतुः ॥ ३३ ॥
रैभ्यस्य द्वौ सुतावास्तां [5]विश्वावसुपरावसू ।
नानाशास्त्रविशेषज्ञौ वेदवेदाङ्गपारगौ ॥ ३४ ॥
भरद्वाजस्य पुत्रोऽभूद्यवक्रीत इति श्रुतः ।
लालनात्पा[6]लनात्पुत्रः ववृधे नैव शिक्षितः ॥ ३५ ॥

---

[2] इयं कथा महाभारतस्यारण्यपर्वणस्समुद्धृता । अत्र महाभारतापेक्षयाधिकाः केचन श्लोकाः दृश्यन्ते । (महाभारतम् अरण्यपर्व १३५-१३९ अध्यायाः) [4] उपकण्ठः समीपम् । [5] महाभारतेऽर्वावसुरिति नाम दृश्यते ।

---

[1] आख्यानं कथयामि वः । (ख च) एतदनन्तरं अर्वावसुपरावसुरैभ्य संवादः इति 'घ' मातृकायां दृश्यते । [3] करणे (क ग) [6] लितः पित्रा (ख घ च)

### रैभ्यपुत्राभ्यां यवक्रीतनिन्दा तस्य दुःखं च

जातु संक्रीडमान[1]स्सः विहारेषु हसन्निव ।
मू[2]र्खोऽसाविति रैभ्यस्य पुत्राभ्यां निन्दितो मुहुः ॥ ३६ ॥

लज्जितो भृशमात्मानं निनिन्दाऽतीव दुःखितः ।
[3]अजागलस्तनस्येव [4]धिङ्मे जन्म निरर्थकम् ॥ ३७ ॥

यद्द्वयस्यैर्निन्दितोऽहमिति व्रीडापरोऽभवत् ।

### यवक्रीतेन सर्वज्ञत्वप्राप्त्यर्थं तपश्चरणम्

ततस्तीव्रं तपस्तेपे सर्वज्ञत्वाय संयमी ।
सुसमिद्धे महत्यग्नौ शरीरमुपतापयन् ॥ ३८ ॥

तत इन्द्रस्तमासाद्य तपसा [5]तस्य तापितः ।
अब्रवीत्कस्य हेतोस्त्वमास्थितस्तप उत्तमम् ॥ ३९ ॥

वरं वृणीष्व भद्रन्ते वरदोऽहमिहागतः ।

यवक्रीतः ।

अहमेव हि सर्वज्ञो भवेयं त्वत्प्रसादतः ॥ ४० ॥

इन्द्रः ।

महाबुद्धे यवक्रीत सर्वज्ञस्त्वं भविष्यसि ।
इति तस्मै वरं दत्वा ययौ शक्रः स्वमालयम् ॥ ४१ ॥

मुनिपुत्रः प्रसन्नात्मा जगाम पितुरन्तिकम् ।
आलिलिङ्ग भरद्वाजः प्रेम्णा लब्धवरं सुतम् ॥ ४२ ॥

---

[2] अजायाः गले स्तन एको दृश्यते । केवलमाकारमात्रेण । परन्तु स्तन्यादि-रहितः निरर्थकः ।

---

[1] श्र (ख घ च) [2] र्खस्त्वमिति (ख घ च) [4] मम (ख च) [5] परि (ख घ च)

## लब्धविद्याय यवक्रीताय पितुरुपदेशः

भरद्वाजः ।

दर्पस्ते भविता [1]तात वरं लब्ध्वा यथेप्सितम् ।
यो दर्पपूर्णः कृपणः क्षिप्रमेव स नश्यति ॥ ४३ ॥

सर्वदैव यवक्रीत स्थातव्यं शुचिना त्वया ।
[2]न सहन्तेऽधिकं लोके विद्यया खलु दुर्जनाः ॥ ४४ ॥

एष रैभ्यो महावीर्यः पुत्रौ चाऽस्य तथाविधौ ।
तान् यथा पुत्र नाऽभ्येषि तथा कुर्यास्त्वत[3]न्द्रितः ॥ ४५ ॥

स हि क्रुद्धस्समर्थस्त्वां पुत्र [4]पीडयितुं रुषा ।
रैभ्यस्तपस्वी बलवान् कोपनश्च महान् [5]ऋषिः ॥ ४६ ॥

## विद्यागर्वितस्य यवक्रीतस्य स्वेच्छाविहरणं परावसुभार्याधर्षणश्च

यवक्रीतः ।

एवं करिष्ये मा तापं तात कार्षीः कथञ्चन ।
इत्युक्त्वा पितरं [6]श्लक्ष्णं यवक्रीतोऽकुतोभयः[7] ।
[8]विप्रकुर्वन्मुनीनन्या[9]न्विजहार महीतले ॥ ४७ ॥

अथ रैभ्याश्रमं गत्वा वादविद्याविशारदः ।
जिगाय तस्य तनयौ पूर्ववैरमनुस्मरन् ॥ ४८ ॥

---

[2] स्वापेक्षया अन्यं अधिकविद्यं न सहन्त इति । [6] श्लक्ष्णो मृदुस्वभावयुक्तः
[7] नास्ति कुतोऽपि भयमस्येति निर्भयः । [8] विप्रकारो अवहेलनं तिरस्कारो वा ।
[8] 'वि' उपसर्गपूर्वको हृञ् हरण इति धातुः । विहारोऽर्थः ।

---

[1] पुत्र (ख घ) [3] न्त्र (क) [4] पात (ख घ च) [5] मुनिः (ख घ च)

स जातु माधवे मासि पुष्पितद्रुमशोभिते ।
ददर्श यौवनवतीं प्रियां भार्यां परावसोः ॥ ४९ ॥

सुप्रभां [1]तां समायान्तीं चरन्तीमिव विद्युतम् ।
स ययाचे किमप्येनां कामे[2]नाऽऽहृतचेतनः ॥ ५० ॥

सा तस्य शीलमाज्ञाय तस्य शापाच्च बिभ्यती ।
[3]तेजस्विनश्च रैभ्यस्य तथेत्युक्त्वा जगाम सा ॥ ५१ ॥

तत एकान्तमासाद्य शुशोचाऽतीव [4]लज्जिता ।
आजगाम तदा रैभ्यः स्वमाश्रमपदं प्रति ॥ ५२ ॥

रुदन्तीं तां ततो दृष्ट्वा भा[5]र्यां रैभ्यः परावसोः ।
सांत्वयन् श्लक्ष्णया वाचा पर्यपृच्छन्महामुनिः ॥ ५३ ॥

[6]सा चास्मै सर्वमाचष्ट यवक्रीतस्य भाषितम् ।
प्रत्युक्तं च यवक्रीतं [7]प्रेक्षापूर्वं तथात्मनः ॥ ५४ ॥

### क्रुद्धेन रैभ्येन यवक्रीतवधार्थं कृत्यासृष्टिः

त[8]च्छृण्वन्मन्युनाऽऽविष्टः तपस्वी भृशको[9]पनः
अवलु[10]प्य जटामेकां जुहावाग्नौ सुसंस्कृते ॥ ५५ ॥

---

[3] तेजस्विनां च रैभ्यस्येति महाभारतस्थः पाठः । तत्र रैभ्यस्य तेजसा दुरात्मा यवक्रीतः प्रणश्येदिति भावनयेति ज्ञेयम् ।

[7] परावसोः पत्नी यवक्रीतस्य शापाद्बिभ्यती आत्मानं तस्मै अर्पितवती । तदेव तस्याः प्रेक्षापूर्वकारित्वमथवा श्वशुरस्य तपःशक्त्या स प्रणश्येदिति वा ।

[10] लुप्लृ छेदने इत्यस्य धातोः ल्यबन्तम् ।

---

[1] स्नातुमायान्तीं (ख घ च) [2] न कृत (ख घ च) [4] दुःखिता (ख घ) [5] र्यांमातौ (ख घ च) [6] वा (क) [8] च्छ्रुत्वा (ख घ च) [9] पितः (ख घ च) [10] लुम्प्य (ख)

ततस्समभवन्नारी तस्या[1]रूपेण सम्मिता ।
अवलु[2]प्य परां चाऽथ जुहावाऽग्नौ जटां पुनः ॥ ५६ ॥

ततस्समभवद्रक्षो दीप्तास्यं घोरदर्शनम् ।
[3]अब्रूतां तौ तदा रैभ्यं किं कार्यं करवावहै ॥ ५७ ॥

तावब्रवीदृषिः क्रुद्धो यवक्रीर्वध्यतामिति ।
जग्मतुस्तौ तथेत्युक्त्वा यवक्रीं[4]तजिघांसया ॥ ५८ ॥

## कृत्यया यवक्रीतवधः

ततस्सा समुपास्थाय कृत्या सृष्टा महात्मना ।
कमण्डलुं जहाराऽऽशु मोहयित्वा[5]ऽऽशु मायया ॥ ५९ ॥

उच्छिष्टं तु यवक्रीतमपकृष्टकमण्डलुम् ।
तत उद्यतशूलस्स राक्षस[6]स्तमुपाद्रवत् ॥ ६० ॥

तमापतन्तं संप्रेक्ष्य शूलहस्तं जिघांसया[7] ।
यव[8]क्रीः सहसोत्थाय प्राद्रवद्यत्र वै सरः ॥ ६१ ॥

जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितं पुनः ।
अग्निहोत्रं पितुर्भीतः [9]शरण्यं समुपाद्रवत् ॥ ६२ ॥

स वै प्रविशमानस्तु शूद्रेणान्धेन [10]रक्षिणा ।
[11]निगृहीतो बलाद्द्वारि सोऽतिष्ठत्तत्र वै मुनिः ॥ ६३ ॥

---

[7] हन्तुमिच्छया । [9] शरण्यं रक्षितारम् ।

---

[1] रूपं समास्थिता (च) [2] म्प्य (ख घ) [3] तौ ब्रूतां ते (क) [4] तं (ख घ च)
[5] तु (ख घ च) [6] स्स (ख घ च) [8] क्रीतस्सहो । [10] रक्षता (क ग)
[10] गृहीतो बहव (क ग)

निगृहीतं तु शूद्रेण यवक्रीतं स राक्षसः ।
ताडयामास शूलेन स भिन्नहृदयोऽपतत् ॥ ६४ ॥

## पुत्रमरणेन पितुः शोकः । रैभ्याय शापं दत्वा स्वदेहत्यागः

भरद्वाजोऽथ मतिमान् कृत्वा स्वाध्यायमाह्निकम् ।
प्रविश्य स्वाश्रमपदं ददर्श निहतं सुतम् ॥ ६५ ॥

स शूद्रमथ पप्रच्छ स्वसूनोर्मृत्युकारणम् ।
स च सर्वं यथावृत्तं तस्मै [1]सम्यङ्न्यवेदयत् ।
स पुत्रं मृतमादाय विललाप सुदुःखितः ॥ ६६ ॥

प्रतिषिद्धो मया नात रैभ्याऽऽवसथदर्शनात् ।
गतवानेव तं [2]द्रष्टुं कालान्तकयमोपमम् ॥ ६७ ॥

मृते पुत्रेऽनपत्यस्य जीवनान्मरणं वरम् ।
[3]अतोऽहं सह वत्सेन संत्यक्ष्यामि कलेवरम् ॥ ६८ ॥

सुखिनो वै नरा येषां [4]पुत्रो [5]जात्या न विद्यते ।
ते पुत्रशोकमप्राप्य विचरन्ति यथासुखम् ॥ ६९ ॥

[6]यथाऽहं पुत्रशोकेन देहं त्यक्ष्यामि किल्बिषी[7] ।
तथा ज्येष्ठःसुतो रैभ्यं हिंस्याच्छीघ्रमनागसम् ॥ ७० ॥

विलप्यैवं बहु[8]विधं भरद्वाजोऽदहत्सुतम् ।
सुसमिद्धं ततः कृत्वा प्रविवेश हुताशनम् ॥ ७१ ॥

---

[5] अत्र जात्येत्यस्य जन्मना इत्यर्थः कार्यः अथवा जात इति पठनीयम् ।

---

[1] सर्वं (क ग च) [2] दुष्टं (ग) [3] त (क ग) [4] पुत्रा (ख घ च) [6] त (क ग)
[7] षम् (ख घ च) [8] सुतं (क ग च)

## बृहद्युम्नस्य सत्रे रैभ्यसुतयोरागमनम्

एतस्मिन्नेव काले तु ब्रह्मद्युम्नो महीपतिः ।
वव्रे सहायं [1]सत्रार्थं अर्वावसुपरावसू ॥ ७२ ॥
ततस्तौ समनुज्ञातौ पित्रा वेगेन जग्मतुः ।
आश्रमे न्यवसद्रैभ्यो भार्या चैव परावसोः ॥ ७३ ॥
ततः प्रववृते राज्ञः सत्रं द्वादशवार्षिकम् ।

## गृहं प्रत्यागमनसमये परावसुना व्याघ्रशङ्कया पितुः हननम्

अथावलोककोऽगच्छद्गृहानेव परावसुः ॥ ७४ ॥
व्याघ्राऽजिनेन संवीतं ददर्श पितरं वने ।
[3]जघन्यरात्रौ[4] निद्रान्धः [5]सावशेषे तमस्यपि ॥ ७५ ॥
चरन्तं गहनेऽरण्ये दृष्ट्वा स पितरं ततः ।
व्याघ्रोऽयमिति मन्वानः [6]सत्रासचकितेक्षणः ॥ ७६ ॥
अकाल्यमानस्स तदा शरीरत्राणकारणात् ।
अभिमन्त्र्य कुशाग्रेण संजघान भयाकुलः ॥ ७७ ॥
भवितव्यं [7]भवत्येव नृणां कर्मफलं हि यत् ।
दुरतिक्रमणीयं हि नान्यथा मुनिभाषितम् ॥ ७८ ॥

---

[1] बृहद्युम्न इति महाभारते ।

[4] जघन्यरात्रिः रात्रेः पश्चिमो भाग इति प्रकरणाज्ज्ञेयम् ।

[5] अनाकारयित्वेत्यर्थः ।

---

[2] सत्वा (ख घ) [3] जघान (ख घ च) [5] स्वापशेषे (क ग) [6] सं (ख घ)
[7] फल (क ग च)

ततस्समीक्ष्य पतितं पितरं गतजीवितम् ।
बभूव भयसन्त्रस्तो महापातकदूषितः ॥ ७९ ॥

स तस्य प्रेतकार्याणि कृत्वा सर्वाणि वै द्विजः ।

**पितृवधदोषनिवारणार्थं परावसुना प्रायश्चित्ताचरणम्**

पुनरागम्य तत्सत्रं [1]बृहद्युम्नस्य यज्वनः । ॥ ८० ॥

आसीनं मुनिसन्दोहं प्रणिपत्याऽभिशस्तवत् ।
सप्रश्रयमुवाचेदं वचनं दीनचेतनः ॥ ८१ ॥

महापातकमापन्नं मम विप्रा दुरात्मनः ।
[2]अस्पृश्योऽहमसम्भाष्यः पितृघाती करोमि किम् ॥ ८२ ॥

[3]इति तद्वचनं श्रुत्वा मुनयः कृपयाऽब्रुवन् ।
पापं कृत्वानुतापेन [4]दह्यन्ते ये भृशं नराः
तेषां निष्कृतिरस्त्येव महापातकिनामपि । ॥ ८३ ॥

अतो वयं निष्कृतिं ते प्रवक्ष्यामो यथा[5]तथम्
प्रदक्षिणीकृत्य महीं यावद्द्वादश[6]वत्सरम् । ॥ ८४ ॥

पुण्याऽनेकनदीस्नानान्नानातीर्थनिषेवणात् ।
[7]धूतपाप्मा ततो वि[8]प्रः भविष्य[9]सि न संशयः ॥ ८५ ॥

परावसुस्तथेत्युक्त्वा भ्रातरं पुनरब्रवीत् ।
[10]अस्मदर्थं व्रतं साधु चर त्वं विधिचोदितम् ॥ ८६ ॥

---

[7] धूतः पाप्मा यस्येति नष्टकिल्बिषः ।

---

[1] ब्रह्म (क ग) [2] अब्रह्मज्ञो (क) [3] खघमातृकयोर्नास्ति पंक्तिः । [4] दहन्ते (ख घ)
[5] य (ख घ) [6] वार्षिकी (ख घ) वार्षिकीम् (च) [8] प्र (ख घ च) [9] ति (ख घ च)
[10] अस्मिन्नर्थे (च)

इदं कर्म न शक्तस्त्वं वोढुमेकः कथञ्चन ।
समर्थोऽस्म्यहमेकाकी कर्म कर्तुमिदं मुने ॥ ८७ ॥

अर्वावसुः ।

करोतु वै भवान् सत्रं बृहद्युम्नस्य धीमतः ।
[1]ब्रह्मचर्यं चरिष्येऽहं त्वदर्थं नियतेन्द्रियः ॥ ८८ ॥

सूतः ।

स [2]तस्य ब्रह्महत्यायाः पारं गत्वा यथाविधि ।
अर्वावसुस्तदा सत्रमाजगाम पुनर्मुनिः ॥ ८९ ॥

## चरितव्रतस्यार्वावसोः सत्रप्रवेशनिषेधः

ततः परावसुर्दृष्ट्वा भ्रातरं समुपस्थितम् ।
[3]बृहद्युम्नमुवाचेदं वचनं परिषद्गतम् ॥ ९० ॥

एष ते ब्रह्महा सत्रं [4]द्रष्टुं मा प्रविशेदिति ।
ब्रह्महा प्रेक्षितेनापि पीडयेत्त्वां न संशयः[5] ॥ ९१ ॥

[6]प्रेष्यैरुत्सार्यमाणस्तु मुनिरर्वावसुस्त[7]दा ।
न मया ब्रह्महत्येयं कृतेत्याह पुनः पुनः ॥ ९२ ॥

उच्यमानोऽसकृत्प्रेष्यैः ब्रह्म[8]हा त्वमिति द्विजाः ।
नैव [9]सम्प्रतिजानाति ब्रह्महत्यां स्वयं कृताम्

---

[1] ब्रह्मवध्यां चरिष्येऽहमिति महाभारतस्थः पाठः युक्त इति भाति ।
[2] परावसोः । [6] प्रेष्या दूताः [9] सम्प्रतिज्ञानं अङ्गीकरणम् ।

---

[3] ब्रह्म (क ग) [4] दृष्ट्वा (क ग) [5] सूतः (ख घ च) [7] था (क ख घ)
[8] हत्या (क ग)

## दुःखितायार्वावसवे देवैर्वरदानम्

अर्वावसुः ।

मम भ्रात्रा कृतमिदं मया तु परिरक्षितम् ॥ ९३ ॥

सूतः ।

प्रीतास्तस्य वरं देवाः कर्मणाऽर्वावसोस्तदा ।
तं ते [1]प्रवरयामासुः निरासुश्च परावसुम् ॥ ९४ ॥

ततो देवा वरं तस्मै ददुरिन्द्रपुरोगमाः ।
स चाऽपि वरयामास पितुरुत्थानमात्मनः ॥ ९५ ॥

अनागस्त्वं तथा भ्रातुः पितुश्चास्मरणं वधे ।
भरद्वाजस्य चोत्थानं यवक्रीतस्य चोभयोः ॥ ९६ ॥

ततः प्रादुर्बभूवुस्ते सर्व एव द्विजोत्तमाः ।
अथाऽब्रवीद्यवक्रीतो देवा [2]न्वज्रिपुरोगमान् ॥ ९७ ॥

समधीतं मया ब्रह्म [3]व्रतानि चरितानि च ।
कथं नु रैभ्यो [4]हतवान् अधीयानं तपस्विनम् ॥ ९८ ॥

## देवैर्यवक्रीतवधकारणनिरूपणम्

[5]देवाः ।

मैवं क्रुधा यवक्रीत यथा वदसि वै मुने ।
विना गुरुम[6]धीता हि सुखं वेदास्त्वया पुरा ॥ ९९ ॥

अनेन हि गुरुं दुःखात्तोषयित्वा स्वकर्म[7]णा ।
कालेन महता क्लेशाद्ब्रह्माधिगतमुत्तमम् ॥ १०० ॥

---

[4] मां हतवानिति ।

---

[1] प्रवादयामासुः (ख च) [2] निन्द्र (ख ग च) [3] भू (क ग) [5] चमातृकायां नास्ति पदम् । [6] धीता (क ग) [7] णि (ख ग)

सूतः ।

यवक्रीतमथोक्त्वैवं देवा इन्द्रपुरोगमाः ।
सञ्जीवयित्वा तान् सर्वान् पुनर्जग्मुस्त्रिविष्टपम् ॥ १०१ ॥

## रागद्वेषदूषणम्

तस्मात्सर्वैरपि त्याज्यं रागद्वेषादिकं द्विजाः ।
शम एव हि साधीयान् ब्राह्मणस्य विशेषतः ॥ १०२ ॥

रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ।
तावुभौ यदि न स्यातां तपसा किं प्रयोजनम् ॥ १०३ ॥

यः पठेच्छृणुयाद्वापि पुण्यमाख्यानमुत्तमम् ।
[2]शिवलोकमनुप्राप्य [3]शिवेन सह मोदते ॥ १०४ ॥

इति श्रीमत्पुराणसारे ब्राह्मणधर्मो नाम
पञ्चदशोऽध्यायः

---

[2] सतो रागद्वेषयोः तपः व्यर्थम् । असतोः तपः फलावाप्तिस्ताभ्यामेवेति सदसतोः तयोर्वैयर्थ्योक्तिः ।

---

[2] रुद्र (ख ग क) [3] रुद्रेण (ख ग क)

## षोडशोऽध्यायः

### उपनीतानुपनीतधर्मनिरूपणे आश्रमप्रशंसा

[1]ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
एते क्रमेण विप्राणां चत्वारः पृथगाश्रमाः ॥ १ ॥

सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः ।
यथोक्तकारिणं विप्रं [2]नयन्ति परमां गतिम् ॥ २ ॥

### अनुपनीतस्य यथेच्छाव्यापारादिभिरपि प्रत्यवायाभावनिरूपणम्

यावत्तु नोपनयनं क्रियते वै द्विजन्मनः ।
[3]कामचेष्टः कामभक्षः तावद्भवति वै द्विजाः ॥ ३ ॥

न चाभिव्याहरेद्ब्रह्म [4]स्वधानिनयनादृते ।
न ह्यस्य [5]विहितं कर्म किञ्चिदामौञ्जिबन्धनात् ॥ ४ ॥

वृत्त्या शूद्रसमस्तावद्यावद्वेदे न जायते ।[6]
भक्ष्याभक्ष्ये तथाऽपेये वाच्यावाच्ये तथाऽनृते ॥ ५ ॥

अस्मिन्काले न दोषः स्यात्स यावन्नोपनीयते ।

---

[3] प्रागुपनयनात्कामचारकामवादकामभक्षः इत्यादिस्मृतेः ।

[4] स्वधानिनयनं नाम श्राद्धसंपादनम् । तदुपयुक्तमन्त्रान् अनुपनीतोऽपि पठेदेव । अभिव्याहारश्चोच्चारणम् ।

[6] वेदजननं नाम उपनयनसंस्कारेण श्रुतिपठनाधिकारसंपादनम् ।

---

[1] [illegible] (ख घ) [2] न इष्यन्ति परां (ख घ) [5] विद्यते (ख घ)

## अनुपनीतधर्मनिरूपणेऽणिमाण्डव्यकथा

[1]अणिमाण्डव्यचरितमस्मिन्नर्थे निबोधत । ॥ ६ ॥

सूतः ।

बभूव ब्राह्मणो विद्वान् माण्डव्यो नाम विश्रुतः ।
स त्वाश्रमपदे योगी वसति स्म महातपाः ।
ऊर्ध्वबाहुर्निरालम्बो [2]मौनव्रतसमन्वितः ॥ ७ ॥

केनचित्त्वथ कालेन तथा तपसि तिष्ठतः ।
तस्याऽऽश्रमपदं प्राप्ता दस्यवो [3]लोप्त्रहारिणः[4] ॥ ८ ॥

तस्मिन्नावसथे लोप्त्रं निधाय भयमोहिताः ।
अभितस्तत्र संलीना[5]न्बलमन्वगमच्च तान् ॥ ९ ॥

तत्राऽऽजग्मुस्ततस्सर्वे रक्षिणस्तं मुनिं वने ।
कतरेण पथा याता दस्यवो मुनिसत्तम ॥ १० ॥

तेन गच्छाम इत्येनमपृच्छन्रक्षिणो मुनिम् ।
[6]न किञ्चिद्वचनं विप्रा मुनिस्तान्प्रत्यभाषत ॥ ११ ॥

ततस्ते राजपुरुषाः विचिन्वानास्तदाश्रमम् ।
ददृशुस्तत्र संलीनांश्चोरांस्तद्द्रव्यमेव च ॥ १२ ॥

ततश्शङ्का समभवद्रक्षिणां [7]तं मुनिं प्रति ।
संयम्य तं ततो राज्ञे चोरां [8]श्चाभिन्यवेदयन् ॥ १३ ॥

---

[1] अणिमाण्डव्यचरितं महाभारतस्यादिपर्वणि, १०१ तमेऽध्याये वर्तते ।
[4] लोप्त्रं धनम् । [5] बलं, राजसेना । [6] यतस्स नैव जानाति स अतः मौनी बभूव । तं चोरांश्च संयम्येति ।

---

[2] मौनवृत्त (क) [3] लोह (च) [5] भय (ख घ च) [7] तु (क) [8] श्चैव (क)

तं राजा सह चोरैस्तैरवदच्छिद्यतामिति ।
[1]अवध्य एतैराज्ञप्तैश्शूले प्रोतो महातपाः ॥ १४ ॥

परहिंसादिभिर्दोषैर्विमुक्तोऽपि महामुनिः ।
स [2]हन्ताऽऽरोपितश्शूले दुर्लङ्घ्या भवितव्यता ॥ १५ ॥

तत्कर्मक्षयमन्वि[3]च्छन् चिरकालमुवास ह ।
शूलाग्रे तप्यमानं तं ततो दृष्ट्वा महामुनिम् ॥ १६ ॥

सन्तापं परमं जग्मुः मुनयो द्विजसत्तमाः
ते रात्रौ शकुना भूत्वा तमपृच्छन्द्विजोत्तमम् ॥ १७ ॥

भगवन् केन दोषेण गन्तासि क्लेशमीदृशम् ।
श्रोतुमिच्छा[4]महे ब्रह्मन्नपापो ह्यसि धर्मतः ॥ १८ ॥

अथोवाच महाप्राज्ञः तानृषीन् संशितव्रतान् ।
कृतं पूर्वं गमिष्यामि न हि मेऽन्योऽपराध्यति ॥ १९ ॥

त[5]च्छ्रुत्वा रक्षिणस्तस्य राज्ञे सर्वं न्यवेदयन् ।
स च प्रसाद्य बहुधा तं शूलादवतारयत् ॥ २० ॥

तत[6]स्संयं[7]मनीं प्राप्य धर्मस्य परमार्थ[8]वित् ।
धर्मं धर्मभृतां श्रेष्ठः [9]पर्यपृच्छदिदं स्वयम् ॥ २१ ॥

---

[1] ब्राह्मणः अवध्य इति शास्त्रानुसारं तैः सः शूल एवारोपित इति ज्ञेयम् । महाभारते परिगृहीतः पाठः 'स वन्यघातैरज्ञातः' इति अत्र मुनेः शूलारोपणे रक्षिणामज्ञानमेव कारणं न तु राजाज्ञालङ्घनमिति युक्ततरोऽर्थः प्रतिभाति । [6] संयमनी यमपुरी ।

---

[2] हन्त्रा (क) [3] ञ्छुश्रि (ख घ) [4] मि हे (क) [5] ज्ज्ञात्वा (क) [7] मिनीं (क)
[8] तः (च) [9] पर्युपालभत (क घ)

[1]किं मया [2]तत्कृतं कर्म येन प्राप्तोऽस्मि वेदनाम् ।
तन्ममाचक्ष्व यत्नेन पश्य मे तपसो बलम् ॥ २२ ॥

धर्मः ।

पतङ्गकानां [3]पुच्छेषु [4]त्वयैषीकाः[5] प्रवेशिताः ।
अहिंसकानां धर्मज्ञ तेनेदं प्राप्तवानसि ॥ २३ ॥

ऋषिः ।

कस्मिन्काले मया तत्तु कृतं ब्रूहि यथातथम् ।
तेनोक्तं धर्मराजेन बालभावे त्वया कृतम् ॥ २४ ॥

यन्मया लीलया बाल्ये विद्धाः पुच्छे पतङ्गकाः ।
पित्रोरेव स दोषोऽस्ति न मे शास्त्रनिदर्शनात् ॥ २५ ॥

[6]बाल्ये द्वादश वर्षाणि छद्मना यत्करिष्यति ।
न भविष्यत्यधर्मोऽत्र न प्रज्ञास्यति वै यतः ॥ २६ ॥

गरीयान्ब्राह्मणवधः सर्वभूतवधादपि ।
शूद्रयोनावतो धर्म मानुषस्त्वं भविष्यसि ॥ २७ ॥

मर्यादां स्थापयाम्यद्य [7]लोके कर्मफलोदयाम् ।
आ चतुर्दश[8]मावर्षात् न भविष्यति पातकम् ।
[9]परेण कुर्वतामेव पापदोषो भविष्यति ॥ २८ ॥

---

[4] इषीका, ईषिका, ऐषीका इति काशतृणस्य नामानि । सा चेषिका सूचीवत्साग्रा । [9] उत्तरत्र काले इति ।

---

[1] यन्मया (क) [2] तु कृतं (क) यत्कृतं (च) [3] पुष्पेषु (क) [4] त्वये (क)
[6] बालो (क) बाला (च) [7] लोक (क) [8] मा द्व (क)

सूतः ।

एतेन त्वपराधेन शापात्तस्य महात्मनः ।
धर्मो विदुररूपेण शूद्रयोनावजायत ॥ २९ ॥

धर्मे चार्थे च कुशलो लोभक्रोधविवर्जितः ।
दीर्घदर्शी शमपरः सर्वेषां च हिते रतः ॥ ३० ॥

तस्मादनुपनी[1]तस्तु ब्राह्मणो न [2]च दुष्यति ।
अकार्यमपि कुर्वाणो भुञ्जानो वा यतस्ततः ॥ ३१ ॥

## [3]वर्णानुसारेणोपनयनकालनिरूपणम्

गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे चैके विशामेका[3]दशाधिके ॥ ३२ ॥

## काम्योपनयनकालाः

ब्रह्मवर्चसकामस्य पञ्चमेऽब्दे द्विजन्मनः ।
आयुःकामस्य नवमे कार्यं मौञ्जीनिबन्धनम् ॥ ३३ ॥

[5]अत्र यद्ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम् ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ ३४ ॥

## दण्डप्रमाणं तद्भेदाश्च

ब्राह्मणो बैल्वपालाशौ क्षत्रियो वटखादिरौ ।
वैणवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥ ३५ ॥

---

[3] उपनयनकालनिरूपणात्मको भागः मनुस्मृतेर्द्वितीयाध्यायस्थतत्कालसमानो वर्तते । [5] 'क' प्रतौ नास्तीयं पंक्तिः ।

---

[1] तस्सः (क) [2] तु (क) [4] धिके फलम् (च) दशोऽधिके (घ)

केशान्तगो ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसंमितो राज्ञः [1]स्यात्तु नासान्तगो विशः ॥ ३६ ॥

## मौञ्जीभेदाः

विप्रस्य मेखला मौञ्जी ज्या मौर्वी क्षत्रियस्य च ।
शणसूत्री तु वैश्यस्य मेखला धर्मतः [2]स्मृताः ॥ ३७ ॥

## उपवीतभेदाः

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्वं त्रिवृत्त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम् ॥ ३८ ॥

## अध्ययनविधिः

एवं दण्डादिभिर्युक्तं संस्कृत्य तनयं पिता ।
वेदमध्यापयेद्विद्वान् शौचाचारं च[3] शिक्षयेत् ॥ ३९ ॥

## [4]उपकुर्वाणकस्याचाराः

द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं [5]द्विजाः ।
वसन् गुरुकुले दान्तो ब्रह्माधीयीत वाग्यतः ॥ ४० ॥

[6]योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ ४१ ॥

---

[1] एतदारभ्य ३८ श्लोकान्तं यावत् 'क' प्रतौ नास्ति ।

[4] ब्रह्मचर्यानन्तरं यो गृहस्थो भवति सः उपकुर्वाणकः ।

[6] अन्यत्र शास्त्रेष्वित्यर्थः । स्मृतिवेदाङ्गाध्ययने तु दोषो नास्ति । तथा च शङ्खलिखितौ 'न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः' ।

---

[2] क्रमात (च) [3] शिक्षयन् (क) [5] द्विजः (ग)

श्रावण्यां प्रौष्ठपद्यां वा [1]उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥ ४२ ॥

पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजाः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्ने प्रथमेऽहनि ॥ ४३ ॥
अतः परं हि छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि रहस्यं च कृष्णेषु नियतः पठेत् ॥ ४४ ॥

उभे सन्ध्ये रविं विप्रास्तथैवाग्निं समाहितः ।
उपातिष्ठेत्तथा कुर्याद्गुरोरप्यभिवादनम् ॥ ४५ ॥

स्थिते तिष्ठेद्व्रजेद्याति नीचैरासीत चाऽऽसति ।
शिष्यो गुरोर्द्विजश्रेष्ठाः प्रतिकूलं न सञ्चरेत् ॥ ४६ ॥
तेनैवोक्तः पठेद्वेदान्नान्यचित्तः पुरःस्थितः ।
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ॥ ४७ ॥

यस्स्वशाखां परित्यज्य परक्यामधि[3]तिष्ठति ।
स शूद्रवद्बहिष्कार्यो हव्यकव्येषु दातृभिः ॥ ४८ ॥
अवगाहेदपः पूर्वमाचार्येणावगाहिताः ।
समिज्जलादिकं चास्य काल्यं काल्यमुपानयेत् ॥ ४९ ॥

---

[1] अत्र विसन्धिरार्षः । मानुस्मृतौ 'वाप्युपाकृत्ये'ति सन्धिर्दृश्यते । श्रावणस्य भाद्रपदस्य वा पौर्णमास्यां उपाकर्म कृत्वा सार्धांश्चतुरो मासानधीयीत । अर्धं पञ्चमं येषां ते तथा सार्द्धान् चतुरो मासानित्यर्थः । यदा श्रावण्यामुपाकर्म तदा पुष्यमासस्य शुक्लप्रतिपदि पूर्वाह्ने यदि प्रौष्ठपद्यामुपाकर्म तदा माघस्येति व्यवस्थितो विकल्पः ।

[2] वेदाङ्गानि शिक्षा व्याकरणं छंदः निरुक्तं ज्योतिषं कल्पः इति षट् ।

---

[3] गच्छति (क)

गन्धमाल्यमलङ्कारं [1]शुक्तं[2] प्राणिविहिंसनम् ।
अभ्यङ्गञ्चाञ्जनोपानच्छत्रधारणमेव च ॥ ५० ॥

कामं लोभं भयं [3]निद्रां गीतवादित्रनर्तनम् ।
द्यूतं [4]जनपरीवादं स्त्रीप्रेक्षालम्भने तथा ॥ ५१ ॥

परोपघातं पैशुन्यं प्रयत्नेन विवर्जयेत् ।
सायं प्रातरुपानीय भैक्षं तस्मै निवेदयेत् ।
तच्चाप्यन्यदनुज्ञातं उपयुञ्जीत संयतः ॥ ५२ ॥

वसेद्द्वादशवर्षाणि चतुर्विंशतिमेव वा ।
[5]षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत् ॥ ५३ ॥

उपकुर्वाणकस्यैतत्समादिष्टं मया व्रतम् ।
अधुना सम्प्रवक्ष्यामि [6]नैष्ठिकस्य समासतः ॥ ५४ ॥

## नैष्ठिकब्रह्मचारिण आचाराः

सन्ध्याग्नि[7]कार्यं स्वाध्यायं भैक्षाधश्शयनं तथा ।
आमृत्योर्नैष्ठि[8]कः कुर्वन् ब्रह्मलोकमवाप्नुयात् ॥ ५५ ॥

मेखलाजिनदण्डांश्च ब्रह्मसूत्रकमण्डलू ।
जटिलो धौतवसनः रक्तपीठं कुशान्दधत् ॥ ५६ ॥

---

[2] अत्र शुक्तमिति युक्तः पाठः शुक्तं नाम मांसम् अम्लं वा ।
[4] जनपरिवादः परस्य दोषवादः । आलम्भनं स्पर्शः । [6] निष्ठा विद्यतेऽस्येति ब्रह्मचर्यं कृत्वा यावज्जीवं गुरुकुले वसति सः ।

---

[1] भुक्तं (क) शुक्लं (ख ग घ च) [3] निन्दां (क) [4] षड्विंशतं (क) [5] कार्यः (ख)
[7] कं (क ख ग घ)

[1]नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां[2] वैश्वानरेऽपि वा ॥ ५७ ॥

अनेन विधिना देहं साधयन् विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न पुनर्जायते भुवि ।
नैष्ठिको ब्रह्मचारी तु गार्हस्थ्यं जातु नार्हति ॥ ५८ ॥

इति श्रीमत्पुराणसारे [3]उपनीताऽनुपनीतधर्मकथनं[3] नाम षोडशोऽध्यायः ।

---

[2] वैश्वानरेऽग्निसन्निधौ इत्यर्थः ।

---

[1] एतदारभ्य चतस्रः पंक्तयः 'क' मातृकायां न सन्ति । [2] ख घ च मातृकासु नास्ति ।

## सप्तदशोऽध्यायः

### गृहस्थाश्रमनिरूपणम्

उपकुर्वाणकः पश्चान्निष्पन्नगुरुनिष्कृतिः ।
गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि ॥ १ ॥

### विवाहार्हकन्यालक्षणम्

[1]अनन्य[2]पूर्विकां कान्तामसपिण्डां यवीयसीम् ।
अरोगिणीं भ्रातृमतीं असमानार्षगोत्रजाम् ॥ २ ॥

उद्वहेत्सदृ[3]शीं कन्यां सवर्णां लक्षणान्विताम्[4] ।
सहधर्मं चरे[5]त्पत्न्या पुत्रानुत्पादयेत्ततः ॥ ३ ॥

### अधिवेदनहेतुः कालश्च

सुरापी व्याधि[6]ता धू[7]र्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ।
अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ॥ ४ ॥

वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥ ५ ॥

---

[1] अत्र विवाहार्हकन्यालक्षणानां अधिवेदनप्रकारस्य च निरूपको भागः मनुयाज्ञवल्क्यस्मृतिसमानः । वागादिना अन्यस्मै पूर्वमदत्ता, अभुक्ता वानन्यपूर्विका । [4] बाह्याभ्यन्तरलक्षणयुक्ताम् ।

---

[2] पूर्वं (ग) [3] शां (क ग) [5] पत्न्यां (ख च) [6] तो (क ग) [7] र्तः (क ग)

## अप्रियवादिन्याः भार्यायाः अधिवेदने ब्रह्मकथा

[1] पुरा दीक्षाविधानाय प्रक्रान्ते कमलासने ।
तमुवाच गुरुर्होता पुरोधास्त्रिदिवौकसाम् ॥ ६ ॥

गुरुः ।

आहूयतामिह ब्रह्मन् तव [1]पत्नी सरस्वती ।
तयैव सह कर्तव्यः क्रतुरेष जगत्पते ॥ ७ ॥

सूतः ।

इति तद्वचनं श्रुत्वा वसिष्ठमिदमब्रवीत् ।

ब्रह्मा ।

तदाह्वानं त्वया कार्यं गच्छ शीघ्रं तपोधन ।
सरस्वत्यां समध्यास्ते नद्या[2]मथ सरस्वती ॥ ८ ॥
इति [3]तद्वचनं श्रुत्वा वसिष्ठः प्रययौ तदा ।
सरस्वतीं समासाद्य मृदुपूर्वं वचोऽब्रवीत् ॥ ९ ॥
इदानीं प्रेषितस्तेन विधात्रा ह्यहमागतः ।
महत्[4]कौतूहलं तस्य तव सन्दर्शने विधेः ॥ १० ॥

---

[1] इयं कथा स्कान्दपुराणस्य पाद्मपुराणस्य च कथाभ्यां तुल्या वर्तते कैश्चिदंशैः । स्कान्दे ब्रह्मणा यज्ञार्थमाहूता सावित्री काले नागतेति ब्रह्मा यज्ञविधिसम्पादनार्थं गायत्रीं नियोजयति । अनन्तरमागता सावित्री देवान् सर्वानपि शपति इति काचन कथा वर्तते । पाद्मे विद्यमाना कथा विलक्षणैव दृश्यते । स्कान्दम्–प्रभासखण्डः अध्यायः १६५ । पाद्मम् –सृष्टिखण्डः अध्यायौ १६–१७ ।

---

[2] भार्या (ग) [3] मच (क) [4] तस्य वचः (क) [5] त्कु (क)

इदानीमश्वमेधेन यष्टुकामः प्रजापतिः ।
तवागमनमाकांक्षन्नास्ते मुनिगणैस्सह ॥ ११ ॥

तस्य तद्वचनं श्रुत्वा रोषविस्फुरिताधरा ।
निवृत्तगमनाऽऽकांक्षा वसिष्ठायेदमब्रवीत् ॥ १२ ॥

मयि [1]क्रौर्यं न [2]मन्वीथा:[3] शृणु वृत्तं तपोधन ।
[4]श्रुते यस्मिंस्त्वमेवैतद्युक्तमित्येव वक्ष्यसि ॥ १३ ॥

## सरस्वत्या ब्रह्माह्वानतिरस्कारकारणकथनम्

पुरा ब्रह्मसभामध्ये ब्रह्मर्षिगणसेविते ।
उपविष्टो मया सार्धं ब्रह्मा भुवनभावनः ॥ १४ ॥

तस्मिन्काले समाजग्मुः मुनयस्तत्र केचन ।
मद्भक्ताश्च श्रियो भक्ता विवदन्तः परस्परम् ।
प्रशशंसुश्च केचिन्मां तत्र केचिच्छ्रियं तथा ॥ १५ ॥

ते सर्वे परिपप्रच्छुः मुनयः [5]सदसि [6]स्थितान् ।
का श्रेष्ठा श्रीसरस्वत्योः एतन्नः कथ्यतामिति ॥ १६ ॥

त आसाञ्चक्रिरे तूष्णीं मुनयश्च दिवौकसः ।
वीक्षमा[7]णास्तु मामेव [8]वरार्हासन[9]संश्रयाम् ॥ १७ ॥

नैव पृष्टस्तदाऽवादीत्स्वयमेव पितामहः ।
सन्दिहानांस्तु तान्सर्वानानीय मम सन्निधौ[10] ॥ १८ ॥

---

[3] मनु अवबोधे इत्यस्य धातोः लोट् । [10] पितामहोऽब्रवीदिति शेषः ।

---

[1] कार्यं (क) [3] मन्येथाः (क) [4] श्रुतं (ख घ) [5] संसदि (क) [6] स्थिताः (क ग)
[7] ण (क) [8] वराद्दा (क) [9] संस्थिताम् (क)

## देवसभायां ब्रह्मकृतलक्ष्मीप्रशंसनं, तेन सरस्वत्यायाः कोपश्च

ब्रह्मा ।

का श्रिया स्पर्धते लोके विष्णुवक्षःस्थलस्थया ।
ईशाना सर्वलोकानां विष्णुपत्नी यशस्विनी ॥ १९ ॥

ममापि सर्वदेवानामन्येषां [1]चापि देवता ।
अतो लक्ष्मीसमा नास्ति भवित्री न च योषितः[2] ॥ २० ॥

तदंशभूतास्सर्वास्ताः स्त्रियो याश्च परावराः[3] ।
अतोऽहं तद्वचः श्रुत्वा [4]व्रीडिता स्त्रीस्वभावतः ॥ २१ ॥

नाहं तत्र गमिष्यमि इत्थं तेन विमानिता ।
क्रियतां तेन तत्रैव हयमेधोऽपि वेधसा ॥ २२ ॥

[5]नमोऽस्तु ब्रह्मणे तस्मै लोकनाथाय वेधसा ।
यत्प्रसादादिहस्थाहं धारयिष्यामि जीवितम् ॥ २३ ॥

## वसिष्ठसकाशात्सरस्वतीकोपकारणं ज्ञात्वा ब्रह्मणः हयमेधजिहासा

इत्युक्तोऽथ सरस्वत्या वसिष्ठो ब्रह्मणोऽन्तिकम् ।
आगत्य कथयामास यथावृत्तमशेषतः ॥ २४ ॥

ब्रह्मा तद्वचनं श्रुत्वा वसिष्ठेन समीरितम् ।
हयमेधं महायज्ञं कर्तुं नैच्छत्तया विना ।
तमूचुर्मुनयस्सर्वे ब्रह्माणं लोककारणम् ॥ २५ ॥

---

[2] योषितः तस्या अंशभूता इतते परेणान्वयः । [3] पराश्च ता अवराश्चेति ।
[5] व्यङ्ग्योक्तिः ।

---

[1] चाधि (ख) [4] पी (क)

## अप्रियवादिन्याः भार्यायाः परित्यागविषये ब्रह्मणे ऋषिकृत उपदेशः

ऋषयः ।

परित्याज्या त्वया भार्या भर्तुर्वचनलङ्घिनी ।
तत्र दोषो न चास्तीति त्वं हि वेत्थ यथातथम् ॥ २६ ॥

धर्मविघ्नकरीं भार्यामसतीं [1]चातिकोपनाम् ।
त्यजेद्धर्मस्य रक्षार्थं तथैवाप्रियवादिनीम् ॥ २७ ॥

सर्वलक्षणसंयुक्ता या तु भर्तुर्व्यतिक्रमम् ।
करोति सा परित्याज्येत्येष धर्मस्सनातनः ॥ २८ ॥

शृणु विज्ञापनमिदं ब्रुवतां नः पितामह ।
[2]सरस्वतीपतित्वं ते लोकयात्रैव केवलम् ॥ २९ ॥

पतिस्त्वं सर्वलोकानां धाता कर्ता[3] च शाश्वतः ।
अनन्तमव्ययं ब्रह्मन् त्वामाहुर्वेदवादिनः ॥ ३० ॥

[4]निर्णीतमिदमस्माभिर्वेदशास्त्राविरोधतः ।
तदेव क्रियतामत्र भगवन्यदि रोचते ॥ ३१ ॥

नैवागच्छति सा देवी धर्मपत्नी यदि स्वयम् ।
तदंशभूता सावित्री पत्नीत्वे कल्प्यतां त्वया ॥ ३२ ॥

सा सर्वेभ्योऽपि [5]वेदेभ्यस्सारभूता समुद्धृता ।
प्रायश्चित्तं हि सावित्री विहिता सर्वकर्मसु ॥ ३३ ॥

---

[2] सरस्वती ब्रह्मणो भार्येति केवलं व्यावहारिकत्वम् । सर्वजगतां पत्युः ब्रह्मणः एका सरस्वती भार्येति उपहासोऽयम् ।

---

[1] वा (ख घ) [3] घ (घ च) [4] विनीत (क) [5] देवेभ्यः (क)

न सावित्रीसमं लोके पवित्रं पुण्यवर्धनम् ।
अत[1]स्तया सहैवायं कर्तव्योऽत्र महाक्रतुः ॥ ३४ ॥

श्रद्धा तुष्टिर्मतिश्चान्यास्तव पत्न्यो भवन्त्विमाः ।
इत्थं कृते तु सम्पूर्णो भविष्यति महाक्रतुः ॥ ३५ ॥

## ऋष्युपदेशानुरोधेन ब्रह्मणा यज्ञार्थं सावित्रीपरिग्रहः

सूतः ।

इत्युक्तो मुनिभिर्ब्रह्मा [2]तथेति प्रीतमानसः ।
सावित्रीं कल्पयामास श्रद्धाद्याश्च यथाक्रमम् ॥ ३६ ॥

दीक्षां कृत्वाऽश्वमेधाय नीत्वा द्वादशवत्सरम् ।
कृतकृत्यस्ततो ब्रह्मा प्राप्तयज्ञमनोरथः ।
प्रणम्य शिरसा देवं प्रययौ स्वालयं प्रति ॥ ३७ ॥

तस्मात् स्त्री भर्तुराज्ञां या शिरसा नैव धारयेत् ।
तस्यास्त्यागे न [3]दोषस्स्यादिति वेदानुशासनम् ॥ ३८ ॥

इति श्रीमत्पुराणसारे [4]ब्रह्मयागो नाम
सप्तदशोऽध्यायः

---

[1] स्त्वया (क ख ग घ) प्राप्तयज्ञमनोरथः । एतदनन्तरं चतस्रः पंक्तयः 'ग' प्रतौ न सन्ति । [3] दोषेण ... ॥ (ग) [4] ब्रह्म (ख घ च) प्रतिषु नास्ति ।

# अष्टादशोऽध्यायः

[ बहुभार्यवृत्तिनिरूपणम् ]

## द्वितीयपत्नीपरिगृहीतुर्नियमाः

[1]सूतः ।

एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थस्तोषयित्वार्थैः पूर्वोढामपरां वहेत् । ॥ १ ॥

सत्यामन्यां [2]सवर्णायां धर्मकार्यं न कारयेत् ।
सवर्णासु च बह्वीषु ज्येष्ठया न विनेतराः ॥ ॥ २ ॥

सर्वासु समभावस्स्यादुपभोगेषु सर्वदा ।
अन्यथा तु भवत्येव महदेनो[3] न संशयः ॥ ॥ ३ ॥

## परिग्रहबहुत्वसमर्थने दक्षकन्येतिहासनिरूपणम्

[4]अस्मिन्नर्थे पुरावृत्तं कथयामि मुनीश्वराः ।

---

[2] सवर्णाः ब्राह्मणस्य ब्राह्मणीत्यादि क्रमेण । समानवर्णवती ।

[3] एनः अपराधः ।

[4] i) महाभारते शल्यपर्वणः तीर्थयात्रापर्वणि वैशम्पायनेन जनमेजयाय निरूप्यमाणायाः कथायास्संग्रहः ।

ii) इयमेव कथा वराहपुराणे सोमोत्पत्तिस्थितिरहस्यकथामप्यनुकरोति । वराहपुराणम्—अध्यायः ३५ ।

iii) स्कान्दे कथेयं अत्रत्यकथारीत्यैव दृश्यते । परन्तु महाभारतवत् साम्यं नास्ति । स्कान्दम् प्रभासखण्डः—अध्यायः २१ । iv) भागवतेऽपि इयं कथा दृश्यते । भागवतम् स्कन्धः ६—६ ।

---

[1] सूत इति स्थाने दक्षकन्येतिहासनिरूपणम् (घ)

[1]दक्षस्य कन्यकाः पूर्वमभवन् सप्तविंशतिः ।
पत्न्यस्सर्वा बभूवुस्तास्सोमस्य शुभलक्षणाः ॥ ४ ॥

तास्तु सर्वा विशालाक्ष्यो रूपेणाप्रतिमास्तथा ।
अत्यरिच्यत [2]तासान्तु रोहिणी रूपसम्पदा ॥ ५ ॥

ततस्तस्यां स भगवान् प्रीतिं चक्रे निशाकरः ।
ततोऽस्य कुपिता[3]न्यासन्नक्षत्राणि महात्मनः ॥ ६ ॥

[4]ता गत्वा पितरं प्रोचुः प्रजापतिमनिन्दिताः ।
सोमो वसति नास्मासु रोहिण्यां [5]वसते सदा ॥ ७ ॥

ता वयं सहितास्सर्वास्त्वत्सकाशे प्रजेश्वर ।
वत्स्यामो नियताहारास्तपश्चरणतत्पराः ॥ ८ ॥

तासां तु वचनं श्रुत्वा दक्षस्सोममथाब्रवीत् ।
समं वर्तस्व सर्वासु मा [6]त्वाऽधर्मो महान् स्पृशेत् ॥ ९ ॥

अनादृत्य तु तद्वाक्यं दक्षस्य भगवान् शशी ।
रोहिण्या सार्धमवसत्ततो [7]यक्ष्मा तमग्रहीत् ॥ १० ॥

---

[1] असौ दक्षः प्रजापतिरिति निर्दिष्टः । ब्रह्मणः दक्षिणाङ्गुष्ठाज्जातः । महाभारतम्, आदिपर्व—अध्यायः ६६ । स्वायम्भुवमनोः पुत्री प्रसूतिरिति अस्य भार्या इति भागवतम्—स्कन्धः ४-१ । ब्रह्मणः वामाङ्गुष्ठाज्जाता स्त्री अस्य पत्नी । तस्यामस्य ५०० पुत्र्यः संजाताः महाभारतम्—आदिपर्व ६७-११ ।

[4] तारारूपधराः पत्न्यः । अत एव पूर्वं नक्षत्राणि इति नपुंसकपदम् ।

[5] आत्मनेपदमार्षम् । 'रोहिणीं भजते' इति महाभारतपाठः साधीयान् ।

[7] क्षयापरनामको रोगविशेषः । चन्द्रमसः ह्रासः तेनैवेति पुराणप्रसिद्धिः ।

---

[2] ता शान्तु (क) [3] अन्या (क) [6] त्व (क ख घ च)

स यक्ष्मणाऽभिभूतात्मा क्षीयतेऽहरहश्शशी ।
क्षीयमाणे ततस्सोमे [1]ओषध्यो न प्रजज्ञिरे । ॥ ११ ॥

निरास्वादरसास्सर्वा हीनवीर्याश्च सर्वशः ।
ओषधीनां क्षये जाते प्राणिनामभवत्क्षयः ।
देवास्तस्य क्षयं दृष्ट्वा गत्वा दक्षमथाब्रुवन् । ॥ १२ ॥

देवाः ।

असौ हि चन्द्रमाः क्षीणः किञ्चिच्छेषश्च [2]लक्ष्यते ।
क्षया[3]वृतस्स वै देव प्रजा अपि गताः क्षयम् । ॥ १३ ॥

एवमुक्तस्स सञ्चिन्त्य प्राह वाक्यं प्रजापतिः ।
समं वर्तेत सर्वासु शशी भार्यासु सर्वशः ।
पुनर्वर्धिष्यते देवास्तद्वै सत्यं वचो मम । ॥ १४ ॥

मासार्धं तु क्षयं सोमो नित्यमेव गमिष्यति ।
मासार्धं तु पुनर्वृद्धिं [4]सत्यमेतद्वचो मम । ॥ १५ ॥

सूतः ।

सोमं च भगवान्भूयः प्रीतो वचनमब्रवीत् ।
[5]माऽवमंस्थाः स्त्रियः पुत्र मा च विप्रान्कदाचन ।
गच्छ [6]युक्तस्सदा भूत्वा कुरु वै शासनं मम । ॥ १६ ॥

---

[1] कदली, धान्यादिफलपाकान्ताश्च ओषध्यः ।

[5] अवोपसर्गपूर्वकमनुधातोः लोट् । अवमानं मा कुर्वित्यर्थः । पुत्रेति सम्बोधनं जामातुरपि पुत्रसादृश्यात् । [6] सर्वास्वपि समभावेन युक्त इति ।

---

[2] दृश्यते (च) [3] च्च तस्य (ग) [4] सत्यमेतद्ब्रवीमि ते (क ख ग घ च) उपरिष्टात्प्रदत्तः पाठः महाभारतस्थः । अत्र चन्द्रमस इतिवृत्तं बहवो देवा आगत्य दक्षसविधे कथयन्ति । अतः तानुद्दिश्य दक्षस्य बहुवचनमेव युक्तम् । परन्त्वत्र एकवचनं दृश्यते । अतः महाभारतस्थः पाठ एव साधुः । अथवा ब्रवीति नः इति कार्यम् ।

स विसृष्टो महातेजाः जगामाथ स्वमालयम् ।
समवृत्तिस्ततो भूत्वा यथापूर्वमवर्धत ।
प्रजाश्च मुदिता भूत्वा ईजिरे च यथा पुरा । ॥ १७ ॥

तस्मादनेकभार्यस्तु समवृत्तिर्भवेत्सदा ।
साम्येन वर्तते यस्तु सन्तानसुखभाग्भवेत् ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् । ॥ १८ ॥

## परिग्रहबहुत्वस्य समर्थने सौभरिकथा

[1]पुरा सौभरिर्नाम महर्षिरन्तर्जले द्वादशाब्दमुवास । तत्रैव [2]साममदो नामातिबहुप्रजो मीनाधिपतिरासीत् । अथान्तर्जलगतस्सौभरिस्तमवेक्ष्याचिन्तयत् । अथ साममदो मीनाधिपतिरेभिरात्मजपौत्रदौहित्रादिभिस्सह रममाणोऽतीवास्माकं स्पृहामुत्पादयति । वयमप्येवं पुत्रादिभिस्सह रमिष्याम इत्यभिसमीक्ष्य तस्माज्जलान्निष्क्रम्य [3]निवेष्टुकामः कन्यार्थं मान्धातारं राजानमगच्छत् ।

[4]आगमनश्रवणानन्तरमेवोत्थाय तेन राज्ञाऽर्घ्यादिना पूजितः कृतासनपरिग्रहः सौभरि[5]स्तमुवाच ।

सौभरिः ।

निवेष्टुकामो हि नरेन्द्र कन्यां
प्रयच्छ मे मा प्रणयं वि[6]भांक्षीः ।

---

[1] इदं सौभरेश्चरितं विष्णुपुराणाद्यथावत्संगृहीतम् । विष्णुपुराणम् अंशः ४, अध्यायः २ । भागवते पद्यात्मकतया निबद्धमेतन्न तथा शोभामावहति । भागवतम् स्कन्धः ९—अध्यायः ६ । [3] विवाहार्थी ।

---

[2] सामन्मदो (क ख ग घ) संमद इति विष्णुपुराणे ।

[4] आगत (क ख घ च) [5] स्वाच (क ख घ च) [6] कां (क)

न त्वर्थिनः कार्यवशादुपेताः
काकुत्स्थवंशे विमुखाः प्रयान्ति ।
शतार्धसंख्यास्तव सन्ति कन्या-
स्तासां ममैकां नृपते प्रयच्छ । ॥ १९ ॥

इति ऋषिवचनमाकर्ण्य स राजा [1]जर्जरितदेहं तमृषि-मालोक्य [2]प्रत्याख्यानकातरः तस्माच्च शापतो भीतः [3]सप्रश्रय-मुवाच । भगवन् अस्मत्कुलस्थितिरियं य एव कन्याभि[4]रुचिरोऽभिजनवान्[5] वरस्तस्मै दीयत इत्यभिहिते तेन भूभुजा मुनिरवादीत् । यद्येवं तदादिश्यतामस्माकं कन्यन्तःपुरवर्षवरः[6] यदि कन्यैव काचिदभिलाषति मां तदा दारसंग्रहं करिष्यामीति । [7]ततश्च मान्धात्रा कन्यान्तःपुरवर्षवरः समाज्ञप्तः । अन्तःपुरं प्रविशन्नेव भगवानखिलसिद्धगन्धर्वेभ्योऽतिरमणीयं रूपमकरोत् । प्रवेश्य च वर्षवरः कन्याः प्राह । 'भवतीनां जनिता महाराजः समाज्ञापयति यद्यमुं [8]कन्या काचिद्भगवन्तं वरयतीति ।' तदाकर्ण्य ताः कन्यास्सानुरागाः करिण्य इवेभयूथपतिं तमृषिमहमहमिकया वरयांबभूवुः । कृतानुरूपविवाहश्च महर्षिस्सकलास्ताः कन्याः स्वमाश्रममनयत् । तत्रानेकशिल्प[9]कल्पप्रणेतारं विश्वकर्माणमाहूय सकलकन्यानामेकैकस्या अतिरमणीयोपवनशोभिताः प्रासादाश्च क्रियन्तामित्यादिदेश । सोऽपि तथा कृतवान् । ततस्तेषु गृहेषु परमर्षिणाऽऽज्ञप्ताः क्षितीशदुहितरः सुखमूषुः ।

---

[2] तिरस्काराद्भीतः । [3] प्रश्रयः विनयः । [5] श्लाघ्यवंशोत्पन्नोऽभिजनवान् ।
[6] अन्तःपुरे रक्षकाः षण्ढा एव । यतो न तेभ्यः काचन हानिः ।

---

[1] जर्झ (क) [4] रि (ग) [7] ततो (ग) [8] कन्यकापि (क)

[9] कल्पकः (क) 'ग' मातृकायां 'कल्पक' इति पदं नास्ति ।

[1]एकदा दुहितृस्नेहादाकृष्टहृदयः स महीपतिः मह[6]र्षेराश्रम-मुपेत्य स्फुरदंशुजालां प्रासादमालां ददर्श। प्रविश्य चैकं प्रासाद-मात्मजां परिष्वज्याब्रवीत्। अप्यत्र वत्से भवत्या सुखमुषितम्। त्वां महर्षिः स्नेहवान्? उत संस्मर्यते अस्मद्[2]गृहावासः? इत्युक्तवन्तं पितरमाह।

रमणीयः प्रासादो [3]भूषणादिभोगोऽतिभोगः। मृदूनि शयनानि। सर्वसम्पत्समवे[4]तमेतद्गार्हस्थ्यम्। किं त्वेतन्ममैवं दुःखकारणं यदयं महर्षिर्ममैव केवलमतिप्रीत्या समीपपरिवर्त्ती नान्यासामस्मद्भगिनीनाम्, इत्येतद्दुःखकारणम् इत्युक्तया द्वितीयं प्रासादमुपेत्य तथैवोक्तः, समस्तप्रासादेषु राजा प्रविवेश। सर्वाभिश्च ताभिस्तथैवाभिहितः परितोषविस्मितहृदयः सौभरिमुपे-त्याब्रवीत्। दृष्टस्ते भगवन्महानेष सिद्धिप्रभावः। नैवंविधमस्माभि-रुपलक्षितम् इत्यभिपूज्य तमृषिं स्वपुरमाजगाम। काले[5]न तासु राजतनयासु पुत्रशतं सार्द्धमभवत्। तेषां पुत्राणां च पुत्राः पौत्राश्च दौहित्राश्चानेके बभूवुः। एवं संसारसुखमनुभवन् चिर-कालमुवास।

तस्मात्साम्येन भार्यासु वर्तमानो मुनी[7]श्वराः।
गृहस्थः सुखमाप्नोति पुत्रपौत्रसमन्वितः॥ ॥ २० ॥

इति श्रीमत्पुराणसारे बहुभार्यस्य कथनं नाम
अष्टादशोऽध्यायः।

---

[1] एकान्त (ग) [2] दृगृह (क) [3] भूतक्षणादिभोगा हि भोगः (क) भूत .... .... .... त्रिभोगाः (घ) [4] ग पुस्तके नास्ति अक्षरत्रयम्। [5] व (क घ) [6] रः (क ख ग घ च)

# एकोनविंशोऽध्यायः

[ गृहस्थाश्रमधर्मनिरूपणम् ]

## गृहस्थाश्रमप्रशंसा

सूतः ।

चतुर्णामाश्रमाणां तु गृहस्थश्च विशिष्यते ।
पितरो मुनयो देवा भूतानि मनुजास्तथा ॥ १ ॥

गृहस्थमुपजीवन्ति ततस्तृप्तिं प्रयान्ति च ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ॥ २ ॥

## [1]गृहस्थाश्रमप्राशस्त्ये जरत्कारुकथा

[2]यायावरकुले जातो [3]जरत्कारुर्महामुनिः ।
शान्तस्तपोनिष्ठमना ब्रह्मचारी बभूव सः ॥ ३ ॥

अथ कालस्य महतः स मुनिस्संशितव्रतः ।
तपस्यभिरतो धीमान्न दारानभ्यरक्षत ॥ ४ ॥

---

[1] महाभारते आदिपर्वणः त्रयोदशेऽध्याये इयं कथा वर्तते । अत्र केवलं केषाञ्चन पदानामेव व्यत्यासो दृश्यते । अस्याः कथायाः कोऽपि भागः तस्यैव पर्वणः ४१ तमे अध्यायेऽपि वर्तते ।

[2] पुनः पुनरतिशयेन वा यान्ति देशाद्देशान्तरं गच्छन्तीति । यायावरा नाम ऋषिगणविशेषः । तद्गणोत्पन्ना यायावराः ।

[3] जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितम् । शरीरं कारु तस्यासीत् तत्स धीमान् शनैः शनैः । क्षपयामास तीव्रेण तपसेत्यत उच्यते जरत्कारुरिति ब्रह्मन् वासुकेर्भगिनी तथा । महाभारतम् अदिपर्व–अस्तीकपर्व १–३६ ।

स कदाचिन्महाबुद्धिः जरत्कारुर्महातपाः ।
चचार पृथिवीं कृत्स्नां यत्र [1]सायंगृहो मुनिः ॥ ५ ॥

[2]अटमानः कदाचित्स्वान् स ददर्श पितामहान् ।
लम्बमानान्महागर्ते पादैरूर्ध्वैरधोमुखान् ॥ ६ ॥

अथाब्रवीत्स दृष्ट्वैव जरत्कारुः पितामहान् ।
के भवन्तोऽपि लम्बन्ते गर्तेऽस्मिन्वै ह्यधोमुखाः ॥ ७ ॥

[3]वीरणस्तम्बके लग्नाः सर्वतः परिभक्षिते ।
मूषकेन निगूढेन गर्तेऽस्मिन्नित्यवासिना ॥ ८ ॥

पितरः ।

यायावरा नाम वयमृषयस्संशितव्रताः ।
सन्तानप्र[4]क्षयाद्ब्रह्मन् [5]अधो गच्छाम मेदिनीम् ॥ ९ ॥

अस्माकं सन्ततिस्त्वेको जरत्कारुरिति श्रुतः ।
नियतात्मा महात्मा च सुव्रतस्सुमहातपाः ॥ १० ॥

न तस्य भार्या पुत्रो वा बान्धवा अपि केचन ।
तस्माल्लम्बामहे गर्ते नष्टसंज्ञा ह्यनाथवत् ॥ ११ ॥

स वक्तव्यस्त्वया दृष्टः ह्यस्माकं नाथवत्तया ।
पितरस्तेऽवलम्बन्ते गर्ते दीना [6]ह्यधोमुखाः ॥ १२ ॥

---

[1] यत्र सायङ्काल आपतति तस्मिन्नेव प्रदेशे गृहमिति एते सायंगृहा मुनयः । तेषां अन्यन्निर्मितं गृहकुटीरादिकं न भवति ।

[2] आर्षमात्मनेपदम् । [3] वीरणमुशीरतृणम् । तत्कृतःस्तम्बः । पुञ्जः ।

[5] अधो मेदिनीगमनं पितृलोकानर्हतया भूपतनं नरकगमनमिति वा यावत् ।

---

[4] प्रजया (क) [6] ह्यनाथवत् (च)

साधु दारान् कुरुष्वेति प्रजायस्वेति वै विभो ।
कुलतन्तुर्हि नः शिष्टस्त्वमेवैकस्तपोधन ॥ १३ ॥

यत्तु पश्यसि नो ब्रह्मन् वीरणस्तम्बमाश्रितान् ।
एते च तन्तवस्तात कालेन परिभक्षिताः ॥ १४ ॥

यद्वैतत्पश्यसि ब्रह्मन् मूलमस्यार्धभक्षितम् ।
[1]अत्र लम्बामहे गर्ते सोऽप्येकस्तप [2]आश्रितः ॥ १५ ॥

छिन्नमूलान्परिभ्रष्टान् कालोपहतचेतसः ।
अप्रतिष्ठान्प्रपश्यास्मान् यथा दुष्कृतिनस्तथा ॥ १६ ॥

अस्मासु पतितेष्वद्य सहपूर्वैः पितामहैः ।
छिन्नः कालेन सोऽप्यत्र गन्ता वै नरकं तथा ॥ १७ ॥

जरत्कारुं तपो[3]लुब्धं [4]मन्दज्ञानमचेतसम् ।
न हि नस्तत्तपस्तस्य तारयिष्यति सत्तम ॥ १८ ॥

तपो वाप्यथवा यज्ञो [5]यच्चान्यत्पावनं महत्[6] ।
तत्सर्वं न समं तात सन्तत्येति सतां मतम् ॥ १९ ॥

[7]इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।
सर्वमेतदपत्यस्य कलां नार्हन्ति षोडशीम् ॥ २० ॥

[8]व्रतोपवासैर्बहुभिः कृतं भवति यत्र यत् ।
सर्वं तदनपत्यस्य मोघं भवति निश्चितम् ॥ २१ ॥

---

[6] यच्चान्यत्पावनमिति पाठो महाभारताद्गृहीतः ।

[7] इष्टं यज्ञादिः । [8] व्रतं नियमानुसारेण कृतम् । उपसमीपे वास इति एकादश्यादिः उपवासः ।

---

[1] अथ (क घ) [2] आस्थितः (ख ग घ) सि स्थितः (च) [3] वृद्धं (च)
[4] मन्दात्मान (च) [5] यद्वानात्मा बनं (क ख घ च)

## [1]अपत्यप्रशंसायां मन्दपालाऽऽख्यानम्

पितरः ।

आसीन्महर्षिः [2]श्रुतवान्मन्दपाल इति श्रुतः ।
सन्मार्गमास्थितो विप्रः ऋषीणामूर्ध्वरेतसाम्[3] ॥ २२ ॥

स गत्वा तपसः पारं देहमुत्सृज्य वै द्विजः ।
जगाम पितृलोकाय न लेभे तत्र तत्फलम् ॥ २३ ॥

स लोकानखिलान् दृष्ट्वा तपसा [4]निर्जितानपि ।
पप्रच्छ धर्मराजस्य समीपस्थान् दिवौकसः ॥ २४ ॥

मन्दपालः ।

[5]किमर्थमावृता लोका ममेह तपसाऽर्जिताः ।
किं मया न कृतं तत्र यदर्थमिदमावृतम् ॥ २५ ॥

देवाः ।

[6]ऋणिनो मानवा ब्रह्मन् सर्वेऽजायन्त वै त्रिभिः ।
तदपाक्रियते सर्वं [7]यज्ञेन तपसा [8]सुतैः ॥ २६ ॥

तपस्वी यज्ञकृच्चासि न तु ते विद्यते प्रजा ।
[9]त इमे प्रसवस्यार्थे तव लोकास्समावृताः ।
प्रजाय[10]स्व ततो लोकानुपभोक्तासि शाश्वतान् ॥ २७ ॥

---

[1] इदमाख्यानं महाभारतस्यादिपर्वणः २२० तमेऽध्याये वर्तते । मूलक्रमानुसारेणैवात्र संग्रहो दृश्यते । [2] वेदाध्ययनसंपन्नः श्रुतवान् ।

[3] यमनियमादिभिः दृढब्रह्मचर्याणां रेतः ऊर्ध्वमेव तिष्ठति इति ।

[5] किमर्थं पुण्यलोकानां द्वारं पिहितमिति यावत् । [9] यतो नास्ति तव सन्ततिरतः पितृलोकावाप्तिर्नेत्यर्थः ।

---

[4] निश्चितानपि (क ख ग) [6] प्राणिनो (च) [7] यज्ञैश्च (च) [8] श्रुतैः (क ख)
[10] स्वेति (क ख ग घ)

पुंनाम्नो नरकात्पुत्र[1]स्त्रातीति पितरं मुने ।
तस्माद्पत्यसन्ताने यतस्व द्विजसत्तम ॥ २८ ॥

सूतः ।

तच्छ्रुत्वा मन्दपालस्तु तेषां वाक्यं दिवौकसाम् ।
क नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत् ॥ २९ ॥

स चिन्तयन्नभ्यगच्छत् बहुलप्रसवान् खगान् ।
शार्ङ्गिकां शार्ङ्गिको भूत्वा [2]जरितां समुपेयिवान् ॥ ३० ॥

तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः ।
'जरितारौ कुलं हीदं ज्येष्ठत्वेन प्रतिष्ठितम् ॥ ३१ ॥

सारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः ।
[3]स्तम्बमित्र[4]स्तपः कुर्या[5]द्द्रोणो ब्रह्मविदुत्तमः' ॥ ३२ ॥

इत्येवमुक्त्वा स सुतान् भार्या[6]मादाय वै द्विजः ।
मन्दपालस्ततो लोकान् यथाकामं जगाम ह ॥ ३३ ॥

तस्मात्सन्तानहीनस्य सुखं नेह परत्र च ।
यथा पृष्टमिदं वाक्यं त्वयाऽऽख्यातमशेषतः ॥ ३४ ॥

यथा दारान्प्रकुर्यात्स पुत्रानुत्पादयेद्यथा ।
तथा ब्रह्मन्स्त्वया वाच्यः सोऽस्माकं नाथवत्तया ॥ ३५ ॥

एतच्छ्रुत्वा जरत्कारुः भृशं शोकपरायणः ।
उवाच स्वपितॄन् दुःखाद्बाष्पगद्गदया गिरा ॥ ३६ ॥

---

[1] त्रातीत्यार्षं रूपम् । [2] जरितां जीर्णां इत्यर्थः । अस्याः नामैव जरिता ।
[3] अत्र 'तपः' इति महाभारतस्थः पाठः ।

---

[3] तत्र मित्र (क ख ग घ) तत्त्वमित्र (च) [4] स्ततः (क ख ग घ च) [5] रुद्रो गोत्रह्म उत्तमः (क ख घ च) [6] ज्ञा (ग)

अहमेव जरत्कारुः किल्बिषी [1]भवतां सुतः ।
तद्दण्डं [2]धारयत मे दुष्कृतेरकृतात्मनः ॥ ३७ ॥

पितरः ।

पुत्र दिष्ट्यासि सम्प्राप्तः इमं देशं यदृच्छया ।
किमर्थं च त्वया ब्रह्मन् न कृतो दारसंग्रहः ॥ ३८ ॥

जरत्कारुः ।

ऊर्ध्वरेताः शरीरं वै प्रापयेयममुत्र हि ।
एवं दृष्ट्वा तु [3]भवतः शकुन्ता[4]निव लम्बतः ॥ ३९ ॥
मया निवर्तिता बुद्धिः ब्रह्मचर्यात्पितामहाः ।
भवतां तु हितार्थाय करिष्ये दारसंग्रहम् ॥ ४० ॥
सनामां यद्यहं कन्यामुपलप्स्ये कदाचन ।
प्रतिग्रहिष्ये भिक्षान्तु यदि कश्चित्प्रदास्यति ॥ ४१ ॥
एवंविधामहं कन्यां [5]निवेक्ष्ये प्राप्नुयां यदि ।
अन्यथा न करिष्येऽहं सत्यमेतत्पितामहाः ॥ ४२ ॥

सूतः ।

एवमुक्त्वा तु स पितॄंश्चचार [6]पृथिवीं [7]मुनिः ।
न च स्म लभते भार्यां [8]वृद्धोऽयमिति वै द्विजाः ॥ ४३ ॥
यदा निर्वेदमापन्नः पितृभिश्च प्रचोदितः ।
तदारण्यं स गत्वोच्चैश्चुक्रोश भृशदुःखितः ॥ ४४ ॥

जरत्कारुः ।

यानि भूतानि सन्तीह जङ्गमानि स्थिराणि च ।
अन्तर्हितानि चान्यानि तानि शृण्वन्तु मे वचः ॥ ४५ ॥

---

[1] भविता (क) [2] धारयन्तं (क ख घ च) [3] पितरः (च) [4] नीव (क)
[5] निवेद्य (क) [6] पृथिवीमिमाम् (च) [7] पुनः (क) [8] वृद्धोऽह (क ख घ ख)

उग्रे तपसि [1]वर्तन्तं पितरश्चोदयन्ति माम् ।
[2]निविशस्वेति दुःखार्तास्तेषां प्रियचिकीर्षया ।
विवाहायाखिलां भूमिं कन्याभैक्षं चराम्यहम् ॥ ४६ ॥

यस्य कन्यास्ति भूतस्य स मे कन्यां प्रयच्छतु ।
[3]मम कन्या सनामा वै भैक्षवच्चोदिता भवेत्' ॥ ४७ ॥

सूतः ।

तच्छ्रुत्वा पन्नगेन्द्रस्तु कन्यां तां समलङ्कृताम् ।
प्रगृह्यारण्यमगमत्समीपं तस्य पन्नगः ॥ ४८ ॥

स तत्र भैक्षवत्कन्यां प्रादात्तस्मै महात्मने ।
ततो नाम स कन्यायाः पप्रच्छ द्विजसत्तमाः ॥ ४९ ॥

वासुकिः ।

सनामा तव कन्येयं [4]समाना तपसन्विता ।

सूतः ।

प्रतिश्रुते तु [5]नागेन भरिष्ये भगिनीमिति ॥ ५० ॥

जग्राह पाणिं धर्मात्मा तत्र मन्त्रपुरस्कृतम् ।
स तत्र समयं चक्रे भार्यया सह सत्तमः ॥ ५१ ॥

जरत्कारुः ।

विप्रियं मे न कर्तव्यं न च वाच्यं कदाचन ।

---

[1] शत्रन्तममार्षं रूपम् । [5] अत्र गृहीतः पाठः महाभारतस्थः । सर्वास्वपि मातृकासु विद्यमानः अधो लिखितः पाठः समर्पको न दृश्यते ।

---

[2] निविशुस्ते (क ख घ) निवेशस्वे (च) [3] सा कन्या च (च) [4] सनामा (ग)
[5] भगिनीं पन्नगेन्द्रेण धीमता (क ख ग घ ङ)

[1]त्यजेयमप्रिये हि त्वां [2]कृतवासश्च ते गृहे ।
एतद्गृहाण वचनं मया यत्समुदीरितम् ॥ ५२ ॥

सूतः ।

ततः स्वसा नागपतेः तमुवाचैवमस्त्विति ।
तथैव सा च भर्तारं [3]दुःखशीलमुपाचरत् ॥ ५३ ॥

ऋतुकाले ततः स्नात्वा कदचिद्वासुकेः स्वसा ।
भर्तारं तु यथान्यायमुपतस्थे महामुनिम् ॥ ५४ ॥

तत्र तस्यां समभवद्गर्भो ज्वलनसंन्निभः ।
शुक्लपक्षे यथा सोमो व्यवर्धत तथैव सः ॥ ५५ ॥

ततः कतिपयाहस्सु जरत्कारुर्महातपाः ।
उत्सङ्गेऽस्याश्शिरः कृत्वा सुष्वाप [4]परिखिन्नवत् ॥ ५६ ॥

तस्मिंश्च सुप्ते विप्रेन्द्रे सविताऽस्तमयाद्गिरिम् ।
अह्नः परिक्षये विप्रास्ततस्साऽचिन्तयत्तदा ।
वासुकेर्भगिनी भीता धर्मलोपान्मनस्विनी ॥ ५७ ॥

उत्थापयिष्ये यद्येनं [5]ध्रुवं कोपो भविष्यति ।
धर्मलोपो भवे[6]दस्य सन्ध्याऽति[7]क्रमणे ध्रुवम् ॥ ५८ ॥

[8]कोपो वा धर्मशीलस्य धर्मलोपोऽथवा पुनः ।
धर्मलोपो गरीयान्मे स्यादत्रे त्यकरोन्मनः ॥ ५९ ॥

तमृषिं दीप्ततपसं शयानं [9]समुवाच सा ।

---

[3] स्वयं दुःखिनी सती । दुःखशीलं यथा तथेत्यर्थः ।

---

[1] त्यजेयमपि ते हित्वा (च) [2] कृते वासं न ते गृहे (क ख घ च) [4] तति (क)
[5] धवं कोपं (क ख घ) [6] यस्य (च) तस्य (ग) [7] करणे (ग) [8] क्रोधो (च)
[9] तमु (क ख घ च)

उत्तिष्ठ त्वं महाभाग सूर्योऽस्तमुपगच्छति ॥ ६० ॥
सन्ध्यां त्व[1]मास्व भगवन्नपः स्पृष्ट्वा महाव्रत ।
[2]प्रादुष्कृता[3]ग्निहोत्रोऽयं मुहूर्तो [4]रम्यदारुणः ॥ ६१ ॥
सन्ध्या प्रवर्तते चेयं पश्चिमस्यां दिशि प्रभो ।
एवमुक्तस्तु भगवानिदं वचनमब्रवीत् ॥ ६२ ॥

जरत्कारुः ।

अवमानः प्रयुक्तोऽयं त्वया मम भुजङ्गमे ।

सूतः ।

[5]एवमु[6]क्ता जरत्कारुः भर्त्रा हृदयकम्पनम् ।
अब्रवीद्भगिनी तत्र वासुकेस्सन्निवेशने ॥ ६४ ॥

जरत्कारुः ।

नावमानात्कृतवती तवाहं प्रतिबोधनम् ।
धर्मलोपो न ते विप्र स्यादित्येवं कृतं मया ॥ ६५ ॥
[7]मातृशपाभिभूतानां ज्ञातीनां मम सत्तम ।
अपत्यमीप्सितं त्वत्तस्तच्च तावन्न दृश्यते ॥ ६६ ॥

सूतः ।

एवमुक्तस्तु स मुनिः भार्यां वचनमब्रवीत् ।

जरत्कारुः ।

न मे वागनृतं प्राह [8]गमिष्येऽहं भुजङ्गमे ।
समयो ह्येष मे पूर्वं त्वया सह मिथः कृतः ॥ ६७ ॥

---

[2] आविष्कृताग्निहोत्र इति । [5] जरत्कारोः पत्न्यपि जरत्कारुरतः उक्तेत्येव न्याय्यम् । [7] जरत्कारोः पुत्रः आस्तीकः । सः जनमेजयकृतं सर्पयागं संस्तम्भयित्वा स्वमातुलानां अभयं दापयामास । [8] आर्षमात्मनेपदम् ।

---

[1] मा स्म (क ख घ च) [3] तो (ग) [4] तद्य (क ख घ च) [6] क्त्वा (क ख घ च)

त्वं चापि मयि निष्क्रान्ते न शोकं कर्तुमर्हसि ।
अस्त्येव गर्भः सुभगे तव वैश्वा*नरोपमः ॥ ६८ ॥

सूतः ।

एवमुक्त्वा स धर्मात्मा जरत्कारुर्महा[1]मुनिः ।
उग्राय तपसे भूयो जगाम गहनं वनम् ॥ ६९ ॥

## गृहस्थाश्रमप्रशंसा

तस्मात्सन्ततिवृद्ध्यर्थं प्रकुर्याद्दारसंग्रहम् ।
अपत्यं धर्म[2]कार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥ ८९ ॥

यथा नदीनदास्सर्वे सागरे यान्ति संस्थितिम् ।
तथैवाऽऽश्रमिणस्सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ७१ ॥

भिक्षाभुजश्च ये केचित्परिव्राड्ब्रह्मचारिणः ।
तेऽप्यत्रैवावतिष्ठन्ते गार्हस्थ्यं तेन वै परम् ॥ ७२ ॥

इति श्रीमत्पुराणसारे सन्तत्युत्पादनं नाम
एकोनविंशोऽध्यायः

---

[3] नदी, नदति प्रवाहवेगेन शब्दायते इति । नदः पुंवाचकक्रत्रिमखाताव-
च्छिन्नजलप्रवाहः सिन्धुशोणब्रह्मपुत्रादिः ।



* नरप्रभः (च) [1] मतिः (ख च) [2] कर्माणि (ख)

## विंशोऽध्यायः

[ गृहस्थाचारनिरूपणम् ]

### गृहस्थाचारप्रशंसा

सूतः ।

[1]श्रूयतां भूसुरवराः गृहस्थाचार[2]लक्षणम् ।
सदाचारवतां पुंसां जितौ लोकावुभावपि ॥ १ ॥

आचारेण तु सम्पूर्णः सम्पूर्णफलभाग्भवेत् ।
एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ॥ २ ॥

सर्वस्य तपसो मूलमाचारं जगृहुः परम् ।
आचारप्रभवो धर्मो धर्मे सर्वं प्रतिष्ठितम् ॥ ३ ॥

### धर्मलक्षणम्

श्रुतिः स्मृति[3]स्सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ४ ॥

परित्यजेदर्थकामौ धर्मपीडाकरौ द्विजाः ।
धर्ममप्यसुखोदर्कं लोकसङ्क्रुष्टमेव च ॥ ५ ॥

---

[1] अस्याध्यायस्थविषयाः प्रायः विष्णुपुराणब्रह्मपुराणाभ्यां तथा कर्त्रा रचितया पराशरस्मृतिव्याख्यया च संगृहीता इति भाति ।

विष्णुपुराणम् — अंशः ३ अध्यायः ११
ब्रह्मपुराणम् — अध्यायः ११२
पराशरस्मृतिः — आचारकाण्डः

---

[2] सत्तमम् (म) [3] स्सदाचारैः (क ख ग ज)

## आचारे त्रिवर्गप्रशंसा

[1]ब्राह्मे मुहूर्ते चोत्थाय धर्ममर्थं विचिन्तयेत् ।
कायक्लेशं तदुद्भूतं ध्यायीत मनसेश्वरम्
[2]अपीडया तयोः काममुभयोरपि चिन्तयेत् । ॥ ५ ॥

## मलमूत्रोत्सर्जने नियमाः

नैऋत्यामिषुविक्षेपमतीत्याभ्यधिकं [3]पुनः
दूरादावसथान्मूत्रं पुरीषन्तु[4] समाचरेत् । ॥ ६ ॥

दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः
कुर्यान्मूत्रपुरीषन्तु रात्रौ चेद्दक्षिणामुखः । ॥ ७ ॥

छायायामन्धकारे वा रात्रावहनि वा द्विजाः
यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च ।
[5]अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥ ८ ॥

वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः ।
तिष्ठन्नातिचिरं तत्र पुरीषं मूत्रमाचरेत् ॥ ९ ॥

न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च पर्वते ॥ १० ॥

---

[1] ब्राह्मो मुहूर्तः–रात्रेश्च पश्चिमो यामो ब्राह्म उच्यते । रात्रिशेषयामार्धस्थितः अरुणोदयात्प्राक् दण्डद्वयात्मकः कालः । [2] धर्माविरुद्धस्य कामस्येष्टत्वात् ।
[3] गृहाद्बहिः बाणपातदूरं विहाय गन्तव्यमिति ।
[5] साक्षाद्भूमौ पुरीषोत्सर्गः देव्यंशभूतायाः भुवः अपमानजनकः अशुचित्वापादको वा भवति ।

---

[3] भुवः (ग) [4] च (च)

न जीर्णदेवायतने न वल्मीके कदाचन ।
[1]न सत्वेषु न गर्तेषु न गच्छन्नापि च स्थितः ॥ ११ ॥
वाय्वग्निविप्रमादित्यमपः पश्यंस्तथैव च ।
न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम् ॥ १२ ॥

## शौचविधिः

तत उत्थाय विधिवच्छौचं कुर्यादतन्द्रितः ।
आहृत्य मृत्तिकां कूलाल्लेपगन्धापकर्षिणीन्द्रिम् ॥ १३ ॥
वल्मीकमूषकोत्खातां मृदं नान्तर्जलात्तथा ।
शौचावशिष्टां मोहाच्च नादद्याल्लेपसम्भवाम्
अणुप्राण्यवपन्नां च हलोत्खातां च वै द्विजाः । ॥ १४ ॥
तीर्थे शौचं न कुर्वीत कुर्वीतोद्धृतवारिणा ।
[2]रत्निमात्राज्जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते ।
पश्चात्तच्छोधये[3]त्तीर्थं ह्यन्यथा न शुचिर्भवेत् ॥ १५ ॥

## शौचे मृत्तिकाप्रमाणं विनियोगश्च

प्रथमा प्रसृतिर्ज्ञेया द्वितीया च तदर्धिका ।
तृतीया मृत्तिकाज्ञेया [4]द्विभागा [5]करपूरणी ॥ १६ ॥

---

[1] 'न ससत्वेषु गर्तेषु' इति मनुः ४-४७ । अत्रस्थः पाठः मनुस्मृत्यपेक्षया-युक्ततर इति भाति । अन्यथां असत्वेषु कदाचन मूत्रोत्सर्गकरणे प्रत्यवायो न स्यात् । गर्ताः असत्वा अपि बहुधा भयकारकाः । अतः अयं पाठस्साधीयान् । सत्वेषु, प्राणिनामुपरि प्रमादाद्वा हासार्थं वा सर्वथा मूत्रोत्सर्गो निषिध्यते । [2] रत्निः, बद्धमुष्टिको हस्तः । [4] त्रिभागकर-पूरणीति पराशरमाधवीये दक्षाङ्गिरसौ ।

---

[3] तीर्थे (क ख ग घ) [5] कृतरूपिणी (क ख घ)

एका लिङ्गे गुदे पञ्च पादयोः पञ्च पञ्च च ।
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्
त्रिगुणं स्याद्वनस्थानां यतीनां च चतुर्गुणम् । ॥ १७ ॥

### शौचे गुरुलघुत्वविषयः

यद्दिवा विहितं शौचं तदर्धं निशि कीर्तितम्
तदर्धमातुरे प्रोक्तं [1]आतुरस्यार्धमध्वनि । ॥ १८ ॥
यावत्तु शुद्धिं मन्येत तावच्छौचं विधीयते ।
प्रमाणं शौचसंख्यायाः न शिष्टैरुपदिश्यते ॥ १९ ॥
न यावदुपनीयन्ते द्विजाश्शूद्रास्तथाङ्गनाः
गन्धलेपक्षयकरं शौचमेषां विधीयते । ॥ २० ॥
देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम्
उपपत्ति[2]मवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् । ॥ २१ ॥

### शौचप्रशंसा

शौचे यत्नः सदा कार्यश्शौचमूलो द्विजः स्मृतः ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥ २२ ॥

### आचमने जलविधानं, आचमनविधिश्च

कृत्वाऽथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्धशिखकच्छस्तु द्विज आचमनं चरेत् ॥ २३ ॥
[3]अन्तर्जानुः शुचौ देशे उपविष्ट उदङ्मुखः ।

---

[1] आतुरशौचस्यार्धं अध्वनि अनातुरस्यापीत्यर्थः । [3] जान्वन्तरे हस्तमाहृत्येत्यर्थः ।

---

[2] मवस्थाय (क ख ग)

[1]प्राग्वा [2]ब्राह्मेन तीर्थेन द्विजो नित्यमुपस्पृशेत् । ॥ २४ ॥

अद्भिस्समुद्धृताभिश्च हीनाभिः फेनबुद्बुदैः ।
वह्निनाऽनभितप्ताभिः द्विजो नित्यमुपस्पृशेत् । ॥ २५ ॥

[3]हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
स्त्रीशूद्राश्चैव शुद्धयेरन् सकृत्स्पृष्ट्वा [4]समन्ततः । ॥ २६ ॥

निष्पादिताङ्घ्रिशौचस्तु पादा[5]वभ्युक्ष्य वै पुनः ।
त्रिः पिबेत्सलिलं तेन तथा द्विः परिमार्जयेत् । ॥ २७ ॥

अङ्गुष्ठेन [6]प्रदेशिन्या घ्राणं स्पृष्ट्वा त्वनन्तरम् ।
अङ्गुष्ठानामिकाभ्यान्तु चक्षुः श्रोत्रे पुनः पुनः । ॥ २८ ॥

नाभिं कनिष्ठांगुष्ठाभ्यां हृदयं तु तलेन वै ।
सर्वाभिस्तु शिरः पश्चाद्बाहु चाग्रेण संस्पृशेत् । ॥ २९ ॥

[7]सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
[8]नोच्छिष्टं तत्पवित्रं तु भुक्त्वोच्छिष्टं तु वर्जयेत् ।
कृत्वा मूत्रं पुरीषं वा [9]खान्याचान्त उपस्पृशेत् । ॥ ३० ॥

---

[1] प्राङ्मुखो वेति । [2] 'अंगुष्ठोत्तरतो रेखा या पाणेर्दक्षिणस्य च । एतद्ब्राह्ममिति ख्यातं तीर्थमाचमनाय वै ।' 'आह्निकतत्वे शब्दकल्पद्रुमः ।' उपस्पर्शः आचमनम् । [3] हृदयंगमाभिः विप्रः कण्ठागाभिः क्षत्रियः तालुगभिः वैश्य इति ।

[6] प्रदेशिनी, तर्जनी । अंगुष्ठेन सह तर्जन्येति ।

[7] सपवित्रमाचमने उच्छिष्टं न भवति । भोजनं तु पवित्रवर्जमेव ।

[9] खानीन्द्रियाणि ।

---

[4] मिरन्ततः (ग) [5] नभ्युक्ष्य (क ख) [8] योच्छिष्टस्तत् (च)

## आचमनहेतुनिरूपणम्

चण्डालम्लेच्छसम्भाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं चापि तथाविधम् ॥ ३१ ॥

आचामेदश्रुपाते वा लोहितस्य तथैव च ।
क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने ।[1]
पञ्चस्वेतेषु चाचामेत् श्रोत्रं वा दक्षिणं स्पृशेत् ॥ ३२ ॥

आदित्यो वरुणस्सोमो वह्निर्वायुस्तथैव च
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः । ॥ ३३ ॥

## द्विराचमनविधिः

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे
आचान्तः पुनराचामेद्वासो विपरिधाय च ।
प्रक्षाल्य पाणिपादौ तु भुञ्जानो द्विरुपस्पृशेत् ॥ ३४ ॥

होमे [2]निष्ठीवने दाने सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेज्जपहोमार्चनेषु च ॥ ३५ ॥

## आचमनाकरणे प्रत्यवायनिरूपणम्

एवमाचम्य तोयेन क्रियाः कुर्वीत वै शुचिः ।
देवतानामृषीणाञ्च पितॄणाञ्चैव यत्नतः ॥ ३६ ॥

[3]क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियास्सर्वा न संशयः ॥ ३७ ॥

---

[1] पूर्वत्रोक्तमश्रुपातनपदं ग्रन्थान्तरादुद्धृतम् । अतो न पुनरुक्तिः ।

[2] निष्ठीवनं श्लेष्मादीनां मुखेन थूत्कारः । अस्मिन्श्लोके पुनर्होमशब्दग्रहणं जपसम्बन्धिहोमं निरूपयति । [3] अनाचम्यैकस्या अपि क्रियाया करणेन तत्कर्तृकास्सर्वाः क्रिया निष्फला भवन्तीत्यर्थः ।

### दन्तधावनविधिः

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम्　　॥ ३८ ॥

### [1]दन्तधावनमन्त्रः

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च [2]त्वं नो देहि वनस्पते　　॥ ३९ ॥

### दन्तधावनप्रशंसा

मुखो पर्युषिते नित्यं भवत्यप्रयतो[3] नरः ।
तस्मात्सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्　　॥ ४० ॥

### दन्तकाष्ठनियमः

कण्टकीक्षीरवृक्षोत्थं द्वादशांगुल[4]मव्रणम् ।
कनिष्ठिकाग्रवत्स्थूलं पूर्वार्धकृतकूर्चकम् ।　　॥ ४१ ॥

[5]द्वादशैव तु विप्राणां क्षत्रियाणां नवांगुलम् ।
अष्टांगुलं तु वैश्यानां शूद्राणां सप्तसंमितम्　　॥ ४२ ॥

चतुरंगुलमात्रन्तु नारीणां नात्र संशयः ।
अलाभे दन्तकाष्ठानां [6]प्रतिषिद्धदिनेषु च　　॥ ४३ ॥

अपां द्वादशगण्डूषैः [7]विदध्याद्दन्तधावनम् ।
प्रक्षाल्य दन्तकाष्ठं [8]वै भक्षयित्वा विधानतः ।
आचम्य प्रयतो [9]नित्यं प्रातःस्नानं समाचरेत्　　॥ ४४ ॥

---

[3] अप्रयतः अशुचिः ।　　[5] द्वादशांगुलदीर्घम् ।

---

[1] मन्त्रम् (क ख ग घ)　[2] तन्नो (क ख ग घ)　[4] संमितम् (क ख घ च)
[6] निषिद्धानां दिने तथा (क ख घ) निषिद्धानां तिथौ तथा (च) [6] आस्यशुद्धिर्भविष्यति(ग) मुखशुद्धिर्भविष्यति (च) [8] वा (ग) [9] भूत्वा (ग)

## प्रातःस्नानविधिः

प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ।
यते[1]स्त्रिषवणं [2]प्रोक्तं सकृच्च ब्रह्मचारिणः । ॥ ४५ ॥

ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य स्त्रीणां च द्विजसत्तमाः ॥ ४६ ॥

## स्नानप्रशंसनम्

अस्नात्वा नाऽऽचरेत्कर्म जपहोमादि किञ्चन ।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् । ॥ ४७ ॥

मनःप्रसादजननं रूपसौभाग्यवर्धनम् ।
शोकदुःस्वप्नहं स्नानं मोक्षदं ग्लानिहं [3]तथा । ॥ ४८ ॥

स्नानमूलाः क्रियास्सर्वाः श्रुतिस्मृत्युदिताः नृणाम् ।
तस्मात्स्नानं निषेवेत श्रीपुष्ट्यारोग्यवर्धनम् ॥ ४९ ॥

प्रातःस्नानं प्रशंसन्ति [4]दृष्टादृष्टकरं हि तत् ।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादि[5]कम् ॥ ५० ॥

## स्नानभेदाः तत्र मुख्यस्नानं तद्भेदाश्च

स्नानं तु द्विविधं प्रोक्तं गौणमुख्यप्रभेदतः ।
तयोस्तु [6]वारुणं मुख्यं तत्पुनः षड्विधं भवेत् । ॥ ५१ ॥

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम् ॥ ५२ ॥

---

[1] त्रिशवणं, त्रिसवनं, त्रिकालं प्रातर्मध्याह्नसायमिति सवनस्नानम् ।
[4] दृष्टं पूर्वोक्तं, अदृष्टं पुण्यसङ्ग्रहादि । [6] वारुणं स्नानं जलस्नानमित्यर्थः ।

---

[2] स्नातं (ग) [3] सदा (च) [5] षु (च)

## नित्यस्नानम्

अस्नातस्तु पुमान्नार्हो [1]जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्तितम् ॥ ५३ ॥

## नैमित्तिकस्नानम्

चण्डालशवयूपादि स्पृष्ट्वाऽ[2]स्नातां रजस्वलाम् ।
स्नानार्हस्तु यदा स्नाति [3]तदा नैमित्तिकं हि तत् ॥ ५४ ॥

## काम्यस्नानम्

[4]पुष्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम् ।
[5]तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥ ५५ ॥

## क्रियाङ्गस्नानम्

जप्तुकामः पवित्राणि [6]अर्चिष्यन् देवताः पितॄन् ।
स्नानं समाचरेद्यस्तु [7]क्रियाङ्गं तत्समीरितम्

## मलकर्षणस्नानम्

मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम् । ॥ ५६ ॥

## क्रियास्नानम्

सरस्सु देवखातेषु तीर्थेषु च नदीषु च
क्रियास्नानं समुद्दिष्टं स्नानं तत्र [8]महाक्रियाः ।
अशिरस्कं भवेत्स्नानं स्नाना[9]शक्तौ तु कर्मणाम् ॥ ५७ ॥

---

[4] पुष्यस्नानशब्दः मकरसंक्रमणस्नानवाची । माघमासादिस्नानवत् पुष्ये स्नानक्रियाया विशेषतोऽनुक्तत्वात् ।

---

[1] जपा (च) [2] स्नानं (ग) [3] स्नानं [5] तिथि (क) [6] हविष्यं (क ख घ) तापिष्यं (च) [7] स्वक्रियाङ्गं (क) [8] मताक्रियम् (ग) [9] शक्तस्तु (ग)

## गौणेस्नानभेदाः

दिव्यं वायव्यमाग्नेयं ब्राह्मं सारस्वतं तथा ।[1]
मानसं चेति विज्ञेयं गौणस्नानं तु षड्विधम् ॥ ५८ ॥

यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥ ५९ ॥

आपोहिष्ठादिभि[2]र्ब्राह्मं मानसं विष्णुचिन्तनम् ।
[3]विद्वत्सरस्वतीप्राप्तं स्नानं सारस्वतं स्मृतम् ।
सर्वतीर्थोभिषेकाद्धि पवित्रा विदुषां [4]हि वाक् ॥ ६० ॥

[5]आर्द्रेण वाससा देहमार्जनं कापिलं स्मृतम् ।
निरीक्ष्य चात्मनःशक्तिं समयं देशमेव च ।
एतेष्वेकत[6][मं] कुर्याद्ब्राह्मणः परिशुद्धये ॥ ६१ ॥

## क्रियास्नानविधिः

क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्वकम् ।
जले निमग्नस्तून्मज्य चोपस्पृश्य यथाविधि ॥ ६२ ॥

[7]तीर्थस्यावाहनं कुर्यात्तत्प्रवक्ष्याम्यतः परम् ।

---

[1] एतदनन्तरं 'सर्वतीर्थाभिषेकाद्धिः पवित्रमृषिभिः स्मृतम्' इति पाठः, क ख घ मातृकासु अस्थाने दृश्यते ।

[3] विदुषो वाचिभवं यथा 'त्वं शुद्धोऽसि' 'स्नानमभूत्तवे'त्यादिप्रशंसापूर्वकम् । विदुषां वाचि मलापकर्षिणी शक्तिरस्ति ।

[5] कपिलस्नानस्य गौणस्नानेष्वकथितत्वादेदत्कुत्रत्यमिति विवेचनीयम् ।

---

[2] मन्त्रं (ग) [3] विद्वान्सारस्वती (ग) [4] च (च) [6] रं (क ख ग घ च) अत्र तमपू प्रत्यय एव साधुः । [7] तीर्थवगाहनं (ख ग घ)

प्रपद्ये वरुणं देवमम्भसां पतिमूर्जितम्
याचितं देहि मे तीर्थं सर्वपापापनुत्तये ॥ ६३ ॥

तीर्थमावाहयिष्यामि सर्वा[1]घौघनिषूदनम् ।
सान्निध्यमस्मिन्वै तोये स्थीयतां मदनुग्रहात् ॥ ६४ ॥

आपः पुण्याः पवित्राश्च प्रपद्ये शरणं [2]तथा ।
रुद्रश्चाग्निश्च सर्पाश्च वरुणश्चाप एव च ॥ ६५ ॥

शमयन्त्वाशु मे पापं [3]रक्षन्त्विति सदाऽऽप्लुतम् ।
इत्येवमुक्त्वा कर्तव्यं ततस्संमार्जनं कुशैः ॥ ६६ ॥

[4]'आपोहिष्ठादि तिसृभिर्यथावदनुपूर्वशः ।
'हिरण्यवर्ण' इत्यादि ऋग्भिश्चतसृभिस्ततथा ॥ ६७ ॥

---

[4] आपो हिष्ठा मयोभुवस्तान ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । ऋग्वेदः १०-९
शं नो देवीरभीष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः इत्यद्याः । ऋग्वेद १०-९ । माधुच्छन्दसोऽघमर्षणः । भाववृत्तम् । अनुष्टुप् ।

ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत
ततो रात्र्यजायत ततः समुद्रो अर्णवः ।
समुद्रादर्णवादधि संवत्सरो अजायत ।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ।
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ ऋग्वेद १०–१९९

इदमघमर्षणसूक्तम् ।

---

[1] घविनिषूदनम् (च) [2] तदा (क ख घ च) [3] रक्षन्त्वीति (क)

'शं नो देवी'रिति तथा 'शं न आप'स्तथैव च ।
'इदमापः प्रवहते'त्येवं च समुदीरयेत् ॥ ६८ ॥
एवं संमार्जनं कृत्वा छन्द आर्षं तु दैवतम् ।
अघमर्षणसूक्तस्य संस्मरेत्प्रयतः शुचिः ॥ ६९ ॥
ततोऽम्भसि निमग्नस्तु त्रिः पठेदघमर्षणम् ।
प्रपद्यान्मूर्धनि तथा महाव्याहृतिभिर्जलम् ॥ ७० ॥

## स्नानाङ्गपितृतर्पणम्

स्नानादनन्तरं तावत्तर्पयेत्पितृदेवताः ।
द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥ ७१ ॥

## वासोविपरिधानं वासोलक्षणं च

एवं कृत्वा ततः स्नानमाचम्य च विधानतः ।
उत्थाय वाससी शुद्धे शुक्ले तु परिधाय वै ॥ ७२ ॥
ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्बणम् ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥ ७३ ॥
सम्यग्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ ७४ ॥
दशाहीनं [1]मलाक्तञ्च वर्जयेदम्बरं[2] बुधः ।
नोत्तरीयमधः कुर्यान्नोप[3]र्यधःस्थमम्बरम् ।
[4]नान्तर्वासो विना जातु निवसेद्वसनं बुधः ॥ ७५ ॥

---

[2] अम्बरं वस्त्रम् । [3] अधःस्थमेवाधःस्थम् । [4] अन्तर्वासश्च शाटिकावत् अदीर्घः । लघु ।

---

[1] मलार्कञ्च (क) [3] र्यधस्त्य (क ख ग घ)

अथाऽऽचम्य प्रयत्नेन सुखासीनस्सुनिश्चलः ।
पूजाकाले च होमे च सायं प्रातस्समाहितः ॥ ७६ ॥
नामान्युच्चार्य विधिवद्धारयेदूर्ध्वपुण्ड्रकम् ।
त्रिपुण्ड्रमथ वा कुर्यान्मन्त्रपूतेन भस्मना ॥ ७७ ॥

[1]शिवागमोक्ताश्रमनिष्ठ[2]मानवः
त्रिपुण्डलिङ्गन्तु सदैव धारयेत् ।
तदुक्तमन्त्रेण [3]ललाटमध्ये
महादरेणैव सितेन भस्मना ॥ ७८ ॥

विष्णवागमोक्ताऽऽश्रमनिष्ठमानवः
तथैव पुण्ड्रान्तरमूर्ध्वपुण्ड्रकम् ।
त्रिशूलरूपं चतुरश्रमेव वा
मृदा ललाटे तु सदैव धारयेत् ॥ ७९ ॥

ब्रह्माऽऽगमोक्ताऽऽश्रमनिष्ठमानवो
ललाटमध्येऽपि च वर्तुलाऽऽकृतिम् ।
तदुक्तमन्त्रेण सितेन भस्मना
मृदाथवा चन्दनतस्तु धारयेत् ॥ ८० ॥

सितेन भस्मना तिर्यक्त्रिपुण्ड्रस्य तु धारणम् ।
सर्वागमेषु निष्ठानां तत्तन्मन्त्रेण शोभनम् ॥ ८१ ॥

इति श्रीमत्पुराणसारे नित्यानुष्ठानं नाम
विंशोऽध्यायः ।

---

[1] इयं भावना सर्वमतसमाना । नात्र कर्त्रा कस्याप्येकस्यैव मतस्य पक्षपातः कृतः।

---

[3] मानसः (ग) सितेन भस्मना मृदाथवा चन्दनतस्तु धारयेत् । अनन्तरं द्वौ श्लोकौ 'ग' मातृकायां न स्तः ।

## एकविंशोऽध्यायः

[ सदाचारप्रकरणम् ]

### सन्ध्योपासनमाहात्म्यम्

सूतः ।

अत ऊर्ध्वं प्रवक्ष्यामि सन्ध्योपासननिर्णयम् ।
[1]अहोरात्रकृतैः पापैः यामुपास्य प्रमुच्यते ॥ १ ॥

त्रिंशत्कोटिस्तु विख्याता मन्देहा नाम राक्षसाः ।
प्राद्रवन्त सहस्रांशुमुदयन्तं दिने दिने ॥ २ ॥

[2]अथ सूर्यस्य तेषाञ्च युद्धमासीत्सुदारुणम् ।
ततो देवगणास्सर्वे ऋषयश्च तपोधनाः ।
सन्धौ तु समुपास्यैनां निक्षिपन्ति महज्जलम् ॥ ३ ॥

ब्रह्मव्याहृतिसंयुक्तं गायत्र्या चाभिमन्त्रितम् ।
तेन दहन्ति दैतेया वज्रीभूतेन वारिणा ॥ ४ ॥

[3]एवं विदित्वा यः सन्ध्यामुपास्ते संशितव्रतः ।
दीर्घमायुः स विन्देत सर्वपापैः प्रमुच्यते ॥ ५ ॥

### सन्ध्योपासनादपुत्रस्य पुत्रप्राप्तिकथा

पुराऽभूद्ब्राह्मणः कश्चिदपुत्रो मुनिपुङ्गवाः ।
देवतां पूजयामास न स प्राप सुतं क्वचित् ॥ ६ ॥

---

[1] यद्रात्र्या पापकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्त-दवलुम्पतु । सायं सन्ध्योपासने, अहस्तदवलुम्पतु इत्यादिभिः पापा-पनोदनम् ।

---

[2] अपि (क) [illegible] (ख)

ततश्चिन्तापरः सोऽभूत्कश्चिदस्ति सुदैवतः ।
यो मे शीघ्रं प्रसीदेत्तु पुत्रार्थं सोऽगमद्वनम् ॥ ७ ॥

अथापश्यत्तदा देवीं दुर्गां त्रिभुवनेश्वरीम् ।
तां दृष्ट्वा चिन्तयामास पुत्रं चेयं विधास्यति ॥ ८ ॥

ततो गन्धैश्च माल्यैश्च धूपैश्च विविधैरपि ।
बलिभिश्चोप[1]हारैश्च पूजयामास वै द्विजः ॥ ९ ॥

अथ स्वल्पेन कालेन तुष्टा सा वाक्यमब्रवीत् ।

## दुर्गया ब्राह्मणाय पुत्रानुग्रहः

दुर्गा ।

प्रतिगच्छ स्वकं वेश्म सुपुत्रस्ते भविष्यति ॥ १० ॥

गायत्र्या जुह्वतो विप्र नान्यथा कर्तुमर्हसि ।
एतच्छ्रुत्वा वचो विप्रः स्वगृहं समुपागतः ॥ ११ ॥

ततो देव्याः प्रसादेन ब्राह्म[2]ण्यामृषिसत्तमाः ।
काले तस्याः स्थितो गर्भः देव्या[3]दत्तः सुजुह्वतः ॥ १२ ॥

सर्वमङ्गलसंयुक्तं [4]मासैर्द्वादशभिस्तथा ।
ब्राह्मणी सुषुवे तत्र कुमारं देवरूपिणम् ॥ १३ ॥

स जातः क्रमयोगेण कुमारो ब्राह्मणात्मजः ।
व्रतबन्धमवाप्यैवं नियुक्तो गुरुणा ततः ॥ १४ ॥

यथोक्तनियमं चक्रे कुर्वंस्तदनुशासनम् ।
एतस्मिन्नन्तरे काले म्लेच्छजातिर्धनाधिपः ॥ १५ ॥

---

[4] देवदत्तत्वात्स्यान्मासद्वादशात्मको गर्भः । श्रीरामावतारोऽपि यज्ञनिवृत्त्यनन्तरं द्वादशे मास्येवाभवत् ।

---

[1] कारैः (क) [2] ण्यां मुनिपुङ्गवाः (च) [3] दत्तं (च)

सुतासीत्तस्य रूपाढ्या गुणतो रूपतस्तथा ।
स लेभे न वरं तस्या यथोचितमथात्मवान् ॥ १६ ॥
स कदाचि[1]न्मृगव्यं वै पर्यटन्विजने वने ।
कुमारं देवगर्भाभं अपश्यत्तद्द्विजात्मजम् ॥ १७ ॥
[2]कुलोद्धारकमाकांक्षन् सुताया वरमीप्सितम् ।
तरसा तं स जग्राह सुतार्थं प्रवरं वरम् ॥ १८ ॥
नीत्वा तं कारयामास विवाहं तु तया सह ।
रममाणस्तया सोऽपि म्लेच्छ[3]धर्मा चिरं स्थितः ॥ १९ ॥
चिरकालगते सोऽपि सावित्रीं न जहाति हि ।
म्लेच्छत्वमनुसम्प्राप्ता देवतानां समागमे ॥ २० ॥
ब्रह्माणं सा समागम्य सावित्री वाक्यमब्रवीत् ।
म्लेच्छधर्मरतः पापी द्विजजातीय एव सः ।
न मां त्यजति दुर्बुद्धिः किं करोमीति साम्प्रतम् ॥ २१ ॥
[4]तस्यास्तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
उवाच प्रहसन्वाक्यं सावित्रीं प्रति मा [5]शुचः ॥ २२ ॥
कुर्वाणा इह पापानि ये त्वां ध्यायन्ति [6]पावनि ।
उभे सन्ध्ये न तेषां हि विद्यते देवि पातकम् ॥ २३ ॥
त्रिः पठेदायतप्राणः प्राणायामेन यो द्विजः ।
[7]वर्धते स न लिप्येत पातकैरुपपातकैः ॥ २४ ॥

---

[1] मृगव्यामिति मातृकपाठः असाधुरिति भाति । 'मृगया'थवा 'मृगव्य'मिति युक्तः पाठः । [7] सुखसम्पद्भिस्समेधत इति ज्ञेयम् ।

---

[2] कुशेध्माहर (च) कुशेद्धयागत (ग) [3] धर्मोचितः (क) [4] तस्मात्तद्वचनं (क) [5] रिह्यः (ग) [6] पावनीम् (ग)

एव[1]मुक्त्वा तु सावित्री संसारार्णवतारिणी ।
दिव्यं विमानमारुह्य प्रययौ [2]ब्राह्मणान्तिकम् ॥ २५ ॥

तं प्रोवाचाथ सावित्री[3] ब्राह्मणं म्लेच्छधर्मिणम् ।
परितुष्टास्मि भद्रं ते विमानेन दिवं व्रज ।
ममैव ध्यानयोगेन सिद्धिं प्राप्तोऽस्यनुत्तमाम् ॥ २६ ॥

सूतः ।

ततो विमानमास्थाय गन्धर्वाप्सर[4]सावृतम् ।
नृत्यगीतप्रसङ्गेन मोदमानो दिवं ययौ ॥ २७ ॥

## गायत्रीप्रभाववर्णनम्

[5]एवं प्रभावा वरदा पवि[6]त्रा
गायत्रिसंज्ञामुनयो मया वः ।
ध्यायन्ति ये तां परमं प्रयान्ति
स्थानं परं चाप्रतिमं मुनीन्द्राः ॥ २८ ॥

घोररूपा महाकाया ये केचित्पाप[7]चारिणः ।
तां दृष्ट्वा प्रलयं यान्ति गरुड[8]स्येव पन्नगाः ॥ २९ ॥

गायत्रीं जपते यस्तु [9]त्रिकाले ब्राह्मणस्सदा ।
असत्प्रतिगृहीतापि स गच्छेत्परमां गतिम् ॥ ३० ॥

गायत्रीं जपते यस्तु [10]काल्यमुत्थाय [11]तु द्विजाः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ३१ ॥

---

[6] प्रतिपादिता कथितावेत्यर्थः । [10] काल्यं, उक्तकाले प्रातरिति वा ।

---

[1] मुक्त्वा (क) [2] व्र (च) [3] म्लेच्छया सहचारिणम् (ग) [4] वृतम् (ख च) नादितम् (ग)
[6] [illegible] (ग) [7] [illegible] (ग) [8] चैव (ग) [9] द्वे काले (ग) [11] च (च)

कामकामी लभेत्कामं गतिकाम[1]श्च सद्गतिम् ।
अकाम[2]स्तदवाप्नोति तद्विष्णोः परमं पदम् ॥ ३२ ॥

सूर्यादयो ग्रहास्सर्वे ये चान्ये [3]दानवा [4]ग्रहाः ।
कुत्सितास्सौम्यतां यान्ति नित्यं सन्ध्या[5]रतस्य तु ॥ ३३ ॥

## सन्ध्याकालनिरूपणम्

[6]अहोरात्रस्य यस्सन्धिः सूर्यनक्षत्रवर्जितः ।
सा [7]तु सन्ध्या समाख्याता मुनिभिस्तत्वदर्शिभिः ॥ ३३ ॥

रात्र्यन्तयामनाडी द्वे सन्ध्यादिः काल उच्यते ।
दर्शनाद्रविरेखायास्तद[8]न्तो मुनिभिः स्मृतः ॥ ३५ ॥

उदयात्प्राक्तनी सन्ध्या घटिकात्रयमिष्यते ।
सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ ३६ ॥

## सन्ध्यावन्दनविधिः

गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता ॥ ३७ ॥

प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः ।
प्राणायामत्रयं कृत्वा ध्यायेत्सन्ध्यामिति श्रुतिः ॥ ३८ ॥

आपोहिष्ठेत्यृचा कुर्यान्मार्जनन्तु कुशोदकैः ।
प्रणवेन तु संयुक्तं क्षिपेद्वारि पदे पदे ॥ ३९ ॥

---

[2] अकामस्समवाप्नोति इति पठनं साधुरिति भाति । [3] राहुकेत्वोः दानवग्रहत्वम् । परन्तु बहुवचनं असङ्गतं भवति । दानवादय इत्यपि साधीयान् ।
[6] सज्योतिष्याज्योतिषो दर्शनात् सन्ध्याकालः ।

---

[1] स्तु (न) [4] ग्रहाः (ग) [5] रतं द्विजस्य (स) [7] सु (ग) [8] न्तो (न)

करांभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठन् त्रिरूर्ध्वमथ [1]निक्षिपेत् ॥ ४० ॥

पूर्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि ।
गायत्रीमभ्यसेत्तावद्यावदादित्य[2]दर्शनम् ॥ ४१ ॥

## गायत्रीमहिमवर्णनम्

गायत्र्या न परं जप्यं गायत्र्या न परं तपः ।
गायत्र्या न परं ध्यानं गायत्र्या न परं हुतम् ॥ ४२ ॥

यो हुतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रि[3]तः ।
स ब्रह्म पर[4]मभ्येति वायुभूतस्स[5] मूर्तिमान् ॥ ४३ ॥

[6]सावित्रैरनघैर्मन्त्रैरुपस्थाय कृताञ्जलिः ।
आत्मपादौ तथा भूमिं सन्ध्याकालेऽभिवादयेत् ॥ ४४ ॥

यस्तु सन्ध्यामुपासीत श्रद्धया विधिवद्द्विजः ।
न तस्य किञ्चिदप्राप्यं त्रिषु लोकेषु विद्यते ॥ ४५ ॥

अनन्यचेतसः शान्ताः ब्राह्मणा वेदपारगाः ।
उपास्य विधिवत्सन्ध्यां प्राप्ताः पूर्वं परां गतिम् ॥ ४६ ॥

## सन्ध्याप्राशस्त्यम्

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥ ४७ ॥

---

[1] विक्षिपेदिति पाठोऽत्र युक्ततरः प्रतिभाति । [5] स्तु मूर्तिमान् इति युक्तं स्यात् । [6] सवितृदेवताकैर्मन्त्रैः । उदुत्यं जातवेदसमित्यादिभिः ।

---

[2] दर्शनात् (क ग घ च) [3] तम् (क ख) [4] मप्येति (क ख ग घ)

सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता ।
जीवमानो भवेच्छूद्रो मृतः [1]श्वा चाभिजायते ॥ ४८ ॥

[2]अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया ।
कालातीतं यदा कुर्यादकृतं तद्विदो विदुः ॥ ४९ ॥

दिवोदितानि कर्माणि प्रमादादकृता[3]न्यपि ।
शर्वर्याः प्रथमे यामे तानि कुर्या[4]दतन्द्रितः ॥ ५० ॥

## होमविधिनिरूपणम्

सन्ध्याकर्मावसाने तु स्वयं[5]होमो विधीयते ।
स्वयं होमे फलं यत्स्यात्तदन्येन न लभ्यते ॥ ५१ ॥

ऋत्विक्पुत्रोऽथवा पत्नी शिष्यो [6]वाऽथ सहोदरः ।
प्राप्यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि ।
[7]उन्मादे [8]प्रसवे [9]चार्ते कुर्वीतानुज्ञया विना ॥ ५२ ॥

[10]हस्तादूर्ध्वं रविर्यावद्भुवं हित्वा न गच्छति ।
तावद्धोमविधिः पुण्यो [11]नान्योऽभ्युदितहोमिनाम् ॥ ५३ ॥

प्रस्थधान्यं चतुःषष्टिराहुतेः परिकीर्तितम् ।
तिलानां तु तदर्धं स्यात्तदर्धं तु घृतस्य च ॥ ५४ ॥

---

[2] विहितकालात्पूर्वमेव कृतस्य कर्मणः विहितकाले पुनरपि करणेन फलं सिद्ध्यति । परन्तु कालातीतस्यास्य पुनरपि करणं नास्त्येव । कृतेऽपि व्यर्थम् । [7] उन्मादः मदावेशः मनसः अस्वाधीनता ।
[8] प्रसवसम्बन्धिन्यनानुकूल्ये इति । [10] चतुर्विंशत्यङ्गुलपरिमितं मानं हस्तः ।

---

[1] श्वानो (क ख घ च) [3] नि तु (क ख ग घ) [4] यथाक्रमम् (क ख ग घ)
[5] होमं समाचरेत् (ग) [6] वापि (ग) [9] चार्तो (च) [11] तान्योभ्युदित (क)
तान्येभ्युदित (ख)

व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते ।
स्वगृह्योक्तविधानेन होमं कुर्याद्यथाविधि ॥ ५५ ॥
हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
अभावे व्रीहियवयोः दध्ना वा पयसाऽपि वा ॥ ५६ ॥
तदभावे यवाग्वा वा उदकैर्जुहुया[1]च्च वा ।
अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोस्सदा ॥ ५७ ॥
दर्शेन [2]चार्धमासान्ते [3]पूर्णमासेन चैव हि ।
दर्शे चैव हि [4]सस्यान्ते नव[5]सस्ये तथैव च ॥ ५८ ॥
पशुनाऽऽ[6]ग्रयणस्यान्ते [7]वासन्ते सौमिकैर्मखैः ।
नानिष्ट्वा चाऽऽवसेद्विप्रः पशुना चाग्निमान्द्विजाः ॥ ५९ ॥
त्रयाणामिह वर्णानां गृहस्थाश्रमवासिनाम् ।
एष धर्मः परो नित्यमुपधर्मोऽन्य उच्यते ॥ ६० ॥
यस्य त्रैवार्षिकं [8]भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं [9]वापि विद्येत स सोमं पातुमर्हति ॥ ६१ ॥
[10]सर्वसंस्थाधिकारी स्यादाहिताग्निर्धने सति ।
आदध्यान्निर्धनोऽ[11]प्यग्निं नित्यं पापभयाद्द्विजः ॥ ६२ ॥

---

[6] आग्रयणं, व्रीह्याग्रहणं, यवाग्वाग्रयणं, श्यामाकाग्रयणमिति त्रिधा । तत्र तृतीयं अनित्यम् । अनाहिताग्नीनां आद्यद्विकं नित्यम् । आहिताग्नीनां द्वितीयं नित्यम् । शरद्याग्रयणं नाम पर्वणि स्यात्तदुच्यते इति शौनकः । नवान्नभक्षणात्पूर्वं क्रियमाणं कर्मैतत् । सौमिकाः सोमसंस्थाः यज्ञाः ।
[8] भक्तमन्नम् । [10] पाकयज्ञसंस्थानां हविर्यज्ञसंस्थानां सोमसंस्थानां च यज्ञानां

---

[1] त्तु (च) [2] नार्धं (च) [3] पुनर्मासेन (क ख घ) [4] तस्यान्ते (क ख घ)
[5] संख्ये (क ख घ) [6] (त्वयनस्यान्ते (ख घ च) त्वनयस्यान्ते (ग) [7] मासान्ते (क ख घ) [9] नापि (क) [11] ह्यग्निं (घ)

नास्तिक्यादथवाऽऽलस्याद्योऽग्निं नाऽऽधातुमिच्छति ।
यजेत वा न यज्ञेन स याति नरकान्बहून् ॥ ६३ ॥

## उपधर्मनिरूपणम्

[ यज्ञसमानफलवन्ति कर्माणि ]

मुनयः —

[1]बहूपकरणा यज्ञाः नानासंभारविस्तराः ।
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महामते ॥ ६४ ॥

यो दरिद्रैरपि विधिः शक्यः प्राप्तुं सदा भवेत्[2] ।
तुल्यो यज्ञफलैरेषः तन्नः प्रब्रूहि सूतज ॥ ६५ ॥

सूतः —

त्रीणि वर्षाणि यः प्राश्नेत्सततं चैकभोजनम् ।
धर्मपत्नीरतो नित्यमग्निष्टोमफलं लभेत् ॥ ६६ ॥

दिवसे यश्चतुर्थे तु प्राश्नीयादेकभोजनम् ।
सदा द्वादश[4]मासान्वै जुह्वानो जातवेदसम् ।

---

अधिकारी यजमानो भवितुमर्हतीति ज्ञेयम् ।

[1] एतदारभ्य ७६ तम श्लोकपर्यन्तं महाभारतात्समुद्धृतो भागः ।
अनुशासनपर्व १३–११९

[2] द्वितीयतृतीयदिवसभोजननियमः महाभारते पठ्यते ।
संग्रहकर्त्रा स भागः किमर्थं परित्यक्त इति विमर्शनीयम् । अथवा लेखकस्य प्रमादेन कदाचित् मातृकासु नोट्टङ्कितो भवेदिति चोहितुं शक्यते । महाभारते एवं पठ्यते —

द्वितीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥

x x x x x

अनसूयुरवैक्लव्यो द्वादशाब्दफलं लभेत्[1] ॥ ६७ ॥

दिवसे यस्तु षष्ठे वै मुनिः [2]प्राश्नीय भोजनम् ।
सदा त्रिषवणस्नायी ब्रह्मचार्यनसूयकः ।
गवामयनयज्ञस्य फलं प्राप्नोति मानवः ॥ ६८ ॥

दिवसे सप्तमे यस्तु प्राश्नीयादेकभोजनम् ।
स च द्वादशमासान्वै जुह्वानो जातवेदसम् ।
पुरुषो मरुतां लोकमिन्द्रलोकं च गच्छति ॥ ६९ ॥

यस्तु संवत्सरं दान्तो भुक्तेऽहन्यष्टमे नरः ।
देवकार्यपरो नित्यं जुह्वानो जातवेदसम् ।
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ ७० ॥

---

द्वे समाप्ते ततः पद्मे सोऽप्सरोभिर्वसेत्सह ।
तृतीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥

x x x x

सप्तर्षीणां सदा लोके सोऽप्सरोभिर्वसेत्सह ।
निवर्तनं च तत्रास्य त्रीणि पद्मानि वै विदुः ॥

[1] पञ्चमदिवसभोजननियमो महाभारते —

दिवसे पञ्चमे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥

x x x x

शराग्निपरिमाणं च तत्रासौ वसते सुखम् ।

---

[1] प्राशेत (ग च)

यस्तु संवत्सरं[1] भुङ्क्ते नवाहे वै गते गते ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
[2]अश्वमेधस्य यज्ञस्य फलं[3] प्राप्नोत्यनुत्तमम् ॥ ७१ ॥

यस्तु संवत्सरं भुङ्क्ते दशाहे वै [4]गतेऽग्निमान् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ ७२ ॥

एकादशे तु दिवसे यः प्राश्येत्प्राशनं हविः ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
[5]स्वयं प्रपन्नं पश्येत विमानं समुपस्थितम् ॥ ७३ ॥

दिवसे द्वादशे यस्तु[6] भुङ्क्ते हुत्वा हविर्भुजि ।
[7]सदा द्वादशमासान्वै सर्वमेधफलं लभेत् ॥ ७४ ॥

[8]त्रयोदशेऽग्निमान् भुङ्क्ते वाजपेयफलं लभेत् ।
चतुर्दशे तु यो भुङ्क्ते महामेधफलं लभेत् ॥ ७५ ॥

यस्तु पक्षे गते भुङ्क्ते [9]एकाहे विजितेन्द्रियः ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
राजसूयसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ॥ ७६ ॥

एष वस्तापसश्रेष्ठा यज्ञानां विधिरुत्तमः ।
व्याख्यातो ह्यानुपूर्वेण उपवासफलात्मकः ॥ ७७ ॥

---

5 स्वर्गस्तु तस्य नियतः । देवदूता अस्यार्थे विमानमानीय तं दिदृक्षन्ते इति ।
8 त्रयोदशचतुर्दशदिवसभोजननियमः 'ग' मातृकायां केवलं वर्तते ।

---

1 दान्तो (क ख घ च) 2 अश्वमेधसहस्रस्य (क) होमं × क्तोऽश्वमेधस्य (ग)
3 ति मानवः (क ग) 4 गते गते (क ख घ) 6 प्राप्ते वै प्राशनं हविः (क ख घ च)
7 तदा द्वादशमासेन (क) 9 एकभुक्तजितेन्द्रियः (ग)

दरिद्रैर्मनुजैर्विप्राः प्राप्यं यज्ञफलं यथा ।
तस्मात्सर्वप्रयत्नेन ब्राह्मणो हि विशेषतः ॥ ७८ ॥

आधायाग्निं विशुद्धात्मा यजेत परमेश्वरम् ।
एवं होमं च निर्वर्त्य ततो दानं समाचरेत् ॥ ७९ ॥

## दानलक्षण—महत्त्वनिरूपणम्

अर्थाना[1]मुदिते[2] पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं भुक्तिमुक्तिफलप्रदम् ॥ ८० ॥

न दानादधिकं किञ्चिद्विद्यते भुवनत्रये ।
दानेन [3]प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते ॥ ८१ ॥

दानेन शत्रुं जयति व्याधिर्दानेन नश्यति ।
दानेन लभ्यते विद्या दानेन युवतीजनः ॥ ८२ ॥

धर्मार्थकाममोक्षाणां कारणं परमं स्मृतम् ।
दानमेव न चैवान्यदिति देवोऽब्रवीद्रविः ॥ ८३ ॥

## दानपात्रकथनम्

आचार्यपितृ[4]देवार्थं स्वाध्यायार्थमथापि वा ।
ये ते वै साधवो[5] विप्रा ब्राह्मणा धर्मभिक्षवः ।
[6]अस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥ ८४ ॥

---

[1] उदिते सकालेऽभ्यागते पात्रे । [6] अस्वाः अकिञ्चनाः ।

---

[1] मुदये (ग) [3] लभते स्वर्गं (ग) [4] भार्यार्थं (क ख ग घ) [5] दृष्ट्वा (क ख ग च)

[विभिन्नदानलक्षणानि]

## नित्यदानम्

[1]नित्यं नैमित्तिकं काम्यं विमलं च चतुर्विधम् ।
अहन्यहनि यत्किञ्चिद्दीयते ब्राह्मणाय च ।
[2]अनुद्दिश्य फलं [3]यत्स्यात्सुवर्ण तत्तु नित्यकम् ॥ ८५ ॥

## नैमित्तिकदानम्

यत्तु पापोपशान्त्यर्थं दीयते विदुषां करे ।
नैमित्तिकं तदुद्दिश्य दानं सद्भिरनुत्तमम् ॥ ८६ ॥

## काम्यदानम्

[4]अपत्यविजयैश्वर्यस्वर्गार्थं [5]यत्प्रदीयते ।
दानं तत्काम्यमाख्यातं ऋषिभिर्धर्म[6]चिन्तकैः ॥ ८७ ॥

## विमलदानम्

ईश्वरार्पणबुद्ध्या च द्विजेभ्यो यत्प्रदीयते ।
दानं तद्विमलं प्रोक्तं केवलं मोक्षसाधनम् ॥ ८८ ॥

## नानाविधदानफलम्

[7]गत्वा यद्दीयते दानं [8]तदनन्तफलं स्मृतम् ।
सहस्रगुणमाहूय याचिते तु तदर्धकम् ॥ ८९ ॥

---

[1] चत्वारो दानभेदाः कर्त्रा स्वकीयपराशरस्मृतिव्याख्यायां षट्कर्मनिरूपण-प्रसङ्गे वर्णिताः—पराशरधर्मसंहिता पुटं १७१ ।

[7] दयितं मनसः इष्टभूतम् ।

---

[2] अनिर्दिश्य (ग) [3] यस्मा (ग) [5] अपदयविजय (ग) [5] यत्र (ख)
[6] वित्तमैः (क ख घ च) [8] भक्त्या (क ख घ च) [9] अनन्तं तत्फलं संमृतम् (क ख घ)

अभिगम्य तु यद्दानं यद्वा दानमयाचितम् ।
विद्यते सागरस्यान्तः तस्यान्तो नैव विद्यते ॥ ९० ॥

प्रतिग्रहेण शुद्धेन [1]ज्ञानेन क्रयविक्रयात् ।
यथाकामं द्विजातीनां धनं देयमुपागतम् ॥ ९१ ॥

[2]एकस्मिन्नप्यतिक्रान्ते दिने दानविवर्जिते ।
दस्युभिर्मुषितस्येव युक्तमाक्रन्दितुं भृशम् ॥ ९२ ॥

## दानपात्रवस्तुविवरणम्

दानं धर्मं निषेवेत पात्रमासाद्य शक्तितः ।
श्रोत्रियाय कुलीनाय विनीताय तपस्विने ।
ददाति वेदविदुषे यस्स भूयो न जायते ॥ ९३ ॥

स्वर्णदानं च गोदानं पृथिवीदानमेव च ।
विद्यादानं वस्त्रदानं [3]पानमन्नं तथैव च ।
एतानि वै पवित्राणि तारयन्ति परत्र हि ॥ ९४ ॥

यद्यदिष्टतमं लोके [4]यच्च वा [5]दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ९५ ॥

## दानफलश्रुतिः

एवं गृहस्थो युक्तात्मा सर्वदा दानतत्परः ।
सर्वपापमिनिर्मुक्तो ब्रह्मणः स्थानमाप्नुयात् ॥ ९६ ॥

---

[5] दयितं इष्टम् ।

---

[1] न्यायेन (ग) [2] एत (क) [3] अन्नदानं (क ख छ चं)
[4] यच्चास्ति (ग)

## दानानन्तरकृत्यम्

[1]दानं च कृत्वाऽऽलभनं[2] शुभानां
ततो बहिर्निर्गमनं प्रशस्तम् ।
दूर्वां च सर्पिर्दधि सोदकुम्भं
धेनुं सवत्सां वृषभं सुवर्णम् ॥ ९७ ॥

अश्वत्थवृक्षं च समालभेत
ततश्च कुर्यान्निजजातिधर्मम् ।
दिवसस्यार्धभागे तु कृत्यमेतदुदीरितम् ।[4] ॥ ९८ ॥

इति श्रीमत्पुराणसारे सदाचारनिर्णये सन्ध्यायज्ञदाननिरूपणं नाम
एकविंशोऽध्यायः ।

---

[2] आलभनं स्पर्शः गवादीनां पवित्राणाम् । [4] अर्धश्लोकद्वयमेतत् ।

---

[1] होमं (ग) [2] लभते (क ख घ) भवने (च)

## [1]द्वाविंशोऽध्यायः

[ सदाचारनिर्णयप्रकरणम् ]

### अह्नो द्वितीयभागकृत्यम्–वेदाभ्यासप्रकारः

सूतः —

द्वितीये तु तथा भागे वेदाभ्यासो विधीयते ।
वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ १ ॥

न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुः ।
पाठमात्रावसायी तु पङ्के गौरिव सीदति ॥ २ ॥

योऽधीत्य विधिवद्वेदान् वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥ ३ ॥

मन्त्रार्थज्ञो जपन् जुह्वन् तथैवाध्यापयन् द्विजः ।
स्वर्गलोकमवाप्नोति नरकन्तु विपर्यये ॥ ४ ॥

बुद्धिवृद्धिकराण्याशु [2]धर्म्याणि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत [3]निगमांश्चैव वैदिकान् ॥ ५ ॥

[4]समित्पुष्पकुशादीनां संग्रहस्समुदाहृतः ।

### अह्नस्तृतीयभागकृत्यम्

तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ॥ ६ ॥

---

[1] अस्याध्यायस्य विषयसंग्रहे माधवाचार्येण प्रायः स्वकीयपराशरस्मृतिव्याख्यानुसृता दृश्यते । [4] इयं पङ्क्तिः असम्बद्धेव दृश्यते । द्वितीये दिनभागे एवं कार्यमिति पूर्वेण वा योजनीयम् ।

[2] धर्म्याणि (क ख ग च) [3] निग (ग)

## पोष्यवर्गः

माता पिता गुरुर्भार्या प्रजा दीनस्समाश्रितः ।
[1]अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥ ७ ॥

## वर्णानां जीविकाकार्याणि

[2]यात्रामात्रप्रसिद्ध्यर्थं स्वकर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम् ॥ ८ ॥

[3]षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च परिग्रहः ॥ ९ ॥

शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः ।
आजीवनार्थं [4]धर्मस्तु दानमध्ययनं [5]यजिः ॥ १० ॥

## जीविकार्थं वृत्तीनां तारतम्यनिरूपणम्

ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ।
सत्यामृताभ्यामपि वा श्ववृत्या न कदाचन ॥ ११ ॥

[6]ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥ १२ ॥

---

[1] ज्ञातपूर्वो गृहागतोऽभ्यागतः । सातत्येन गमनशीलः अज्ञातपूर्वो गृहागतोऽतिथिः । अग्निः हविरादिभिः पोष्यः । [2] यात्रा, प्राणधारणम् ।

[3] षट्कर्माणि—अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट्कर्मण्यग्रजन्मनः ॥ मनुः १०–७५

[4] दानाध्ययनयागाः अनयोर्धर्मकराः भवन्तीत्यर्थः ।

[5] धान्यादीनामेकैकस्य कणस्योच्चयनमुञ्छः । मञ्जर्यादीनामुच्चयनं शिलः ।

---

धर्मस्य (क ख ग घ) [5] यत्रः (ग)

सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते ।
सेवा श्ववृत्तिर्विख्याता तस्मात्तां परिवर्जयेत् ॥ १३ ॥

षट्कर्मसहितो विप्रः कृषिकर्म[1] समाचरेत् ।
स्वयं कृष्टे तथा क्षेत्रे धान्यैश्च स्वयमार्जितैः ।
निर्वपेत्पञ्चयज्ञांस्तु क्रतुदीक्षां च [2]कारयेत् ॥ १४ ॥

भूमिं भित्त्वौषधिं छित्वा हत्वा कीटपिपीलिकाः ।
पुनन्ति [3]खलयज्ञेन कर्षका नात्र संशयः ॥ १५ ॥

यो न दद्याद्द्विजातिभ्यो राशिमूलमुपा[4]गतम् ।[5]
स चोरस्स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत् ॥ १६ ॥

क्षत्रियोऽपि कृषिं कुर्याद् द्विजान्देवांश्च पूजयेत् ।
वैश्यः शूद्रस्तथा कुर्यात्कृषिं वाणिज्यमेव च ।
चतुर्णामपि वर्णानामेष धर्मस्सनातनः ॥ १७ ॥

शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि वाऽप्यथ ।
विक्रयस्सर्वपण्यानां शूद्रधर्म उदाहृतः ॥ १८ ॥

---

[1] कारयेदिति पराशरस्मृतौ । तत्र स्वयं कृषिकर्म निषिद्धम् ।

[2] कारयेदिति स्वार्थे णिच् कुर्यादित्यर्थः । खलयज्ञदीक्षेयं स्यात् ।

[3] खलः धान्यखलो धान्यकुट्टनस्थानं तत्र धान्यमेव पापप्रतीकाररूपः खलयज्ञः । साद्यस्क्रेषु यज्ञेषु उत्तरवेदित्वेन विहितः खल इति । तस्य विवरणं वाचस्पत्ये द्रष्टव्यम् ।

[4] उपागतेभ्य इत्यर्थः कार्यः । पराशरस्मृतौ उपागतः इति वर्तते । सोऽपि युज्यते पाठः ।

---

[3] शिल (ख) हल (ग) [4] गते (ग)

## ब्राह्मणस्यापद्धर्मः

क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः ।
निस्तीर्य [1]तामथात्मानं [2]पावयित्वा न्यसेत्पथि ॥ १९ ॥

## अह्नश्चतुर्थभागकृत्यम्

चतुर्थे तु तथा भागे पुनः स्नानं समाचरेत् ।
प्रक्षिप्य[3] प्राञ्जलिं सम्यगुदुत्यं चित्रमित्यपि ॥ २० ॥

तच्चक्षुर्देव इति च हंसः शुचिषदित्यपि ।
एतज्जपेदूर्ध्वबाहुस्सूर्यं[4] पश्यन् समाहितः ॥ २१ ॥

गायत्र्या तु यथाशक्ति उपस्थाय दिवाकरम् ।
[5]नो चेज्जपं [6]पुनः कुर्या[7]त्सावित्र्याश्च विशेषतः ॥ २२ ॥

अपां समीपे नियतो[8]नैत्यकं विधिमास्थितः ।
सावित्रीमप्यधीयीत गत्वारण्यं समाहितः ॥ २३ ॥

प्रदक्षिणं समाहृत्य नमस्कृत्वोपविश्य च ।
दर्भेषु दर्भपाणिभ्यां संहताभ्यां कृताञ्जलिः ।
स्वाध्यायन्तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् ॥ २४ ॥

यं[9] यं क्रतुमधीयीत तस्य तस्याप्नुयात्फलम् ।
[10]स वित्तपूर्णपृथिवीदानस्य फलमश्नुते ॥ २५ ॥

---

[1] तामापदमिति ज्ञेयम् । पथि स्ववर्णोचिते कार्ये ।

[5] गायत्री एव मध्याह्ने सावित्री नाम्ना व्यपदिश्यते ।

[10] मातृकासु 'न वित्तपूर्णं' इति पठितम् । तच्च न सङ्गच्छते ।

---

[2] पार (क) पाय (ग) [3] चाञ्जलिं (क ख घ) [4] पश्येत् (च) [6] बुधः (स)

[7] सावित्र्या वै (क ख घ च) [8] नित्याख्यं (क ख घ च) [9] वा (ग)

ऋक्सामाथर्ववेदोक्तान् जपेन्मन्त्रान् यजूंषि च ।

## तर्पणविधिः

[1]जपित्वैवं ततः कुर्याद्देवर्षिपितृतर्पणम् । ॥ २६ ॥

विधिज्ञस्तर्पणं कुर्यान्न पात्रेषु कदाचन ।
पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् ।
जलपूर्णे[2] तथा गर्ते न [3]स्थले न च बर्हिषि[4] ॥ २७ ॥

विना रौप्यसुवर्णेन विना ताम्रजलैस्तथा ।
विना मन्त्रैश्च दर्भैश्च पितॄणां नोपतिष्ठते ॥ २८ ॥

[5]कृतोपवीती देवेभ्यो [6]निवीती च भवेत्ततः ।
मनुष्यांस्तर्पयेद्[7]भक्त्या ब्रह्मपुत्रानृषींस्तथा ॥ २९ ॥

[8]प्राचीनावीती पितृगणान् स्वेन तीर्थेन तर्पयेत् ।
कृत्वाऽनेन विधानेन देवर्षिपितृतर्पणम् ।
स्वशाखाविहितं कुर्यात्स्नानाङ्गं पृथगेव हि[9] ॥ ३० ॥

## तर्पणमहिमकथनम्

एवं यः सर्वभूतानि तर्पयेदन्वहं पितॄन् ।
स गच्छेत्परमं स्थानं तेजोमूर्ति[10]रनामयम् ॥ ३१ ॥

---

[4] पराशरमाधवीये हरीतोक्तिः न स्थलेतु विबर्हिषी'ति वर्तते । (पुटं ३१७)

[5] वामस्कन्धार्पितयज्ञसूत्र उपवीती । [6] कण्ठलंबितयज्ञसूत्रो निवीती ।

[8] श्राद्धादौ वामकरे बहिष्कृते सति दक्षिणस्कन्धार्पितयज्ञसूत्रः ।

[9] स्नानांगं तर्पणमित्यर्थः ।

---

[1] अपि (क ख घ च) [2] ऽथवा (ग) [3] स्थलेषु न बर्हिषु (ग) [7] च्छक्त्या (च)

[10] म (च)

देवताश्च मुनींश्चैव पितॄन्वै यो न तर्पयेत् ।
[1]देवादीनामृणी भूत्वा नरकं स व्रजत्यधः ॥ ३२ ॥

देवाश्च पितरश्चैव कांक्षन्ति सरितोऽञ्जलिम् ।
अदत्ते तु निराशास्ते प्रतियान्ति यथाऽऽगतम् ॥ ३३ ॥

ततोऽर्घ्यं भानवे दद्यात्तिलपुष्पजलान्वितम् ।
[2]उत्थाप्य मूर्ध्निपर्यन्तं हंसः शुचिपदुच्चरन् ॥ ३४ ॥

जलदेवान्नमस्कृत्य ततो गच्छेद्गृहं बुधः ।

## देवपूजाप्रकरणम्—तत्र विष्णुपूजाविधिः

कुर्वीत देवतापूजां जपयज्ञादनन्तरम् ॥ ३५ ॥

[3]स्वैर्मन्त्रैरर्चयेद्देवान् पुष्पैः पत्रैरथाम्बुभिः ।
ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम् ॥ ३६ ॥

अन्यांश्चाभिमतान्देवान् भक्त्या चाक्रोधनोऽत्वरः ।
स्थण्डिले [6]प्रतिमायां वा जलेऽग्नौ हृदयेऽपि वा ॥ ३७ ॥

पौरुषेणैव सूक्तेन ततो विष्णुं समर्चयेत् ।

## पुरुषसूक्तेनावाहनप्रकारः

[7]आद्ययाऽऽवाहयेद्देवं ऋचा तु पुरुषोत्तमम् ॥ ३८ ॥

द्वितीययाऽऽसनं दद्यात्पाद्यञ्चैव तृतीयया ।
चतुर्थ्याऽर्घ्यं प्रदातव्यं पञ्चम्याऽऽचमनीयकम् ॥ ३९ ॥

---

[1] देवर्षिपितृऋणेषु पूजया देवर्णनिवृत्तिः । [4] अत्र 'सहस्रशीर्ष पुरुषः सहस्राक्षः सहस्रपात्' इत्याद्याः पुरुषसूक्तर्चः पठितव्याः ।

---

[2] उद्घूल्य (च) [3] तै (च) [4] प्रतिमां कृत्वा (ग) [5] च (ग)

षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ।
यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च ॥ ४० ॥

दशम्या पुष्पदानं स्यादेकादश्या तु धूपकम् ।
द्वादश्या च तथा दीपं त्रयोदश्या चरुं तथा ॥ ४१ ॥

चतुर्दश्या नमस्कृत्य पञ्चदश्या प्रदक्षिणम् ।
षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् ॥ ४२ ॥

हुत्वा षोडशभिर्मन्त्रैः षोडशान्नस्य चाहुतीः ।
शेषं निवेदयेत्तस्मै दद्यादाचमनं ततः ॥ ४३ ॥

पुनः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि षोडश ।
तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमुत्तमम् ॥ ४४ ॥

ततः प्रदक्षिणं कृत्वा नारायणमनामयम् ।
शङ्खचक्रगदापाणिं ध्यात्वा विष्णुं समर्चयेत् ॥ ४५ ॥

एवं संपूज्य देवेशं विष्णुं ध्यात्वा[1] निरञ्जनम्[2] ।
ततो विलोकयेदर्कं हंसः शुचिषदित्यृचा ॥ ४६ ॥

इति विष्ण्वर्चनं ये तु प्रकुर्वन्ति नरा भुवि ।
ते यान्ति शाश्वतं विष्णोरनन्तं परमं पदम् ॥ ४७ ॥

न विष्ण्वा[2]राधनात्पुण्यं विद्यते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥ ४८ ॥

## शिवपूजाविधिः

अथ वा पूजयेच्छम्भुं श्रुतिमार्गानुसारतः ।

---

[2] सर्वदोषशून्यं बहुगुणपूर्णम् ।

---

[1] निरामयम् (क ख घ च) [2] राधनं (भ)

तस्मात्स्नानं पुनः कुर्याद्विधिवद्देहशुद्धये ॥ ४९ ॥

शुद्धं भस्म समादाय प्रणवेनाग्निहोत्रजम् ।
ईशानेन शिरोदेशं मुखं तत्पुरुषेण च ॥ ५० ॥

उरोदेशमघोरेण गुह्यं वामेन सुव्रताः ।
सद्येन पादं सर्वाङ्गं प्रणवेनाभिषेचयेत् ॥ ५१ ॥

ततः प्रक्षालयेत्पादं हस्तं वेदविदां वराः ।
मन्त्रस्नानं ततः कुर्यादापोहिष्ठादिभि[1]स्तथा ॥ ५२ ॥

एवं स्नात्वा यथान्यायं पूजास्थानं प्रविश्य च ।
प्राणायामत्रयं कुर्याद् ध्यायेद्देवं त्रियम्बकम् ।
पञ्चवक्त्रं दशभुजं शुद्धस्फटिकसन्निभम् ॥ ५३ ॥

शैवीं तनुः ततः कुर्या[2]द्दाहनप्लावनादिभिः ।
देहशुद्धिं च कृत्वैव सूत्रमन्त्रान्न्यसेत्क्रमात् ॥ ५४ ॥

सर्वत्र प्रणवेनैव पात्राणि च यथाक्रमम् ।
सेचयेदर्चनस्थानं गन्धचन्दनवारिणा । ॥ ५५ ॥

प्रोक्षणीं चार्घ्यपात्रं च पाद्यपात्रमनुक्रमात् ।
तथा ह्याचमनीयार्थं [3]कल्पितं पात्रमेव च ॥ ५६ ॥

स्थापयेद्विधिना धीमान्[4]ववुद्धय यथाविधि ।
प्रणवेन क्षिपे[5]त्तेषु द्रव्याण्यालोक्य बुद्धिमान् ॥ ५७ ॥

[6]अद्भिः संप्रोक्षयेत्पश्चाद्द्रव्याणि प्रणवेन तु ।
प्रोक्षणीपात्रसंस्थाभिरीशानाद्यैश्च पञ्चभिः ॥ ५८ ॥

---

[2] शिवाग्निना तनुं दग्ध्वा शक्तिसोमामृतेन यः । प्लावयेद्योगमार्गेण सोऽमृतत्वाय कल्पते । इति स्कान्दोक्तेः ।

---

[1] स्मदा (क ग घ) [3] तपितं (ग) [4] वरुध्य (क ख ग घ) [5] देषु (ग) [6] मृद्भिः (ग)

पार्श्वतो देवदेवस्य नन्दिनं च समर्चयेत् ।
स्कन्दं विनायकं देवीं लिङ्गशुद्धिं च कारयेत् ॥ ५९ ॥

कल्पयेदासनं पश्चात्पद्माख्यं प्रणवेन तु ।
सद्योजातं प्रपद्यामीत्यावाह्य परमेश्वरम् ॥ ६० ॥

वामदेवेन मन्त्रेण स्थापयेदासनं प्रति ।
सान्निध्यं रुद्रगायत्र्या अघोरेण निरुध्य च ॥ ६१ ॥

ईशानः सर्वविद्यानामिति मन्त्रेण पूजयेत् ।
पाद्यमाचमनीयं च विभोश्चार्घ्यं [1]प्रदापयेत् ॥ ६२ ॥

[2]स्नापयेद्विधिना रुद्रं गन्धचन्दनवारिणा ।
पञ्चगव्यविधानेन प्रणवेनाभिषेचयेत् ॥ ६३ ॥

पावमानेन मन्त्रेण [3]तच्छंयामीयकेन च ।
आघोरेण च रुद्रेण श्रीसूक्तेन तथैव च ॥ ६४ ॥

रथन्तरेण पुण्येन सूक्तेन पुरुषेण तु ।
पञ्चब्रह्मेति सूक्तेन केवलं प्रणवेन वा ॥ ६५ ॥

[4]स्नापयेद्देवदेवेशं सर्वपापप्रशान्तये
वस्त्रं शिवोपवीतं च तथा ह्याचमनीयकम् ॥ ६६ ॥

प्रणवेनैव मन्त्रेण पूजये[5]च्छिवमूर्धनि ।
उपचारैस्तु संपूज्य नमस्कुर्यात्प्रदक्षिणम् ॥ ६७ ॥

अर्घ्यं दत्वा तु पुष्पाणि पादयोश्च विकीर्य च ।
प्रणिपत्य च देवेशमात्मन्यारोपयेच्छिवम् ॥ ६८ ॥

---

[1] प्रदीयते (क ख घ च) [2] स्थाप (क ख घ च) [3] तथा वामी (ग) तथा चाश्मी(च)
[4] स्थाप (क ख) [5] लिङ्ग (क ख घ च)

एवं शिवार्चनपरः श्रुत्युक्तविधिना द्विजः ।
त्रिसप्तकुलसंयुक्तो लभते परमेश्वरम् ॥ ६९ ॥

इति श्रीमत्पुराणसारे सदाचारे देवार्चनविधानं नाम
द्वाविंशोऽध्यायः

## त्रयोविंशोऽध्यायः

[ सदाचारप्रकरणम् ]

### [1]पञ्चमहायज्ञनिरूपणम्

### पञ्चमहायज्ञानामावश्यकता

सूतः —

ततः पञ्चमहायज्ञान्कुर्यादहरह [2]र्द्विजाः ।
[3]न हापयेत तान्प्राज्ञः श्रूयन्ते [4]च [5]श्रुतावपि ॥ १ ॥

[6]पञ्च सूना गृहस्थस्य वर्तन्तेऽहरह[7]स्सदा ।
खण्डनी पेषणी चुल्ली [8]जलकुम्भ उपस्करः ॥ २ ॥

एतानि वाहयन्विप्रो बध्यते वै मुहुर्मुहुः ।
एतासां पावनार्थाय पञ्चयज्ञाः प्रकीर्तिताः ॥ ३ ॥

### [9]पञ्चमहायज्ञाकरणदोषनिरूपणे मतङ्गकथानकम्

अस्मिन्नर्थे पुरावृत्तमाख्यानं कथयामि वः ।
मतङ्गो नाम मतिमान् बभूव तपतां वरः ॥ ४ ॥

---

[6] सूना वधस्थानम् । खण्डनी मुसलोलूखलादिः । पेषणी गृहाश्मा, दृष-दुपलादिः । चुल्ली पाकाग्निस्थानम् । जलकुम्भ उदकस्थानं यत्र पाकाद्यर्थं उदकं प्रपूर्य स्थाप्यते । उपस्करो गृहवासोपकरणं सूर्पादिः ।

[9] इयं कथा वराहपुराणस्याष्टमेऽध्याये दृश्यते । अत्र तु संगृहीतो भागो वर्तते । 'च' मातृकायां एतादुपरि असौ अध्यायः नैव दृश्यते ।

---

[1] पञ्चमहायज्ञप्रकारः (घ) [2] द्विजः (ग घ च) [3] न जायते ततः (क) [4] हि (न)
[5] श्रुतावधि (क) [7] र्निशि (क) स्शशी (ख घ च) [8] उद (च)

पुत्रः प्रसन्ननामाभूत्तस्य शास्त्रविशारदः ।
प्रसन्नस्यापि भार्याभूत्तस्य चार्जुनकी शुभा ॥ ५ ॥
सा च श्वशुरयोर्भर्तुः शुश्रूषणपराऽभवत् ।
अथ कालेन महता सा कन्यार्जुनकी शुभा ॥ ६ ॥
उक्ता श्वश्र्वा तदा पुत्री जीवहन्तुस्त्वमीदृशी ।
न जानासि तपश्चर्तुं भर्तुराराधनं तथा ।[1] ॥ ७ ॥
एतद् ज्ञात्वा पिता तस्याः मतङ्गस्याऽऽश्रमं ययौ ।
मतङ्गश्चासनाद्यैस्तु पूजयित्वेदमब्रवीत् ॥ ८ ॥
किमागमनकृत्यं ते किं करोम्यतिथिक्रियाम् ।
पाद्यमाचमनीयं च विभोश्चार्घ्यं प्रदापये ॥ ९ ॥

धर्मव्याधः —

अहं व्याधो जीवघाती त्वं तु लोके ह्यहिंसकः ।
भोजनं किञ्चिदिच्छामि भोक्तुं [2]चैतन्यवर्जितम् ॥ १० ॥
कौतूहलेन तेनाहमागतो भवतो गृहम् ।
एवमुक्तो मतङ्गोऽथ शूर्पं गोधूमपूरितम् ॥ ११ ॥
अपरं व्रीहिभिः पूर्णं तस्मै शूर्पमुपाहरत् ।
दृष्ट्वा व्रीहीन् सगोधूमान् समुत्थाय वरासनात् ॥ १२ ॥
स्वगृहं गन्तुमारेभे मतङ्गेन निवारितः ।
किमर्थं गन्तुमारब्धं त्वया वद महामते ।

---

[1] एतन्मध्ये अर्जुनकी श्वश्र्वा भर्त्सिता स्वपितुर्गृहमागत्य तस्मै सर्वमकथयत् । ततः धर्मव्याधः मतङ्गाश्रमं गच्छतीति वराहपुराणे कथा वर्तते ।

[2] चैतन्यविरहितमिति, अत्र धान्यादिकानामपि चैतन्यापादनं प्रतिज्ञाय स एवमुक्तवान् ।

[1]याचयित्वा स्वयं चान्नं किमर्थं नाद्य भुज्यते ॥ १३ ॥

धर्मव्याधः —

अचैतन्यं यदि गृहे विद्यतेऽन्नं सुसंस्कृतम् ।
तदानीमस्मि भोक्ताहमेते खलु हि जन्तवः ॥ १४ ॥

ब्रह्मणा तु पुरा सृष्टा ओषध्यः पशुवीरुधः ।
यज्ञार्थं न तु भूतानां भक्ष्यमित्येव विश्रुतम् ॥ १५ ॥

दैव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ।
एते पञ्च महायज्ञाः ब्रह्मणा निर्मिताः पुरा । ॥ १६ ॥

ब्राह्मणानां हितार्थाय इतरेषां च तन्मुखात् ।
[2]एतत्कृत्वा जङ्गमानां स्थावराणां विशुध्यति ॥ १७ ॥

अन्यथा व्रीहयो ह्येते ह्येकैका मृगपक्षिणाम् ।
मन्तव्या दातृभोक्तॄणां यथा मासं तु तत्स्मृतम् ॥ १८ ॥

मया ते दुहिता दत्ता पुत्रार्थे देवरूपिणी ।
सा च त्वद्भार्यया चोक्ता दुहिता जीवघातिनः ॥ १९ ॥

तदर्थमागतोऽहन्ते गृहं प्रति समीक्षितुम् ।
आचारं देवपूजां च अतिथीनां च तर्पणम् ॥ २० ॥

एतेषामेकमप्यद्य पर्वण्यपि न दृश्यते ।
[3]त्वद्गृहेऽहन्तु वचसा धर्मव्याधोऽभवं वने । ॥ २१ ॥

---

[1] आर्षो णिच्प्रयोगः । याचित्वेति ज्ञेयम् । वराहपुराणे 'पाचयित्वे'ति दृश्यते । [2] पञ्चमहायज्ञान्निर्वर्त्येत्यर्थः ।

[3] त्वद्गृह इति पूर्वेणान्वयः ।

अहमेकं कुटुम्बार्थे [1]पक्त्वाऽऽरण्यं पशुं दिने ।
दत्त्वातिथिभ्यः संस्कृत्य पश्चाद्भुञ्जामि सानुगः ॥ २२ ॥

सहस्रशः कोटिशश्च जीवान् हत्वा दिने दिने ।
भुञ्जसे यज्ञरहितः स्वकुटुम्बेन संयुतः ॥ २३ ॥

अथेदृशस्य [2]पापस्य [3]पाकं भुङ्क्ते न [4]सत्पुमान् ।
तत्ते पापं महज्जातं प्रायश्चित्तं कुरुष्व ह ॥ २४ ॥

सूतः —

एवमुक्त्वा समुत्थाय श्वश्वा [5]नारीं तदा द्विजाः ।
मा स्नुषाभिस्समं श्वश्वा विश्वासो भवतु क्वचित् ॥ २५ ॥

मा च स्नुषा कदाचिद्वा श्वश्रूमिच्छेच्च [6]जीवतीम् ।
एवमुक्त्वा [7]गतो व्याधः स्वगृहं प्रति भूसुराः ॥ २६ ॥

तस्मात्पञ्चमहायज्ञान् न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥ २७ ॥

### पञ्चमहायज्ञलक्षणम्

ब्रह्मयज्ञो देवयज्ञः पितृयज्ञस्तथैव च ।
भूतयज्ञो नृयज्ञश्च पञ्चयज्ञाः प्रकीर्तिताः ॥ २८ ॥

[8]अध्यापनं ब्रह्मयज्ञः [9]पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भूतो नृयज्ञोऽतिथिभोजनम् ।

---

[2] पापिष्ठस्येत्यर्थः । [5] श्वश्रूमिति । [8] अध्यापनशब्देनाध्ययनमपि ग्राह्यम् । [9] भौत इति युक्तः पाठः ।

---

[1] हन्म्या (क ख घ) [3] कोऽहं भुङ्क्ते न सत्पुमान् (ग) [4] न यः पुमान् (क ख घ)
[6] जीवितामु (क ख घ) [7] ततो (क ख घ) [9] ऋषियज्ञस्तु (ग)

श्राद्धं वा पितृयज्ञः स्यात्पञ्चयज्ञः [1]प्रकीर्तिताः । ॥ २९ ॥

एकं तु भोजयेद्विप्रं पितृनुद्दिश्य [2]भक्तितः
नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञस्तु स स्मृतः । ॥ ३० ॥

देवानृषीन् पितृंश्चैव भूतानि ब्राह्मणांस्तथा
तर्पयित्वा विधानेन ब्रह्मभूयाय कल्पते । ॥ ३१ ॥

पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी
तस्य नायं न च परो लोको भवति धर्मतः । ॥ ३२ ॥

यस्याग्नौ हूयते नित्यं न, [3]यस्यान्नं न दीयते
[4]चान्द्रायणं चरेत्कृच्छ्रं तस्यान्नप्राशने द्विजः । ॥ ३३ ॥

## वैश्वदेवविधिः

वैवाहिकेऽग्नौ कुर्वीत [6]गृहकर्म यथाविधि ।
यदि स्याल्लौकिके पाकः ततोऽन्नं तत्र हूयते । ॥ ३४ ॥

यस्मिन्नग्नौ भवेत्पाकः वैश्वदेव[7]स्तु तत्र वै
जुहुयात्सर्पिषा[8]भ्यक्तं[9] तैलक्षारविवर्जितम् ।
दध्यक्तं पायसाक्तं वा तदभावेऽम्बुनापि वा ॥ ३५ ॥

---

[4] चन्द्रस्य अयनं प्राप्तिरिति व्युत्पत्या पिपीलिका-यव-यति शिशु नाम्ना चतुर्विधम् । 'एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत् । उपस्पृशंस्त्रिषवणं एतच्चान्द्रायणं स्मृतम्' ।

[5] कृन्तत्यनेन पापमिति सान्तपनदिकं व्रतम् ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिःकुशोदकम् ।
जग्ध्वा परेह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन् ॥ इत्युक्तेः ।

---

[1] मुनीश्वराः (क) [2] यत्नतः (ग) [3] यस्याग्रं (ग) [5] स्सम्यक् (क ख घ)
[6] प्रतिगृह्य (ग) [7] स्य (ग) [8] भक्तिं (क ख घ)

शाकं वा यदि वा [1]पत्रं मूलं वा यदि वा फलम् ।
सङ्कल्पयेद्यदाहारं तेनाग्नौ जुहुयादपि ॥ ३६ ॥

बहुशुष्केन्धने वह्नौ सुसमिद्धे विशेषतः ।
विधूमेऽलेलिहाने च होतव्यं कर्मसिद्धये ॥ ३७ ॥

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः ।
मन्दाग्नि[2]रामयावी च दरिद्रश्चोपजायते ॥ ३८ ॥

उद्धृत्य हवि[3]रासिच्य [4]हविष्येण घृतादिना ।
स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत् ॥ ३९ ॥

अमुष्मै नम इत्येव बलिदानं विधीयते ।
स्वशाखोक्तविधानेन मन्त्रेण बलिमाचरेत् ॥ ४० ॥

न जातु परशाखोक्तं बुधः कर्म समाचरेत् ।
एवं गृहबलिं कृत्वा गृहे गृहपतिः शुचिः ॥ ४१ ॥

[5]ततोऽन्यदन्नमादाय भूमिभागे शुचौ बुधः ।
आप्यायनाय भूतानां कुर्यादुत्सर्गमात्मनः ॥ ४२ ॥

देवा मनुष्या पशवो वयांसि
सिद्धास्सयक्षोरगदैत्यसङ्घाः ।
प्रेताः पिशाचास्तरवस्समस्ताः
ये चान्नमिच्छन्ति मया प्रदत्तम् ॥ ४३ ॥

पिपीलिकाः कीटपतङ्गकाश्च
बुभुक्षिताः कर्मनिबन्धबद्धाः[6] ।

---

[2] आमयोऽस्त्यस्येति, रोगीत्यर्थः । [5] एतत्प्रभृति आध्यायसमाप्त्यन्तं विष्णुपुराणास्थो विषयरसंगृहीत इति दृश्यते । विष्णुपुराणं अं ३, अ ११

---

[1] पात्रं (ग) [3] षा (ग) [4] हविः शेष (ग) [6] बन्धाः (ग)

प्रयान्तु ते तृप्तिमिदं मयान्नं
तेभ्यो विसृष्टं सुखिनो भवन्तु ॥ ४४ ॥

येषां न माता न पिता न बन्धुः
नैवान्नसिद्धिर्न तथान्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्
ते यान्तु तृप्तिं मुदिता भवन्तु ॥ ४५ ॥

इत्युच्चार्य ततो दद्यादन्नं श्रद्धासमन्वितम् ।
भुवि भूतोपकाराय गृही सर्वाश्रयो यतः ॥ ४६ ॥

श्वचण्डालविहङ्गानां भुवि दद्यात्ततो नरः ।
ये चान्ये पतिताः केचिदपात्राश्च [1]समागताः ॥ ४७ ॥

दत्वानेन विधानेन बलिं पश्चादुपस्पृशेत् ।
एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति
स गच्छति परस्थानं तेजोमूर्तिरनामयम् ॥ ४८ ॥

इति श्रीमत्पुराणसारे सदाचारपद्धतौ पञ्चमहायज्ञनिरूपणं नाम
त्रयोविंशोऽध्यायः ।

---

[1] समानः (ग)

## चतुर्विंशोऽध्यायः

[ सदाचारप्रकरणे मनुष्ययज्ञनिरूपणम् ]

### भिक्षाधिकारिणः

[1]सूतः —

[2]भिक्षां च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ।
अकल्पितान्नादुद्धृत्य सर्वव्यञ्जनसंयुताम् ॥ १ ॥

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणं चरेत् ॥ २ ॥

### भिक्षादानक्रमः

यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम् ।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ ३ ॥

अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्वा विसर्जयेत् ॥ ४ ॥

### भिक्षुकनामभाजां निरूपणम्

ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः[3] ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥ ५ ॥

---

[2] प्रायः अस्याध्यायस्य विषयाः विष्णुपुराणान्मार्कण्डेयपुराणाच्च संगृहीतास्सन्ति । विष्णुपुराणं अंशः ३, अध्यायः ११ । मार्कण्डेयपुराणम्—अध्यायः २६ ।

[3] गुरुपोषकः स्वाश्रितपित्रादिभरणशीलः ।

---

[1] अतिथिसन्तर्पणम् (च)

## भिक्षादीनां प्रमाणं भिक्षादानफलञ्च

ग्रासमात्रा भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणीकृत्य [1]हन्तकारो विधीयते ॥ ६ ॥

हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यान्नित्यं भिक्षुकाय बुध्येत परमेश्वरम् ॥ ७ ॥

सत्कृत्य भिक्षवे भिक्षां यः प्रयच्छति [2]मानवः ।
गोप्रदानसमं पुण्यं तस्याह भगवान्यमः ॥ ८ ॥

यः पात्रपूरणीं भिक्षां यतिभ्यस्संप्रयच्छति ।
विमुक्तस्सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् ॥ ९ ॥

## अतिथिनिरीक्षणकालः

आचम्य च ततः कृत्वा प्राज्ञो द्वारावलोकनम् ।
सम्यग्गोदोहमात्रं वै कालं तिष्ठेद्गृहाङ्गणे ॥ १० ॥

अतिथिग्रहणार्थाय तदूर्ध्वं वा यथेच्छया ।

## अतिथिलक्षणम्

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा । ॥ ११ ॥

यः प्राप्तोऽतिथिवेलायां सोऽतिथिः[3] स्वर्ग[4]संक्रमः ।
अज्ञातकुलनामानं तत्काले समुपस्थितम् ॥ १२ ॥

बुभुक्षुमागतं श्रान्तं [5]याचमानमकिञ्चनम् ।
ब्राह्मणं प्राहुरतिथिं संपूज्यः शक्तितो बुधैः ॥ १५ ॥

---

[4] हन्त इत्यस्य कारः करणं तन्नामकं भिक्षाप्रमाणम् ।
[5] स्वर्गं संक्रमत अनेनेति अतिथिविशेषणम् ।

---

[1] भिक्षुकः (क ख घ च) [2] संग्रहः (क ख घ च) [3] याचमनं न किञ्चन (क ख घ च)

न पृच्छेद्गोत्रचरणे स्वाध्यायं वापि पण्डिताः ।
शोभनाशोभनाकारं तं मन्येत प्रजापतिम् ॥ १६ ॥

धाता प्रजापतिः [1]शक्रो वह्नि[2]र्वसुगणो यमः ।
प्रविश्यातिथिमेते वै भुञ्जतेऽन्नं द्विजोत्तमाः ॥ १७ ॥

यः सायं वैश्वदेवान्ते वासाय गृहमागतः ।
देववत्पूजनीयोऽसौ [3]सूर्योढस्सोऽतिथिःस्मृतः ॥ १८ ॥

यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् ।
भुक्तवत्सु तु विप्रेषु कामं तमपि [4]भोजयेत् ॥ १९ ॥

वैश्यशूद्रावपि प्राप्तौ कुटुम्ब्यतिथिधर्मिणौ ।
भोजयेत्सह भृत्यैस्तावा[5]नृशस्यं प्रयोजयेत् ॥ २० ॥

## आतिथ्याकरणे दोषः

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स [6]तस्य दुष्कृतं दत्वा पुण्यमादाय गच्छति ॥ २१ ॥

## आतिथ्ये पुण्यविशेषः

स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।
नावाप्नोति तथा पुण्यं यथा त्वतिथिपूजनात् ॥ २२ ॥

---

[2] धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः इति वसुगणः । [3] सूर्येण ऊढः आहूत इति ।
[5] आनृशंस्यं दयालुता । [6] तस्मै इत्यर्थः ।

---

[1] शुक्रो (क ख घ च) शक्र इति पाठः विष्णुपुराणस्थः । [4] पूजयेत् (ग)
[6] तदा (क ख ग घ)

[1]अतिथिपूजनफलनिरूपणे कस्यचिद्द्विजस्य कथा

यथैवात्र पुरावृत्तं तत्सर्वं शृणुत द्विजाः ।
[2]उञ्छवृत्तिर्द्विजः कश्चित्कुरुक्षेत्रेऽवसत्पुरा ॥ २३ ॥

षष्ठान्नकालिको नित्यं सभार्यः ससुतस्नुषः ।
[3]तस्याथ वसतस्तस्य दुर्भिक्षमभवन्महत् ॥ २४ ॥

स तदा क्लिश्यमानस्तु सकुटुम्बो महातपाः ।
कदाचिदथ कृच्छ्रेण[4] यवप्रस्थं समार्जयत् ॥ २५ ॥

कृत्वा सक्तूंश्च विधिवच्चतुर्धा व्यभजत्तदा ।
ततः क्षुत्क्षामदेहानां तेषां तत्र बुभुक्षताम्
तन्मात्रगृहसाराणामतिथिः कश्चिदाययौ । ॥ २६ ॥

तं पूजयित्वा विधिवत्स विप्रः प्रीतमानसः
प्रोवाच मधुरं वाक्यं मनःप्रह्लादकारकम् । ॥ २७ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे चिन्तयतो भवान्

---

[1] इयं कथा महाभारते दृश्यते। अश्वमेधयागे धर्मराजेन सर्वस्वदाने कृतेऽपि तद्दानं ब्राह्मणकृतसक्तुदानसमं न भवेदिति विशिष्टकालकृतदानप्रशंसनं तत्र कृतम् । महाभारतम्—आश्वमेधिकपर्व अध्यायः—९३ । जैमिनीयाश्वमेधपर्वणि ६६ तमेऽध्याये इयमेव कथा दृश्यते ।

[2] उञ्छः कणश आदानमिति नियमः ।

[4] यवप्रस्थः यवानां प्रस्थपरिमाणम् । तच्च — चतुःकुडवरूपम् । आढकचतुर्थांशः । द्विशरावपरिमाणं वा कुडवश्च सामान्यतोऽञ्जलिपरिमाणः ।

---

[3] इतः द्वे पंक्ती 'ग' मातृकायां न स्तः । तयोः स्थाने 'दुर्भिक्षोऽभूत्तदा तस्य सकुटुम्बः सुदुःखितः' इति वर्तते । [4] देहं विप्रः समार्जयन् (क) देयं विप्रः समार्जयत् (ख) ते यवप्रस्थमार्जयम् (ग च)

संप्राप्तोऽतिथिवेलायां [1]घर्मात्तस्येव तोयदः । ॥ २८ ॥
स्वागतं ते द्विजश्रेष्ठ पुनश्च स्वागतं तु ते
[2]सन्निधीक्रियतां ब्रह्मन् उटजोऽयं प्रविश्यताम् । ॥ २९ ॥
स गृही गृहिणां धन्यो येषु मार्गश्रमातुराः
स्वगृहेष्विव विश्वस्ताः विश्राम्यन्ति भवादृशाः । ॥ ३० ॥
अहोऽतीव सभाग्यास्ते [3]निःस्वाश्च गृहमेधिनः
येषामशून्या दिवसा गच्छन्त्यतिथिपूजया । ॥ ३१ ॥
[4]तृणानि भूमिरुदकं [5]वाक् चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ३२ ॥

सूतः —

एवमुक्त्वा स धर्मात्मा तमभ्यर्च्य यथाविधि ।
[6]स्वभागं प्रददौ हृष्टो न च तृप्यति तेन सः । ॥ ३३ ॥
ततोऽस्य भार्या क्षुत् [7]क्षामा [8]वृद्धा म्लाना तपस्विनी[9] ।
[10]त्वगस्थिभूषा वेपन्ती भर्तारमिदमब्रवीत् ॥ ३४ ॥
किं विषण्णोऽसि धर्मज्ञ विद्यमानेषु सक्तुषु ।
तुष्ट्यर्थमतिथेरस्य मद्भागोऽपि प्रदीयताम् ॥ ३५ ॥

---

[3] निःस्वाः दानादिना व्यपगतधनाः । [4] तृणशब्दः तृणादिनिर्मितमासनं लक्षयति । [9] तपस्विनी अनुकम्पार्हा । दयनीयेति ।
[10] त्वक्च अस्थीनि च भूषा भूषणं यस्याः सा । एतदस्याः दरिद्रावस्थां द्योतयति । अथवा त्वगेव अस्थ्नः भूषा इति सर्वथा निर्मांसा इति ।

---

[1] तस्मात्तस्यैव तोयदः (क) [2] सनाथी (च) [5] चतुर्थी सूनृतं वचः (च)
[6] स भागं (क ख घ) [7] श्रान्ता (च) [8] वृथा [10] त (क)

ब्राह्मणः —

[1]अपि कीटपतङ्गानां मृगादीनां च शोभने ।
स्त्रियो रक्ष्याश्च पोष्याश्च त्वं मैवं वक्तुमर्हसि ॥ ३६ ॥

धर्मकामार्थकार्याणि शुश्रूषा कुलसन्ततिः ।
दारेष्वधीनो स्वर्गश्च पितॄणामात्मनस्तथा ॥ ३७ ॥

[2]ब्राह्मणी —

सहधर्मचरौ धात्रा सृष्टौ भार्यापती द्विज ।
तस्मान्महति धर्मे मां न बाह्यां कर्तुमर्हसि ॥ ३८ ॥

न मया त्वय्यभुक्ते तु भुक्तं पूर्वं कदाचन ।
व्रतमेतद्विदित्वा हि मे सक्तुं दातुमर्हसि ॥ ३९ ॥

एवमुक्तो गृहीत्वाऽत्र सक्तुं सोऽतिथये ददौ ।
भक्षयित्वाऽतिथिस्तांश्च नैव तृप्तोऽभवत्तदा ॥ ४० ॥

ततः पुत्रो विदित्वैतत्पितरं प्राह धर्मवित् ।
तृप्त्यर्थमतिथेस्तात मद्भागोऽपि प्रदीयताम् ॥ ४१ ॥

कुटुम्बं पीडयित्वाऽपि त्यक्त्वा लोभं विमत्सरः ।
ददाति योऽतिथिभ्योऽन्नं स प्राप्नोति परां गतिम् ॥ ४२ ॥

पिता —

अपि वर्षशतायुस्त्वं बाल एव मतो मम ।
बालानां क्षुद्बलिष्ठा च तस्मात्त्वं भुंक्ष्व पुत्रक ॥ ४३ ॥

---

[1] तिर्यग्जन्तुभिरपि स्त्रियो रक्ष्याः पोष्याश्च किन्तु मानवेनेति ।
[2] मत्संबन्धी सक्तुः ।

---

[2] पत्नी (ग)

पुत्रः —

पूर्वे वयसि पुष्णाति पिता पुत्रमिति श्रुतिः ।
उत्तरे पितरं पुत्रस्तस्मात्सक्तून्प्रयच्छ मे ॥ ४४ ॥

इत्युक्तस्स गृहीत्वा तान् सक्तूनतिथये ददौ ।
भुक्त्वा तानपि सर्वांश्च न स तृप्तिमवाप्तवान् ॥ ४५ ॥

ततः प्रीता स्नुषा प्राह श्वशुरं विनयान्विता ।
मद्भागोऽपि महाप्राज्ञ द्विजायास्मै प्रदीयताम् ॥ ४६ ॥

श्वशुरः —

योषिद्बाला स्नुषा साध्वी नियतव्रतकर्शिता ।
कुलसन्ततिहेतुश्च रक्ष्या त्वं सर्वदैव हि ॥ ४७ ॥

[1]भृत्यानामुपरोधेन यो धर्मं कुरुते शुभे ।
न तं सन्तः प्रशंसन्ति नृशंसं तस्य चेष्टितम् ॥ ४८ ॥

स्नुषा —

भृत्या यत्रोपरुध्यन्ते तत्रायं विहितो विधिः ।
मन्यन्तेऽनुग्रहं यत्र तत्र दोषो न कश्चन ॥ ४९ ॥

मम त्वं स्वामिनः स्वामी देवतायाश्च देवता ।
गुरोर्गरीयांस्त्वं मे वै तन्मैवं वक्तुमर्हसि ॥ ५० ॥

अनुकम्प्येति सञ्चिन्त्य दृढभक्तेति वा पुनः ।
प्रयच्छ भगवन् सक्तून् दीनामनुगृहाण माम् ॥ ५१ ॥

ततस्तानपि सक्तूंश्च गृहीत्वाऽतिथये ददौ ।
बुभुजे चातिथिः सर्वांश्च चासौ चुक्षुभे द्विजः ॥ ५२ ॥

---

[1] अत्र भृत्याः नाम भरणार्हाः इति । स्नुषा च तदधिकैर्वयोभिः सर्वथा रक्ष्या । तस्याः उपरोधेन धर्मोऽप्यधर्मो भवति ।

अनुग्रहं मन्यमानः सकुटुम्बो महातपाः ।
धर्म्ये वर्त्मनि युक्तात्मा न चचालाचलोपमः । ॥ ५३ ॥

तं शुद्धभावं विज्ञाय ततः प्रोवाच स द्विजः ।
धर्मोऽहं द्विजरूपेण त्वां जिज्ञासुरिहागतः । ॥ ५४ ॥

यस्मात्तु शुद्धभावेन दत्तमुञ्छार्जितं त्वया ।
कृच्छ्रं प्राप्तेन सर्वस्वं तस्मात्स्वर्गमितो व्रज ॥ ५५ ॥

स्वर्गस्थास्त्रिदशास्सर्वे दिव्या ब्रह्मर्षयस्तथा ।
स्तुवन्ति दानमेतत्ते विस्मयाविष्टचेतसः ॥ ५६ ॥

पश्य दिव्यं विमानं वै तव प्राप्तमिदं द्विज ।
स्वर्गं गच्छ तदारुह्य सभार्यः ससुतस्नुषः ॥ ५७ ॥

इत्युक्तः परितुष्टेन साक्षाद्धर्मेण स द्विजः ।
दिव्यं विमानमारुह्य सकुटुम्बो दिवं ययौ ॥ ५८ ॥

तस्मात्पूज्यतमो नित्यमतिथिः सर्वदा बुधैः ।
अतिथिं पूजयेद्यस्तु श्रान्तं [1]चादृष्टमागतम् ।
सवृषं गोशतं तेन दत्तं स्यादिति मे मतिः ॥ ५९ ॥

इति श्रीमत्पुराणसारे सदाचारनिर्णये अतिथिपूजाप्रशंसा नाम चतुर्विंशोऽध्यायः ।

---

[1] आगतं प्राप्तमदृष्टमिव स्थितं, अथवा पूर्वमदृष्टं नूतनमपरिचितमिति वा ।

## पञ्चविंशोऽध्यायः

[सदाचारनिर्णयप्रकरणम्]

### दिवसकृत्येषु भोजनविधिः

[1]ततः सुवासिनीदुःखिगर्भिणीवृद्धबालकान् ।
भोजयेत्[2]संस्कृतान्नेन प्रथमं तु परं गृही ॥ १ ॥

भुक्तवत्सु च विप्रेषु एतेष्वन्येषु चैव हि ।
भुञ्जीयातां ततः पश्चा[3]द्विघसं तं तु दम्पती ॥ २ ॥

अभुक्तवत्सु चैतेषु भुञ्जन् भुङ्क्ते स किल्बिषम् ।
मृतश्च गत्वा नरकं श्लेष्मभुग्जायते नरः ॥ ३ ॥

[4]मृष्टमन्नं स्वयं भुक्त्वा पश्चात्तदशनं नरः ।
ब्राह्मणान्भोजयेन्मूर्खो नरके चिरमावसेत्[5] ॥ ४ ॥

पङ्क्तौ सह स्थितानां[6]न्तु भोजनादि समं स्मृतम् ।
विद्यातपोऽधिकानान्तु पृथगासनमुच्यते ॥ ५ ॥

यद्येकपङ्क्तौ विषमं ददाति
स्नेहाद्भयाद्वा यदि वाऽर्थहेतोः ।
वेदेषु दृष्टामृषिभिश्च गीतां
तां ब्रह्महत्यां मुनयो वदन्ति ॥ ६ ॥

---

[1] एतदध्यायगतविषयाः प्रायः विष्णुपुराणमनुस्मृतिपराशरमाधवीयेभ्यः संगृहीताः । वि.पु. अंश ३, अध्यायः ११, मनु. अध्याय ३. प.मा. आचारकाण्डः । [2] वैश्वदेवाद्यनन्तरमेव । अन्नं च तदा संस्कृतं भवति । [3] विघसः भुक्तावशिष्टम् । [4] मृष्टं निर्मलम् । [5] एकः स्वादु न भुञ्जीत इति नियमात् । भुक्ते सति अन्यस्य कृते तदुच्छिष्टं भवति ।

---

1 मृष्टमन्नं च यदभुक्तो (क ख ग) [6] भुभोजनादि (क घ)

[1]नाऽऽत्मार्थं पाचयेदन्नं नाऽऽत्मार्थं [2]घातयेत्पशून् ।
ब्राह्मणार्थे गवार्थे च पचमानो न लिप्यते ॥ ७ ॥

उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वाग्यतः ।
आहारं तु रहः कुर्याद्विहारं चैव सर्वदा ।
[3]गुप्ताभ्यां लक्ष्मियुक्तः स्यात्प्रकाशे हीयते श्रिया ॥ ८ ॥

## भोजनोपक्रमे मण्डलकरणम्

आदित्या वसवो रुद्रा ब्रह्मा चैव पितामहः ।
मण्डलान्युपजीवन्ति तस्मात्कुर्वीत मण्डलम् ॥ ९ ॥

चतुष्कोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु ।
मण्डलाकृति वैश्यस्य [4]शूद्रस्याभ्युक्षणं स्मृतम् ।
[5]पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमास्थितः ॥ १० ॥

## भोजने पात्रनियमः

प्रशस्तः शुद्धपात्रेषु भुञ्जीताऽकुपितो द्विजाः ।
नैकवासास्तथाऽश्नीयाद्भिन्नपात्रेण वा पुनः ॥ ११ ॥

एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ।
चत्वारि तस्य वर्धन्ति [6]आयुः प्रज्ञा [7]यशो धनम् ॥ १२ ॥

भूमौ पात्रं प्रतिष्ठाप्य यो भुङ्क्ते [8]कांस्यभाजने ।
भोजने भोजने नित्यं त्रिरात्रफलमश्नुते ॥ १३ ॥

---

[3] आहारविहाराभ्यामिति ज्ञेयम् । [4] बोधायनस्तु शूद्रस्यार्धचन्द्रकमण्डलं निर्दिशति । [5] हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता—व्यासः ।
[6] आत्मनेपदं पराशरस्मृतौ विद्यते । [7] पराशरमाधवीये पैठीनसिवाक्ये यशो-बलं इति पठ्यते ।

---

[1] नास्मार्कं (च) [2] पाचयेत् (च) [8] वाग्यतः शुचिः (ख ग च)

न्यस्तपात्रस्तु भुञ्जीत पञ्च ग्रासान्मुनीश्वराः ।
शेषमुद्धृत्य भोक्तव्यं श्रूयतां तत्त्वकारणम् ॥ १४ ॥

[1]विप्रुषां दोषसंस्पर्शः पादचेलरजस्तथा ।
सुखेन भुङ्क्ते विप्रोऽपि पित्रर्थं तु [2]विलिप्यते ।
अनिन्दन्भक्षयेन्नित्यं वाग्यतोऽन्नमकुत्सयन् ॥ १५ ॥

## हस्तपरिवेषणनिषिद्धवस्तूनि

[3]लवणं व्यञ्जनं चैव घृतं तैलं तथैव च ।
लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत् ।
दर्व्या देयं [4]घृतानान्तु समस्तव्यञ्जनानि च ॥ १६ ॥

## भोजनादावन्नोद्धारविचारः

भोजनात्किञ्चिदन्नाग्र्यं धर्मराजाय वै बलिम् ।
दत्वा च चित्रगुप्ताय प्रेतेभ्यश्चेदमुच्चरेत् ॥ १७ ॥

यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
प्रेतानां तृप्तयेऽक्षय्यमिदमस्तु यथासुखम् ॥ १९ ॥

## भोजनोपक्रमः

[5]स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्राश्च वायवः ।
जिह्वया च ग्रसेदन्नं दशनेन [6]न संस्पृशेत् ॥ १९ ॥

---

[1] विप्रुषो जलबिन्दवः । पादयोश्चेलस्येति ज्ञेयम् । भूमावेव भोजनं न शास्त्रविहितमिति अनेन । ज्ञायते । [5] प्राणाहुतयः सर्वथा दशनस्पृष्टा न भवेयुः ।

---

[2] न लिप्यते (ग) [3] लवणं व्यञ्जनोपेतं (च) [4] घृतान्नं तु (ग)
[6] च संस्पृशेत् (क ख घ)

अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकास्ततः ॥ २० ॥

[1]प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कटुकाशनम् ।
अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥ २१ ॥

आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम् ॥ २२ ॥

## अभोज्यान्ननिरूपणम्

नाद्याच्छास्त्र[2]विरुद्धं तु [3]भोज्यं भोज्यादिकं [4]द्विजः ।
अभोज्यं प्राहुराहारं शुष्कं पर्युषितं तथा ॥ २३ ॥
अन्यत्र मधुसर्पिर्भ्यां भक्ष्येभ्यः सर्पिषा गुडात् ।
जातितो गर्हितं चैव तथैवाऽऽश्रयगर्हितम् ।
अभोज्यं तद्द्विजातीनामन्नमाश्रयगर्हितम् ॥ २४ ॥

## निःशेषं खाद्यवस्तूनि

भोजनन्तु न निःशेषं कुर्यात्प्राज्ञः [5]कथञ्चन ।
अन्यत्र दधिसक्त्वाज्य[6]पललक्षीरमध्वपः ॥ २५

## भोजनकालनिरूपणम्

सायं प्रातर्द्विजातीनां अशनं स्मृतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ २६ ॥

---

[2] शास्त्रविरुद्धं मांसपलाण्ड्वादिकमिति ज्ञेयम् ।

---

[1] क्षाद्रवं (क ख ग च) [2] निषिद्धन्तु (ग) [3] भोज्या (च) [4] द्विजाः (च)
[5] कदाचन (ख च) [6] 'फलं क्षीरं च मध्वपः' इति पराशरमाधवीये पुलस्त्यः ।
........ मद्यपः (क ख ग घ)

## भोजनानन्तरकृत्यम्

शोधयेन्मुखहस्तं च [1]महद्भिर्घर्षणैरपि ।
[2](आचम्य तु ततः कार्यं दन्तकाष्ठस्य भक्षणम्) ॥ २७ ॥

आचम्य पात्रमुत्सार्य किञ्चिदार्द्रेण पाणिना ।
मुख्यान्प्राणान्समाहूय नाभिं पाणितलेन च ॥ २८ ॥

स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः ।
अभीष्टदेवतानान्तु कुर्वीत स्मरणं तथा ॥ २९ ॥

भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलभक्षणम् ।
भुक्तो[3]पविष्टो विश्रान्तो ब्रह्म किञ्चिद्विचारयेत् ।
[4]सच्छास्त्रादिविनोदेन सन्मार्गादविरोधिना ॥ ३० ॥

## दिवसस्य षष्ठसप्तमभागकृत्यम्

[5]इतिहासपुराणानां षष्ठसप्तमकौ नयेत् ॥ ३१ ॥

## दिवसस्याष्टमभागकृत्यम्

अष्टमे [6]लोकयात्रा हि बहिः सन्ध्या ततः पुनः ॥ ३२ ॥

## सायं संध्यानिरूपणम्

सूर्येऽस्तशिखरं प्राप्ते पादशौचक्रियान्वितः ।
बहिः संध्यामुपासीत कुशपाणिः समाहितः ॥ ३३ ॥

---

[2] अस्याः पङ्क्तेः प्रसक्तिरत्र न दृश्यते । [4] सच्छास्त्रादिविरोधेनेति मातृका पाठः असाधुः । विष्णुपुराणे .... .... .... विनोदेन इति युक्तं पठ्यते । वि.पु. अंश ३, अध्याय ११. श्लो. ९९ ।

[5] पुराणानां पठनेन इति ज्ञेयम् । [6] लोकयात्रा सामाजिको व्यवहारः लोको जनः तद्धिताचरणार्थं कोऽपि व्यवहार इति ।

---

[1] मृद्भिर्घर्षणैरपि (ग) [3] पविष्टो (क)

प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि ।
तां दिव्यां पश्चिमां सन्ध्यां अर्धास्तमितभास्कराम् ॥ ३४ ॥

अनृतं मद्यगन्धं च दिवास्वापं च मैथुनम् ।
पुनाति वृषलस्यान्नं बहिः [1]सन्ध्याभ्युपासिता ।[2] ॥ ३५ ॥

गृहे त्वेकगुणा सन्ध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिका नद्यां अनन्ता विष्णुसन्निधौ ॥ ३६ ॥

प्राणानायम्य सम्प्रोक्ष्य तृचेनाब्दैवतेन [3]तु ।
सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् ॥ ३७ ॥

[4]पराङ्मुखोपविष्टस्तु वाग्यतस्सुसमाहितः ।
प्रणवव्याहृतियुतां गायत्रीं च [5]जपेद्बुधः ॥ ३८ ॥

अक्षसूत्रं समादाय सम्यगातारकोदयात् ।
वारुणीभिस्तथा नित्यमुपस्पृश्य प्रदक्षिणम् ॥ ३९ ॥

कुर्वन्दिशो नमस्कुर्याद्दिगीशांश्च पृथक्पृथक् ।
उपास्य पश्चिमां सन्ध्यां हुत्वाग्नीन् [6]स्वानुपास्य च ॥ ४० ॥

## सायं भोजनविधिः

भृत्यैः परिवृतो भुक्त्वा[7] नाऽतितृप्तोऽथ संविशेत् ।
सायंप्रातर्वैश्वदेवं[8] कर्तव्यं बलिकर्म च ॥ ४१ ॥

---

[2] यद्यपि कृते फलं नास्ति अकृते प्रत्यवाय इति संध्या फलरहितेति श्रूयते तथापि अनेनैव वाक्येन ज्ञायते यत्सायंसंध्यायाः विशिष्टं फलं तच्च पापापनोदकमस्तीति । [6] तानुपास्येति याज्ञवल्क्यवचनमेव सध्विति भाति ।

[7] रात्रौ मिताहारः आरोग्यवृद्धिं तनोति । [8] वैश्वदेवं कृत्वा बलिकर्म च कर्तव्यमिति अन्वयः ।

---

[1] सन्ध्यामुपासितः (क ख घ ङ) [3] च (ङं) [4] प्राङ्मुख[illegible] (ग) [5] जप[illegible] (ग)

अनश्नताऽपि सततं अन्यथा किल्बिषी भवेत् ।
अतिथिं चागतं तत्र स्वशक्त्या पूजयेद्बुधः ।
कृतपादादिशौचश्च [1]कृत्वा सायं ततो गृही ॥ ४२ ॥

## शयनविधिः

गच्छेच्छय्यामस्फुटितां[2] ततो दारुमयीं [3]द्विजः ।
[4]न समानां न वै भग्नां नासमां मलिनां तथा ॥ ४३ ॥
न तु जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम् ।
स्वगृहे प्राक्छिराश्शेते [5]श्वशुरे दक्षिणाशिराः ।
प्रत्यक्छिराः प्रवासे तु न कदाचिदुदक्छिराः ॥ ४४ ॥

## शयनस्यादौ सुखशायिनां देवानां स्मरणम्

[6]रात्रिसूक्तं जपेत्स्मृत्वा देवांश्च सुखशायिनः ।
नमस्कृत्वा स्मरेद्विष्णुं [7]समाधिस्थो स्वपेन्निशि ॥ ४५ ॥
[8]अगस्त्यो माधवश्चैव मुचुकुन्दो महाबलः ।

---

[1] अत्र कृत्वेति स्थाने भुक्त्वेति विष्णुपुराणपाठः साधुः ।

[2] अत्रुटितामित्यर्थः । [4] समाना च स्वशरीरपर्याप्तैव । [5] श्वशुरगृह इति ज्ञेयम् । [6] रात्रिसूक्तं च रात्री व्यख्यदायती पुरुत्रा देव्य १ क्षभिः इत्यारभ्य रात्रि स्तोमं न जिग्युषे इत्यन्तम् । ऋग्वेदः १०-१२७

[7] समाधिस्थमिति मातृकापाठः न युज्यते । अतः समाधिस्थ इति इति विष्णुपुराणस्थः पाठः स्वीकृतः । [8] अगस्त्यं माधवं चैवेति मातृकापाठस्थाने गालवस्मृतेः प्रथमाविभक्त्यन्तः पाठः स्वीकृतः । मातृकासु आश्नीक इति दृश्यते । आस्तीक इति गालवस्मृतिपाठः ।

---

[3] द्विजाः (ग)

कपिलो मुनिरस्तीकः पञ्चैते सुखशायिनः ॥ ४६ ॥

माङ्गल्यं पूर्णकलशं शिरःस्थाने निधापयेत् ।
वैदिकैर्गारुडैर्मन्त्रैः रक्षां कृत्वा [1]स्वपेत्ततः ॥ ४७ ॥

## ऋतुगमनं तत्फलश्च

ऋतुकालाभिगामी स्यात्स्वदारनिरतस्सदा ।
[2]पर्ववर्जं व्रजेदेनां तद्व्रतो रतिकाम्यया ॥ ४८ ॥

स्त्रीणां सम्भोगकाले तु पापग्रहविवर्जिते ।
उक्तकाले शुचिर्भूत्वा [3]शुभां गच्छेदविस्मिताम् ॥ ४९ ॥

षोडशर्तुनिशाः स्त्रीणां [4]तस्मिन्युग्मासु [5]संविशेत् ।
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ॥ ५० ॥

चतुर्थे [6]नानुगम्याऽह्नि [7]गन्ताऽल्पायुः प्रसूयते ।
विद्याहीनं व्रतभ्रष्टं [8]पतितं पारदारिकम्
दारिद्र्यार्णवमग्नञ्च तनयं वा प्रसूयते । ॥ ५१ ॥

[9]कन्यार्थिनैव गन्तव्या पञ्चम्यां विधिवत्पुनः
षष्ठ्यां गम्या महाभागा सत्पुत्रजननी भवेत् । ॥ ५२ ॥

सप्तम्यां चैव कन्यार्थी गच्छेत्सैव प्रसूयते

---

[2] पूर्वं वर्जं प्रजेदेना तद्व्रजोरतिकाम्यया इति मातृकापाठः असंबद्ध इति भाति । अतः अत्र मनुस्मृतेः पाठो गृहीतः । [4] तस्मिन्काले इत्यर्थः ।
[5] संवेशः संभोगः । [7] गन्ता चेदिति ।

---

[1] स्वपेन्निशि (ग) [3] शुद्धां (ग) [6] सानुगम्या (ध) [8] पवित्रं (क)
[9] र्थी (क)

अष्टम्यां सर्वसंपन्नं तनयं संप्रसूयते ।
नवम्यां दारिकार्थं[1] स्याद्दशम्यां [2]पण्डितो भवेत् ॥ ५३ ॥
एकादश्यां तथा नारी जनयेत्सैव पूर्ववत् ।
[3]द्वादश्यां धर्मतत्त्वज्ञं श्रौतस्मार्तप्रवर्तकम् ॥ ५४ ॥
त्रयोदश्यां समं नारी वर्णसङ्करकारिणीम् ।
जनयत्यङ्गना यस्यां न गच्छेत्सर्वयत्नतः ॥ ५६ ॥
चतुर्दश्यां यदा गच्छे[4]त्सपुत्रजननी भवेत् ।
पञ्चदश्यां च धर्मिष्ठं षोडश्यां धर्मपारगम् ॥ ५७ ॥
स्त्रीणां च मैथुने काले वामपार्श्वे प्रभञ्जनः ।
चरेद्यदि भवेन्नारी पुमांसं दक्षिणे भवेत्[5] ॥ ५८ ॥
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे [6]स्त्रियम् ।
यथाकामी भवेद्वापि स्त्रीणां [7]व्रतमनुस्मरन् ॥ ५९ ॥
न चास्नातां स्त्रियं गच्छेन्नातुरां न रजस्वलाम् ।
न दुष्टां न प्रकुपितां नाप्रशस्तां न रोषिणीम्[8] ॥ ६० ॥
क्षुत्क्षामां नाऽतितृप्तां वा स्वयं चैतैर्गुणैर्युतः ।
स्नातः स्रग्गन्धधृक्प्रीतो व्यवायं पुरुषो व्रजेत्[9] ॥ ६१ ॥

---

[4] सपुत्रेति सर्वासु मातृकासु । परन्तु पाठोऽयं सत्पुत्र इति सुपुत्र इति वा भवेत् । [5] यदि वायुः दक्षिणे चरेत्तर्हि पुमांसं जनयेदिति ।
[9] अस्नातत्वादयो पुरुषस्यापि समानाः ।

---

[1] दारिकार्थी (च) [2] पण्डितं (ग) [3] द्वादश्यां धर्मतत्त्वज्ञं त्रयोदश्यां शठं तथा । चतुर्दश्यां यदा गच्छेत्-सपुत्रजननी भवेत् (ग) [6] स्त्रिया (ग) [7] वर (च)
[8] रोगिणीम् (ग)

### ऋत्वगमने दोषः । तत्र विपश्चिद्राजकथा

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपतिष्ठते ।
घोरायां ब्रह्महत्यायां युज्यते नाऽत्र संशयः
[1]अस्मिन्नर्थे पुरावृत्तमाख्यानं कथयामि वः ॥ ६२ ॥

विपश्चिदिति विख्यातो जनकानां महाकुले
जातो विदेहविषये सम्यङ्मनुजपालकः । ॥ ६३ ॥

विपाकात्कर्मणस्तस्य नरकं प्रति दारुणम्
[2]संप्राप्तः स शिवाघोरमयोमुखखगावृतम् । ॥ ६४ ॥

ततस्तस्मिन्समायाते तत्रत्यानां सुखङ्करः
सर्वानन्दकरो वायुर्ववौ च [3]सुखशीतलः । ॥ ६५ ॥

[4]तत्सम्पर्कादशेषाणां नाभवद्यातना नृणाम्
अधिकापि यथा स्वर्गे स्वर्गिणां निर्वृतिस्ततः । ॥ ६६ ॥

किमेतदिति चाऽऽह्लादविस्मितस्तिमितेक्षणः
दृष्टस्तदा नरपतिर्भीषणैर्घोरदर्शनैः । ॥ ६७ ॥

ततस्तत्पुरुषो घोरो दण्डहस्तोऽतिभीषणः
पुरतो दर्शयन् मार्गमित एहीत्यवोचत । ॥ ६८ ॥

नृपतिस्स तदा दृष्ट्वा यातनाशतसंकुलम्
नरके प्राह तं याम्यं किङ्करं भृशदुःखितः ॥ ६९ ॥

---

[1] इयं कथा मार्कण्डेयपुराणे दृश्यते । खं १ अ. १३

[4] तत्संपर्कादशेषाणामभवद्यातना नृणाम् इति मातृकासु पाठः । स न सांधीयानीति भाति ।

---

[2] सम्प्राप्तोऽग्निशिखापूर्णमयोमुखखगोकुलम् (ग) [3] सु .... .... .... गः (च)

## विपश्चितः स्वनरकप्राप्तिजिज्ञासा

भो याम्यपुरुषाऽऽचक्ष्व किं मया पातकं कृतम् ।
केनाऽस्मि यातनामीमं प्राप्तोऽस्मि नरकं परम् ॥ ७० ॥

यज्ञैर्मयेष्टं बहुभिर्धर्मतः [1]पालिता मही ।
नोज्झितश्चैव संग्रामो नाऽतिथिर्विमुखो गतः ॥ ७१ ॥

पितृदेवर्षिभृत्याश्च पूजितास्सम्यगेव तु ।
केन वा कारणेनाऽहं प्राप्तो दुःखं सुदारुणम् ।
इति पृष्टस्तदा तेन पुरुषस्तमुवाच ह ॥ ७२ ॥

## याम्यपुरुषेण विपश्चितो नरकप्राप्तिकारणनिरूपणम्

महाराज यथाऽऽत्थ त्वं तथैतन्नाऽत्र संशयः ।
किन्नु स्वल्पं कृतं पापं भवता स्मारयामि तत् ॥ ७३ ॥

विदर्भतनया पत्नी पीवरी नाम नामतः ।
ऋतुमत्यां ऋतुर्वन्ध्यस्त्वया तस्यां कृतः पुरा ॥ ७४ ॥

सुशोभनायां कैकेय्यां आसक्तोऽभूत्तदा भवान् ।
ऋतुव्यतिक्रमात्प्राप्तो नरकं घोरमीदृशम् ॥ ७५ ॥

[2]बहुभार्यासु सक्तस्य नारीभोगेषु देहिनः ।
ऋतौ [3]विमुह्यमानस्य सान्निध्ये भ्रूणहा स्मृतः ॥ ७६ ॥

होमकाले यथा वह्निराज्यपातमपेक्षते ।
[4]ऋतौ प्रजापतिस्तद्वद्बीजपातमपेक्षते ॥ ७७ ॥

---

[2] अयं श्लोकः मार्कण्डेयपुराणे न दृश्यते । अत्रस्थस्यान्वयः दुःशकः ।
[4] बीजपातमपेक्षत इति मार्कण्डेयपुराणस्थः पाठ एव साधुः । मातृकासु

---

[1] पालता (ग च) [3] विमुच्यमानस्य (ग)

यस्तमुल्लङ्घ्य धर्मार्थं कामे चाऽऽसक्तिमान्भवेत् ।
स तु[1] पौत्रादृणात्पापमवाप्य नरकं पतेत् ॥ ७८ ॥

एतावदेव ते पापं किञ्चिदन्यन्न विद्यते ।
एहि [2]गच्छस्व पुण्यानामुपभोगाय पार्थिव ॥ ७९ ॥

एतच्छ्रुत्वा तु राजर्षिर्विस्मयं परमं गतः ।
[3]स्वकामफलभोगार्थमगम[4]त्पदमैश्वरम् ॥ ८० ॥

## ऋतुस्नातायां गमनविधिः

सूतः —

अदुष्टां विनतां भार्यां यौवने यः परित्यजेत् ।
[5]स सप्तजन्मसु नरो विधवा स्यात्पुनः पुनः ।
तस्मात्स्त्रियं ऋतुस्नातां उपगच्छेत्समाहितः ॥ ८१ ॥

## ऋतौ गमनाभावेऽपि दोषाप्रसक्तिः

[6]व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।
ऋतुकाले तु नारीणां भ्रूणहत्यां प्रमुच्यते ॥ ८२ ॥

---

'द्विजपात्रमपेक्षते' इति पाठस्य सङ्गतिरशक्या। विमुह्यमानस्य असान्निध्ये इति परिवर्ततं ईप्सितार्थं कथमपि यच्छति ।

[1] पुत्रसम्बन्धि ऋणं पौत्रम् । [2] गच्छस्वेति आर्षमात्मनेपदम् । स्वंपुण्यानां इति वा छेदः ।

[5] सप्तजन्मस्वपि पुनः पुनः विधवैव जायते । न तु सप्तजेजन्मपर्यन्तं विधवा तदनन्तरं वा विधवेति । [6] व्याध्यादिभिः अशक्तेन ऋतुगमनाभावात् भ्रूणहत्यादोषो न लगति । व्याधिते, बन्धनस्थे इति सप्तमी युक्ता ।

---

[2] तथेति गच्च (क ख घ च) [3] स्वकर्म (ग) [4] परमेश्वरम् (ग)

## अगम्यानिरूपणम्

[1]वृद्धां वन्ध्यामवृत्तां च मृताऽपत्याम[2]पुष्पिताम् ।
कन्याञ्च बहुपुत्रां च [3]वर्जयन्मुच्यते भयात् ॥ ८३ ॥

[4]मोक्षधर्मे स्थितानान्तु अन्योन्यमनुजानताम् ।
आर्यापतीनामुक्तानां अधर्मो न विधीयते ।
अन्यथा किल्बिषी च स्यादेवं रतिपरो भवेत् ॥ ८४ ॥

## शर्वर्याः पश्चिमयामकृत्यम्

प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
[5]यामद्वयशयानस्तु ब्रह्मभूयाय कल्पते ॥ ८५ ॥

[6]इत्येतदखिलं प्रोक्तमहन्यहनि वै द्विजाः ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम्[7] ॥ ८६ ॥

नास्तिक्यादथवाऽऽलस्याद्ब्राह्मणो न करोति यः ।
स याति नरकान्घोरान्काकयोनौ च जायते ॥ ८७ ॥

---

[1] वृद्धात्वं भार्यायाः स्वापेक्षया अप्रसक्तमेव । त्रिंशद्वर्षोद्वहेदित्यादि मनुवाक्येन वयसस्तारतम्यस्योक्तत्वात् । मातृकासु वृथावन्ध्यामिति पाठश्च दृश्यते । तत्राप्यर्थो दुरूहः । गर्भधारणयोग्यतायां सत्यामपि अतिशयदुर्बलता वा लक्षिता स्याद्वृद्धेति पदेन ।

[2] अपुष्पिता अदृष्टरजस्का । [4] मोक्षधर्मः संन्यासः । तत्र परस्परानुमत्या ऋत्वादि नियमो नास्ति । [5]त्रियामा रात्रिः तस्याः द्वौ भागौ निद्रार्थं प्रयुक्तौ । [6] एतदारभ्य त्रयः श्लोकाः कूर्मपुराणस्य, श्लोकद्वयं लिङ्ग-पुराणस्य । [7] अपवर्गः मोक्षः स एव फलम् ।

---

[1] वृथा (ग) [2]पुष्पिणीम् (ग च) [3] वर्जयेन्मुच्यते नयात् ।

नान्यो विमुक्तये पन्थाः मुक्त्वाऽऽश्रमविधिं स्वकम् ।
तस्मात्सर्वाणि कुर्वीत तुष्ट्यै परमेष्ठिनः ॥ ८८ ॥

सर्वेषामेव भूतानां सदाचारः प्रकीर्तितः ।
यः पठेच्छृणुयाद्वापि सदाचारं शुचिर्नरः ॥ ८९ ॥

श्रावयेद्वा यथान्यायं ब्राह्मणान्दग्धकिल्बिषान् ।[1]
ब्रह्मलोकमनुप्राप्य ब्रह्मणा सह मोदते ॥ ९० ॥

इति श्रीमत्पुराणसारे सदाचारपद्धतौ भोजनशयनविधिर्नाम
पञ्चविंशोऽध्यायः ।

[1] दग्धं किल्बिषं येषां ते = पापरहिता इति ।

## षड्विंशोऽध्यायः

## श्राद्धप्रकरणम्

[1]ऋषयः —

भगवन्भवता प्रोक्त आह्निकं कर्म विस्तरात् ।
श्राद्धकल्पमशेषेण सूत त्वं वक्तुमर्हसि । ॥ १ ॥

सूतः —

साधु साधु महाभागाः पृष्टवन्तो बहुश्रुताः ।
श्राद्धक्रममशेषेण शृण्वन्तु कथयामि वः ॥ २ ॥

### श्राद्धकरणेन पुत्रावाप्ताविलराजकथा

पुराकाले च [2]मतिमानिलो राजा बभूव ह ।
सज्जना[3]ऽनुमतः प्राज्ञो ब्रह्मण्यः सत्यसङ्गरः ॥ ३ ॥

श्रीमान्वदान्यो मतिमान्महाबलपराक्रमः ।
अधिराज्यपदे तं तु मनुस्सह महर्षिभिः ॥ ४ ॥

अभिषेकेण विधिवद्योजयामास पार्थिवम् ।
कृताऽभिषेको नृपतिः शुशुभे राजसत्तमः ॥ ५ ॥

तस्य पालयतस्सम्यक्प्रजाः पुत्रानिवौरसान् ।
अप्रीयत भृशं लोको गुणौघैरनुरंजितः ॥ ६ ॥

[4]करन्धमस्य नृपतेस्तनयां तपसाऽन्विताम् ।

---

[4] अयं करन्धमः महाभारते आश्वमेधिकपर्वणि दृश्यते । स च करयोः धमनादेव सेनामसृजदिति कथा । परन्त्वस्यापत्यविषये तत्र न किञ्चिदुपलभ्यते ।

---

[1] श्राद्धनिर्णयः (घ) [2] मतिमान् निलो (क) [3] भिमतः (ग) [4] कारुण्यमस्य (ग)

उवाह विधिवद्राजा सुशीलां [1]प्रियवादिनीम् ॥ ७ ॥
स तया सह धर्मात्मा महिष्या राजसत्तमः ।
भोगानशेषान्बुभुजे लोकद्वितय[2]सङ्गतान् ॥ ८ ॥
अनपत्योऽभवत्तस्यां बभूव भृशदुःखितः

### अपुत्रस्यैलस्य विलापः तपोऽर्थमुद्यमश्च

अचिन्तयत्ततो राजा मनसैवमनेकधा । ॥ ९ ॥
पितरो नूनमस्मत्तः सन्ततिच्छेद[3]कर्शिताः
यथा हि मम पुत्रीया [4]दृश्यते विफला प्रिया । ॥ १० ॥
[5]परित्राणाद्धि पुत्रत्वं पितुः पुत्रस्य केवलम्
अपुत्र [6]एव सञ्जातः पिता मे मयि सत्यपि । ॥ ११ ॥
राज्यं मत्कुलजैरेव रक्षणीयमिदं महत्
[7]ममापुत्रतयेदानीमन्योपाश्रयमेष्यति । ॥ १२ ॥
इति सञ्चिन्त्य मनसा स राजा तपसे वनम्
जगाम मन्त्रिप्रवरे राज्यं विन्यस्य बुद्धिमान् ।
शाकमूल[8]फलाहारश्चचार [9]सुमहत्तपः ॥ १३ ॥
ततो व्यतीते वर्षाणां सहस्रे द्विजसत्तमाः ।
तुतोष तपसा विष्णुः तपसा तस्य भूपतेः ॥ १४ ॥

---

[7] मातृकासु ' मम पुत्र त्रयेति यत्पठ्यते तन्न संगच्छते ।
[10] अत्र 'तरसा' पाठ्यं युक्तं भवेत् ।

---

[1] प्रियदर्शनाम् (ग) [2] सम्मतान् (ग) [3] कर्शिनः (ग)
[4] दृश्यन्ते विफलाः प्रियाः (क ख ग घ) [5] पुत्रिताणाद्धि (ग)
[6] इव (क ख घ च) [8] फलाहारैश्चार (च) [9] सुमहातपा (क ख ग घ)

आविर्बभूव देवेशो राज्ञस्तस्य महात्मनः ।
अग्रतः पुण्डरीकाक्षः पीतवासाः जनार्दनः ॥ १५ ॥

अथोवाच जगन्नाथो वाग्भिरिष्टाभिरच्युतः ।
वरं वृणीष्व यन्मत्तः काङ्क्षसे राजसत्तम ॥ १६ ॥

इत्युक्तो देवदेवेन प्रहृष्टात्मा महीपतिः ।
नमस्कृत्य जगन्नाथं वरं वव्रे कृताञ्जलिः । ॥ १७ ॥

पुत्रमिच्छामि देवेश मदन्वयविवर्धनम् ।
स्थितिं च सुदृढां धर्मे [1]त्वत्प्रसादेन केशव ॥ १८ ॥

**अनपत्यतायाः कारणं पित्रतुष्टिरिति परमात्मनः वचः**

इति तस्य वचः श्रुत्वा प्राह तं भगवान्पुनः ।
सर्वं सम्पत्स्यते तुभ्यं मत्प्रसादेन पार्थिव
किन्तु ते पितरो हृष्टा भवता [2]नादृताः [3]पुरा ॥ १९ ॥

तस्मादलं ते तपसा गच्छ राज्यमकण्टकम् ।
पितॄंस्तोषय यत्नेन राज्यं च परिपालय ॥ २० ॥

तमेवमुक्त्वा भगवांस्तत्रैवान्तरधीयत ।
राजा च स्वमधिष्ठानं जगामातिमुदाऽन्वितः ॥ २१ ॥

चचार वसुधां कृत्स्नां ऋत्विग्भिः सहितो वशी ।
ततस्स चिन्तयामास मनसा मनुनन्दनः ॥ २२ ॥

तुष्यन्ति पितरो मह्यं केन वा कर्मणा कथम् ।
[4]कस्मिन्काले च कैर्द्रव्यैस्तोषयामि पितॄनहम् ॥ २३ ॥

---

[4] एतदारभ्य सार्धं श्लोकद्वयं 'च' मातृकायां न दृश्यते ।

---

[1] तत्प्रसादेन (ख) [3] नादृताः (क) [3] यतः (ग)

एवं सञ्चिन्तयानस्य भार्यायास्तस्य सन्निधौ
[1]सनत्कुमारो भगवानाविरासीद्यदृच्छया । ॥ २४ ॥

तं दृष्ट्वा मन्त्रिभिस्सार्धम् अभ्युत्थाय [2]यथाविधि
अर्घ्यपाद्यादिभिस्सम्यक्पूजयामास भक्तितः । ॥ २५ ॥

इलेन विहितां पूजां प्रतिगृह्याऽऽशिषा च तम्
योजयित्वाऽऽसने दिव्ये शनैर्मुनि[3]रुपाविशत् । ॥ २६ ॥

[4]विचार्य कुशलप्रश्नं राजानं चेदमब्रवीत्
[5]अप्रसन्नमुखाऽम्भोजो भवान् संलक्ष्यते नृप । ॥ २७ ॥

इति पृष्टो मुनीन्द्रेण राजा तस्मै मुदान्वितः
यथावदात्मनः सर्वमाचख्यौ दुःखकारणम् । ॥ २८ ॥

तच्छ्रुत्वा वचनं प्राह तस्य भूयो महामतिः
अलं शोकेन राजेन्द्र करिष्ये यद्धितं तव । ॥ २९ ॥

इत्युक्त्वा निखिलं तस्मै कथयामास विस्तरात्
पितृपूजां समुद्दिश्य [6]श्राद्धकल्पमशेषतः । ॥ ३० ॥

## विश्वेदेवाग्निष्वात्तादीनां कलहनिरूपणम्

[7]निशि सुप्तोत्थितः पूर्वं सिसृक्षुरखिलं जगत्
क्षात्रोद्रिक्तान्सुतान्कांश्चिदसृजन्मनसा विधिः । ॥ ३१ ॥

[8]तेषान्तु सर्वलोकानामुपरिष्टात्पितामहः

---

[1] ब्रह्मणस्तपसा विष्णुः सनकसनन्दनसनातनसनत्कुमार इति चतूरूपैः अवततार ।

[4] एतदारभ्य श्लोकद्वयं 'ग' मातृकायां न दृश्यते ।

---

[2] महीपतिः (ग) [3] मुपाविशत् (ग) [5] प्रसन्नसुमुखा (च) [6] श्राद्धकाल (क ख)

[7] निशासु नोत्थितः (क ग) निशासुप्तोत्थितं (ख) [8] ते यान्तु (क)

स्थानं सङ्कल्पयामास किंचिद्दक्षिणतः [1]स्थितम् ।
गणस्सप्तविधस्तेषां कथितो द्विजसत्तमाः ॥ ३२ ॥

[2]मूर्तिमन्तस्त्रयस्तस्मिन्नपरे योगमूर्तयः ।
अग्निष्वात्ता [3]बर्हिषदः साग्नयोऽनग्नयस्तथा ॥ ३३ ॥

आज्यपास्सोमपा[4]श्चैव मधुपाश्चेति ते स्मृताः ।
[5]तपोवीर्यबलोपेताः सत्त्वोद्रिक्ता महौजसः ॥ ३४ ॥

प्रसन्नास्ते भुवि नृणामायुरारोग्यसम्पदः ।
दास्यन्ति [6]वित्तपुत्रांश्च परत्र च [7]परां गतिम् ॥ ३५ ॥

विवादस्तैः समभवद्विश्वाख्यानां पुरा महान् ।
विबुधानां [8]वयं श्रेष्ठाः न यूयमिति पार्थिव ॥ ३६ ॥

कलयन्त्यां स्वधर्मस्य विश्वायां तनया दश ।
[9]समुत्पन्नाः स्मृतास्ते हि विश्वेदेवा महाव्रताः ॥ ३७ ॥

तेऽतप्यन्त तपो घोरं सुचिरं नियतेन्द्रियाः ।
मेरुपृष्ठं समासाद्य निराहारा यतव्रताः ॥ ३८ ॥

ततस्तेषां समासाद्य समीपं ब्रह्मणस्सुताः[10] ।
पूजितास्तैर्यथान्याय्यमिदं वचनमब्रुवन् ॥ ३९ ॥

---

[2] अमूर्तयस्त्रयस्तेषां चत्वारस्तु समूर्तयः (ब्रह्माण्डपुराणे उपोद्घातपादे ९-५५)
[9] समुत्पन्ना मृतास्ते हि इति मातृकापाठः असाधुः । [10] ब्रह्मणस्सुता अग्निष्वात्तादयः ।

---

[1] स्थितः (च) [3] बर्हिषादः (क) [4] श्चेति (ग) [5] त्रयो (ग) [6] पुत्र पित्रांश्च (घ) पुत्रान् वित्तांश्च (क) [7] शुभां (ग) [8] वचश्रेष्ठाः (च)

कुशलं ननु सर्वत्र सर्वेषां [1]वस्तपस्यताम् ।
भवतां [2]दर्शनायाथ समायाताः [3]सुपुत्रकाः ॥ ४० ॥

इति तेषां वचः श्रुत्वा विश्वेदेवास्तपस्विनः ।
पुत्रा इति समाख्याताः क्रोधमाहारयन् भृशम् ॥ ४१ ॥

विश्वदेवाः —

के यूयमकृतप्रज्ञा भृशं [4]प्रज्ञाभिमानिनः ।
संबन्धः कीदृशोऽस्माकं पितृपुत्रादिसंश्रयः ॥ ४२ ॥

इति तेषां विवदताम् अन्योन्यश्रैष्ठ्यकारणात् ।
ततस्सर्वे द्विजश्रेष्ठा निष्ठाविज्ञानगौरवात् ॥ ४३ ॥

विनिश्चित्येतिकर्तव्यं ययुर्धाम स्वयम्भुवः ।
तत्र गत्वा नमस्कृत्य वेधसे सर्वमब्रुवन् ॥ ४४ ॥

## ब्रह्मणा विवादोपशमनकरणम्

विवादमखिलं तेषाम् आकर्ण्य कमलोद्भवः ।
सर्वसन्देहनिर्णेता तानुवाचेति सादरम् ॥ ४५ ॥

ये पूर्वं मनसो जाता लोकानुग्रह[5]कातराः ।
ज्यायांसः [6]सर्वभूतानामिमे वै नात्र संशयः ॥ ४६ ॥

किन्तु यूयं नु तपसा ज्यायस्त्वं समुपागताः ।
ततस्तैः सह वर्तध्वं शश्वदेव मदाज्ञया ॥ ४७ ॥

---

[3] सपुत्रका इति मातृकापाठः न सङ्गच्छते इति भाति । अतः सुपुत्रकाः इति किञ्चिद्विपरिवर्तितम् ।

---

[1] वसपश्यताम् (क ख घ च) [2] दर्शनार्थाय (च) [4] प्राज्ञाभिमानिनः (ग)
[5] तत्पराः (ग) [6] सर्वभूतानि मिमे. (क ख घ च)

पुत्रका इति तद्यूयं तैराहूता महात्मभिः ।
तस्मात्त सर्वभूतानां भवन्ति पितरोऽर्चिताः ॥ ४८ ॥

पितृसंज्ञां प्रयास्यन्ति लोके पूजां च शाश्वतीम् ।
यत्र यत्र च तत्पूजा भवेल्लोकेषु शाश्वती
[1]अग्र्यांशभागिनो यूयं तेभ्यो नित्यं भविष्यथ ॥ ४९ ॥

पितॄनुद्दिश्य ये [2]कव्यं दास्यन्ति च यथाक्रमम् ।
[3]युष्मान्विना सुरश्रेष्ठास्तत्तेषां निष्फलं भवेत् । ॥ ५० ॥

इत्यादिष्टा विरिञ्चेन सुप्रीतास्ते परस्परम्
विश्वदेवास्सपितरो विप्रा जग्मुर्यथागतम् । ॥ ५१ ॥

सुप्रीताः पूजकानाञ्च काङ्क्षितार्थफलप्रदाः
यथावदिह ये केचिन्मनुष्याः पितृपूजकाः । ॥ ५२ ॥

पितृलोकं प्रयास्यन्ति मृतास्ते नाऽत्र संशयः
तेषां पूजाबलिं मत्तः शृणुष्व नृपसत्तम । ॥ ५३ ॥

यथाविधि कृतैः श्राद्धैरिह स्वकुलजैर्नरैः
ते मोदमानाः [4]स्वे लोके वसन्ति च यथासुखम् । ॥ ५४ ॥

श्राद्धैराप्यायिता नित्यं पितरस्ते स्ववंशजान्
संवर्धयन्ति तत्कर्तॄनभीष्टैर्योजयन्ति च । ॥ ५५ ॥

पिता पितामहश्चैव तथैव [5]प्रपितामहः
पिण्डसंबन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः । ॥ ५६ ॥

लेपसंबन्धिनश्चान्ये पितामहपितामहात्

---

1 अन्यंश (क) अथांश (ग) 2 कल्यां (च) 3 पुष्पान्विता (च) पूजिकानां (घ)
4 स्ते (क ख घ च) 5 प्रपितामहाः (घ)

प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः । ५७ ॥

श्राद्धशब्दार्थः

देशे काले च पात्रे च श्रद्धया विधिना च [1]यत् ।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ॥ ५८ ॥

इति श्रीमत्पुराणसारे सदाचारे श्राद्धनिरूपणं नाम
षड्विंशोऽध्यायः

[1] यः (ग)

## सप्तविंशोऽध्यायः

### श्राद्धप्रकरणे

[ श्राद्धविधिनिरूपणप्रकरणम् ]

### श्राद्धभेदाः

सूतः —

[1]नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं [2]सपिण्डकम् ।
पार्वणं चेति विज्ञेयं [3]गोष्ठ्यां शुध्यर्थमष्टमम् ॥ १ ॥

कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥ २ ॥

### द्वादशश्राद्धस्वरूपम्

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम्
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ॥ ३ ॥

अभिप्रेतार्थसिध्यर्थं काम्यं पार्वणवत्स्मृतम् ।
पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ॥ ४ ॥

सपिण्डीकरणं नाम प्रेतस्य पितृभिःस्वकैः ।
संयोजनं स्मृतं तद्धि कर्तव्यं सम्यगेव तु ॥ ५ ॥

प्रतिपर्व भवेत्तस्मात्प्रोच्यते पार्वणन्तु तत् ।
बहूनां विदुषां प्राप्तौ सुखार्थं पितृतृप्तये
गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते । ॥ ६ ॥

---

[1] अत्रत्यः सकलः श्राद्धविभागः पराशरमाधवीयगतसंगृहीतश्राद्धनिर्णयप्रकरणात् समुद्धृतः । [3] गोष्ठीशुद्ध्यर्थमिति मातृकापाठापेक्षया विश्वामित्रप्रोक्तं 'गोष्ठ्याम्' इति छिन्नविभक्तिकं पदं साधु । विद्वद्गोष्ठ्यामित्यर्थः ।

---

[2] समन्त्रकम् (क ख घ च) [2] गोष्ठीशुद्ध्यर्थं (क ख ग घ च)

[1]क्रियते शुद्धये येन ब्राह्मणानान्तु भोजनम्
शुध्यर्थमिति तत्प्रोक्तं श्राद्धं पार्वणव[2]त्कृतम् । ॥ ७ ॥

निषेककाले सोमे च सीमन्तोन्नयने तथा
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिमत्कृतम् । ॥ ८ ॥

देवानुद्दिश्य क्रियते यत्तु दैविकमुच्यते
तन्नित्यश्राद्धवत्कुर्याद्द्वादश्यादिषु यत्नतः ॥ ९ ॥

[3]श्राद्धे पञ्चविधे राजन् विश्वेदेवा [4]दशा पराः
द्वौ द्वौ तेषु क्रमाद्भोज्यौ पितृभिस्सह भक्तितः ॥ १० ॥

## विश्वेदेवानां नामानि

क्रतुर्दक्षो वसुस्सत्यः कालः कामो धुनी रुचिः ।
[5]पुरूरवार्द्रवाश्चैते विज्ञेया धर्मसूनवः ॥ ११ ॥

## विश्वेदेवानां नियोजनक्रमः

श्राद्धे नैमित्तिके राजन् [6]क्रतुदक्षौ नियोजयेत् ।
अष्टकायां कामकालौ श्राद्धे नान्दीमुखे तथा ॥ १२ ॥

वसुसत्यौ काम्यके च समुद्दिष्टौ [7]धुरीरुची ।
पुरूरवार्द्रवौ चैतौ पार्वणेषु प्रकीर्तितौ ॥ १३ ॥

---

[1] एतदारभ्य श्लोकत्रयं 'ग' मातृकायां न दृश्यते ।
'गच्छन्देशान्तरे यद्धि श्राद्धं कुर्यात्तु सर्पिषा । तद्यात्रार्थमिति प्रोक्तं प्रवेशे च न संशयः ॥ शरीरोपचये श्राद्धं अन्नोपचय एव च । पुष्ट्यर्थमिति तत्प्रोक्तमौपचायिकमुच्यते ॥ '—वीरमित्रोदये श्राद्धप्रकाशे
[5] पुरूरवाः आर्द्रवः इति छेदः । सन्धिरार्षः । [7] धुनिरेव धुरिरिति पठ्यते बहुत्र।

---

[2] त्स्मृतम् (च) [4] दशात्पराः (क) दशामराः (ग) [6] क्रतुर्दक्षो (च)

## श्राद्धाधिकारिनिरूपणम्

पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः ।
पुत्राऽभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः ॥ १४ ॥

दौहित्रोऽथ प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्वाऽपि क्रियार्हा द्विजसत्तमाः ॥ १५ ॥

स्त्रीहारी धनहारी च कुर्युः पिण्डोदकक्रियाम् ।
तदभावे तु नृपतिः कारये[1]त्स कुटुम्बवत् ॥ १६ ॥

सर्वेषामेव वर्णानां बान्धवो नृपतिर्यथा ।
तथैव नृपतेः कुर्युः भृत्या ऋत्विक्पुरोहिताः ॥ १७ ॥

## श्राद्धकालनिरूपणम्

अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः ॥ १८ ॥

[2]व्यतीपातो [3]गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥ १९ ॥

श्राद्धोदितं यथा द्रव्यं विशिष्टं पात्रमेव [4]तु ।
प्राप्यते देशकालौ च कुर्याच्छ्राद्धं तदा द्विजाः ॥ २० ॥

---

[2] श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः । नागदैवतं आश्लेषा ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥ मस्तकं मृगशिरः ।

[3] यथेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः । पितृदैवत्यं मघा ।
याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्तिता ॥ याम्या त्रयोदशीतिथिः ।

---

[1] त्सुकुटुम्बवत् (क) [4] च (ग)

## श्राद्धार्हदेशनिरूपणम्

स्वक्षेत्रे स्वगृहे विष्णुमन्दिरे वा विशाम्पते ।
नदीसमुद्रतीरे वा सिन्धुसागरसङ्गमे ॥ २१ ॥

नद्योर्वा सङ्गमे राजन् [1]शालिग्रामशिलान्तिके ।
पुष्करे वा कुरुक्षेत्रे प्रयागे [2]नैमिषेऽपि वा ॥ २२ ॥

[3]सालग्रामे तु गोकर्णे गङ्गायान्तु विशेषतः ।
क्षेत्रेष्वेतेषु यः श्राद्धं पितृभक्तिसमन्वितः ॥ २३ ॥

करोति विधिवन्मर्त्यः कृतकृत्यो महीपते ।
कालेष्वेतेषु यो मर्त्यः पितृप्रीतिमवाप्स्यति ॥ २४ ॥

### अशक्तस्य श्राद्धक्रमः

[4]कुर्याच्छ्राद्धमशक्तश्चेदपि दद्यात्तिलोदकम् ।
न भवेद्यस्य सामग्री दारा वा गृहमेव वा ॥ २६ ॥

आमश्राद्धं प्रकुर्वीत वृद्धो बालश्च यो भवेत् ।
अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि ॥ २७ ॥

आमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ।
तृणानि वा गवे दद्यात्पिण्डान्वाऽथ विनिक्षिपेत् ॥ २७ ॥

तिलोदकैः पितॄन्वाऽपि तर्पयेत्स्नानपूर्वकम् ।
अग्निना वा दहेत्कक्षं श्राद्धकाले समागते ॥ २८ ॥

---

[3] सालग्राम इति किंचित् क्षेत्रम् ।

---

[1] साल (ख घ च) [2] नैमिशे (घ) [4] अस्याः पङ्क्त्याः स्थाने 'ग'मातृकायां कर्तुं कालेष्वशक्तश्चेच्छ्राद्धं दद्यात्तिलोदकम् इति पठ्यते ।

[1]अस्मिंश्चोपवसेदह्नि जपेद्वा [2]श्राद्धसम्मतम् ।
शाकमूलफलाद्यैर्वा पितॄन् सन्तर्पयेत्तदा ॥ २९ ॥

[3]सर्वाभावे वनं गत्वा [4]कक्षमूलप्रदर्शकः ।
सूर्यादिलोकपालानामिदमुच्चैः पठेन्नरः ॥ ३० ॥

न मेऽस्ति वित्तं न [5]गृहं न चान्यत्
[6]श्राद्धोपयोग्यं स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरौ ममैतौ
कृतौ भुजौ वर्त्मनि मारुतस्य ॥ ३१ ॥

इत्येतत्पितृभिर्गीतं भावाभावप्रयोजनम् ।
यः करोति कृतं तेन श्राद्धभावेन पार्थिव ॥ ३२ ॥

## श्राद्धकर्तुर्नियमाः

पूर्वेऽह्नि रात्रौ विप्राग्र्यान् कृतसायन्तनाशनान् ।
गत्वा निमन्त्रयेद्दैव[7]पितृनुद्देशसंमितः ॥ ३३ ॥

ततः क्रोधव्यवायादीनायासं च द्विजैस्सह ।
यजमानो न कुर्वीत दोषस्तत्र महान्भवेत् ॥ ३४ ॥

---

[3] सार्धं श्लोकत्रयं विष्णुपुराणे पठ्यते । [4] कक्षमूल इति बहुत्र लभ्यमानः पाठः । परन्तु वराहपुराणे दृश्यते कन्दमूल इति । स तु युक्त इति मे भाति । तथापि मारुतस्य वर्त्मनि कृतौ भुजौ । इत्यनेन कक्षमूलप्रदर्शनं नाम निर्धनताद्योतकं भुजोत्क्षेपणम् । अतः पाठकैः युक्तिविद्भिः स्वमत्यधिष्ठितः पाठो गृहीतुं, शक्यः ।

---

[1] तस्मिंश्चोपवसे (ख घ च) [2] श्राद्धसंहिताम् (ग) [5] घनं (ग) [6] श्राद्धो .... .... भोग्यं (ग) [7] पितॄन् देशसमन्वितः (ग) पितॄ .... .... सम्मतान् (च)

## श्राद्धनिमंत्रणीयानां निरूपणम्

निमन्त्रणीया ये श्राद्धे तान्निबोध नरेश्वर ।
ऋत्विग्दौहित्रजामातृस्वस्रीयश्वशुरादयः ॥ ३५ ॥

शिष्यसंबन्धिनश्चैव तपस्वी मातुलस्तथा ।
एतान्निमन्त्रयेच्छ्राद्धे सगुणान्दोषवर्जितान्
मनोज्ञवपुषः शान्तान् [1]शुद्धशीलान्निमन्त्रयेत् । ॥ ३६ ॥

विप्रे सदोषेऽगुणिनि सति वा विप्रमात्रके ।[2]
संपूज्यो विप्रसामान्यो न तु दोषी [3]कथञ्चन ॥ ३७ ॥

## श्राद्धे देयद्रव्याणि

ततोऽन्नं बहुसंस्कारं [4]नैकव्यञ्जनसंयुतम् ।
चोष्यपेयसमृद्धिं च यथाशक्त्युपकल्पयेत् ॥ ६८ ॥
वर्जयेद्वर्जनीयानि द्रव्याणि [5]विहितानि च ।
कल्पयेत्पितृतृप्त्यर्थं श्राद्धकर्ता विशेषतः ॥ ३९ ॥

## श्राद्धोपक्रमः

ततश्च [6]कुतपे काले समाहूतान्द्विजोत्तमान् ।[7]
सम्भावयित्वा विधिवत्पादशौचं समाचरेत् ॥ ४० ॥

---

[2] विप्रमात्रो ब्राह्मणब्रुवः । जन्मना केवलं विप्रत्वमस्य न त्वाचारादिभिः ।

[6] कुं पृथ्वीं तपतीति कुतपः । दिवसस्याष्टमो मुहूर्तः ।

---

[1] वृद्ध (क ख घ) [3] कदाचन (च) [4] अनेकव्यञ्जनान्वितं (ग) [5] विविधानि च (ग)
[7] 'पितृदेवकृतोद्देशान्निमन्त्र्याभ्यागतान् द्विजान्' अयमधिकः पाठः (ग)

यावद्द्विजानां भूयिष्ठं पादनिर्णेजनोदकम् ।
तावत्पितॄणामाह्लादः सुमहान्किल जायते ॥ ४१ ॥
प्राङ्मुखान्भोजयेद्विप्रान् दैवे पित्र्ये [1]ह्युदङ्मुखान् ।
[2]पवित्रपाणीनाचान्तान् आसनेषूपवेश्य च ॥ ४२ ॥
साग्रान् दर्भान् विष्टरार्थं दद्याच्चैषां पृथक् पृथक् ।
आवाह्यार्घ्यं ततो दद्याद्विश्वान्देवान्यथाक्रमम् ॥ ४३ ॥
गन्धपुष्पाक्षतैस्तांस्तु संपूज्य तदनुज्ञया ।
पितॄनावाहयेत्पश्चात्समन्त्रं दक्षिणामुखः ॥ ४४ ॥
तिलाम्बुना पितॄणान्तु दद्याच्चार्घ्यं समन्त्रकम् ।
अपसव्यक्रमादेव तेषां सर्वं प्रकल्पयेत् ॥ ४५ ॥
अर्घ्यादिधूपदीपान्तं पूजयित्वा यथाक्रमम् ।
पात्रान्नं संस्कृतं कुर्यादाज्येन तु सकृत्सकृत् ॥ ४६ ॥
[3]रक्षोघ्नमन्त्रपठनं [4]प्रकुर्वन् सुसमाहितः ।
तिलैर्विकिरणं कुर्याद्रक्षार्थं तत्र सर्वतः ॥ ४७ ॥
ततस्तानभ्यनुज्ञाय व्यञ्जनाक्षारवर्जितम् ।
पितॄन् ध्यात्वाऽनले सम्यग्जुहुयादाहुतिद्वयम् ॥ ४८ ॥
हुतशिष्टं विप्रपात्रे निर्वपेच्च पृथक् पृथक् ।
[5]ततोऽन्नं [6]पायसापूपमधुमांसादिकं शनैः ॥ ४९ ॥

---

[3] रक्षोघ्नमन्त्राः, 'कृणुष्व पाजः प्रसितिं न पृथ्वीम्' इति पञ्चदशर्चः ।
[5] एतदारभ्य दशश्लोकाः वराहपुराणस्थचतुर्दशाध्यायगतश्लोकसंवादिनः ।

---

[1] ह्युदङ् (घ च) [2] पवित्रपाणिराचा (क ख ग) [4] प्रकुर्वंश्च समन्ततः (ग)
[6] पायसं पूर्णं (ग)

दत्वा सन्तर्पयित्वाऽन्नं दद्यादुदकमेव च ।
ततो ध्यात्वा पितॄन्देवान्गन्धपुष्पाक्षतोदकैः
नमस्कृत्य प्रवक्तव्यं जुषध्वमिति सादरम् । ॥ ५० ॥
भोक्तव्यं मौनिभिर्विप्रैः एकचित्तैर्यथासुखम्[1]
राक्षोघ्नमन्त्रपाठश्च कर्तव्यः पितृतृप्तये । ॥ ५१ ॥
अनन्तरं सुतृप्तेषु तेषु विप्रेषु भक्तितः
अन्नशेषं प्रविकिरेद्दर्भेषु विधिवन्नृप । ॥ ५२ ॥
उपलिप्य ततो भूमौ गोमयेन तदन्तिके
दर्भान्परिस्तरेत्साग्रा[2]न्दक्षिणामुखतो[3]द्विजः ।[4] ॥ ५३ ॥
गन्धपुष्पाक्षतैस्सम्यक् पूजयित्वा यथाविधि
पितृभ्यः [5]पितृतीर्थेन दद्याच्चैव तिलोदकम् । ॥ ५४ ॥
तिलाज्यमधुसंमिश्रं प्रदद्याद्दर्भसंस्तरे
पिण्डत्रयं स्वपित्रादिनामगोत्रयुतं [6]बुधः । ॥ ५५ ॥
पात्राण्युद्धृत्य पैत्राणि यथाशक्ति च दक्षिणाम्
दत्वा विसर्जयेत्पूर्वं पितॄन्देवांस्ततः परम् । ॥ ५६ ॥
[7]आद्वारान्त[8]मनुव्रज्य निवर्तेत ततो नृप
यथासुखं प्रभुञ्जीत सार्धं स्वजनबन्धुभिः । ॥ ५७ ॥
एवं यः पूजयेच्छ्राद्धे पितॄन् भक्तिसमन्वितः

---

[5] मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यम् इति अमरसिंहः ।

---

[1] एतदनन्तरं ' तेषु भुक्तवत्स्वन्नशेषं दर्भेषु विकिरेद्यथा (ग) तदनन्तरं उपलिप्येत्यादि ।
[2] दक्षिणाशामुखा (ग) [3] द्विधा (ग) [4] 'ग' मातृकायां उत्तरत्र श्लोकस्य स्थाने एका पङ्क्तिः ' संपूज्य पितृतीर्थेन दद्यात्तेभ्यस्तिलोदकम् ' इति वर्तते । [6] नरः (च)
[6] आह्वानान्त (क ग च) [7] मुपव्रज्य (च)

तस्येष्टमखिलं [1]ते हि प्रदास्यन्ति न संशयः । ॥ ५८ ॥

तमित्युक्त्वाऽथ देवर्षी राजर्षिं प्रणतं स्थितम्
तत्रैवान्तर्दधे विप्राः क्षणेन [2]नृपसंसदि । ॥ ५९ ॥

ततो राजा महाबुद्धिः सहमन्त्रि[3]पुरोहितः
पितॄनाराधयामास यथाविभवविस्तरम् ॥ ६० ॥

श्राद्धैरनेकैश्च पितॄंस्तर्पयानस्य भूपतेः ।
[4]वर्षत्रये व्यतीते तु सन्तुष्टाः पितरोऽभवन् ।
ततोऽस्य जज्ञिरे पुत्राः त्रयः परमधार्मिकाः ॥ ६१ ॥

पुत्रजन्ममुदं प्राप्य स राजा धर्मतत्परः ।
प्रशशास स[4] धर्मेण [5]सप्तद्वीपवतीं महीम् ॥ ६२ ॥

सूतः —

तस्मात्सर्वप्रयत्नेन कर्तव्यं पितृतृप्तये ।
श्राद्धं भवद्भिर्विप्रेन्द्राः सम्यग्भक्तिपुरस्सरम्
श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम् । ॥ ६३ ॥

[7]अरोगप्रकृतिश्चैव चिरायुः पुत्रपौत्रवान्
अर्थवानर्थभोगी च श्राद्धकामो भवेदिह । ॥ ६४ ॥

परत्र च परां पुष्टिं [8]लोकांश्च विविधांश्शुभान्

---

[6] सप्तभावतीमिति पाठस्य सप्तभागवती सप्तद्वीपयुतेति वा विवरणं कार्यम् ।

---

[1] तेऽपि (ग) [2] नृ .... .... दः (ग) [3] पुरोहितैः (च) [4] व्यतीपाते (च)
[5] धर्मात्मा सप्तभाव (क ख घ च) [7] अरयः (च)
[8] लोकांश्च विविधान् शुभान् (क)

श्राद्धकृत्समवाप्नोति यशश्च विपुलं [1]नरः । ॥ ६५ ॥

यः पठेच्छृणुयाद्वापि श्रावयेद्वा समाहितः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ६६ ॥

इति श्रीमत्पुराणसारे [2]सदाचारे श्राद्धनिरूपणं नाम
सप्तविंशोऽध्यायः

[1] भुवि (ग) [2] श्राद्धकर्मो नाम (ग)

## अष्टाविंशोऽध्यायः

### वानप्रस्थाश्रमधर्मनिरूपणम्

सूतः —

[1] एवं गृहाश्रमे स्थित्वा द्वितीयं भागमायुषः ।
दृष्ट्वाऽपत्यस्य चाऽपत्यं [2]कर्करीकृतविग्रहः । ॥ १ ॥
वानप्रस्थाश्रमं गच्छेत्सदारस्साग्निरेव च

### वानप्रस्थस्य कृत्यनिरूपणम्

गत्वारण्यं सुनियतः तपः कुर्यात्समाहितः । ॥ २ ॥
फलमूलानि पूतानि नित्यमाहारमाहरेत्
गृहनाश्रित्य [2]वाश्नीयादष्टौ ग्रासान् समाहितः ।[3] ॥ ३ ॥
वसीत वल्कलं वासस्तृणपर्णाजिनानि वा
[4]केशरोमनखश्मश्रुमलानि बिभृयादतः । ॥ ४ ॥
चीरवासा भवेन्नित्यं स्नायात्त्रिषवणं बुधः
सर्वभूतानु[4]कम्पः स्यात्प्रतिग्रहविवर्जितः । ॥ ५ ॥
वेदाभ्यासं सदा कुर्याद्वाग्यतः सुसमाहितः
अग्निहोत्रं च जुहुयात्पञ्चयज्ञान् समाचरेत् । ॥ ६ ॥
एकवारं समाश्नीद्रात्रौ ध्यानपरो भवेत्

---

[1] अस्याध्यायस्य विषयसंग्रहः कूर्मपुराणात्, पद्मपुराणात् कृतोऽस्ति प्रायः पञ्चविंशतिश्लोकपर्यन्तम् । कू.पु. व्यासगीता अध्यायः २७, प.पु. स्वर्गखण्डः अध्यायः ७९ । एतयोरपेक्षया विवरणमधिकमत्र दृश्यते ।

[2] कर्करीकरणं देहस्य काठिन्यापादनम् ।

---

[2] जर्जरी (च) [3] चा (ग च) [4] शिरोनखश्मश्रुमलानि (च) [5] कम्पी (च)

जितेन्द्रियो जितक्रोधो भवेदध्यात्मचिन्तकः । ॥ ७ ॥
भूमौ शयीत सततं सावित्रीं च [1]जपेद्विज
ब्रह्मचारी भवेन्नित्यं न पत्नीमपि सञ्चरेत् ।[2] ॥ ८ ॥
क्रोधपैशुन्यनिन्दादीन्दूरतः परिवर्जयेत्
नित्यं चान्द्रायणं कुर्यान्मासि मासि वने स्थितः । ॥ ९ ॥
[3]सद्यः प्रकाशिको वा स्यान्मास[4]सञ्चायिकोऽपि वा ।
षण्मासनिचयो वा स्या[5]त्समानिचय एव व
त्यजेदाश्वयुजे मासि सम्पूर्णं पूर्वसञ्चितम् ॥ १० ॥
दन्तोलूखलिको वा स्यात्कापोतीं वृत्तिमाश्रयेत् ।
अश्मकुट्टो भवेद्वापि षष्ठकालभुगेव वा ॥ ११ ॥
ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षास्वभ्रावकाशकः ।
आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयेत्तपः ॥ १२ ॥
योगाभ्यासरतश्च स्याद्रुद्राध्यायी सदा भवेत् ।
अथर्वशिरसोऽध्येता[6] वेदान्ताभ्यासतत्परः ॥ १३ ॥
[7]न द्रुह्येत्सर्वभूतानि निर्द्वन्द्वो निर्भयो भवेत् ।
अथवाग्निं समारोप्य स्वात्मनि ध्यानतत्परः ॥ १४ ॥

---

[2] संगच्छेदित्यर्थः । चरगतिभक्षणयोः इत्यस्माद्धातोः ।

[3] सद्यः प्रक्षालिको वा स्यादिति कूर्मपुराणपाठः । तत्र प्रक्षालनं नाम तत्काल-पर्याप्तस्याहारसंग्रहेण सञ्चयस्य प्रक्षालनरूपतापादनम् । असञ्चय इति यावत् । सद्यः प्रकाशिकेत्यस्य पाठस्यापि तदेव तात्पर्यम् ।

---

[1] जपेद्द्विजाः (च) ;[4] सञ्चायिकं तु वा (च) [5] समानेरय (क ख ग घ) समानरयचैव वा (च) अत्रत्यः पाठः कूर्मपुराणात् स्वीकृतः । मातृकापाठः सङ्गत इव न दृश्यते । [6]वेदाभ्यासरतः सदा (च) न द्रोहेत्सर्वं (क ख ग घ)

[1]निक्षिप्य भार्यां पुत्रेषु गच्छेद्वनमतन्द्रितः ।
अनग्निरनिकेतः स्यान्मुनिर्मोक्षपरो भवेत् ॥ १५ ॥

तापसेष्वेव विप्रेषु सात्विकं भैक्षमाचरेत् ।
गृहमेधिषु चान्येषु द्विजेषु [2]वनवासिषु ॥ १६ ॥

[3]महाप्रस्थानिकं वासं [4]कुर्यादनशनेन वा ।
अग्निप्रवेशमन्यद्वा कुर्यात्संन्यासमात्मवित् ॥ १७ ॥

यस्तु सम्यगिममाश्रमं शिवं
संश्रय[5]त्यशिवपुञ्जनाशनम् ।
[6]सोऽप्यमुत्र परमैश्वरं पदं
याति[7] तत्र जगतोऽग्र्य[8]संस्थितम् ॥ १८ ॥

## संन्यासाश्रमनिरूपणम्

[9]एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं संन्यासेन नये[10]द्बुधः ॥ १९ ॥

आश्रमाणां च सर्वेषां सन्यासः श्रेष्ठ उच्यते ।
प्राजापत्यां निरूप्येष्टिमाग्नेयीमथ वा पुनः ॥ २० ॥

---

[1] अस्याः पङ्क्तेः अत्रौचित्यं न दृश्यते च प्रतौ पङ्क्तिरियं नास्ति ।

[3] महाप्रस्थानिकं वासौ कुर्यादनशनेन वा इति कूर्मपुराणपाठः । अनशनेन महाप्रस्थानिकं वासं इत्यस्यापि स एवार्थः ।

[9] प्रायः यतिधर्माः कूर्मपुराणात्पद्मपुराणच्च सङ्कलिताः ।

---

[2] वनवासिनाम् (च) [4] कुर्यादनशनं तु वा (क ख ग घ) [5] त्यशुभ (च)
[6] [illegible] (ग) [7] यत्र (ग) [8] संस्थितिः (ग)

[1]दान्तः पक्वकषायोऽसौ ब्रह्माश्रममुपाविशेत् ।
एकोद्दिष्टविधानेन कुर्याच्छ्राद्धानि षोडश ॥ २१ ॥

अग्निमान्पार्वणेनैव विधिना [2]निर्वहेत्स्वयम् ।
कृच्छ्रांस्तु चतुरः कृत्वा पावनार्थमनाश्रमी ।
आश्रमी तप्तकृच्छ्रं च तेनासौ योग्यतां व्रजेत् ॥ २२ ॥

## संन्यासिनां अष्टौ श्राद्धानि

दैव[3]मा ऋषिकं दिव्यं पित्र्यं मातृकमानुषम् ।
भौतिकांश्चात्मनश्चान्ते अष्टौ श्राद्धानि निर्वपेत् ॥ २३ ॥

## कर्मसंन्यासिलक्षणम्

यस्त्वग्नीनात्मसात्कृत्वा ब्रह्मार्पणपरो द्विजः ।
स ज्ञेयः कर्मसंन्यासी महायज्ञपरायणः ॥ २४ ॥

## वेदसंन्यासिलक्षणम्

वेदमेवाभ्यसेन्नित्यं निराशी[4]र्निष्प्रतिग्रहः ।
प्रोच्यते वेदसंन्यासी मुमुक्षुर्विजितेन्द्रियः ॥ २५ ॥

## ज्ञानसंन्यासिलक्षणम्

यः [5]सर्वसङ्गनिमुक्तो निर्द्वन्द्वश्चैव निर्भयः ।
प्रोच्यते ज्ञानसंन्यासी स्वात्मज्ञाने व्यवस्थितः ॥ २६ ॥

---

[1] दान्तः इन्द्रियनिग्रही । पक्वकषायता । कषायशब्दोऽत्र विरोधिद्वन्द्वसूचकः । निर्द्वन्द्वता मनसः परिशुद्धिश्च अनेन ज्ञायते ।

---

[2] निर्वपेत (ग) [3] मानुषकं (च) [4] निष्परिग्रहः (च) [5] सर्वे (ग)

## भिक्षुभेदाः तारतम्यनिरूपणं च

[1]चतुर्विधाः स्युर्विज्ञेया भिक्षवो वृत्तिभेदतः ।
कुटीचका मुनिश्रेष्ठाः तथैव च बहूदकाः ॥ २७ ॥
हंसश्चान्यस्तथैवान्यः परहंससमाह्वयः ।
कुटिचकादपि श्रेष्ठो भिक्षुकश्च बहूदकः ॥ २८ ॥
हंसो बहूदकाच्छ्रेष्ठः परहंसस्ततः परः ।
परहंसादपि श्रेष्ठश्चाश्रमी नास्ति कश्चन ॥ २९ ॥

## कुटीचकवृत्तिनिरूपणम्

कुटीचकश्च संन्यस्य स्वे स्वे सद्मनि नित्यशः ।
भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहे[2]ऽथवा ॥ ३० ॥
शिखायज्ञोपवीती स्यात्त्रिदण्डी सकमण्डलुः ।
वाग्दण्डः कायदण्डश्च मनोदण्डश्च ते त्रयः ॥ ३१ ॥
यस्यैते नियता दण्डाः स त्रिदण्डी महामुनिः ।
सपवित्रश्च काषायी गायत्रीं च सदा जपेत् ॥ ३२ ॥

## बहूदकवृत्तिनिरूपणम्

[3]बहूदकश्च संन्यस्य बन्धुपुत्रादिवर्जितः ।
सप्तागारं चरेद्भैक्षं एकान्नं परिवर्जयेत् ॥ ३३ ॥
गोवालरज्जुसम्बन्धत्रिदण्डं [4]शिक्यमत्रणम् ।

---

[3] एतदनन्तरं प्रायः सप्तश्लोकाः स्कन्दपुराणस्थाः । पराशरमाधवीयेऽपि एतत् प्रकरणे दृश्यन्ते । [4] पात्राधारकृते रज्जुनिर्मितो बन्धः शिक्यम् ।

---

[1] चतुर्विधास्तु (घ) [2] तथा (च)

जलपात्रं पवित्रं च [1]खनित्रीं च कृपाणिकाम् ।
शिखा यज्ञोपवीतं च देवताराधनं चरेत् ॥ ३४ ॥

## हंसवृत्तिनिरूपणम्

हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ।
[2]कन्थां कौपीनमाच्छाद्यमङ्गवस्त्रं बहिःपटम् ॥ ३५ ॥

एकं तु वैणवं दण्डं धारयेन्नित्यमादरात् ।
देवतानामभेदेन कुर्याद्ध्यानं समर्चयेत् ॥ ३६ ॥

## परहंसवृत्तिनिरूपणम्

परहंसस्त्रिदण्डांश्च रज्जुं गोवालनिर्मिताम् ।
शिखां यज्ञोपवीतं च नित्यकर्म परित्यजेत् ॥ ३७ ॥

कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् ।
अक्षमालां च गृह्णीयाद्वैणवं दण्डमव्रणम् ॥ ३८ ॥

[3]माधूकरमथैकान्नं परहंसः समाचरेत् ।
नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः
तस्माद्योगानुगुण्येन भुञ्जीत परहंसकः । ॥ ३९ ॥

प्रणवाद्या[4]स्ततो भेदाः प्रणवे पर्यवस्थिताः

---

[1]खनित्री कृपाणिका च अल्पगात्रिका । केवलं स्वजीविकानिर्वहणार्थं न तु विशेषतो भूमिं भेत्तुं वृक्षादीन् छेत्तुं वा । [2] कन्था भिक्षादिग्रहणार्थं वाससां सन्धारणार्थं वा वस्त्रनिर्मितवेष्टनम् । तच्च भुजे निक्षिप्यते ।

[3] चरेन्माधूकरं भैक्ष्यं यतिर्म्लेच्छकुलादपि ।
एकान्नं तु न भुञ्जीत बृहस्पतिसमो यतिः ॥ इति यमस्मृत्या माधूकरीति यत्रकुत्रापि अनेकमूलैः भिक्षामादद्यात् ।

---



[4] स्तथा (ख)

तस्मात्प्रणवमेकं तु परहंसः सदा जपेत् । ॥ ४० ॥

सन्ध्याकालेषु शुद्धात्मा प्रणवेन समाहितः
षट् प्राणायामकं कुर्याज्जपेदष्टोत्तरं शतम् । ॥ ४१ ॥

समस्साधौ च पापे च शत्रौ मित्रे च वै समः
शीतोष्णसुखदुःखेषु समस्सङ्गविवर्जितः । ॥ ४२ ॥

स्नानं शौचं तथा [1]भिक्षा नित्यमेकान्त[2]शीलता ।
भिक्षोश्चत्वारि कर्माणि पञ्चमं नोपपद्यते ॥ ४३ ॥

### परमहंसस्य कुत्सितानि कर्माणि

लाभपूजानिमित्तं हि व्याख्यानं शिष्यसंग्रहः ।
एते चान्ये च बहवो मन्त्रवादाश्च कुत्सिताः[3] ॥ ४४ ॥

[4]हुत्वा प्राणाहुतीः पञ्च ग्रासानष्टौ समाहितः ।
आचम्य देवं ब्रह्माणं ध्यायीत परमेश्वरम् ॥ ४५ ॥

### आरूढपतितलक्षणम्

उत्तमां वृत्तिमाश्रित्य नीचां वृत्तिं समाश्रितः ।
आरूढपतितो ज्ञेयः सर्वकर्मबहिष्कृतः ॥ ४६ ॥

### संन्याससमहत्ताप्रतिपादनम्

प्रव्रजन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्वा ब्रह्मलोकं गमिष्यति ॥ ४७ ॥

---

[3] कुत्सिता मन्त्रवादा इति । अथवा भिक्षोः मन्त्रवादान्ता सर्वेऽपि प्रकाराः कुत्सिता इति ।

[4] एतत्पूर्वं कूर्मपुराणे यति धर्मे 'आदित्ये दर्शयित्वान्नं भुञ्जीत प्राङ्मुखः शुचिः' इति दृश्यमाना पंक्तिः पठनीया । अन्यथार्थो न सङ्गच्छते ।

---

[1] भिक्षां (क ख ग घ च) [2] शीलताम् (च)

दैवं तु द्विविधं प्रोक्तं चरं [1]चाचरमेव च ।
चरं संन्यासिनः प्रोक्तमचरं प्रतिमादिकम् ॥ ४८ ॥

यस्याश्रमे मुनिर्नित्यं वर्तते मुनिसत्तमाः ।
न तस्य दुर्लभं किञ्चित्त्रिषु लोकेषु विद्यते ॥ ४९ ॥

दुर्वृत्तो वा सुवृत्तो वा मूर्खो वा पण्डितोऽपि वा ।
वेषमात्रेण संन्यासी पूज्यस्सर्वेश्वरो यथा ॥ ५० ॥

मृते न दहनं कार्यं परहंसस्य सर्वदा ।
कर्तव्यं खननं तस्य नाशौचं नोदकक्रियाः
एष वः कथितो विप्रा यतीनामाश्रमः परः ॥ ५१ ॥

इति श्रीमत्पुराणसारे [2]वानप्रस्थाश्रमाचारनिरूपणं नाम
अष्टाविंशोऽध्यायः ।

---

[2] वानप्रस्थयतिधर्मो नाम 'चं' मातृकायां नास्ति ।

---



[1] वा (क ख घ च)

## एकोनत्रिंशोऽध्यायः

### प्रायश्चित्तविधिनिरूपणम्

सूतः —

[1]अतः परं प्रवक्ष्यामि [2]प्रायश्चित्तविधिं शुभम् ।
सर्वेषामेव वर्णानां दोषाणामपनुत्तये ॥ १ ॥

### प्रायश्चित्तार्हाणां निरूपणम्

अकृत्वा विहितं कर्म कृत्वा निन्दितमेव च ।
दोषमाप्नोति पुरुषः प्रायश्चित्तं विशोधनम् ॥ २ ॥

देवतिर्यङ्मनुष्याणामधर्मनियतात्मनाम्
[3]धर्मराजः स्मृतः शास्ता[4] सुघोरैर्विविधै[5]र्वधैः ॥ ३ ॥

विनयाचा[6]युक्तानां प्रमादात् स्खलितात्मनाम् ।
प्रायश्चित्तैर्गुरुश्शास्ता न च तैर्दृश्यते यमः ॥ ४ ॥

पारदारिकचौराणां अन्याय्यव्यवहारिणाम् ।
नृपतिश्शासकस्तेषां प्रच्छन्नानां च धर्मराट् ॥ ५ ॥

---

[1] प्रायश्चित्तविवरणं कूर्मपुराणात् प्रायः संगृहीतम् । कू.पु. ३०—३४ आदितः अष्टौ श्लोकाः शिवपुराणे लभ्यन्ते । शिवपुराणे उमासंहिता अ. ६, ७

[2] प्रायश्चित्तं नाम पापक्षयमात्रसाधनत्वेन विधिबोधितं कर्म । प्रायस्य पापस्य विशोधनम्' यद्वा प्रायस्य तपसः चित्तं निश्चयः ।

[3] धर्मराजो यमः । [4] शास्ता शासकः । [5] वधश्चात्र ताडनमेव । प्राणवियोगस्य असाध्यत्वात् ।

---

[6] वरः (च) [6] युक्तानां (न)

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् ।
तस्मात्कृतस्य पापस्य प्रायश्चित्तं समाचरेत् ॥ ६ ॥

यः करोति स्वयं कर्म कारयेद्वाऽनुमोदयेत् ।
मनसा कर्मणा वाचा तस्य चाधोगतिः फलम् ॥ ७ ॥
व्रतोपवासनियमप्लवेनोत्तीर्यते च तत् ।
प्रायश्चित्तमकृत्वा तु न तिष्ठेद्ब्राह्मणः क्वचित् ॥ ८ ॥

यद्ब्रूयुर्ब्राह्मणाः शान्ता विद्वांसो वेदपारगाः ।[1]
स[2] एकः स्यात्परो धर्मो नातः परतरोऽस्ति वै ॥ ९ ॥

## प्रायश्चित्ततारतम्यनिरूपणम्

[3]अकामात्कृतदोषस्य प्रायश्चित्तं विदुर्बुधाः ।
कामतश्चेद्द्विजश्रेष्ठाः द्विगुणं प्रोच्यते बुधैः ॥ १० ॥
कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्योक्तं नान्येषां मुनिपुङ्गवाः ॥ ११ ॥

## अतिपातकं तत्प्रायश्चित्तं च

स्वमातृगमनं चैव स्वपुत्रीगमनं तथा ।
स्नुषाया गमनं चैतदतिपातकमुच्यते ॥ १२ ॥
अतिपातकिनश्चैते प्रविशेयुर्हुताशनम् ।
[4]नान्यथा निष्कृतिस्तेषां विद्यते हि कथञ्चन ॥ १३ ॥

## महापातकिनः । तेषां प्रायश्चित्तं च

ब्रह्महा च सुरापश्च [5]स्तेनस्तु गुरुतल्पगः ।

---

[1] प्रायश्चित्तबोधनार्थं विदुषां परिषदावश्यिका इति स्मृतिषूक्तम् ।

---

[2] स एव (ख) [3] अज्ञानकृत (ग) [4] न ह्यन्यथा (ग) [5] स्तेयी (घ)

तत्संयोगी च पञ्चैते महापातकिनः स्मृताः ॥ १४ ॥
अश्वमेधेन शुद्ध्येयु[1]र्महापातकि[2]नस्त्विमे ।
पृथिव्यां सर्वतीर्थानां तथानुसरणेन वा ॥ १५ ॥

**अनुपातकिनः । तेषां प्रायश्चित्तं च**

हननं क्षत्रियादीनां कूटसाक्ष्यादिकं तथा ।
विप्राणां भूमिहरणं पितृव्यस्त्र्यादिमैथुनम् ॥ १६ ॥
अनुपातकान्येतानि विद्वद्भिः कीर्तितानि तु ।
अनुपातकिनस्त्वेते महापातकिनो यथा ।
अश्वमेधेन शुद्ध्यन्ति तीर्थानुसरणेन वा ॥ १७ ॥

**उपपातकिनः । तेषां प्रायश्चित्तं च**

गोवधोऽसत्यवचनं पारदार्यं च पैशुनम् ।
पितृमातृसुतत्यागो भृतकाध्यापनादिकम्
उपपातकमित्युक्तं नास्तिकत्वादिकं तथा ॥ १८ ॥
उपपातकिनस्त्वेते कुर्यु[3]श्चान्द्रायणादिकम्[4] ।
[5]पराकमथवा कुर्युर्यजेयु[6]र्गोसवेन वा ॥ १९ ॥

---

[4] एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत् ।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥ मनुस्मृतिः अ. ११, श्लो. २१६
एतच्चान्द्रायणं पिपीलिकामध्ययवमध्ययतिशिशुभेदाच्चतुर्विधम् । विस्तरस्तु मनुस्मृतौ द्रष्टव्यः ।

[5] यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पराको नाम कृच्छ्रोऽयं सर्वपापपनोदनः ॥ मनुः अ. ११, श्लो. २१५

[6] गौः सूयते पीड्यते, हिंस्यते यत्र, गोमेधयज्ञः ।

---

[1] सर्वतीर्थेन वा भुवि (ग) [2] नोऽपि हि (च) [3] श्चान्द्रायणं नराः (ग)

### जातिभ्रंशकरपातकं प्रायश्चित्तं च

ब्राह्मणस्य रुजः कृत्यं घ्रातिरघ्रेयमद्ययोः ।
जैह्म्यं [1]पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥ २० ॥

जातिभ्रंशकरं कर्म कृत्वाऽन्यतममिच्छया ।
चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ २१ ॥

### सङ्करीकरणपातकं तत्प्रायश्चित्तं च

वधः पशूनां ग्राम्याणामारण्यानां तथैव च ।
सङ्करीकरणं ज्ञेयं मत्स्यादीनां वधस्तथा ॥ २२ ॥

सङ्करीकरणं कृत्वा मासमश्नीत यावकम्[2] ।
कर्म कृच्छ्रातिकृच्छ्रं[3] वा प्रायश्चित्तं तु कारयेत् ॥ २३ ॥

### अपात्रीकरणपातकं तत्प्रायश्चित्तं च

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ।
अपात्रीकरणं ज्ञेयमसत्यं चैव भाषणम् ॥ २४ ॥

---

[1] पुंसि मुखादाविति मनौ कुल्लूकभट्टः । [2] कुल्मासः, एव एव यावकम् ।
[3] वसिष्ठः—त्र्यहं दिवा भुङ्क्ते नक्तमत्ति च त्र्यहम् । त्र्यहमयाचितव्रतं त्र्यहं न भुङ्क्ते इति कृच्छ्रः । अत्र बहवो नियमाः पराशरमाधवीये मन्वर्थमुक्तावल्यां आपस्तम्बेऽपि द्रष्टव्याः । अतिकृच्छ्रं चकृच्छ्रवदेव । नवसु दिवसेषु केवलमुक्तकालेषु एकैकग्रासभक्षणमात्रम् । दशमादिदिनत्रये पूर्ववदुपवासः ।

---

[3] धर्मकृच्छ्रादि (ग)

[1]अपात्रीकरणं कृत्वा [2]तप्तकृच्छ्रेण शुद्ध्यति ।
अतिकृच्छ्रेण वा तद्व[3]न्महासान्तपनेन वा ॥ २५ ॥

## मलिनीकरणपातकं तत्प्रायश्चित्तं च

पक्षिणां हननं चैव क्रिमिकीटवधस्तथा ।
मलिनीकरणं प्रोक्तं मद्याऽ[4]नुगतभोजनम् ॥ २६ ॥
मलिनीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति ।
कृच्छ्रातिकृच्छ्रमथवा प्रयश्चित्तं विशोधनम् ॥ २७ ॥

## प्रकीर्णकपातकं तत्प्रायश्चित्तं च

यदनुक्तं भवेत्पापं तत्प्रकीर्णकमुच्यते ।
प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम् ।
प्रायश्चित्तं द्विजः कुर्याद्ब्राह्मणानुमतः सदा ॥ २७ ॥
अथवा सर्वदोषाणां विशुद्ध्यर्थं समाहितः ।

---

[2] तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः ।—मनुः ११-२१४ ।

[3] षट्पलं तु पिबेदम्भः त्रिपलं तु पयः पिबेत् । पलमेकं पिबेत्सर्पिः तप्तकृच्छ्रं विधीयते । — (पराशरः) [3] कुशोदकं च गोक्षीरं दधि मूत्रं शकृत्घृतम् । जग्ध्वा परेऽह्न्युपवसेत्–कृच्छ्रं सान्तपनं चरन् । पृथक् सान्तपनद्रव्यैः पडहः सोपवासिकः । सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनं स्मृतम् ॥–(याज्ञवल्क्यः)

---

1 एतदारभ्य पङ्क्तिद्वयस्थले । तप्तकृच्छ्रातिकृच्छ्रेण शुद्ध्येत् सान्तप-नेन वा ' इति ग पाठः

4 त्रुटित (चं) 'ग' मातृकायां एतदनन्तरं 'मलिनीकरणीयेषु तप्तकृच्छ्रादिभिर्भवेत् । प्रायश्चित्तमनुक्तं यत् पापं वा तत्प्रकीर्णकम् । प्रकीर्णपातके कुर्यात् प्रायश्चित्तं विधानतः' इति पङ्क्तित्रयं अत्रत्य पङ्क्तिषट्कस्थाने दृश्यते ।

### ज्ञानयज्ञेन पापपरिहारकथनम्

कुर्यात्त्रिपवणस्थानं[1] वेदान्ताभ्यासतत्परः ॥ २९ ॥

शुद्धो विनयसंयुक्तः [2]शान्तदान्तादिसंयुतः ।
यावज्ज्ञानोदयस्तावद्वेदान्तार्थं प्रसाधयेत् ॥ ३० ॥

नास्ति ज्ञानात्परं किञ्चित्पापकान्तारदाहकम् ।
मासमात्राद्विनश्यन्ति क्षुद्रपापानि सुव्रताः ॥ ३१ ॥

षण्मासाभ्यसनात्सर्वं नश्यत्येवोपपातकम् ।
महापातक[3]संघातं नित्यं वेदान्तसेवनात् ॥ ३२ ॥

तस्मात्सर्वप्रयत्नेन पापशुध्यर्थ[4]मात्मनः ।

### वैदिककर्मणा प्रायश्चित्ताचरणम्

सर्वदा सर्वभावेन वैदिकं कर्म चाश्रयेत् ॥ ३३ ॥

कृत्वा पापं पूर्वमबुद्धिपूर्वं
पुण्यानि चेत्कुरुते बुद्धिपूर्वम् ।
स तत्पापं नुदते पुण्यशीलो
वासो यथा[5] मलिनः क्षारयुक्त्या ॥ ३४ ॥

### सर्वपापनिवारणोपायकथनम्

यथादित्यः [6]पूर्वमुद्यन्तमस्सर्वं व्यपोहति ।
कल्याणमाचरन्नेवं पापं मङ्क्षु[7] व्यपोहति ॥ ३५ ॥

---

[1] त्रयाणां सवनानां कालानां समाहारः । प्रातर्मध्याह्नसायाह्नेषु स्नानं कुर्यात् ।
[7] मंक्षु = नचिरादिति ।

---

[2] शान्तिदास्थादि [3] संघानि (घ) [4] मात्मवान्(ग) [5] मलिनः क्षारयुक्तः (क ख घ च)
[7] पूर्वमध्यं (क ख)

सर्वस्वदानमथवा सर्वपापप्रणाशनम् ।
[1]पुण्यक्षेत्राभिगमनं [2]सर्वपापप्रणाशनम् ॥ ३६ ॥

देवताभ्यर्चनं नृणामशेषात्पापनाशनम् ।
विप्राणां पूजनं चैव हरिसंस्मरणं तथा ।
सर्वेषामेव पापानां प्रायश्चित्तं विदुर्बुधाः ॥ ३७ ॥

इति श्रुत्वा मुनिश्रेष्ठाः नैमिशीयास्तपोधनाः ।
प्रसन्नहृदयास्सर्वे पूजयामासुरादरात् ॥ ३८ ॥

इति श्रीमत्पुराणसारे [3]प्रायश्चित्तनिरूपणं नाम
एकोनविंशोऽध्यायः

---



1 सर्वक्षेत्र (ग) 2 पावनं देवतार्चनम् (श ख घ च) 3 प्रायश्चित्तविधिर्नाम (क)

## त्रिंशोऽध्यायः

### यवनादीनां कर्तव्यम्

[1]ऋषयः —

यवनाः किरातगान्धाराश्चीनाश्शबरबर्बराः ।
शकाः[2] तुषाराः कह्वाश्च पह्लवाश्चान्ध्रमद्रकाः ॥ १ ॥

[3]ओड्राः पुलिन्दा आमर्दा[4]काञ्चा म्लेच्छाश्च सर्वशः ।
कथं धर्मं चरिष्यन्ति सर्वे विषयवासिनः ।
एतदिच्छामहे श्रोतुं भगवांस्तद्ब्रवीतु नः ॥ २ ॥

### दस्युधर्मनिरूपणम्

सूतः —

मातापित्रोश्च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥ ३ ॥

भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः[5] ।
देशधर्मक्रियाश्चापि[6] तेषां धर्मो विधीयते ॥ ४ ॥

पितृयज्ञास्तथा[7] कूपाः [8]प्रपाश्च शयनानि च ।
दानानि च यथाकाले दातव्यानि द्विजातिषु ।

---

[1] अस्याध्यायस्य संग्रहः महाभारतकृतः प्रायः । म.भा. शांतिपर्व अ. १३९

[3] ओड्रा इति महाभारते । [7] कुर्वन्ति मण्डूका अत्रेति अल्पविस्तारो गम्भीरो मण्डलाकृतिः बद्धोऽबद्धो वा भूखातः । [8] प्रपा पानीयशालिका ।

---

[2] तुषाराः (ग) [4] राचम्येजोश्च (ग) [5] एतदनन्तरं ग्रन्थस्थाः षट्पङ्क्तयः 'ग' मातृकायां न संन्ति। तत्र एतान्येव प्रकाराणि कर्तव्यान्यपि दस्युभिः । ऋषयः । हीने परस्के धर्मे इत्यादि पठ्यते । [6] विहितानि द्विजोत्तमा (च)

[1]पाकयज्ञा[2]महार्थाश्च दातव्यास्सर्वदस्युभिः ॥ ५ ॥

एतान्येवंप्रकारेण विहितानि द्विजोत्तमाः ।
सर्वलोकस्य कर्माणि कर्तव्यानीह दस्युभिः ॥ ६ ॥

## आपद्धर्मनिरूपणम्

हीने परमके धर्मे [3]सर्वलोकविलम्बिते ।
अधर्मे धर्मतां प्राप्ते धर्मे चाधर्मतां गते ॥ ७ ॥

मर्यादासु प्रभिन्नासु [4]क्षुधिते लोकनिश्चिते[5] ।
राजभिः पीडिते लोके चोरैर्वापि प्रपीडिते ॥ ८ ॥

सर्वाश्रमेषु मूढेषु कर्मसूपहतेषु च ।
अविश्वस्तेषु सर्वेषु नित्यभीतेषु [6]चानघ ।
नित्यञ्च हन्यमानेषु वञ्चयत्सु परस्परम् ॥ ९ ॥

[7]प्रदीप्तेषु च देशेषु ब्राह्मण्ये [8]चापि पीडिते ।
[9]अवर्षति च पर्जन्ये मिथो भेदे समुत्थिते ॥ १० ॥

केनस्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ।
कथमापदि वर्तेत तन्मे ब्रूहि महामते ॥ ११ ॥

---

[1] पाकसाध्या यज्ञाः । ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः । मनुस्मृतिः २-७६ । ब्रह्मयज्ञादन्ये ये पञ्चमहायज्ञान्तर्गता वैश्वदेवहोमबलिकर्मनित्यश्राद्धातिथिभोजनात्मकाश्चत्वारः पाकयज्ञाः ।

---

[2] 'महार्थाश्च' इति महाभारतपाठः । [3] सर्वलोकस्य लङ्घते (क ख) लङ्घिते (घ)
[4] क्षुभिते (घ) [5] निश्चये (ग) [6] सूतज (ग) [7] अद्‌तेषु (क ख घ च)
[8] [illegible] (च) [9] अवर्षयति (क ख घ च)

कथञ्च राजा वर्तेत लोके कलुषतां गते ।
कथमर्थाच्च धर्माच्च न क्षीयेत नर[1]स्ततः ॥ १२ ॥

सूतः —

राजमूला मुनिश्रेष्ठाः योगक्षेमसुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणं च [2]भयानि च ॥ १३ ॥

कृतं त्रेता द्वापरं च कलिश्च [3]मुनिसत्तमाः ।
राजमूला इति मतिर्मम नास्त्यत्र संशयः ॥ १४ ॥

तस्मिन्नभ्यागते काले प्रज्ञानां दोषकारिते ।
विज्ञानबलमाश्रित्य जीवितव्यं तदा भवेत् ॥ १५ ॥

## विप्राणामापद्धर्मनिरूपणम्

विप्राणां क्षात्रधर्मेण वृत्तिरापत्सु कीर्तिता ।
अशक्तः क्षत्र[4]धर्मेण वैश्यधर्मेण वर्तयेत् ॥ १६ ॥

कृषिगोरक्षमास्थाय व्यसने [5]वृत्तिसंक्षये ।
पण्यानि चापि[6]विक्रीणन् [7]पुण्यलोकान्न हीयते ॥ १७ ॥

सुरालवणमित्येतत्तिलान्केसरिणः पशून् ।
वृषभान्मधु मांसं च कृतान्नं च मुनीश्वराः ॥ १८ ॥

सर्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्जयेत् ।
एतेषां विक्रयादेव ब्राह्मणो [8]नरकं व्रजेत् ॥ १९ ॥

यावन्न चेदुपायोऽन्यो विद्यते प्राणधारणे ।
यदा[9]भैक्ष्यं न विन्देत तत्र तत्राऽपि पर्यटन् ॥ २० ॥

---

[1] स्सदा (ग) [2] भयादि च (ग) [3] मुनिपुङ्गवाः (ग) [4] धर्मे तु (ग)
[5] वृत्तिकर्षिते (च) [6] विक्रीयात् (च) [7] पुण्यलोके महीयते (ग) [8] नरके पतेत (ग)
[9] भैक्ष्येण विद्येत (ग)

## ब्राह्मणस्य अत्यापदि हीनवृत्तिप्रशंसा

आपत्सु [1]विहितं स्तेयं [2]विशिष्टसमहीनतः ।
हीनादादेयमादद्यात्समाद्वा तदनन्तरम् ।
असम्भवे त्याददीत विशिष्टादपि धार्मिकात् ॥ २१ ॥
यथा यथा हि जीवेत तत्कर्तव्यमलीलया ।

## जीवनप्रशंसा

[3]जीवनं मरणाच्छ्रेयो जीवन्धर्ममवाप्नुयात् ॥ २२ ॥
येन केन विशेषेण कर्मणा येनकेनचित् ।
उज्जिहीर्षेत्सीदमानः समर्थो धर्ममाचरेत् ॥ २३ ॥
ग्रस्तो [4]यश्चापदाऽत्यर्थं आपद्धर्मं न वाञ्छति ।
आपद्धर्मरतो [5]यस्स स्वस्थस्सन् गर्हितावुभौ ॥ २४ ॥
एवं विद्वानदीनात्मा [6]व्यसनस्थो जिजीविषुः ।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥ २५ ॥
त्रेताद्वापरयोस्सन्धौ पुरा देवव्यतिक्रमात् ।
अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी ॥ २६ ॥
तस्मिन्[7]प्रतिभये काले क्षीणधर्मे मुनीश्वराः ।

---

[7] प्रतिभयो भयानकः ।

---

[1] विहिदस्त्वेतं (क ख घ च)
[2] विशिष्टस्तेन हीनतः (क घ) विशिष्टस्सन (ख) न विशिष्टमहीनतः (ग च) गृहीतः पाठः महाभारतस्थः [3] जीवितं (ग)
[4] यत्र यदात्यर्थं (क) यत्रायदा (घ) ग्रस्तोमत्वापात्यर्थं (च)
[5] यश्च (ग) [6] व्यवस्थो न हि जीविषुः क ख घ .... .... न च (च)

विश्वामित्रोऽपि तं धर्ममुक्तवान् [1]श्वपचं प्रति ॥ २७ ॥
[2]एवं बुद्धिं समास्थाय [3]जीवितव्यं सदा भवेत् ।
जीवन्पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ॥ २८ ॥

इति श्रीमत्पुराणसारे म्लेच्छधर्मापद्धर्मकथनं नाम
त्रिंशोऽध्यायः

( समाप्तं वर्णाश्रमाचारनिरूपणम् )

---

[1] क्षुधार्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् ।
चण्डालहस्तादादाय धर्माधर्मविचक्षणः ॥ मनुः १०-१०८
कदाचिदनावृष्टिहते काले बुभुक्षितो विश्वामित्रः इतस्ततोऽन्नमपश्यन् चण्डालगृहं गत्वा रात्रावेव श्वजाघनीं तन्त्रीं चोरयितुं प्रवृत्तः । विदितसकलवृत्तः चण्डालः श्वमांसभक्षणं तस्य धर्मविरुद्धमकथयत् । इत्यादिकथा महाभारते शान्तिपर्वणि द्रष्टव्या । म.भा. शान्तिपर्व अ. १४१

---

[1] शवरं (क ख घ) शम्बरं (च) [2] एकां (क ख घ च) [3] जीवितव्यः (क ख ग घ)

## एकत्रिंशोऽध्यायः

### सर्वसाधारणधर्मश्रवणार्थं मुनीनां प्रश्नः

मुनयः —

वर्णाश्रमाणामाचारस्त्वया सूत समीरितः ।
सर्वसाधारणं धर्ममिदानीं वक्तुमर्हसि ॥ १ ॥

सूतः —

ब्रह्मचर्यमहिंसा च क्षमा शौचं दया दमः ।
सन्तोषः सत्यमास्तिक्यं धर्मस्साधारणो ह्ययम् ॥ २ ॥

### साधारणधर्मसमूहे धर्मस्य वैशिष्ट्यम्

सर्वेषामेव वर्णानां सत्यमेव विशिष्यते ।
सत्येन सर्वमाप्नोति सत्ये सर्वं प्रतिष्ठितम् ॥ ३ ॥
यथार्थकथनाचारं सत्यं प्रोक्तं द्विजातिभिः ।
सत्येन पूयते मर्त्यो धर्मः सत्येन वर्धते ॥ ४ ॥
सत्यमेव परं दानं सत्यमेव परं तपः ।
सत्यमेव परो धर्मो लोकानामिति [1]हि श्रुतिः ॥ ५ ॥
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
तस्मात्सत्यं हि वक्तव्यं सर्वैरप्यविशेषतः ॥ ६ ॥
[2]सत्यं त्रयोदशविधं सर्वलोकेषु भूसुराः ।
सत्यं च समता चैव दमश्चैव [3]शमस्तथा ॥ ७ ॥

---

[2] अयं भागः महाभारतात् संगृहीतः । म.भा. अ. १५६ सत्यं त्रयोदशविधमिति धर्मस्वरूपस्यैव सत्यस्यैते भेदाः । सत्यमपि परिगणयित्वा इच्छाद्वेषयोः कामक्रोधयोश्च क्षयेन त्रयोदश भेदा भवन्ति ।

---

[1] वै श्रुतिः (ग) विश्रुतिः (च) [3] न संशयः (ग च)

अमात्सर्यं क्षमा चैव [1]ह्रीस्तितिक्षाऽनसूयता ।
इच्छाद्वेषक्षयं प्राप्य कामक्रोध[2]क्षयं तथा ।
एते त्रयोदशाकाराः पृथग्धर्मैकलक्षणाः ॥ ८ ॥
भजन्ते सत्यमेवेह [3]मोक्षयन्ति च सुव्रताः ।
[4]नान्यः शक्यो गुणानां हि वक्तुं सत्यस्य केनचित् ॥ ९ ॥
अतः सत्यं प्रशंसन्ति विप्रास्सपितृदेवताः ।

## सत्यव्रतप्रशंसायां बहुलाधेनूपाख्यानम्

[5]अस्मिन्नर्थे पुरावृत्तमितिहासं [6]पुरातनम् ॥ १० ॥
[7]माथुरे विषये रम्ये धनधान्यसमाकुले ।
पुरी [8]चन्द्रावती तत्र तटाकैरुपशोभिता ॥ ११ ॥

---

१. महाभारते अनुशासनपर्वणः अनुबन्धविभागे एषा कथा दृश्यते । तत्र धेन्वाः नामधेयं बहुलेति सूचितमस्ति । म. भा. अनुशासनपर्व Etd. सुखथंकर Appendix अध्यायः १५०

२. पद्मपुराणेऽपि कथेयं दृश्यते । तत्र धेनोर्नामधेयं नन्देति निरूपितम् । प.पु. सृष्टिखण्डः अध्यायः ११

३. स्कान्दपुराणे कपिलातीर्थमाहात्म्यनिरूपणावसरे कथेयं वर्णितास्ति । तत्र धेनोः नामधेयं कपिलेति दृश्यते । स्का.पु. प्रभासखण्डस्योपखण्डे अर्बुदखण्डे अध्यायः ०९

४. अत्रैव हाटकेश्वरक्षेत्रमाहात्म्यनिरूपणावसरे प्रस्तुतायां कथायां धेनोर्नाम नन्दिनीति । स्का.पु. नागरखण्डः अध्यायाः ७९,५०,५१

---

[1] ह्रीस्तिति ज्ञानसूयता (ग) तितिक्षा नानासूयता (च) [2] क्षयस्थता (ख)
[3] त्राययन्ति (ग) [4] नान्तः (ख ग च) [5] तस्मिन् (ग)
[6] ब्रवीसि वः (ग) [8] चन्द्रवती (क)

[1]अप्रमाणा सुरम्या च स्वातीनक्षत्रनिर्मिता ।
तस्यां तु द्विजमुख्यस्य कल्यणी धेनुरुत्तमा ।
सर्वलक्षणसंपन्ना सर्वावयवशोभिता ॥ १२ ॥

सा च यूथस्य सर्वस्य चचाराग्रे सुनिर्भया ।
वनान्तेष्वचिरोत्पन्नमविच्छिन्नं चरेत्तृणम् ॥ १३ ॥

लोहितो नाम तत्रैव पर्वतो यमुनातटे ।
तस्मिंस्तु पर्वते व्याघ्रः [2]कामरूपी तु नामतः ।
आस्ते तत्र चिरं कालं मेघ[3]गर्जितनिःस्वनः ॥ १४ ॥

अथ यूथात्परिभ्रष्टा बहुलाऽशनतृष्णया ।

## यूथभ्रष्टया व्याघ्रदर्शनम्

व्याघ्रस्य पुरतस्सा गौश्चरन्ती समुपस्थिता ।
अभ्यद्रवच्च तां व्याघ्रः तिष्ठ तिष्ठेति चाब्रवीत् ॥ १५ ॥

[4]नियतोऽत्र क्षुधार्तश्च षष्ठकाले बुभुक्षितः ।
[5]अत्र तृप्तिं करिष्यामि तव मांसेन कामतः ॥ १६ ॥

व्याघ्रस्य वचनं श्रुत्वा निष्ठुरं रोमहर्षणम् ।
सुतं कृपान्विता बालं चिन्तयन्ती रुरोद ह ॥ १७ ॥

पप्रच्छ च पुनर्व्याघ्रः किमिदं रुद्यते त्वया ।
किं वा सञ्चिन्त्यते शोकादशेषं कथयस्व मे ॥ १८ ॥

व्याघ्रस्य वचनं श्रुत्वा बहुला वाक्यमब्रवीत् ।

---

[1] सुप्रमाण (ख) [2] कामरूपीति (ग) [3] निर्जित (च) [4] नियतोऽद्री (ख छ)
[5] क्षुद्य (ग) अथ (घ) गमिष्यामि (ग) [6] अस्ति (क)

## बहुलाशोककारणम्

बहुला —

जीवितार्थं न शोचामि प्राप्तव्यं मरणं मया ॥ १९ ॥

जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च ।
पुत्रस्नेहवशाद्व्याघ्र दुःखेन रुदितं मया ॥ २० ॥

पुत्रहीनं जगच्छून्यं अपुत्रस्य कुतस्सुखम् ।
नास्ति पुत्रसमा प्रीतिर्नास्ति पुत्रसमा गतिः ॥ २१ ॥

अनृतं वक्ति लोकोऽयं चन्दनं किल शीतलम् ।
पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ॥ २२ ॥

अस्ति मे हृदि सन्तापः तं च संश्रोतुमर्हसि ।
इष्टः प्रथमजातश्च सुतस्तु मम बालिशः[2] ॥ २३ ॥

क्षीरपास्स च मे वत्सः तृणं नाद्यापि जिघ्रति ।
स च गोपकुले बद्धः क्षुधार्तो मामवेक्षते ॥ २४ ॥

तस्येच्छामि स्तनं [3]दातुं पुत्रस्नेहवशं गता ।
पाययित्वा तु तं वत्सं अवलिह्य च मूर्धनि ॥ २५ ॥

सखीनामर्पयित्वा च संदिश्य च हिताहितम् ।
पुनः प्रत्यागमिष्यामि यथेष्टं भक्षयिष्यसि ॥ २६ ॥

बहुलाया वचः श्रुत्वा मृगेन्द्रः पुनरब्रवीत् ।

### बहुलायै पुत्रदर्शननिराकरणम्

[4]किन्ते पुत्रेण कर्तव्यं मरणं किं न बुध्यसे ॥ २७ ॥

---

[2] बालिशः बालिं बुद्धिं श्यतीति शिशुः ।

---

[1] नास्ति (क) [3] पातुं (क) [4] किन्तु (क घ च)

गवां निकेतनं [1]सौम्यं [2]मातरं पितरं सुतम् ।
दृष्ट्वा सखीजनं भूयः कथं प्रत्यागमिष्यसि ॥ २८ ॥

### पुत्रं दृष्ट्वा प्रतिनिवर्तनविषये बहुलाकृतशपथाः

बहुला —

शपथैरागमिष्यामि सुतं दृष्ट्वा मृगाधिप ।
यत्पापं ब्रह्महत्यायां मातापितृवधेषु यत् ॥ २९ ॥

यत्पापं [3]लुब्धकानां तु [4]म्लेच्छानां गरदायिनाम् ।
तेन तापेन [5]लिप्येऽहं यद्यहं नागमे पुनः । ॥ ३० ॥

[6]सकृद्दत्वा तु यः कन्यां द्वितीये दातुमिच्छति ।
कथायां क्रियमाणाया[7]मन्तरायं[8] करोति यः ॥ ३१ ॥

गोष्ववज्ञां च ये कुर्युः[9] स्वपन्तं ताडयन्ति च ।
गृहं यस्यागतो विप्रो [10]निराशः प्रतिगच्छति ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥ ३२ ॥

---

[3] लुब्धकः लुभ्यति धनमिति लम्पटः । [4] म्लेच्छः म्लेच्छयति म्लेच्छति असंस्कृतं वदतीति । किरातादयः । गरं विषम् ।

[6] सकृदंशा निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥ मनु. अ. ९, ४७ अतः एकस्या एव कन्यायाः पुनः पुनः दानं निषिद्धम् । [8] अन्तरायः विघ्नः ।

[10] अशनमेव आशः । भोजनादि आतिथ्यरहितः अथवा आशादूरः इति वा ।

---

[1] सौम इति सर्वत्र मातृकासु । पद्मपुराणे पंक्तिरियं नास्ति । अयं पाठः मया स्थापितः युक्त इति मत्वा । [2] मातरः पितरः सुताः (च) [5] लिप्येयं (ग) [7] मन्तरं यत्करोति च (क ख ग घ) [9] शपन्ते (क ख ग घ)

[1]सुवर्णस्यापहरणे मेदिनीहरणे[2] तथा ।
आत्मनो हनने वापि पर्वणि स्त्रीसमागमे ।[3] ॥ ३३ ॥

तरुच्छेदे च यत्पापं दन्तानां नखकर्षणे[4] ।
तेन पापेन लिप्येऽहं[5] यद्येतदनृतं तथा ॥ ३४ ॥

कूटसाक्षिषु यत्पापं यत्पापं हयविक्रये ।
[6]वधूविलोकने पापं [7]परदाराभिमर्शने ।
तेन पापेन लिप्येऽहं [8]यद्येतदनृतं वदे । ॥ ३५ ॥

विधवा कञ्चुकोपेता सधवा कञ्चुकं विना
उभयोः पातकं यच्च तन्मह्यं भविता ध्रुवम् ॥ ३६ ॥

शरणागतञ्च त्यजतां ये लोकाः प्राणिघातिनाम् ।
[9]ये व्यभिचारिणां लोकाः ये च ब्रह्मद्विषामपि ॥ ३७ ॥

[10]भार्याञ्च ऋतुकालेषु ये लोका [11]नाभिगच्छताम् ।
तान्प्राप्नुयामहं लोकान्ये च [12]पापकृतामपि ॥ ३८ ॥

---

[1] सुवर्णं च तुलनेन षोडशमाषपरिमितम् ।

[3] ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा ।
पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥ मनुः. ३-४५ पर्वाणि चामावास्यदीनि । 'ऋतावुपेयात् अनृतौ च पर्ववर्जम्' । गोतमस्मृतिः ।

[6] वधूश्च स्त्रीमात्रम् । कन्यकानां दर्शनं न पापाय । निर्दोषदर्शनाः कन्यका इत्युक्तेः । सर्वर्णदीर्घधार्षम् ।

---

[2] ऽथवा (ग) [4] नखघर्षणैः (च) [5] यद्यहं नागमे पुनः (ग) [7] दारविलोकने (क ख घ च)
[8] यद्यहं नागमे पुनः (ग) [9] अभिचारेण ये लोकाः [10] भार्याय या ऋतुकाले तु (ख)
[11] न्यामि (ग घ) [illegible] पातकिनामपि (ग)

मित्रद्रोहेण यत्पापं यत्पापं [1]स्वामिवञ्चनात् ।
तेन पापेन लिप्येऽहं [2]यद्येतदनृतं वदे ॥ ३९ ॥

[3]एवमेतानि पापानि अनुक्तान्यपि कानिचित् ।
तेन पापेन लिप्येऽहं यद्येतदनृतं वदे ॥ ४० ॥

इत्येवं शपथैर्घोरैरागमिष्याम्यहं पुनः ।

### व्याघ्रेण सोपदेशमनुज्ञादानम्

बुद्ध्वा सप्रश्रयं व्याघ्रः पुनर्वचनमब्रवीत् ॥ ४१ ॥

सञ्जातः प्रत्ययोऽस्माकं शपथैर्बहुले त्वयि ।
कदाचिन्मन्यसे गत्वा मूर्खोऽसौ वञ्चितो मया ।
अत्रापि केचिद्ब्रुवते शपथे नास्ति पातकम् ॥ ४२ ॥

### अपातकपञ्चकम्

न [4]नर्मयुक्तं [5]त्वनृतं हिनस्ति
न स्त्रीषु [6]राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ ४३ ॥

इत्याहुर्नास्तिकाः केचिन्मूर्खाः पण्डितमानिनः ।
भ्रामयिष्यन्ति ते बुद्धिं [7]चक्रारूढमिव क्षणात् ॥ ४४ ॥

[8]मा ते बुद्धिर्भवेदेवं शपथै[8]रेष वञ्चितः ।
मातरं [9]पितरं दृष्ट्वा पुत्रं स्वजनमेव च ॥ ४५ ॥

---

[4] नर्म हास्यम् । [7] चक्रारूढं पुरुषं यथा भ्रामयिष्यन्ति तथेत्यर्थः ।

---

[1] स्वामिनामपि (क ख च) [2] यद्यहं नागमे पुनः (ग) [3] एवमादीनि .... .... .... तथानुक्तानि कानिचित् (ग) [5] सुकृतं (च) [6] युक्तं न (च) [7] मनो (च) [8] रेव (च) [9] भ्रातरं (ग)

सत्यमेवाग्रतः कृत्वा शीघ्रमागमनं कुरु ।
एतत्ते [1]दर्शितं सर्वं यथेष्टं कुरु साम्प्रतम् ॥ ४६ ॥

बहुला —

एवमेव महाव्याघ्र कस्त्वां वञ्चयितुं क्षमः ।
आत्मैव वञ्चितस्तेन यः [2]परं वञ्चयिष्यति ॥ ४७ ॥

## बहुलाया गोकुलगमनम्

सूतः —

इत्येवं[3] शपथान् कृत्वा बहुला सत्यवादिनी ।
अनुज्ञाता मृगेन्द्रेण [4]प्रयता पुत्रवत्सला ॥ ४८ ॥

अशक्ताऽऽत्मपरित्राणे विलपन्ती मुहुर्मुहुः ।
अथ सा गोकुलं गत्वा बहुला हृतविक्रमा ॥ ४९ ॥

दृष्ट्वाऽऽत्मवत्सं क्रोशन्तं पर्यधावत तं मुहुः ।
प्राप्य तां मातरं वत्सः [5]शङ्कितः [6]पर्यपृच्छति ॥ ५० ॥

वत्सः —

न ते पश्यामि सौम्यत्वं दुर्मना इव लक्ष्यसे ।
[7]उद्विग्नेव च ते दृष्टि[8]र्भीता वापि च दृश्यते ॥ ५१ ॥

## बहुलया वनवृत्तनिवेदनम्

बहुला —

पिब पुत्र स्तनं [9]मह्यं कारणं [10]परिपृच्छसि ।

---

[4] 'प्रयाता' इति महाभारतपाठोऽपि युज्यते । प्रयतेति पाठे नियता सत्य वाक्यपरिपालनशीलेति ज्ञेयम् ।

---

[1] दर्शनं (क ख घ) [2] पापं (क ख घ च) [3] शपथाः (क) [5] शङ्करः (क)
[6] पर्यपृच्छत (ग) [7] उद्विग्नेव च ते (ग) [8] स्त्वं च भीतेव दृश्यसे (ग)
[9] मत्कं (ग) [10] यदि (घ)

[1]मयाद्य पुत्र गन्तव्यं शपथैरागता ह्यहम् ॥ ५२ ॥
कामरूपस्य व्याघ्रस्य दातव्यं मम जीवितम् ।

## मात्रर्थं वत्सेन वनगमनाभिलाषप्रदर्शनम्

बहुलाया वचः श्रुत्वा वत्सो वचनमब्रवीत् ॥ ५३ ॥
अहं तत्र गमिष्यामि यत्र त्वं गन्तुमिच्छसि ।
श्लाघ्यं ममापि मरणं [2]त्वदर्थं न हि संशयः ॥ ५४ ॥

## मातृप्रशंसनम्

नास्ति मातृसमो बन्धुः बालानां [3]क्षीरजीविनाम् ।
नास्ति मातृसमो [4]नाथो नास्ति मातृसमा गतिः ॥ ५५ ॥
नास्ति मातृसमं दैवमिह लोके परत्र च ।
शतं पितॄणां हित्वापि मात्रा जीवन्ति जन्तवः ॥ ५६ ॥
जनन्या विप्रयुक्तस्य [5]जीवितं किंप्रयोजनम् ।
त्वया कृता ये शपथास्तथैते सन्तु वै मम ॥ ५७ ॥
मयि मातर्विनष्टेऽपि भवितारस्सुतास्तव ।
त्वयि चैवं विनष्टायां न च स्यात्कुलसन्ततिः ॥ ५८ ॥
[6]अनवेक्ष्यैतदुभयं क्षमं स्याद्यत्कुरुष्व तत् ।
अथवाऽहं च यास्यामि त्वया सह न संशयः ॥ ५९ ॥

---

1 मया पुत्रक (ग) 2 त्वया सह न (ग) 3 भीरु (क ख घ) 4 ह्यर्थो (च) 5 जीवितेन (ग) 6 अनवेक्ष्यै (क) अन्ववेक्ष्य (च)

## बहुलया वत्सस्य वनगमननिराकरणं पश्चिमोपदेशदानञ्च

बहुला —

मयैव [1]विहितो मृत्युः न तु त्वं यातुमर्हसि ।
अनुतिष्ठस्व मद्वाक्यं न तु शुश्रूषणं परम्[2] ॥ ६० ॥

स्थले जले च विचरन् प्रमादं मा [3]कुरुष्व ह ।
प्रमादात्सर्वभूतानि विनश्यन्ति न संशयः ॥ ६१ ॥

लोभाद्विनाशस्सर्वेषां इहलोके परत्र च ।
समुद्रमटवीं युद्धं विशन्ते लोभमोहिताः ॥ ६२ ॥

लोभादकार्यमत्युग्रं विद्वानपि समाचरेत् ।
तस्माल्लोभं न कुर्वीत विस्रम्भं च [4]प्रमादताम् ॥ ६३ ॥

नखिनां च नदीनां च शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो [5]नैव कर्तव्यः स्त्रीणां प्रैष्यजनस्य च ॥ ६४ ॥

न विश्वसेद[6]विश्वस्तं विश्वस्तं नाति विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं [7]मूलान्यपि निकृन्तति ॥ ६५ ॥

---

[1] विहितत्वं च स्वेच्छया स्वीकरणम् । अत एव आत्मनैव तस्य विधानं सङ्गच्छते ।

[2] केवलं श्रवणेच्छयैव नालम् । अनुष्ठानं श्रुतस्यावश्यकमिति । पद्मपुराणे ततः शुश्रूषणमिति महाभारते च तत्र शुश्रूषणमिति पाठे अर्थः स्फुटः ।

---

[3] करिष्यसि (ग) [4] प्रमादतः (म) [5] नोपगन्तव्यः स्त्रीणां राजकुलेषु च (ग)
[6] विश्वस्ते विश्वस्तेऽपि न विश्वसेत् (ग) [7] मूलानि च (च)

सर्वत्र सततं [1]गन्ध आघ्रातव्यः प्रयत्नतः ।[2]
न चोद्वेगस्त्वया कार्यः सर्वत्र मरणं ध्रुवम् ॥ ६६ ॥
वत्सातः शोकमुत्सृज्य [3]मद्वाक्यं परिपालय ।
इति सन्दिश्य [4]सा पुत्रमवलिह्य च मूर्धनि ॥ ६७ ॥

**बहुलाकृतसखीजननीसान्त्वनं पुत्रं प्रत्युपदेशदानञ्च**

शोकेन महताऽऽविष्टा बाष्पव्याकुललोचना । ॥ ६८ ॥
स्वमातरं सखीश्चैव क्रन्दमानाऽनुपृच्छति ।
मुक्ताऽहं तेन शपथैर्यथावत्तं निबोधत । ॥ ६९ ॥
साहं युष्मांश्च सन्द्रष्टुं मातरं स्वकुलं सुतम् ।
आगता सत्यवाक्येन पुनर्यास्यामि तत्र वै ॥ ७० ॥
मातः क्षमस्व तत्सर्वं [5]बालया यत्कृतं [6]नु वै ।
मातृशोकाभिसंतप्तं भगिन्यः पालयिष्यथ । ॥ ७१ ॥
बालोऽवलेह्यः सर्वाभिः पोष्यः पाल्यश्च सर्वदा ।
[7]परपुत्रात्मपुत्रेषु यासां चित्तं समं भवेत् ॥ ७२ ॥
धन्यास्ताश्च कृतार्थाश्च तास्त्रियो लोकमातरः ।
तस्मादनाथं मे पुत्रं पुत्रवत्पालयिष्यथ ॥ ७३ ॥
श्रुत्वैतद्बहुलावाक्यं माता सख्यश्च विह्वलाः ।
विषादं परमं जग्मुः इदमूचुश्च विस्मिताः ॥ ७४ ॥

---

[2] गन्धाघ्राणनं च शत्रुस्थितिज्ञानार्थकं सम्यक् परीक्ष्य अत्र तत्राटनम् । प्रायः गावः गन्धेनैव पश्यन्ति ।

---

[1] गन्धमाघ्रातव्यं (क ख ग घ च) [3] मद्वाक्यमनुपालय (ग) [4] तं पुत्रमवलिह्य पुनः पुनः (ग) [5] बालिश्याद् (ग) [6] मया (ग) [7] पुत्र पुत्र (च)

## आपदि शपथभ्रंशे पापाभावकथनम्

बहुले नैव गन्तव्यं धर्मोऽयं कृतमस्तव ।
ततो बालं सुतं त्यक्त्वा[1] सत्यलोभेन गम्यते ॥ ७५ ॥

[2]अत्र गाथा पुरा गीता ऋषिभिर्ब्रह्मवादिभिः ।
प्राणत्यागे समुत्पन्ने शपथे नास्ति पातकम् ॥ ७६ ॥

उक्तेऽनृते भवेद्यत्र प्राणिनां प्राणरक्षणम् ।
अनृतं तत्र सत्यं स्यात्सत्यमत्रानृतं भवेत् ॥ ७७ ॥

यद्भूतहित[3]मत्यन्तं तत्सत्यमितरन्मृषा ।
कामिनीनां विवाहेषु गवां पीडादिबन्धने
ब्राह्मणस्य विपत्तौ च शपथे नास्ति पातकम् । ॥ ७८ ॥

सर्वस्वहरणे [4]चापि प्राणिनां प्राणसंक्षये ।
गोद्विजार्थे[5]विवाहेषु शपथे नास्ति पातकम्[6] ॥ ७९ ॥

## बहुलाया पुनरपि वनगमनं तथा सत्यप्रशंसनम्

बहुला —

परेषां प्राणरक्षार्थं वदाम्येवानृतं वचः ।
[7]न स्वार्थमुत्सहे वक्तुं स्वल्पमप्यनृतं क्वचित् ॥ ८० ॥

---

[1] सत्यलोकेन (क ख) [2] यथा (ग) [3] मत्यर्थ (ग) [4] नापि (ग)
[5] विवादे च (क ख घ च)
[6] इतः परं यस्ते तैस्सह सम्बन्धो मुच्येत शपथादपि ।
भवेत्तत्रानृतं श्रेयः सत्यादिति सुनिश्चितम् ॥
न च तेभ्यो धनं धेयं सत्यादिति कथञ्चन ।
पापेषु चेद्धनं दत्तं दातारमपि पीडयेत् ।
तस्माद्धर्मार्थमनृतं उक्त्वा नानृतवाग्भवेत् ॥
— इति 'ग' मातृकायामधिकः पाठः । [7] नास्मार्थ (ग)

एकस्संश्लिप्यते गर्भे जायतैको [1]म्रियेत च ।
भुङ्क्ते चैकस्सुखं दुःखमतः सत्यं वदाम्यहम् ॥ ८१ ॥

सत्ये प्रतिष्ठिता लोका धर्मस्सत्ये प्रतिष्ठितः ।
उदधिस्सत्यवाक्येन मर्यादां नाऽतिलङ्घते । ॥ ८२ ॥

[2]विष्णवे पृथिवीं दत्वा बलिः पातालमाश्रितः ।
छद्मनापि बलिर्बद्धः सत्यवाक्येन तिष्ठति ॥ ८३ ॥

[3]प्रवर्धमानश्शैलेन्द्रः [4]सप्तयोजनमुच्छ्रितः ।
सत्येन [5]संस्थितो विध्यो[6] [7]वर्धयन्न च वर्धते ॥ ८४ ॥

स्वर्गापवर्गनरकाः सत्ये चापि प्रतिष्ठिताः ।
[8]यस्तु लोपयते वाचं अशेषं तेन लोपितम् ॥ ८५ ॥

योऽन्यथा सन्तमात्मानमन्यथा [8]ह्यनुभाषते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ ८६ ॥

तस्मान्नैवाहमात्मानमात्मनैव विलोपये ।
अगाधे विमले [9]शुभ्रे सत्यतीर्थे [10]क्षमाप्रदे ॥ ८७ ॥

---

[1] जायतैक इति आर्षः सन्धिः । अथवा उत्तरत्र रूपानुसारेण 'जायेत' इत्यपि भवेत् ।  [2] विष्णुः वामनो भूत्वा देवशत्रु बलिं संप्राप्य त्रिपदपरिमितां भुवमयाचत । शुक्राचार्येण निरुद्धोऽप्ययं पूर्वोक्तेन 'ददामि' इति वाक्येन सत्यपालको बभूव । नारदपुराणम् अ. ११

[3] अगस्त्यः कदाचिदुत्तरां दिशमुपसर्पन् विन्ध्यं वर्धमानम् अपश्यत् । स्वशिष्यं तं सः मत्प्रत्यगमनपर्यन्तं त्वं मा वर्धस्वेति आदिशत् विन्ध्योऽपि नम्रो बभूव । महाभारतम्, वनपर्व अ. १०४

---

[4] शतयोजन (ग च)  [5] संश्रितो लोकः (क ख घ)  [6] वर्धन्नपि (ग)  [7] यस्तां (ग)
[8] ह्यनुभावते (क) भाष्यते (ग)  [9] तीर्थे (क)  [10] महाहृदे (च)

स्नात्वा पापमलैर्मुक्त्वा [1]यास्यन्ति परमां गतिम् । ॥ ८७ ॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ८८ ॥

सत्यं [2]तत्सुतपः स्तुतं च परमं क्लेशादिभिर्वर्जितं
[3]स्वाधीनं न सुदुर्लभं च जगतः साधारणं भूषणम् ।
साधूनां निकषं सतां कुलधनं सर्वाश्रमाणां [4]हितं
[5]यन्मे सोऽप्यभिधाय गच्छति दिवं तत्त्यज्य तिष्ठेत्कथम् ॥

इति तस्या वचः श्रुत्वा सख्य ऊचुस्सुशोभनाः ।
बहुले त्वं नमस्कार्या सर्वैरपि सुरासुरैः ॥ ९० ॥

या त्वं परमसत्येन प्राणांस्त्यजसि दुस्त्यजान् ।
त्यागेनानेन [6]नाऽप्राप्यं त्रैलोक्ये किञ्चिदस्ति ते ॥ ९१ ॥

[7]पुनर्योगं च पश्यामः सत्येनैव सुतेन ते ।
न हि कल्याणचित्तानामापदस्सन्ति कुत्रचित् ॥ ९२ ॥

एवमुक्ता सखीभिश्च धर्मे निश्चितमानसा ।
गता हि सा पुनस्तत्र यत्रासौ पिशिताशनः ॥ ९३ ॥

व्याघ्रं दृष्ट्वा [8]तु सा धेनुरिदं वचनमब्रवीत् ।
आगताऽहं महावीर्य [9]सत्याद्बालवशे स्थिता ॥ ९४ ॥

---

[3] न सुदुर्लभमेतत्सत्यं सुलभमेवेत्यर्थः । [5] 'यन्म्लेच्छोऽपि विधाय' इति महाभारतपाठः युक्तो दृश्यते । [7] सुतेन योगमिति । कदाचिद् व्याघ्रस्त्वां त्यजेत् । तदा सुतेन सह समागमो भवितेति ।

---

[1] यास्यामि (ग) [2] साधु तपः श्रुतं (ग) तत्समुपश्रुतं (च) [4] फलं (ग)
[6] वाप्राप्यं (क ख घ च) [7] थ (ग) [8] सत्यवाक्यवशे (ग)

[1]कुरु तृप्तिं यथाकामं मम मांसेन साम्प्रतम् ।
तर्पयस्व च भूतानि [2]तथाऽस्मच्छोणितेन च ॥ ९५ ॥

## व्याघ्रकृतधेनुप्रशंसनम् ।
## पापापनोदनार्थं प्रायश्चित्तेच्छाप्रदर्शनं च

व्याघ्रः —

स्वागतं तव कल्याणि बहुले सत्यवादिनि ।
न हि सत्यवतां किञ्चिदशुभं विद्यते क्वचित् ॥ ९६ ॥

अतस्सत्यपरीक्षार्थं प्रेषिताऽसि मयाऽनघे ।
अन्यथा मां समासाद्य जीवन्ती यास्यसे कथम् ॥ ९७ ॥

तच्च नः कौतुकं [3]पूर्णं दृष्टं सत्वं गवाख्यया ।
तस्मादनेन सत्येन विमुक्ताऽसि मयाऽधुना ॥ ९८ ॥

बहुले यन्मया कार्यं तपः पापविशुद्धये ।
तदादिशस्व संक्षेपान्न कालो विस्तरस्य मे ॥ ९९ ॥

## बहुलाकृतप्रायश्चित्तोपदेशः

बहुला —

तपः कृते प्रशंसन्ति त्रेतायां यज्ञकर्म च ।
द्वापरे [4]ज्ञानमेवाहुः दानमेव कलौ युगे ॥ १०० ॥

सर्वेषामेव [5]दानानामिदमेवै[6]वमुत्तमम् ।
अभयं सर्वभूतानां नास्ति दानमतः परम् ॥ १०१ ॥

---

[2] यथास्मच्छोणितेनेति मातृकापाठः समीचीनो न दृश्यतेऽत्र । अतः 'तथेति विपरिवर्तितम् ।

---

[1] अत्र तृप्तिं यथाकामं मम मांसेन वै कुरु (ग) [3] पूर्वं दृष्टं (च) [4] यज्ञ (क)
[5] भूतानां (ग) [6] तदुत्तमम् (च)

नास्त्यहिंसापरं दानं नास्त्यहिंसापरो दमः ।
नास्त्यहिंसासमं पुण्यं नास्त्यहिंसासमं सुखम् ॥ १०२ ॥
यथा हस्तिपदेनान्यत्पदं सर्वं विलीयते ।
सर्वधर्मास्तथा व्याघ्र लीयन्ते [1]प्राणसंक्षयात् ।
[2]इत्येतत्परं धर्मं कीर्तितं ते समासतः ॥ १०३ ॥

## व्याघ्रेण स्वशापस्मरणम्

[3]तत्संपर्कोपदेशेन मया सर्वं श्रुतं शुभम् ।
मुक्तशापश्च संवृत्तः प्रसादात्तव शोभने ॥ १०४ ॥
दर्शनात्तव [4]तुष्टोऽस्मि पुत्रेण सहिता भव[5] ।
[6]त्वं वाप्यनेन सत्येन गमिष्यसि परां गतिम् ॥ १०५ ॥

सूतः —

ततस्तु योगमाश्रित्य व्याघ्रस्तद्गतमानसः ।
प्राणायामैः स्वकं देहं परित्यज्य दिवं [6]ययौ ॥ १०६ ॥
सर्वपापविनिर्मुक्तो योगैश्वर्यसमन्वितः ।
विमानेनातिमहता सेव्यमानोऽप्सरोगणैः ॥ १०७ ॥

## गोकुलं प्रति निवृत्ताया बहुलायाः कालेन गोलोकप्राप्तिः

बहुला [6]हृष्टपुष्टाङ्गा गोकुलं पुनरागता
आगम्य च यथावृत्तं व्याघ्रसंवादमुत्तमम् ॥ १०८ ॥

---

[2] 'इत्येतत्परमं श्रेयः' इति महाभारतपाठ एव साधुः । अथवाऽत्र धर्म्यमिति परिवर्तनीयम् । [3] त्वत्सम्पर्क इति महाभातपाठः समीचीन इति भाति ।
[6] त्वं वापीत्यस्य त्वं चापीत्यर्थः ।

---

[1] प्राप्यहिंसया (ग) प्राणिसंक्षयात् (ख च) [4] तुष्टोऽस्मिन् (ग) [5] तव (ग)
[6] गतः (ग) [6] हृष्टपुष्टाङ्गी (ग)

[1]सखीनां कथयामास पुत्रस्य च विशेषतः ।
भोगानशेषान् बुभुजे सत्यवाक्य[2]प्रभावत ॥ १०९ ॥

कालेन [3]बहुना साध्वी बहुला सत्यवादिनी ।
सराष्ट्रभृत्यराजानं गोपीगोमण्डलानि च
सर्वान्त्संगृह्य कल्याणी बहुला चागमद्दिवम् । ॥ ११० ॥

महाविमानैः श्रीमद्भि[4]रसंख्यैः सर्वतो वृता
प्राप्य स्वर्गं क्रमादूर्ध्वमशेषैः सहिता पुनः । ॥ १११ ॥

स्वर्गादुपरि लोकानां गत्वा गोलोकमाश्रिता
क्रीडते सहिता सर्वैर्यावदाभूतसंप्लवम्[5] । ॥ ११२ ॥

इत्येतत्सत्यवाक्यस्य माहात्म्यं समुदाहृतम्
यः पठेच्छृणुयाद्वापि ब्रह्मलोकं स गच्छति । ॥ ११३ ॥

पुत्रैर्विरहिता नारी नरो[5]ऽपि च पठेत्सदा ।
सर्वपापविनिर्मुक्ता पुत्रैर्भवति सङ्गता ॥ ११४ ॥

इति श्रीमत्पुराणसारे बहुलाव्याघ्रसंवादे सत्यप्रशंसा नाम
एकत्रिंशोऽध्यायः ।

---

[1] सखीनां सविध इति ज्ञेयम् । [5] भूतसंप्लवः प्रलयः । तत्पर्यन्तमिति ।

---

[2] प्रसादतः (क ख घ च) [3] बहुला (क ख ग घ) [4] रसंख्येयैर्वृताम्बरे (ग)
[5] वापि पठन् सदा (ग)

## द्वात्रिंशोऽध्यायः

## वेदान्तरहस्यनिरूपणम्

एतच्छ्रुत्वा तु [1]मुनयः पुनस्ते हृष्टमानसाः ।
पप्रच्छुरुत्तरं भूयः तदा ते रोमहर्षणम् ॥ १ ॥

रोमहर्षण सर्वज्ञ भवान्वै भाग्यगौरवात् ।
पुराणविद्यामनिशं व्यासात्प्रत्यक्षदर्शिवान् ॥ २ ॥

तस्मादाश्चर्यभूतानां कथानां त्वं हि भाजनम् ।
रत्नानां गुरुसाराणां रत्नाकर इवार्णवः ॥ ३ ॥

[2]भूतं चैव भविष्यच्च यच्चान्यद्वस्तु[3]वर्तनम् ।
न त्वयाऽविदितं किञ्चित् त्रिषु लोकेषु विद्यते ॥ ४ ॥

तस्मा[4]च्चान्यतरां पुंसां सत्कथां [5]ज्ञानसंमताम् ।
अपवर्गफलैकान्तमनाचारबहिष्कृतम् ॥ ५ ॥

[6]वेदान्तस्य च सर्वस्वं रहस्यं श्रावयाशु नः ।
उपास्या देवताकारा ज्ञेया कस्मादसौ पुनः
तपश्च कीदृशं सूत वक्तुमेव त्वमर्हसि । ॥ ६ ॥

एवमभ्यर्थितस्सूतो मुनिभिर्वेदवादिभिः ।
श्लक्ष्णां च श्रुतिसंयुक्तां प्रत्युवाच शुभां गिरम् ॥ ७ ॥

## तपोलक्षणम्

सूतः —

अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ ८ ॥

---

[1] ऋषयः(ग) [2] यच्च भूतं च भव्यं च यच्चान्यद्वर्तते तव (च) [3] वर्तते (ग) [4] च्छ्राव्यतरां पुण्यां (ग) चान्यद्वरां (च) [5] ज्ञानिसं (घ) ज्ञानिसं हि (ग) [6] वेदान्तसार (च)

देवतायां कृता [1]भक्तिस्तस्याश्चाज्ञापके गुरौ ।
तपः परममुद्दिष्टं नापरं तप उच्यते ॥ ९ ॥

## भक्तिलक्षणं भेदाश्च

भक्तिर्बहुर्विधा [2]ज्ञेया देवतायां सदा द्विजाः ।
[3]एका शंकरसायुज्यश्रद्धा [4]सारतरा परा ॥ १० ॥

अपरा शिवसारूप्यश्रद्धा वेदविदां वराः ।
इतरा शिवसालोक्यश्रद्धाऽभीष्टफलप्रदा ॥ ११ ॥

अपरा च शिवज्ञानश्रद्धा [5]पापनिकृन्तनी ।
सर्वभूतेषु कारुण्यं प्रियभाषणमेव च
सर्वभूतहिता श्रद्धा [6]वापि भक्तिः शिवस्य तु । ॥ १२ ॥

गुरूक्तार्थेषु विश्वासो गुरुशुश्रूषणं तथा
शिवभक्तिरिति प्रोक्ता वेदवेदान्तवेदिभिः । ॥ १३ ॥

भक्तिरेव परमार्थदायिनी
भक्तिरेव भवरोगनाशिनी ।
भक्तिरेव परवेदनप्रदा
भक्तिरेव परमुक्ति[8]कारिणी ॥ १४ ॥

भक्तियुक्तजनचित्तपङ्कजे
भुक्तिमुक्तिफलदः पुरातनः ।
शक्तियुक्तपरविग्रहः शिवः
सत्यमेव सततं [8]विराजते ॥ १५ ॥

---

[1] भक्तिरुपास्या (च) [2] देया (च) [3] प्रकाशंक (क ख घ च) [4] सादरतः (ग)
[5] पाशनिकृ (ग) [6] चापि (ग) [7] दायिनी (घ) [9] च प्रकाशते (ग)

## उपास्यायाः देवतायाः निरूपणम्

उपास्यां देवतां तावत्कथयामि यथोचितम् ।
या यस्याभिमता पुंसः सा हि तस्यैव देवता ।
दृश्यते बहुभि[1]र्भेदैरेको हि जगदीश्वरः ॥ १६ ॥

## देवतैक्यप्रतिपादने कार्तवीर्यार्जुनकथा

अस्मिन्नर्थे पुरावृत्तं शृणुत द्विजपुङ्गवाः ।
[2]कृतवीर्यसुतो ह्यासीत्कार्तवीर्यार्जुनः पुरा ।
सहस्रबाहुर्द्युतिमान् चतुर्वेदविदां वरः ॥ १७ ॥

तस्य [3]पुत्राश्शतं ह्यासंस्तेषां पञ्च महारथाः ।
कृतास्त्रा बलिनश्शूराः धर्मात्मानो मनस्विनः ॥ १८ ॥

शूरश्च शूरसेनश्च [4]कृष्णः कृष्णस्तथैव च ।
जयध्वजश्च बलवान् नारायणपरो नृपः ॥ १९ ॥

शूरसेनादयस्सर्वे चत्वारः प्रथितौजसः ।
रुद्रभक्ता महात्मनः पूजयन्ति स्म शङ्करम् ॥ २० ॥

जयध्वजश्च मतिमान् देवं नारायणं हरिम् ।
जगाम शरणं विष्णुं दैवतं धर्मतत्परः ॥ २१ ॥

तमूचुरितरे [5]विप्राः नायं धर्मस्तवानघ ।
ईश्वराराधनपरः[6] पितास्माकमतिप्रभुः[7] ॥ २२ ॥

तानब्रवीन्महातेजा एष धर्मः परो मम

---

[2] इयं कथा कूर्मपुराणे दृश्यते कू.पु. अ. २२
[5] विप्राः इति संबोधनम् । [7] 'अपि प्रभु' इति युक्तं स्यात् ।

---

[1] वेदैः (क ख घ च) [3] पुत्रीशता (घ) [4] कृष्णिः कृष्णिः (च) [6] रतः (गः)

राज्यं पालयताऽवश्यं भगवान् पुरुषोत्तमः ।
पूजनीयो[1] यतो विष्णुः पालको जगतां हरिः[2] ॥ २३ ॥

निशम्य तस्य वचनं भ्रातरोऽन्ये तपस्विनः ।
प्रोचुस्सर्वैर्नरै रुद्रः पूजनीयो मुमुक्षुभिः ।
अयं हि भगवान् रुद्रः सर्वं जगदिदं शिवः ॥ २४ ॥

ततस्तानब्रवीद्राजा विचिन्त्यासौ जयध्वजः ।
सत्वेन मुच्यते जन्तुः सत्त्वात्मा भगवान् हरिः ॥ २५ ॥

स धर्मो मुक्तये पन्था नान्यो मुनिभिरिष्यते ।
विष्णोरंशेन सम्भूता राजानो यन्महीतले ॥ २६ ॥

[3]यथा च वैष्णवीं [4]भक्तिं [5]नृपाणां दधतां सदा ।
आराधनं परो धर्मो मुरारेरमितौजसः ॥ २७ ॥

तमब्रुवन्राजपुत्राः ज्येष्ठं मतिमतां वरम् ।
यदर्जुनोऽस्मज्जनकः [6]स धर्मं कृतवानिति ॥ २८ ॥

एवं विवादे [7]वितते शूरसेनोऽब्रवीद्वचः ।
प्रमाणमृषयो ह्येतत् ब्रूयुस्ते यत्तथैव तत् ॥ २९ ॥

## ऋषिसन्निधौ उपास्यदेवताजिज्ञासा

ततस्ते राजशार्दूलाः पप्रच्छुर्ब्रह्म[8]वित्तमाः ।
[9]गतास्सर्वे सुसंरब्धाः सप्तर्षीणां तदाश्रमम् ॥ ३० ॥

तानब्रुवंस्ते मुनयो वसिष्ठाद्या [10]यथार्हतः ।
यजन्ते सात्विका देवान्यक्षरक्षांसि राक्षसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ३१ ॥

---

1 यस्त (च) 2 प्रभुः (च) 3 तथा (ग) 4 शक्तिं (ग) 5 नराणां (क ख)
6 सद्धर्मं (च) 7 विरते (च) 8 वादिनः (ग) 9 गत्वा सर्वे (ग) 10 यथार्थतः (ग)

## उपास्यदेवताविचारः

नृपाणां दैवतं विष्णुः तथेशश्च पुरन्दरः ।
विप्राणामग्निरादित्यो ब्रह्मा विष्णुः पिनाकधृक् । ॥ ३३ ॥

मातॄणां स्यादुमादेवी तथा विष्णर्वाङ्गभास्कराः ।
देवानां दैवतं विष्णुः दानवानां त्रिशूलधृक् ॥ ३४ ॥

गन्धर्वाणां तथा सोमो यक्षाणामिति कथ्यते ।
विद्याधराणां वाग्देवी सिद्धानां भगवान् रविः ॥ ३५ ॥

रक्षसां शङ्करो रुद्रः किन्नराणां च पार्वती ।
ऋषीणां दैवतं ब्रह्मा महादेवस्त्रिशूलधृक् ॥ ३६ ॥

गृहस्थानां च सर्वे स्युः ब्रह्मा वै ब्रह्मचारिणाम् ।
वैखानसानामर्कः स्याद्यतीनां च महेश्वरः ॥ ३७ ॥

वानप्रस्थाश्रमस्थानां आदित्या[1] देवता [2]मताः ।
भूतानां भगवान्रुद्रः कूश्माण्डानां विनायकः ॥ ३८ ॥

सर्वेषां भगवान् ब्रह्मा [3]देवदेवः प्रजापतिः ।
विशेषात्सर्वदा नायं नियमोऽस्ति तथा द्विजाः ॥ ३९ ॥

या यस्याभिमता पुंसः सा हि तस्यैव देवता ।
किन्तु कार्यविशेषेण पूजिता चेष्टदा नृणाम् ॥ ४० ॥

इत्युक्त्वा भगवान् ब्रह्मा स्वयं[4] देवैरभाषत ।
तस्माज्जयध्वजो नूनं त्रिष्ण्वाराधनमर्हति ॥ ३८ ॥

---

[4] ' देवो ह्यभाषत ' इति कूर्मपुराणस्थः पाठः साधुरिति भाति ।

---

[1] देवता मता (ग) [2] मतं (च) [3] स्वयं देवीऽभ्यभाषत (ग)

तान्प्रणम्याथ ते जग्मुः पुरीं परमशोभनाम् ।
पालयाञ्चक्रिरे[1] पूर्वं जित्वा शत्रून् रणाजिरे ॥ ४२ ॥

तस्माद्भक्त्या पूजनीया भोगमोक्षफलार्थिभिः ।
अभेदाद्देवतास्सर्वाः [2]वन्द्याश्च द्विजपुङ्गवाः ॥ ४३ ॥

ज्ञातव्यासा गुरोरेव भक्त्या सन्तुष्टमानसाः[3] ।
नान्यथा ज्ञायते विप्रा इतीयं शाश्वती श्रुतिः ॥ ४४ ॥

यश्चैतत्पठते नित्यं ब्राह्मणानां समीपतः ।
सम्यक्समाहितमनाः सर्वपापैः प्रमुच्यते ॥ ४२ ॥

इति श्रीमत्पुराणसारे [4]पूज्यदेवताप्रतिपादनं नाम
द्वात्रिंशोऽध्यायः

---

[3] सन्तुष्टमानसा इति विप्रविशेषणम् ।

---

[1] पृथ्वीं जित्वा सर्वान् रिपून् रणे (ग) [2] वन्दनीया विचक्षणैः (ग) वन्द्या (ख)
[4] अधिकारि (क घ)

# त्रयस्त्रिंशोऽध्यायः

## गुरुभक्तिप्रकरणम्

श्रुत्वैतद्वचनं सर्वे हृष्टा रोमाञ्चभूषिताः ।
पप्रच्छुस्तं पुनस्सूतमृषयश्शौनकादयः ॥ १ ॥

भक्तिरेव परा सा च गुरौ सम्यगनुष्ठिता ।
तोषयेदीशमित्युक्तं गुरु [1]तं वक्तुमर्हसि ॥ २ ॥

## गुरुलक्षणं गुरुभेदाश्च

सूतः —

निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥ ४ ॥

अल्पं [2]वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया [3]यथा ॥ ५ ॥

उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुर[4]स्त्रातः मातामहपितामहौ ॥ ६ ॥

वर्णज्येष्ठः पितृव्यश्च [5]पुंस्त्वेते गुरवः स्मृताः ।
माता मातामहीगुर्वी पितुर्मातुश्च सोदराः ॥ ७ ॥

श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः [6]स्त्रियः ।
पितृभगिन्यो मातुश्च ज्यायस्यां च स्वसर्यपि ॥ ८ ॥

---

[5] ज्येष्ठभ्रातृजायेति । कू.पु. उत्तरार्धं अ. १२

---

[1] त्वं (क ख) [2] बहुला (घ) [3] तथा (ग च) [4] त्राता (घ च) [6] सर्वेते (ग) [7] स्त्रियाम् (ग)

मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ।
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विधा ॥ ९ ॥

## पूज्यतमो गुरुवर्गः

गुरूणामपि सर्वेषां पूज्याः पञ्च विशेषतः ।
यो भावयति या सूते येन विद्यापि दिश्यते ।
ज्येष्ठो भ्राता च भर्ता च पञ्चैते गुरवः स्मृताः ॥ १० ॥
तेषामाद्यास्त्रयः श्रेष्ठा तेषां माता सुपूजिता ।

## मातापित्रोः वैशिष्ट्यप्रतिपादनम्

पिता गुरुतरस्तावन्माता गुरुतरा ततः ॥ ११ ॥
यावत्पिता च माता च द्वावेतौ निर्विकारिणौ[1] ।
तावत्सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः ॥ १२ ॥
माता पिता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ।
स पुत्रस्सकलान्[2]धर्मानाप्नुयात्तेन कर्मणा ॥ १३ ॥
मातरं पितरं भक्त्या तोषयेन्न प्रकोपयेत् ।
[3]मातृशापेन नागानां सर्पसत्रेऽभवत्क्षयः ॥ १४ ॥

---

[1] निर्विकारत्वं च सन्मार्गावस्थितिः । उत्पथप्रतिपन्नानां तु निग्रहे परित्यागे च नास्ति दोष इति स्मृतिकाराः ।

[3] कद्रूः कश्यपपत्नी । समबलिनस्तस्याः सहस्रं पुत्राः काद्रवेयाः । तस्याः सपत्नी विनता । कदाचिदुच्चैःश्रवसः वर्णविचारे अनयोः स्पर्धा समजनि । कद्रूः अभणद्यदुच्चैःश्रवाः अङ्गोपाङ्गैः धवलः पुच्छमात्रे कृष्ण इति । नेत्यवददन्या । वस्तुतस्तु कद्रूवादः मिथ्यासीत् । सा तु पराजयम-

---

[2] धर्मं प्राप्नुयात् ।

जराग्रहणतुष्टेन पूरुर्यौवनदः स्मृतः ।
कृतः कनीयान्प्रणतश्चक्रवर्ती ययातिना[1] ॥ १५ ॥

यन्मातापितरौ क्लेशं सहेते सम्भवे नृणाम् ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ १६ ॥

नास्ति मातृसमं दैवं नास्ति पित्रा समो गुरुः ।
तयोः प्रत्युपकारो हि न कथञ्चन विद्यते ॥ १७ ॥

तयोर्नित्यं प्रियं कुर्यात्कर्मणा मनसा गिरा ।
न ताभ्यामननुज्ञातो धर्ममन्यं समाचरेत् ।
एष धर्मः परस्साक्षादुपधर्मोऽन्य उच्यते ॥ १८ ॥

---

निच्छन्ती स्वपुत्रान् कृष्णवर्णान् स्ववादख्यापनार्थं उच्चैःश्रवसः वालं वेष्टितु-माज्ञापयामास । परन्तु पुत्रा नान्वमोदन्त । क्रुद्धा अविनीतान् स्वपुत्रान् सर्पसत्रे क्षयं प्राप्स्यथ इति शशाप । म.भा. आदिपर्व अ. २१

[1] ययातेः द्वे भार्ये, देवयानी तद्दासी शर्मिष्ठा च । शर्मिष्ठायां तस्य पुत्रत्रयं बभूव । देवयान्यां तु पुत्रद्वयम् । मत्तोऽपि दास्यामाधिकं प्रेम पत्युरिति तस्मै क्रुद्धा सा पितुः शुक्राचार्यस्य समीपं गत्वा फूत्कृतवती । क्रुद्धः पिता ययातिरकाल एव वृद्धो भवत्विति तं शशाप । परन्तु स्वपुत्रेषु कश्चिदेकः यदि स्वयौवनं दद्यात्तदा त्वं पुनरपि युवा भविता पुत्रस्तु वृद्धः इति शापान्तमपि समसूचयत् । स कदापि विषयसुखाभिलाषी आत्मनि यौवनं सञ्चारयितुं देवयान्याः पुत्रौ व्यजिज्ञपत् । पुत्रौ यदुतुर्वसू नानुकूलौ अभवताम् । तदनन्तरं शर्मिष्ठापुत्रान् अनु-द्रुह्यु-पुरून् आकार्य स्वेच्छां प्राचीकटत् । अनुद्रुह्यौ प्रतिकूलौ बभूवतुः । पूरुः आत्मनः यौवनं पितरि संक्रमय्य स्वयं वार्धकं जग्राह । भागवतम् स्कन्धः ९, अ. १७-१९

## पितृभक्तिमाहात्म्यनिरूपणे पुण्डरीककथा

[1]अस्मिन्नर्थे पुरा शम्भुः देव्या अकथयत्कथाम् ।
संक्षिप्य भूसुरश्रेष्ठा शृणुध्वं कथयामि ताम् ॥ १९ ॥

अष्टाविंशतिमे कल्पे द्वापरान्ते सुरेश्वरि ।
पुण्डरीको महाविप्रस्तपस्तेपे सुदुष्करम् ॥ २० ॥

पुष्करिण्यास्तटे कृत्वा आश्रमं [2]सुरपूजितम् ।
भक्त्या पितृभ्यां शुश्रूषां कुर्वन् द्विजवर[3]स्सदा ॥ २१ ॥
भोज्यै[4]रुच्चावचैरन्यैः फलैश्च विविधैरपि ।
पित्रोः स्नानैश्च दानैश्च प्रीतिं सञ्जनयन्मुदा ॥ २२ ॥

## पुण्डरीकाय श्रीकृष्णसाक्षात्कारः

तस्यैवं [5]कुर्वतः पूजां पित्रोरहरहस्सदा ।
परितुष्टोऽभवद्देवो गोपीजन[6]मनः प्रियः ॥ २३ ॥
गोवर्धनगिरौ रम्ये चारयन् [7]गोगणान् भुवि ।
स्मृत्वा तमृषिमभ्यागाद्वरान् दातुं [8]सुरेश्वरि ॥ २४ ॥
गोयष्टिं धारयंस्तत्र रत्नस्फुरितकङ्कणः ।
गण्डमण्डलसंशोभिस्फुरन्मकरकुण्डलः ॥ २५ ॥
चारुपद्मेक्षणः श्रीमान् ललाटतिलकोज्ज्वलः ।

---

[1] पद्मपुराणकथामनुसृत्येयं कथेति प्रतिभाति । तत्र परं पुण्डरीकः नारदाज्ञानुसारेण तपस्तप्त्वा नारायणसाक्षात्कारमाप । कथायाश्छायात्र दृश्यते । प.पु. उत्तरखण्डः अ. ८०  [4] उच्चावचम् उदक् अर्वाक् च । मयूरव्यंसकादित्वासाधु । नैकविधम् इति ।

---

[2] सुरपूजिते (ग)  [3] स्सदा (ख)  [5] कुर्वतोः (ग)  [6] मनोहरः (ग)
[7] गोगणान्वितः (क ख घ च)  [8] प्रियेऽम्बिके (ग)

सुनासो दरहासश्च कुन्तलालिविराजितः[1] ॥ २६ ॥

कटिमालम्ब्य हस्ताभ्यां वलित्रयविराजितः ।
चित्रपत्राकृतिं बिभ्रद्धस्तेऽसौ दक्षिणे विभुः ।
जलजं पाञ्चजन्यञ्च वामे शोभितलोचनः ॥ २७ ॥

जगन्मोहन[2]रूपाढ्यो मयूरस्रग्धरो विभुः ।
[3]कटिविन्यस्तहस्तोऽथ तस्याग्रपिसमीपतः ॥ २८ ॥

गोयष्टिप्रान्त[4]माक्रम्य त्रिजगन्मोहयन्निव ।
तं दृष्ट्वा स ऋषिर्देवि बभूवानन्दनिर्भरः ॥ २९ ॥

पुण्डरीकस्सुरेशस्य चारुतां प्रेक्ष्य भामिनि ।
चक्षुषा तं [5]प्रगृह्यैव हृदि कृत्वा मुहुर्मुहुः ।
लिह्येयमुपजिघ्रेयमिति व्याकुलतां ययौ ॥ ३० ॥

तस्य तद्भावमाज्ञाय पाण्डुरङ्गो हसन् हरिः ।
अवोचत्परमप्रीतः कारुण्येनावलोकयन् ॥ ३१ ॥

आगतोऽहं वरं दातुं प्रीत्या ते मुनिसत्तम ।
पित्रोराराधनाद्ब्रह्मन्प्रसन्नोऽहं न संशयः ॥ ३२ ॥

इत्युक्तो देवदेवेन ततो नत्वा सुरेश्वरम् ।
अर्चयित्वा [6]तु विधिवत्तुष्टाव गरुडध्वजम् ॥ ३३ ॥

## पुण्डरीककृतकृष्णस्तुतिः कृष्णकृतं पुण्डरीकाय वरदानम्

पुण्डरीकः —

जयदेव जगन्नाथ महाविष्णो सुरेश्वर ।

---

[1] अतीवसुन्दरस्सौम्यो वल्याहृत हा × गदः' गप्रतौ पाठोऽधिकः ।
[2] रूपाक्षो (ग) [3] कटिसंन्यस्त (ग) [4] माकर्ण्य (क) [5] प्रगृह्येदं (ग) [6] थ (ग)

भक्तानन्द [1]हरापायं प्रणतार्तिविनाशन ॥ ३४ ॥
व्यक्ताव्यक्त[2]स्वरूपस्त्वं विश्वरूपो निरञ्जनः ।
[3]गुणाश्रय गुणाधार [4]निर्गुणात्मन्नमोऽस्तु ते ॥ ३५ ॥
इति स्तुत्वा हृषीकेशं पुण्डरीकोऽब्रवीदिदम् ।
यदि प्रसन्नो [5]भगवन् ब्रह्मार्चितपदाम्बुज ॥ ३६ ॥
अनेनैव स्वरूपेण त्वया [6]स्थेयमिह प्रभो ।
मन्नाम्नैव भवेत्क्षेत्रं विश्रुतं सुरपूजितम् ॥ ३७ ॥
भुक्तिमुक्तिप्रदं नृणां सर्वक्षेत्रोत्तमं भवेत् ।
तीर्थं चापि तथा देव सर्वतीर्थोत्तमं भवेत् ॥ ३८ ॥
[7]एवमस्त्वत्र वत्स्यामि तव प्रीत्या [8]महामुने ।
अत्रैव तीर्थमध्येऽहं तव नामाङ्किते मुने ॥ ३९ ॥
[9]प्रीत्यागत्य तव क्षेत्रं पावयिष्यामि भो द्विज ।
अतश्चाहं तव क्षेत्रे सर्वदेवैस्समावृतः ॥ ४० ॥
गुप्तश्च प्रकटश्चाहमत्र वत्स्यामि सुव्रत[10] ।
[11]एवं तस्य वरान्दत्वा तत्रैव स्थितवान् हरिः ॥ ४१ ॥
उपास्यमानो [12]विविधैः सिद्धैर्योगिभिरव्ययः ।
पुण्डरीकस्य तत्क्षेत्रं क्षेत्रपालसमन्वितम् ॥ ४२ ॥
पुष्करात् त्रिगुणं प्रोक्तं केदाराच्छड्गुणं स्मृतम् ।
नारायणस्याष्टगुणं अनन्तं श्रीगिरेरपि ॥ ४३ ॥

---

1 करोपाय (क) 2 स्वरूपस्थं(क) 3 गुणाशय (क ख घ) 4 निर्गुणात्म नमोऽस्तु (क ख घ)
6 भगवान् (क ख घ च) 7 स्थेयमिति (क) 3 एवमस्तु निवत्स्यामि (ग)
8 मुने सदा (ग) 9 'आगत्याहं तव क्षेत्रे वत्स्याम्यमरपूजित' इति गपाठः एतत् पंक्तिस्थाने । 10 सर्वदा (च) 11 'एवं दत्वा वरं तस्मै तत्रैवास्ते हरिः स्वयम्' इति 'ग' मातृकापाठः) एतत्पंक्तिस्थले । 12 मुनिभिः (ग)

क्षेत्राणां परमं क्षेत्रं हरिणाधिष्ठितं यतः ।
पितृशुश्रूषकस्यैतत्पुण्डरीकस्य भामिनि ।
लोके प्रसिद्धिमगमत्पित्रोश्शुश्रूषणात्परम् ॥ ४४ ॥

सूतः —

इत्येवं प्रोक्तवाच्छम्भुः गिरिजायै द्विजोत्तमाः :
तस्मात्सारतरो धर्मः पितृभक्तिसमाश्रयः ॥ ४५ ॥

स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ।
अस्वाधीनं कथं दैवं [1]प्रकारैरभिवाद्यते ॥ ४६ ॥

माहात्म्यमेतत्पठतां शृण्वतां सततं द्विजाः ।
सर्वसम्पद्भवेत्तेषां सर्वपापप्रणाशनम् ॥ ४७ ॥

[2]न शत्रुभ्योऽधार्मिकेभ्यः पाषण्डेभ्यः कदाचन ।
अश्रद्धानां [3]न वक्तव्यं माहात्म्यं च द्विजोत्तमाः ॥ ४८ ॥

इति श्रीमत्पुराणसारे मातृपितृभक्तिप्रशंसा नाम
त्रयस्त्रिंशोऽध्यायः

---

[1] प्रकारैर्नाम नानारूपान्वितिक्रमेणेति ज्ञेयम् ।

---

[2] न चोरेभ्यो ऽधार्मिकेभ्यः (ग च) [3] च माहात्म्यं न वक्तव्यं (ग)

## चतुस्त्रिंशोऽध्यायः

[ गुरुभक्तिप्रकरणम् ]

### मातृभक्तिप्रशंसा

ऋषयः —

गुरूणामेव सर्वेषां [1]मातैव च गरीयसी ।
इत्युक्तं हि त्वया सूत विस्तराद्ब्रूहि नः प्रभो ॥ १ ॥

### मातृमहिमवर्णनम्

सूतः —

उपाध्यायान्दशाचार्यः आचार्याणां शतं पिता ।
सहस्रं च पितुर्माता गौरवेणातिरिच्यते ॥ २ ॥

मासान्दशो[2]दरे प्रायो धृत्वा शूलैस्समा[3]कुले ।
वेदनाविविधैर्दुःखैः प्रसूयेत विमूर्च्छिता ॥ ३ ॥

प्राणैरपि प्रियान्पुत्रान्मन्यते सुतवत्सला ।
कस्तस्या निष्कृतिं कर्तुं शक्तो वर्षशतैरपि ॥ ४ ॥

बाल्येन दृष्टवानीशमुपमन्युर्महामुनिः[4] ।

---

[4] शैशवे कदाचिदुपमन्युः मातरं दुग्धमयाचत । दरिद्रावस्थयाभिभूतया तया सक्तुमिश्रितं जलं इदमेव दुग्धमिति पुत्राय प्रदत्तम् । अनन्तरं कदाचित्पित्रा साकमन्यत्र सः पयः पिबति । पुनः सः मातुः सकाशमागत्य तस्याः कपटमुद्घाटयति । तपसा तुष्टो भगवान् रुद्रः क्षीरं दद्यादिति कथयति सा । स च तथैव कृत्वा क्षीरसागरमेव लेभे इति कथा ।

—म.भा. अनुशासनपर्व अ. १४

---



[1] माता चैव (च) [2] दरस्थया (ग) [3] कुला (ग घ च)

[1]करणान्मातृवाक्यस्य ध्रुवोऽपि ध्रुवतां गतः । ॥ ५ ॥
स्ववाक्यानृतशङ्किन्या मातुराज्ञानुपालनात् ।
[2]विजयो विजयी जातो भ्रातृभिस्सह भूसुराः ॥ ६ ॥

## मातृमहत्त्ववर्णने अर्जुनकथा

ऋषयः —
किं वाक्यमनृतं कुन्ती किंकारणमशङ्किता[3] ।
तत्कथं कृतवान् जिष्णुः विस्तराद्वक्तुमर्हसि ॥ ७ ॥

## पाञ्चालीस्वयंवरवर्णनम्

सूतः —
[4]पाञ्चालेष्वद्भुताकारं [5]याज्ञसेन्याः स्वयंवरम् ।
कारयामास नगरे पाञ्चालः प्रीतिमान् पुरा ॥ ८ ॥
तच्छ्रुत्वा पार्थिवास्सर्वे समीयुस्तत्र भूसुराः ।
ऋषयश्च महात्मानः स्वयंवरदिदृक्षवः ॥ ९ ॥
ब्राह्मणाश्च महाभागा देशेभ्यस्समुपागताः ।
ततो मञ्चातिमञ्चेषु पौरजानपदा जनाः ॥ १० ॥

---

[1] उत्तानपादस्य भार्याद्वयं सुनीतिः सुरुचिश्चेति । सुनीत्याः पुत्रः ध्रुवः राज्ञः सुनीत्यपेक्षया सुरुच्यां प्रीतिरधिका । राजा कदाचित्सुरुचेः पुत्रं स्वाङ्के गृहीत्वा लालयन्नासीत् । ध्रुवोऽपि पितुरङ्कमारोढुं गतः । परन्तु सुरुच्या तर्जितस्सः भणितश्च यत् – 'पितुरङ्कमारोढुं तपस्तप्त्वा मदुदरे जन्म गृहाण' इति । अनेन दूयमानः सः ईश्वरमेवाराधयितुं तपसा, बाल एव जगाम । भागवतम्—स्कन्धः ४, अ. ८, विष्णुपुराणम्—अंशः १, अ.११–१२ [2] विजयः अर्जुनः । [3] 'अशङ्कत' इति साध्वासीत् ।
[4] इयं कथा महाभारते द्रष्टव्या । म.भा. आदिपर्व अ. १७६
[5] यज्ञसेनः द्रुपदः । तस्यापत्यं स्त्री ।

उपोपविविशुस्सर्वे याज्ञसेनीदिदृक्षवः ।
ब्राह्मणैश्चैव सहिताः पाण्डवास्समुपाविशन् ॥ ११ ॥
अवतीर्णा ततो रङ्गे द्रौपदी द्रुपदात्मजा ।
बिभ्रती परमं रूपं यस्य नास्त्युपमा भुवि ॥ १२ ॥
रङ्गमध्यगतस्तत्र धृष्टद्युम्नो महीपतिः ।
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ १३ ॥
इदं धनुर्लक्षमिमे च बाणाः
शृण्वन्तु मे क्षत्रियास्सर्व एव ।
यन्त्रच्छिद्रेणाभ्यतिक्रम्य लक्ष्यं
समर्पयध्वं [1]खगमैश्च पञ्चभिः ॥ १४ ॥
एतत्कर्ता कर्म सुदुष्करं यः
कुलेन रूपेण [2]बलेन युक्तः ।
[3]तस्याद्य भार्या भगिनी ममेयं
कृष्णा [4]स्वसा वै न मृषा[5]ब्रवीमि ॥ १५ ॥
ततस्तु ते राजगणाः क्रमेण
कृष्णानिमित्तं बहु विक्रमन्तः ।
तत्कार्मुकं [6]संहननोपपन्नं
[7]सज्यं न शेकुस्तरसापि कर्तुम् ॥ १६ ॥
यदा निवृत्ता राजानो धनुषः [8]सज्यकर्मणः ।

---

[1] खे गच्छन्तीति खगमाः बाणाः । [4] 'भवित्री' इति महाभारतपाठः साधुः ।
[6] संहननं, प्रसङ्गाच्छोभनगात्रयुक्तमिति दार्ढ्ययुक्तमिति वा ।

---

[2] त्वनेन (क ख घ) [3] तस्यैव (च) [4] स्वसामिन्न (ग) [5] ब्रवीति (ग)
[6] सज्जं (क ख ग) [8] सज्यकर्मणि (क ख ग च)

## अर्जुनकृतलक्ष्यभेदः द्रौपदीवरणं च

अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः ॥ १७ ॥

अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः ।
[1]तद्धनुः संपरिक्रम्य, प्रदक्षिणमथाकरोत् ।
प्रणम्य शिरसा हृष्टो जगृहे च परंतपः ॥ १८ ॥

सज्यं च चक्रे निमिषान्तरेण
शरांश्च जग्राह दशार्धसंख्यान् ।
विव्याध लक्ष्यं [2]निपपात तच्च
क्षिप्रेण भूमौ सहसातिविद्धम् ॥ १९ ॥

[2]विद्धं च लक्ष्यं प्रसमीक्ष्य कृष्णा
पार्थं च शक्रप्रतिमं निरीक्ष्य ।
स्वभ्यस्तरूपापि नवेव नित्यं
विनापि हासं हसतीव कान्त्या ॥ २० ॥

[3]मदादृतेपि स्खलतीव भावैः
वाचं विना व्याहरतीव दृष्ट्या ।
आदाय [4]शुद्धं वनमाल्यदाम
जगाम कुन्तीसुतमुत्स्मयन्ती[5] ॥ २१ ॥

स तामुपादाय विजित्य रङ्गे[6]
द्विजातिभिस्तैरभिपूज्यमानः ।

---

[5] उत्स्मयो विस्मयः । विस्मयमानेति ।

---

[1] स ते धनुः परिक्रम्य (क) [2] निपपाते त्वच्छिद्रेण (क ख घ) [3] मदादृते पश्चलतीव(क) मदाच्छतेऽपि स्वपतीव (च) .... वेस्खलतीव (ग) [4] शक्रं वर (ग) [6] रागे (च)

रङ्गान्निराक्रामदचिन्त्यकर्मा
पत्न्या तया चाप्यनुगम्यमानः ॥ २२ ॥

कुन्त्या निदेशेन पाञ्चाल्याः पञ्चभोक्तृत्वाज्ञा

गत्वा तु तामात्मनिवासशालां
पार्थः पृथां प्राप्य महानुभावः ।
तां याज्ञसेनीं परमप्रतीतो
भिक्षेत्यथावेदयदब्ययकर्मा ॥ २३ ॥

[1]कुटीगता साप्यनवेक्ष्य पुत्रान्
उवाच [2]भुञ्जीध्वमिति प्रमादात् ।
पश्चात्तु कुन्ती प्रसमीक्ष्य कन्यां
कष्टं मया भाषितमित्युवाच ॥ २४ ॥

[3]सा धर्मभीता हि [4]विलज्जमाना
तां [5]याज्ञसेनीं परमप्रतीताम् ।
पाणौ गृहीत्वाऽथ जगाम कुन्ती
युधिष्ठिरं वाक्यमुवाच चेदम् ॥ २५ ॥

इयं च कन्या द्रुपदस्य राज्ञः
तवानुजेनात्मनि संनिविष्टा ।
[6]यथोचितं पुत्र मयापि चोक्तं
समेत्य भुञ्जीध्वमिति प्रमादात् ॥ २६ ॥

---

[1] कुन्तीं गत्वा (क) कुन्तीगता स्वाप्य (च) [2] भुंक्षध्व (ग) [3] स्वधर्मभीता (च) [4] विलज्जमाना (क ख घ) [5] यज्ञसेनीं (च) [6] अथापि तं (क ख ग घ)

[1]आत्मैव साक्षी किल धर्मचर्ये
त्वमेव जानासि यदत्र दुष्कृतम् ।
कथं मया नानृतमुक्तमद्य
भवेत्कुरूणामृषभ ब्रवीहि ॥ २७ ॥

मुहूर्तमात्रं त्वनुचिन्त्य राजा
कुन्तीं समाश्वास्य कुरुप्रवीरः ।
युधिष्ठिरो भ्रातरमुत्तमौजाः
धनञ्जयं वाक्यमिदं बभाषे ॥ २८ ॥

[2]सर्वेषां द्रौपदी भार्या महिषी नो भविष्यति ।
एवं हि व्याहृतं पूर्वमस्मन्मात्रा महाबल ॥ २९ ॥

सूतः —

तत्र आहूय पाञ्चालो राजपुत्रं युधिष्ठिरम् ।
पर्यपृच्छददीनात्मा कुन्तीपुत्रं महाबलः ॥ ३० ॥

कथं जानीम भवतः [3]क्षत्रियान् ब्राह्मणानुत ।
वैश्यान्वा गुणसंपन्नानुत [5]वा शूद्रयोनिजान् ॥ ३१ ॥

---

[1] वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ इति मनु. अ. २-६ । कालिदासोऽपि शाकुन्तले आह ' प्रमाणमन्तःकरणप्रवृत्तयः ' इति ।

[2] श्लोकोऽयं महाभारते द्रुपदमुद्दिश्य कथ्यते । तत्र च भार्येति स्थाने राजन् इति चतुर्थचरणे च मम मात्रा विशांपते इति च प्रोक्तमस्ति ।

---



[3] क्षात्रया ब्राह्मणीयत (क ख ग घ च) [4] वान्यमरिन्दम (ग)

मायामास्थाय विततां चरतः सर्वतो दिशः ।
कृष्णाहेतोरनुप्राप्तान् दिवः[1] संदर्शनार्थिनः ।
ब्रवीतु नो भवान् सत्यं सन्देहो ह्यस्ति नो महान् ॥ ३२ ॥
श्रुत्वा ह्यमरसङ्काश [2]तव वाक्यमरिन्दम ।
ध्रुवं विवाहकरणमास्थास्यामि विधानतः ॥ ३३ ॥

युधिष्ठिरः —

मा राजन् विमना भूस्त्वं पाञ्चाल प्रीतिरस्तु ते ।
ईप्सितस्ते ध्रुवः कामः संवृत्तोऽयमसंशयः ॥ ३४ ॥
वयं हि क्षत्रिया राजन् पाण्डोः पुत्रा [3]महाबलाः ।
ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ ॥ ३५ ॥
याभ्यां राजसुता राजन् निर्जिता राजसंसदि ।
यमौ तौ विद्धि राजेन्द्र यत्र कृष्णा [4]प्रतिष्ठिता ॥ ३६ ॥
पद्मिनीव सुतेयं ते ह्रदादन्यह्रदं गता ।
इति तथ्यं महाराज सर्वमेतद्ब्रवीमि ते ॥ ३७ ॥

## द्रौपदीपाणिग्रहणार्थं पाञ्चालकृतं अर्जुनप्रार्थनम्

सूतः —

ततस्स द्रुपदो राजा हर्षव्याकुललोचनः ।
प्रतिवक्तुं न शक्तोऽभूद्धर्मसूनुं तदानघाः ॥ ३८ ॥
यत्नेन तु स तं हर्षं सन्निगृह्य परंतपः ।
अनुरूपं ततो राजा प्रत्युवाच युधिष्ठिरम् ॥ ३९ ॥

---

[1] दिवः स्वर्गात् अनुप्राप्तान् सन्दर्शनार्थिन इति । [3] राजसुताः युद्धार्थिनः याभ्या भीमार्जुनाभ्यां निर्जिता इत्यर्थः ।

---

[2] तत (क ख) [3] महात्मनः (ग) [4] प्रकीर्तिता (क ख घ च)

गृह्णातु विधिवत्पाणिमद्यायं [1]कुरुनन्दनः ।
पुण्येऽहनि महाबाहुरर्जुनः [2]कुरुतात् क्षणम् ॥ ४० ॥

ततस्तमब्रवीद्राजा [3]धर्मपुत्रो युधिष्ठिरः ।
सर्वेषां द्रौपदी राजन् महिषी नो भविष्यति ॥ ४१ ॥

### पञ्चभर्तृकताविषये द्रुपदस्य धर्मसंदेहः

द्रुपदः —

एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन ।
नैकस्यां बहवः [4]पुंसो विधीयन्ते कदाचन ॥ ४२ ॥

सोऽयं न लोके वेदे वा जातु [5]धर्मः प्रवर्तते ।
लोकवेदविरुद्धं त्वं नाधर्मं धार्मिकः शुचिः ॥ ४३ ॥

कर्तुमर्हसि कौन्तेय कस्माच्च बुद्धिरीदृशी ।

### युधिष्ठिरकृतं सूक्ष्मधर्मविवरणं, मातृवाक्यमहत्त्वप्रदर्शनं च

युधिष्ठिरः —

लोकवेद[6]विरुद्धोऽयं धर्मो धर्मभृतां [7]वर ॥ ४४ ॥

[8]सूक्ष्मो धर्मो महाराज नास्य विद्मः[9] परां गतिम् ।
अहेरिव हि धर्मस्य [10]पदं दुःखमवेक्षितुम् ॥ ४५ ॥

---

[4] पुमांस इति ज्ञेयम् । अत्रत्यं पदमार्षम् । [8] धर्मस्य स्थूलसूक्ष्मरूपेण द्विविधा गतिः । तत्र स्थूलं धर्मं ज्ञातुं आचरितुं च सर्वेऽपि प्रभवन्ति । सूक्ष्मधर्मस्य ज्ञानमतीव दुःशकम् । परशुरामेण मातुः शिरसच्छेदः, द्रौपदीपञ्चभर्तृकता इत्याद्याः सूक्ष्मधर्मविषयाः ।

---

[1] कुरुनन्दन (क ख ग घ) [2] कुरुतां (च) [3] हर्षेन्याकुललोचनः (च)
[5] कर्म (क ख घ च) [6] विरुद्धं हि (क ख घ च) [7] वरः (क ख घ च)
[8] गतिं वयम् (ग) [9] परं (क ख ग छ)

यथा [1]मृगस्य विद्धस्य मृगव्याधः पदं नयेत् ।
कक्षे रुधिरपातेन तथा धर्मपथं नयेत् ॥ ४६ ।

हृदयेनाभ्यनुज्ञातो यस्तं धर्मं समाश्रयेत् ।
यश्चतुर्गुणसम्पन्नं धर्मं वेद स धर्मवित् ।
न मे वागनृतं प्राह नाधर्मे [2]धीयते मतिः ॥ ४७ ॥

धर्म एष ध्रुवं राजन् विचार्यैव करोम्यहम् ।
मा च तत्र विशङ्कोऽभूस्तत्राऽधर्मे मतिर्न मे ॥ ४८ ॥

गुरोश्च वचनं प्राहुः धर्मं धर्मभृतां वराः ।
गुरूणां चैव सर्वेषां जननी परमो गुरुः ॥ ४९ ॥

सा चाप्युक्तवती वाचा भैक्षवद्भुज्यतामिति ।
तस्मादेतदहं मन्ये परं धर्मं विशांपते ॥ ५० ॥

### द्रुपदसन्देहनिरासार्थं व्यासस्य प्राकट्यम्

ततो द्वैपायनो विप्राः आजगाम विचिन्तितः ।
ततस्ते पाण्डवास्सर्वे पाञ्चालश्च महामतिः ॥ ५१ ॥

प्रत्युत्थाय महात्मानं कृष्णं[3] दृष्ट्वा[4]भ्यपूजयन् ।
प्रतिनन्द्य च तान् सर्वान् पृष्ट्वा च कुशलं ततः ॥ ५२ ॥

आसने काञ्चने शुद्धे आससाद महामुनिः ।
ततो मुहूर्तान्मधुरां वाणीमुच्चार्य पार्षतः[5] ।
पप्रच्छ तं महात्मानं द्रौपद्यर्थं महामुनिम् ॥ ५३ ॥

---

[3] कृष्णं नाम कृष्णद्वैपायनमिति । नामैकदेशग्रहणसाधुत्वादपि भवति ।

[5] पार्षत इति द्रुपदस्यैव नामान्तरम् ।

---

[1] मगस्सन्निधे (क ख ग घ) [2] ध्रियते (क ख घ) धीयते घ) [4] भ्यपूजयत् (च)

द्रुपदः —

कथमेका बहूनां स्यान्मा च स्याद्धर्मसङ्करः ।
एतन्नो भगवान्सर्वं प्रब्रवीतु यथातथम् ॥ ५४ ॥

व्यासः —

[1]यथार्थं विहितो धर्मः [2]यथा चायं सनातनः ।
यथा चाप्याह कौन्तेयस्तथा धर्मो न संशयः ॥ ५५ ॥

इति श्रीमत्पुराणसारे मातृभक्तिप्रशंसा नाम
चतुस्त्रिंशोऽध्यायः

---

[1] यथार्थं (क) यत्रायं (च) [2] यतश्चायं (ग)

## पञ्चत्रिंशोऽध्ययः

### मातृभक्तिप्रशंसायां पाण्डवपूर्वचरित्रनिरूपणम्

सूतः —

तत उत्थाय भगवान् कृष्णद्वैपायनो मुनिः ।
करे गृहीत्वा राजानं [1]राजवेश्म समाविशत् ॥ १ ॥

तत्र द्वैपायनस्तस्मै नरेन्द्राय द्विजोत्तमाः ।
आचख्यौ तद्यथा धर्मो बहूनामेक[2]पत्निता ॥ २ ॥

### नालायनीतिहासः

एषा नालायनी पूर्वं मौद्गल्यं स्थविरं पतिम् ।
आराधयामास च तदा कुष्ठिनं तमनिन्दिता ॥ ३ ॥

त्वगस्थिभूतं कटुकं [3]लोलशीर्षं सुकोपनम् ।
सुगन्धेतरगन्धाढ्यं शीर्यमाणनखत्वचम् ॥ ४ ॥

[4]उच्छिष्टमुपयुञ्जाना पर्युपास्ते महाव्रता ।
ततः कदाचिदङ्गुष्ठो भुञ्जानस्य व्यशीर्यत ।
अन्नादुद्धृत्य [5]तच्चान्न[6]मुपायुंक्ता[7]विशङ्किता ॥ ५ ॥

तेन तस्यां [8]प्रसन्नोऽसावब्रवीत्कांमरूपधृक् ।

---

[7] उपयुक्त इति मातृकासु लिपिदोषः स्यात् ।

---

[1] राजा विस्मय (च) [2] पलिताम् (क) पलिका (ग)
[3] लोलमीर्प्यमसूयकम् (क ख घ च) [4] उत्कृष्ट (क) [5] तत्रान्नं (क ख घ च)
[6] उपयुक्त (क ख ग घ) [8] प्रसन्ना सा अब्र (क ख ग घ)

## कामरूपधरस्य मौद्गल्यस्य पत्नीरमणविषयकः प्रश्नः

मौद्गल्यः —

नास्मि वृद्धो न कटुको नेर्ष्युर्नैवास्मि कोपनः ।
न च दुर्गन्धवदनो न कृशो न च लोलुपः ॥ ६ ॥

कथं त्वां रमयामीह कथं [1]वा वासयाम्यहम्[2] ।
वद कल्याणि भद्रं ते यथा त्वं मनसेच्छसि ॥ ७ ॥

सूतः —

सा तमक्लिष्टकर्माणं वरदं सर्वकामदम् ।
भर्तारमनवद्याङ्गी प्रसन्नं प्रत्युवाच ह ॥ ८ ॥

### नालायन्या पञ्चधा विभागेन रतिप्रार्थना

पञ्चधा मां [3]विभक्तात्मा भगवाँल्लोकविश्रुतः ।
रमय त्वमचिन्त्यात्मन्नेतदेवेप्सितं मम ॥ ९ ॥

तां तथेत्यब्रवीद्धीमान्महर्षि र्वै महातपाः ।
स [4]पञ्चधा तु[5] भूत्वैनां रमयामास [6]सर्वथा ।
नालायनीं सुकेशां तां मुद्गलश्चारुहासिनीम् ॥ १० ॥

आश्रमेष्वधिकं [7]चापि पूज्यमानो [8]मनीषिभिः ।
विचचार यथाकामं[9] कामरूपधरः पुनः ॥ ११ ॥

---

[2] वासनं सुगन्धद्रव्यलेपनम् । गमयामि इति 'च' मातृकापाठानुसारेण 'आत्मानं गमयामि' सङ्गमयामिति बोध्यम् ।

---

[1] वा गमयाम्यहम् (च) [3] विभक्ता तां (च) [4] पञ्चधा विभक्तात्मा (ग)
[5] भूत्वा तां (घ) [6] सर्वदा (च) [7] वापि (क ख ग घ) [8] महर्षिभिः (ग)
[9] कामरूप वपुः (क ख घ च)

पुपोष च वपुर्यद्वत्तस्य तस्यानुगाऽभवत् ।
अरुन्धतीव [1]सीतेव [2]बभूवान्या पतिव्रता ।
दमयन्त्याश्च मातुस्सा विशेषमधिकं ययौ ॥ १२ ॥

ततस्तस्य च तस्याश्च तुल्या प्रीतिरवर्धत ।
तस्मिंस्तस्या मनःसक्तं[3] न [4]तुतोष कदाचन ॥ १३ ॥

[5]मौद्गल्यस्य महर्षेश्च रममाणस्य वै [6]तदा ।
संवत्सर[7]गणा भूरि व्यतीयुः क्षणवत्तदा ॥ १४ ॥

### कामतुष्टस्य मौद्गल्यस्य पत्नीत्यागः

ततः कदाचिद्धर्मात्मा [8]तुष्टकामो व्यजायत ।
[9]अनिच्छन्परमं धर्मं योगधर्मपरोऽभवत् ।
उत्ससर्ज स तां विप्रः सा तदा चापतद्भुवि ॥ १५ ॥

नालायनी —

प्रसीद भगवन् ब्रह्मन् न मामुत्स्रष्टुमर्हसि ।
अवितृप्तास्मि ब्रह्मर्षे कामानां मम [10]कामद ॥ १६ ॥

### अतृप्तकामायाः जन्मान्तरे भर्तृपञ्चकप्राप्तिः

ऋषिः —

यस्मात्त्वं, मयि निःशङ्का ह्यवक्तव्यं प्रभाषसे ।
आचरन्ती तपोविघ्नं तस्माच्छृणु वचो मम ॥ १७ ॥

---

[3] रममाणस्य तस्य मनः तुष्टं नाभवदतोऽपि कामो ववृध इति भावः ।

---

[1] सा तेन बभूवान् (क ख घ च) [2] सा बभूव (ग) [4] शशाक (ग) [5] मौद्गल्यश्च (च [6] सदा (ग) [7] गुणा भूतिर्व्यतीयुः (ग) [8] तृप्तः कामे व्यरज्यत (ग) [9] अनिच्छन्स परं ब्रह्म त्यागधर्मपरोऽभवन् (ग) [10] मानद (ग)

भविष्यसि नृलोकेऽ[1]स्मिन् राजपुत्री यशस्विनी ।
पाञ्चालराजस्य सुता द्रुपदस्य महात्मनः ॥ १८ ॥

भवितार[2]स्ततस्तत्र पतयः पञ्च विश्रुताः ।
तैस्सार्धं मधुराकारैश्चिरं रतिमवाप्स्यसि ॥ १९ ॥

एवं [3]शप्ता तु विमना वनं प्रायान्मनस्विनी ।

**नालायनीतपः । ईश्वरेण पञ्चपतिप्राप्तिरूपं वरदानं च**

भोगैरतृप्ता देवेशं तपसाऽऽराधयत्तदा ।
तामुवाचेश्वर[4]स्तुष्टो [5]वृणीथाः काममीप्सितम् ॥ २० ॥

[6]अथेश्वरमुवाचेदं आत्मनो [7]यद्धितं वचः ।
पतिं सर्वगुणोपेतं इच्छामीति पुनः पुनः ॥ २१ ॥

एवमुक्तस्तया देवः इदं वचनमब्रवीत् ।
[8]भविष्यति परं जन्म मनुष्येषु वराङ्गने ॥ २२ ॥

पञ्चकृत्वस्त्वया प्रोक्तः पतिं देहीत्यहं शुभे ।
[9]भविष्यन्ति च ते भद्रे पतयः [10]पञ्च विश्रुताः ।
महेन्द्रवपुषस्सर्वे महेन्द्रसमविक्रमाः ॥ २३ ॥

---

[3] एवं शप्त्वेति मातृकापाठः अयुक्तः । महाभारतस्थः सैवं शप्तेति । स एव गृहीतः । [5] वृणीथा इति लिङ्रूपम् ।

---

[1] त्वं (ग) [2] स्ततः पुत्राः (ख) स्ततस्तत (च) पृष्टो (क) सृष्टो (घ) [5] वृणीयं (च)
[6] अग्रेश्वर (क) [7] प्रथितं (क) [8] भविष्यसि (क) [9] भविष्यति नते (क ख ग घ)
[10] पञ्चभिः स्मृताः (ख घ)

## पञ्चभर्तृकताविषये नालायन्याः धर्मसंदेहः

नालायनी —

धर्म एकः पतिः स्त्रीणां पूर्वमेवं प्रकीर्तितः ।
बहुपत्न्यः कृताः पुंसो धर्मश्च पितृभिः कृतः ॥ २४ ॥

एको भर्ता हि नारीणां कौमार इति लौकिकाः ।
आपत्सु च [1]नियोगेन सन्तानार्थे परः [2]स्मृतः । ॥ २५ ॥

[3]गच्छेत या तृतीयं तु तस्या [4]निष्कृतिरुच्यते ।
[5]चतुर्थे पतिता धर्मात्पञ्चमं वर्धकी भवेत् ॥ २६ ॥

एवं गतो धर्मपथः प्रसीद परमेश्वर ।
[6]अलोकाचरितात्तस्मात्कथं मुच्येय सङ्करात् ॥ २७ ॥

## पाण्डवचरितवर्णने इन्द्रस्य ब्रह्महत्याऽवाप्तिकथनम्

[7]त्वष्टृपुत्रे हते तस्मिन्पूर्वमिन्द्रस्य तेजसा ।
ब्रह्महत्याभिभूतस्य [8]प्रज्ञाहानिरजायत ॥ २८ ॥

तदा धर्मं विवेशाशु शक्रतेजोऽपचारतः ।
निस्तेजाश्चाभवच्छक्रो धर्मे तेजसि निर्गते ॥ २९ ॥

ततः पुत्रं हतं श्रुत्वा त्वष्टा क्रुद्धः प्रजापतिः ।
अवलुम्प्य जटामेकां निजामग्नौ जुहाव सः ॥ ३० ॥

---

[3] आत्मनेपदमार्षम् । [4] निष्कृतिः प्रायश्चित्तम् । [5] चतुर्थं यदि गच्छेत्तदा धर्मच्युता भवति । पञ्चमं प्राप्ता सा वर्धकी, वेश्या भवतीत्यर्थः ।

[6] 'अलोकाचरितं तस्मात्कथं मुच्येत सङ्कटात्' इति मातृकापाठापेक्षान्महाभारतपाठः युक्तो भाति । अत्रोपयुक्तः पाठः महाभारतस्थः ।

[7] कथेयं मार्कण्डेयपुराणे पञ्चमाध्याये निरूपितास्ति । त्वष्टृपुत्रः विश्वरूपः ।

---

[1] वियोगेन (क ख घ) [2] कृतः (ग) [6] पग (ग)

ततो वृत्रः समुत्तस्थौ ज्वालामाली महासुरः ।
इन्द्रशत्रुरमेयात्मा त्वष्टृतेजोपबृंहितः ॥ ३१ ॥
वधार्थमात्मनो दृष्ट्वा वृत्रं शक्रो महासुरम् ।
प्रेषयामास सप्तर्षीन् सन्धिमिच्छन् महासुरे ॥ ३२ ॥
सन्धिं चक्रुस्ततस्तस्य वृत्रेण समयं तथा ।
[1]स [2]तामवस्थामुल्लङ्घ्य यदा शक्रेण घातितः ॥ ३३ ॥
वृत्रहत्याभिभूतस्य तदा बलमशीर्यत ।
तच्छक्रदेहविभ्रष्टं बलं मरुतमाविशत् ॥ ३४ ॥
अहल्यां च यथा शक्रो गौतमं रूपमास्थितः ।
धर्षयामास देवेन्द्रः तदा रूपमशीर्यत ॥ ३५ ॥
अङ्गप्रत्यङ्गलावण्यं यदतीव मनोहरम् ।
विहाय दुष्टं देवेन्द्रं तन्नासत्या[3]वुपागमत् ॥ ३६ ॥
[4]धर्मेण तेजसा त्यक्तं बलहीनमरूपिणम् ।
[5]ज्ञात्वा सुरेशं दैतेयाः तज्जये चक्रुरुद्यमम् ॥ ३७ ॥
तेषां वधार्थं शक्रस्य वीर्यात्पार्थो [6]भविष्यति ।
प्रविष्टैः पुरुहूतस्य धर्मे मरुति दस्रयोः ॥ ३८ ॥
चत्वारस्सम्भविष्यन्ति तेजस्सत्वाङ्गसौष्ठवैः ।
तैस्सार्धं मधुराकारैश्चिरं रतिमवाप्स्यसि ॥ ३९ ॥
[8]तत्रस्था च महत्कर्म सुराणां त्वं करिष्यसि ।
मत्प्रसादादकीर्तिस्ते कुत्रचिन्न भविष्यति ॥ ४० ॥

---

[1] अवस्थात्र देवासुरैः कृता समयरूपा । [4] 'धर्मेण' पाठः मार्कण्डेयपुराणस्थः ।
[7] धर्मे मरुति दस्रयोश्च प्रविष्टैः तेजस्सत्वाङ्गसौष्ठवैरित्यन्वयः ।

---

[1] तान्यवस्था (क ख ग च) [3] दुपागमन् (क ख घ च) [4] धर्मेति (क ख ग घ च)
[5] हित्वा (च) [6] जनिष्यति (ग च) [8] ततस्था (क ख ग)

कौमारं च भवेत्सर्वैस्सङ्गमे सङ्गमे तव ।
इति तस्यै वरं दत्वा तत्रैवान्तरधीयत ॥ ४१ ॥

व्यासः —

कस्यचित्त्वथ कालस्य धरणी भारपीडिता ।
जगाम मेरुशिखरं [1]सदो यत्र दिवौकसाम् ॥ ४२ ॥
तेषां सा कथयामास खेदकारणमात्मनः ।

धरणी —

एते भवद्भिरसुरा निहताः पृथुलौजसः ॥ ४३ ॥
ते सर्वे मानुषे लोके जाता गेहेषु भूभृताम् ।
अक्षोहिण्यो हि[2] बहुलास्तद्भारार्ता व्रजाम्यधः ॥ ४४ ॥
तथा कुरुध्वं त्रिदशा यथा शान्तिर्भवेन्मम ।
इत्युक्तास्ते ततो देवा अवतेरुर्दिवो महीम् ॥ ४५ ॥
वसुदेवकुले कृष्णस्त्ववतीर्णो हरिःस्वयम् ।
यदिद देहजं तेजः तन्मुमोच स्वयं वृषः ॥ ४६ ॥
[3]कुन्त्यां जातो महाभागः ततो जातो [4]महाबलः ।
बलं मुमोच पवनस्तत्र भीमो व्यजायत ॥ ४७ ॥
शक्रवीर्यात्ततश्चैव जज्ञे पार्थो धनञ्जयः ।
उत्पन्नौ [5]यमजौ माद्र्यां दस्रवीर्यौ[6]द्रुरद्युती ।

---

[3] कुन्त्यां जात इत्यारभ्य पार्थो धनञ्जय इति पङ्क्तित्रयस्थाने 'ग' मातृकाय 'राजासीत्तत्र × भीमो व्यजायत । शक्रवीर्यात्ततः शूरो जज्ञे पार्थो धनञ्जयः ' इत्यस्ति ।

---

[1] सदा (क ख घ च) [2] बह्वयस्तद्भाराक्रान्ता (ग) [4] महाबलः (क ख ग घ)
[5] यमलौ (ग च) [6] [illegible] (क ख घ च)

पञ्चधा भगवान्नित्थमवतीर्णः शतक्रतुः ॥ ४८ ॥

**व्यासकृतः पाञ्चालीपञ्चभर्तृकतासन्देहनिरासः**

नालायनी पाण्डवार्थं दुहितृत्वं गता तव ।
पृथाऽप्युक्तवती सर्वे भुञ्जध्वमिति पार्थिव ॥ ४९ ॥

यन्मुखान्निर्गतं वाक्यं सतां तद्धर्म्यमुच्यते[1] ।
सात्विका एव ते यस्मात्प्रमाणं श्रुतयोऽपि हि ॥ ५० ॥

पञ्चानां विहिता कृष्णा तस्मादत्र न संशयः ।
इति तस्य वचः श्रुत्वा द्रुपदो हृष्टमानसः ॥ ५१ ॥

नत्वा विमुक्तसन्देहः पाराशर्यं महामुनिम् ।
कीर्तिमान्विधिवत्कृष्णां पाण्डवेभ्यो ददौ तदा ॥ ५२ ॥

भुज्यतां भ्रातृभिस्सार्धं इति कुन्तीगिरा द्विजाः ।
अर्जुनोऽपि तथा कृत्वा मुमुदे देववच्चिरम् ॥ ५३ ॥

कीर्तिं च महतीं लेभे जित्वा शत्रून्रणाजिरे ।
मातृवाक्यानुरोधेन को न याति परां गतिम् ॥ ५४ ॥

उपाख्यानमिदं पुण्यं [1]यः श्रावयति वा पठेत् ।
मातृभक्तिपरो भूत्वा सोऽमुत्रेह च नन्दते ॥ ५५ ॥

इति श्रीमत्पुराणसारे मातृवाक्यपरिपालने पञ्चेन्द्रोपाख्यानं नाम
पञ्चत्रिंशोऽध्यायः

---

[1] धर्ममिति पाठेऽयुक्तो मातृकासु । अतः धर्म्यमिति विपरिवर्तितम् ।

---

[1] श्रावयेद्वा शृणोति वा (ग)

# षट्त्रिंशोऽध्यायः

[ पितृभक्तिप्रकरणम् ]

## पितृप्रशंसा

सूतः —

द्वौ गुरु पुरुषस्येह पिता माता च दैवतम् ।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात्[1] ॥ १ ॥

पिता [2]ह्यात्मानमाधत्ते [3]जायायां [4]जायतामिति ।
शीलचारित्रगोत्रस्य रक्षणार्थं कुलस्य च ॥ २ ॥

मुच्यते बन्धनात्पुष्पं फलं वृन्ताच्च मुच्यते ।
[5]क्लिश्यतेऽपि पितुः स्नेहः पुत्रस्नेहो न मुञ्चति ॥ ३ ॥

प्रीतिमात्रं पितुः पुत्रः सर्वं पुत्रस्य वै पिता ।
पिता स्वर्गः पिता धर्मः पिता परमकं तपः ॥ ४ ॥

पितरि प्रीतिमापन्ने [6]प्रीतास्स्युः सर्वदेवताः ।
आशिषस्ता [7]भजन्ते तं [8]तनयं [9]प्राह यः पिता ॥ ५ ॥

पिता ह धर्मो यस्सर्वदेवेष्वपि च निश्चितः ।
पातकान्यपि पूयन्ते पितुश्शासनकारिणः ॥ ६ ॥

---

[1] बीजप्राधान्यं मनुस्मृतौ प्रदर्शितम् —
बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते ।
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥ म.स्मृ. अ. ९ श्लो. ३५

[4] जायायां जज्ञियामिति । महाभारते १२ १५८-१३

---

[2] ह्यास्मात्मनादत्ते जायायां(ग) [3] जायतां(क ख ग घ) [5] क्लिश्यते हि(क) क्लिश्यतेपि(ख)
[6] प्रीतास्स्यात् (क ख ग) पिता स्यात् (घ) [7] भजन्तेऽयं (क ख) [8] जनयं (क ख घ)
[9] प्राभवात् (घ)

## पितृभक्तिनिरूपणे परशुरामकथा

[1]अस्मिन्नर्थे पुरागीतमाख्यानं कथयामि वः ।
अस्ति रेवातटे रम्ये तपोवनमनुत्तमम् ।
तत्रासीद्भार्गवश्रेष्ठो जमदग्निर्महामुनिः ॥ ७ ॥
स कदाचित्समिद्भारहारिभिस्तनयैस्सह ।
प्रसूनपात्रधृक्प्राप जमदग्निस्स्वमाश्रमम् ॥ ८ ॥
वन[2]चङ्क्रमणो[3]त्थेन श्रमेण महतान्वितः ।
गाहमाने शनैरह्नो मध्यं दिवसभर्तरि ॥ ९ ॥
स्वेदार्द्रगात्रं पितरं दृष्ट्वा [4]रामस्समागतम् ।
उपतस्थे [5]तदा तालव्यजनाग्रकरः शनैः ॥ १० ॥
प्रसूनपात्रं तद्धस्ते प्रदाय मुनिपुङ्गवः ।
[6]संवीज्यमानस्तेनासौ [7]बृस्यामुपविवेश ह ॥ ११ ॥
अपेतश्रमखेदश्च [8]व्यलोकयदथाश्रमम् ।
उटजाभ्यन्तरे भार्यामपश्यन् वीक्ष्य सर्वतः ॥ १२ ॥

---

[1] कथेयं शान्तिपर्वणि मोक्षधर्मपर्वणः चिरकारिकथामनुकुरुते । आत्मनः आज्ञ तिरस्कुर्वतः पुत्रान् विनिन्द्य व्यभिचारशङ्कितां पत्नीं मारयितुं चिरकारिणं स्वमतानुकूलं पुत्रमाज्ञापयति पिता गौतमस्तत्र । महाभारतस्था परशुरामकथा अन्या । तत्र पद्ममालिनं राजानं दृष्ट्वास्याः मनश्चञ्चलं भवतीति वर्ण्यते । [2] चङ्क्रमणं भ्रमणम् । [7] बृसी आसनम् ।

---

[3] शीतदश्रमेण (क) स्वेदश्रमेण (च) [4] रामं समागमम् (क) [6] मुदा (ग)
[7] संवीक्ष्य (क ख ग घ) [8] व्यलोकयत आश्रमम् (क ख ग घ)

[1]अपक्कमातिथेयं च ज्ञात्वा शङ्का[2]मुपेयिवान् ।
पप्रच्छ रामं माता ते क्व यातेति महामुनिः ॥ १३ ॥
अथाह पितरं रामो घटमादाय निर्गता ।
जलार्थमाश्रमा[3]त्त्वस्मान्माता मे प्रस्थिता नदीम् ॥ १४ ॥
स्थापयित्वाऽत्र मां तूर्णमायास्यामीति साम्प्रतम् ।
न जाने कारणं तात येनाद्यापि चिरायति ॥ १५ ॥
तच्छ्रुत्वा शङ्कितमतिस्ततो बहु विचिन्तयन् ।
तदागमनमार्गन्तु [4]वीक्षन्नास्ते महामुनिः ॥ १६ ॥
ततस्सा सत्वरा भीत्वा प्रयास्यन्त्याश्रमं प्रति ।
आत्मनश्चिन्तयामास मनसा[5] यापयन्त्यपि[6] ॥ १७ ॥
इयानतीतः कालश्च हन्त नाहमवेदिषम् ।
ध्रुवं हि सर्वलोकेषु बुद्धि[7]विस्रम्भकारिणी ॥ १८ ॥
[8]श्रीराकुलत्वं धीराणां कथं सद्यो न यास्यति ।
अहो पिप्पलपत्राग्र[9]लीनतोय[10]सधर्मिणी
[11]यद्राजश्रीर्विमुह्यन्ति यत्र [12]नित्यमबुद्धयः ॥ १९ ॥
[13]क्वाहं विदितवेद्यस्य समृद्धब्रह्मवर्चसः ।
महर्षेर्धर्मशीलस्य परिचर्यापरायणा ॥ २० ॥

---

[1] आतिथेयं पाकादिकम् । तच्चाकल्पितमिति । [4] परस्मैपदमार्षं रूपम् ।
[6] यापयन्ती मनसा आत्मनः कृते चिन्तयामासेति । यापयन्तीति मया निवेशितः पाठः ।

---

[2] मुपाग्रताः (ग) [3] दस्मात (ग) [5] यातयन्नपि (क) पनयन् (ग) यापयन् (ग)
[7] विद्याथिकारिणी (ग) [8] सीताकुलवधीराणां कथं सद्यो न धास्यति (क) सीराकुलत्र-धीराणां कथं सद्यो (ख) श्रीराकुलत्रधीराणां कथ सद्यो न धातुनी (च)
[9] नीलतोय (क) [10] सधर्मिणाम् (क) [12] बुद्धिमवु (ग) [11] क्व राजश्री (ग)
[13] काहं (क ख ग च)

यया [1]विस्मारिताऽऽत्मीयकृत्याकृत्यविमूढधीः ।
समुल्लङ्घ्य सदाचारं [2]स्थितास्मि निरपत्रपा ॥ २१ ॥

[3]एवं सञ्चिन्तयन्त्यास्तु गच्छन्त्या स्वाश्रमं प्रति ।
[4]वामेतरोरुबाह्वक्षिस्फुरणं मृगपक्षिणाम् ।
रुतं चाशुभदं [5]श्रुत्वा सा बभूव भयातुरा ॥ २२ ॥

अपि स्वस्ति भवेद्भर्तुः पुत्राणां चेति चात्मनः ।
सञ्चिन्तयन्ती मनसा त्वरया प्रापदाश्रमम् ॥ २३ ॥

सा वेपथुमती विप्रा गृहीत्वोदकभाजनम् ।
प्रविवेशाश्रमं सद्यः साशङ्कं [6]भयभीतवत् ॥ २४ ॥

## रेणुकायै जमदग्नेः कोपप्रदर्शनम्

ततस्स क्रोधताम्राक्षस्तां विलोक्याब्रवीन्मुनिः ।
किं त्वं कृतवती कालमियन्तं ब्रूहि मेऽखिलम् ॥ २५ ॥

[7]गृहकृत्य[8]मशेषं च विहाय किमकारुषीः ।
कर्म यत्तदहं सर्वं ज्ञातुमिच्छामि तत्त्वतः ॥ २६ ॥

## रेणुकाकृतं क्षमाप्रार्थनम्

सापि विन्यस्य कलशं भूत्वा भूमौ कृताञ्जलिः ।
भर्तारमसितापाङ्गी साशङ्कमिदमब्रवीत् ॥ २७ ॥

भगवन् घटमास्थाय विनिष्क्र[9]म्याश्रमादितः ।
नदीमयासिषं तोयमानेतुं त्वरयाऽन्विता ॥ २८ ॥

---

[4] स्त्रीणां दक्षिणाङ्गस्फुरणं अनिष्टसूचकम् ।

---

[1] विस्मापित (च) [2] स्थिताहं (ग) [3] एतं (घ) [5] दृष्ट्वा (ग) [6] भीतभीतवत् (ग च)
[7] गृहमेतत् (च) [8] शेषेण (ग) [9] तु (च) [10] म्याहमादितः (च)

यावत्तावदहं तस्यामनेकस्त्रीजनान्वितम् ।
अपश्यं कञ्चन नृप जलक्रीडा[1]समागतम् ॥ २९ ॥

तत्प्रक्षोभसमुद्भूतपङ्काविलजला नदी ।
विपरीत[2]वहेवासीत्सुचिरं तन्निबोध मे ॥ ३० ॥

तस्मिन्काले प्रतीक्ष्या[4]लं तद्विगममभीप्सती ।
स्थित्वा दूरं [5]ततोऽगच्छमिच्छन्त्यकलुषोदकम् ॥ ३१ ॥

पूरयित्वाच्छतोयेन घटमादाय वेगिता ।
आगताऽऽश्रममेतावत्कृतं कर्म क्षमस्व मे ॥ ३२ ॥

## कुपितेन ऋषिणा तस्या वधार्थमाज्ञापनम्

इत्युक्तस्स तया क्रुद्धः स्फुरमाणोष्ठसम्पुटः ।
प्राह संरक्तनयनः [6]स्वां भार्यामिदमुत्तरम् ।
धिक् त्वां पापसमाचारे विज्ञातमधुना मया ॥ ३३ ॥

[7]राजपुत्र्यसि राजानं स्थिता दृष्ट्वा श्रियान्विताम् ।
ऐश्वर्यकांक्षिणी पापे [8]ध्रुवं त्वं वै चिरायिता ॥ ३४ ॥

सतीनां योषितां यस्मादाचारमतिवर्तसे ॥ ३५ ॥

तस्मान्मे नास्ति जीवन्त्या त्वया कृत्यं कथञ्चन ।
इत्युक्त्वा क्रोधताम्राम्रक्षो दहन्निव विलोक्य ताम् ॥ ३६ ॥

---

[5] गतः इति सर्वत्र मातृकासु दृश्यमानः पाठः युक्त इति न भाति ।
[8] निबोधय इति मातृकासु । [7] इयं इक्ष्वाकुवंशीय रेणोः कन्या इति भागवते भाग स्कं.९ अ. १५ । विदर्भराजस्य पुत्रीति कालिमापुराणे ।
कालिका पु. अ. ८६

---

[1] समन्वितम् (च) [2] जले (क ख घ च) [4] हं (ग) [5] धृत (क ख ग)
[6] त्वां (ग)

उवाच पूर्वजान्पुत्रानाहूय स महामुनिः ।
रुमण्वन्तं सुहोत्रं च वसुं विश्वावसुं तथा ॥ ३७ ॥

इयं पापीयसी पुत्राः स्वधर्मादन्यतोमुखा ।
प्रयाता जननी [1]चाद्य [2]ममाज्ञाभङ्गकारिणी ॥ ३८ ॥

तस्मान्ममाज्ञया यूयं सर्व एवातिचित्रितम् ।
निजधर्मच्युतामेनां शीघ्रं नयत संक्षयम् ॥ ३९ ॥

[3]अवध्येति मतिर्माता [4]विधिर्नो वर्तते सुताः ।
मयोक्तं सहितास्सर्वे प्रायश्चित्तं करिष्यथ ॥ ४० ॥

भ्राता माता तथाऽन्यो वा पुंसा सन्मार्गवर्तिना ।
हन्तव्यः पितुरादेशात्सर्पदष्टोऽङ्गुलिर्यथा[5] । ॥ ४१ ॥

[6]सदसद्वा पितुः पुत्रैः वचनं [7]धर्मकारणात् ।
अविचार्यैव कर्तव्यमिति धर्मानुशासनम् ॥ ४२ ॥

## पुत्रैः वधस्य निराकरणम्

तच्छ्रुत्वा वचनं तस्य पितुः क्रोधसमन्वितम् ।
ऊचुश्च दुःखितास्सर्वे परिम्लानमुखश्रियः ॥ ४३ ॥

उपाध्यायं पितरं मातरं च
येऽभिद्रुह्यन्ति मनसा कर्मणा वा ।

---

[3] माता अवध्या इति नः अस्माकं विधिः आज्ञा शास्त्रं वा वर्तत एव । अथवा विधिः न वर्तत इति । तदा प्रायश्चित्तं करणीयं भवेत् । परन्तु मदाज्ञया सा हन्तव्यैवेति ।

[5] सर्पदष्टस्याङ्गुलेः छेदः प्राणापायहरः । यथा सूक्तमौषधं विनापि दष्टो जीवेत् ।

---

[1] चा वो (ग) [2] ममेंज्ञा (क ख ग घ) [4] यदि नो (ग च) [6] यद्वा सद्वा (ग) [7] धर्मकारणम् (ग)

तेषां पापं भ्रूणहत्या[1]ऽविशिष्टं
तस्मान्नान्यः पापकृदस्ति लोके ॥ ४४ ॥

भृत्यो भर्तारं यो न बिभर्ति पुत्रः
[2]स्वयोनिजः पितरं मातरं वा ।
न संख्यातुं शक्यते तस्य पापं
तस्मान्नान्यः पापकृदस्ति लोके ॥ ४५ ॥

[3]मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णामपि चैतेषां [4]निष्कृतीर्नानुशुश्रुमः ॥ ४६ ॥

तदा स रिक्तो भवति तदा भवति दुःखितः ।
तदा शून्यं जगत्सर्वं यदा मात्रा [5]वियुज्यते ॥ ४७ ॥

कुक्षौ सन्धारणाद्धात्रीं जननाज्जननीमपि ।
चेतनावांस्तु को हन्याद्यस्य [6]नासुषिरं शिरः ॥ ४८ ॥

इत्येवमुक्त्वा तेऽन्योन्यं विवदन्तः[7]सुतास्तदा ।
तस्थुस्तत्कोपशमनं [8]प्रतीक्षन्तः समन्ततः ॥ ४९ ॥

## ऋषिणा पुत्रेभ्यः शापप्रदानम्

सूतः —

[9]अथाविष्टोऽपि कोपेन कलुषीकृतचेतनः ।
[10]ध्वंसतेत्यसकृत्पुत्रान् जमदग्निरभर्त्सयत् ॥ ५० ॥

---

[2] स्वयोनिजं इति न युज्यते मातृकापाठः । [3] मित्रद्रोहः .... निष्कृतिर्नानुशुश्रुम? । इति मातृकासु । मित्रद्रुह इति निष्कृतीरिति च परिवर्तितम् । [6] यस्य शिरः केवलरुध्रयुक्तं शून्यं स एव हन्यादिति । [8] आर्षं शतृजन्तम् । [10] ध्वसत इत्यार्षं परस्मैपदरूपम् ।

---

[1] वेश्विष्टं(क ख ग घ) [3] मित्रद्रोहः(क ख घ) [4] निकृतिर्ना(क ख ग घ) [5] वियुज्यति(क) [6] नासुरं (क) [7] श्रुता (क ख घ) [9] अथाविषोध (क ख घ) विष्टोऽथ (ग)

अवधीरितनिर्देशान् मन्यमानस्तदा सुतान् ।
शशाप कुपितः पुत्रान् सर्वानेव [1]महामतिः ॥ ५१ ॥

गुर्वाज्ञालङ्घनाद्यूयं तमोपहतचेतनाः ।
सर्वे मृगसधर्माणश्चरध्वं वनमाश्रिताः ॥ ५२ ॥

## परशुरामाय जननीवधार्थमाज्ञा

अथ पुत्रं कनीयांसमशेषगुणभूषणम् ।
उवाच राममाहूय वाक्यं क्रोधसमन्वितम् ॥ ५३ ॥

पुत्रस्त्वं यदि मे राम पितृभक्ति[2]र्विनिश्चला ।
[3]मय्यस्ति [4]चेत्ते भवतः धर्मनिष्ठा च शाश्वती ॥ ५४ ॥

अविलङ्घ्यं च भवतः वचः किमपि मामकम् ।
तत्कुरुष्व [5]विमर्शेन यदि मत्प्रियमिच्छसि ॥ ५५ ॥

ततस्तमाह पितरं रामो विरचिताञ्जलिः ।
सत्यं करोमि ते तात वचनं नात्र संशयः ॥ ५६ ॥

भवतैव विमृश्यं हि कृत्याकृत्यं तु कर्मणा(म्) ।
अविलङ्घ्यं गुरोर्वाक्यं इति वेदानुशासनम् ॥ ५७ ॥

कर्तास्मीति [6]प्रतिज्ञातं रामेणाऽऽत्मसमीरितम् ।
मुनिः क्रोधपराधीनो [8]दैवेन च नियोजितः ॥ ५८ ॥

---

[6] सर्वत्र मातृकासु 'प्रतिज्ञाते रामेणात्मसमीरीते' इति दृश्यते । केवलं 'ग' पुस्तके समीरितं इति पाठोऽस्ति । परन्त्वत्र प्रतिज्ञातमिति युज्यते इति विपरिवर्तितं किंचित् ।

---

[1] महामुनिः (ग) [2] श्च निश्चला (च ग) [3] त्वय्यास्ति (क ख ग च) [4] चित्ते (घ)
[5] विमृश्यैनं (क) च्चाभिमर्षेन (क) [8] देवेन (क ख घ)

समिच्छेदनशस्त्रं तु दत्वा रामकरे रुषा ।
उवाच हन्यतां शीघ्रं त्वया तीव्रमसंशयम् ॥ ५९ ॥

## परशुरामेण वधे चिरकारित्वप्रशंसनम्

सूतः —

[1]गृहीतशस्त्रस्तु तदा रामः क्षणमचिन्तयत् ।
[2]रागे दर्पे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ ६० ॥

बन्धूनां सुहृदाञ्चैव भृत्यानां स्त्रीजनस्य च ।
अव्यक्तेष्वपराधेषु [3]चिरकारी प्रशस्यते ॥ ६१ ॥

## कथञ्चिदपि पितृवाक्यपालने मतिप्रदर्शनम्

एवं सञ्चिन्तयन्नेव मातुश्शस्त्रेण तेन सः ।
शिरश्चिच्छेद विदयोऽलङ्घ्यं मत्वा गुरोर्वचः ॥ ६२ ॥

कोपेन भर्तुः प्रागेव वेपमाना लतेव सा ।
शस्त्रेणाभ्याहता सद्यो गतासुरपतद्भुवि ॥ ६३ ॥

हत्वा पशुं [4]सौनिकवन्मातरं पितुराज्ञया ।
इतिकर्तव्यतामूढः तस्थौ धीरोऽपि सः क्षणम् ॥ ६४ ॥

---

[1] अत्रत्य परशुरामकथानकं महाभारतस्थचिरकारि कथामनुकरोति । परन्तु तत्र चिरकारी पित्रादेशमनुसृत्य मातुः शीर्षकं नैव छिनत्ति । ततो गौतमः पिता पुत्रस्य चिरकारितां प्रशंसति ।

म.भा. शान्तिपर्वणि मोक्षधर्मपर्व १२-२५८

[4] सौनिकः पशुघाती ।

---

[2] रागैर्दर्पैश्च मानैश्च (च) [3] क्षिप्रकारीति दृश्यमानः पाठः न समीचीनः ।

अपश्यन्मातरं भूमौ पतितां क्षतजोक्षिताम् ।
[1]हतचेता भवच्छोकत्रपाकारुण्यभीतिभिः ॥ ६५ ॥

ततश्शस्त्रं समुत्सृज्य स जुगुप्सितकर्मकृत् ।
न्यपतत्त्रस्तसर्वाङ्गो मूर्च्छितः पृथिवीतले ॥ ६६ ॥

## जमदग्नेः कोपशान्तिः पश्चात्तापश्च

अथ सञ्चिन्तयामास शान्तक्रोधो [2]महामतिः ।
अहो मया कृतं कर्म सुनृशंसतरं बत ।
सद्योऽनर्थप्रदं लोके दूरात्परिहृतं बुधैः ॥ ६७ ॥

अज्ञानप्रभवं शश्वत् [3]पुरुषार्थप्रणाशनम् ।
आचारोपचयोपात्तधर्मनिर्मूलकारणम् ॥ ३८ ॥
यशोनिर्नाशकं शश्वन्मनोरथनिरोधकम् ॥
आश्रयस्सर्वदोषाणां [4]निधानं परमापदाम् ॥ ६९ ॥

असन्मार्गानु[5]सरणं मयाद्य यदनुष्ठितम् ।
दूरेण रोषस्सन्त्याज्यः चण्डाल इव सज्जनैः ॥ ७० ॥

अहो धिक् क्रोधशीलत्वं सहसोत्पतितं मम ।
अस्वर्ग्यमयशस्यं च नृशंसं सद्भिर्गर्हितम् ॥ ७१ ॥

धिङ्मां पापसमाचारं [6]अज्ञं पण्डितमानिनम् ।
अदीर्घदर्शिनं [6]गूढकदर्यं निरपत्रपम् ॥ ७२ ॥

---

[1] अत्र सन्धिरार्षः । [4] निदानमिति युक्तम् ।
[6] कदर्यः कुत्सितः आर्यः । गूढश्चासौ कदर्यः अप्रकाशितकदर्यत्वसंपन्नः इति यावत् । निरपत्रतपश्च निश्शेषतया लज्जाहीनः ।

---

[1] हतशोका (ग) [2] महामुनिः (ग) [3] मनोरथनिरोधकम् (क) [5] साराणां (च)
[7] अहं (क ख घ च) [8] मूढं (ग)

जुगुप्सितमिदं कर्म मदन्यो भुवनत्रये ।
ब्राह्मणस्तु विशेषेण कः कुर्याच्छ्रुतपारगः ॥ ७३ ॥
नैव मातृसमं दैवं गुरुश्च खलु देहिनाम् ।
अयं बालोऽपि मद्भक्तः जघान निजमातरम् ॥ ७४ ॥
अलङ्घ्यत्वेन वचसो [1]मम हत्वा स मातरम् ।
अथ सम्मूर्च्छितश्शेते [2]हतदुःखनिपीडितः ॥ ७५ ॥
इत्येवमात्मनात्मानं विनिन्द्य स महामुनिः ।
तत[3]श्शीघ्रं समुत्थाय मूर्च्छितं पतितं सुतम् ।
उत्थाप्याश्वासयामास स्वाङ्कमारोप्य दुःखितम् ॥ ७६ ॥

## ऋषीणां परशुरामं प्रति वरयाचनप्रोत्साहः

ततः प्रहृष्टवदनो राममालोक्य सादरम् ।
निजगाद मुनिश्रेष्ठः सान्त्वयित्वाऽभिनन्द्य च ॥ ७७ ॥
त्वया दायादवानस्मि धर्मज्ञेन महात्मना ।
धन्योऽस्म्यनुगृहीतोऽस्मि प्रीतोऽस्मि तव पुत्रक ॥ ७८ ॥
मयि भक्तिमता येन कृतं कर्म सुदुष्करम् ।
लोकगर्हितमप्यद्य त्वया तुष्टोऽस्मि [4]तेन वै ॥ ७९ ॥
वरं वृणीष्व मत्तस्त्वं तस्मात्पुत्र सुदुर्लभम् ।
दास्याम्यभिमतान्कामांस्तव नात्र विचारणा ॥ ८० ॥

## परशुरामेण जनन्याः पुनरुज्जीवनंविषयकवरयाच्ञा

तत उत्थाय मेधावी कृताञ्जलिपुटस्तदा ।
सप्रश्रयमुवाचेदं पितरं भृगुपुङ्गवम् ॥ ८१ ॥

---

[1] हन्त शेतेऽतिमूर्छितः (ग) [2] हतः (च) [3] स्सुशीघ्र मुत्थाय (च) [4] वै तव (ग)

रामः —

वरार्हो यद्यहं तात वरदो मे तथा[1]भवान् ।
समुत्तिष्ठतु मे माता [2]नीरुजाऽद्यैव पूर्ववत् ॥ ८२ ॥

शस्त्राहतिव्यथां चैव मम नाल्पीयसीमपि ।
जानातु माता सौम्यत्वं तव तस्यां च शाश्वतम् ॥ ८३ ॥

मदग्रजानां [3]प्रकृतिं [4]त्वच्छापापहतात्मनाम् ।
प्रार्थये गुरुभक्तिं च तेषां प्रीतिं च तेषु ते ।
प्रयच्छ मे वरानेतान् सुप्रसन्नेन चेतसा ॥ ८४ ॥

सूतः —

तथाऽस्त्विति वरं [5]दत्वा रामाय स महामुनिः ।
पस्पर्श पाणिना तेषां गात्राण्यु[6]ज्जीवयन्निव ॥ ८५ ॥

ततस्ते सहसोत्तस्थुः स्पृष्टास्तेन निरामयाः ।
वीतशोकभयाबाधास्सुप्रसन्नमुखेन्द्रियाः ॥ ८६ ॥

जमदग्निः —

मातरं [7]प्रति ते पुत्र यत्त्वं वरयसे वरम् ।
ध्रुवं त्वं मत्प्रसादेन लप्स्यसे नात्र संशयः ॥ ८७ ॥

अनुभूत[8]स्त्वया शापो निवृत्तश्चाधुना कृतः ।
तस्माज्जीवतु सा चेयं [9]यत्त्वयोक्तं तु तां प्रति ॥ ८८ ॥

---

[2] निरूजेति सर्वमातृकापाठः अशुद्ध इति भाति ।

---

[1] भवत् (क ख ग) [3] प्रवृत्तिं (क ख घ च) [4] तच्छापाद्दहात्मनाम् (क)
[5] दृष्ट्वा (क) [6] जीविन्न् (च) [7] पतिते (क ख ग घ) [8] सदा (क ख घ च)
तदा शापान्निवृत्ताश्चाधुना तु ताः (च) [9] यत्प्रयोक्तं (क)

इत्युक्त्वा स [1]मुनिश्रेष्ठः [2]प्रेम्णा सास्राविलेक्षणः[3] ।
रेणुकां च ततो भार्यामुपेत्य पतितां क्षितौ ।
वरदानागतप्राणां स पस्पर्श मुहुर्मुहुः ॥ ८९ ॥

परामृशंस्तदङ्गानि कराभ्यां करुणार्द्रधीः ।
शनैरुत्थापयामास भूमेर्भार्यां महामुनिः ॥ ९० ॥

संस्पृष्टा तेन सा सद्यः समुत्थाय पतिव्रता ।
क्षणेन विरुजा तस्थौ [1]चित्रगुप्तोत्थितेव सा ॥ ९१ ॥

उत्थिता सा [5]पुनर्नीता भर्तुश्चरणयोस्सती ।
स्वापराधं क्षमस्वेति [6]पपातास्राविलेक्षणा ॥ ९२ ॥

[7]त्वरयोत्थाप्य तामाह हर्षेण महताऽन्वितः ।
उभाभ्यामथ बाहुभ्यां गाढ[8]मालिङ्ग्य [9]पीडिताम् ॥ ९३ ॥

दिष्ट्या जीवसि भद्रे त्वं इत्युवाचासक्[10]न्मुनिः ।
जगर्हे भृशमात्मानं भूयोऽपि स महामुनिः ॥ ९४ ॥

सूतः — **परशुरामेण मातुः क्षमाप्रार्थनम्**

ततो धर्मविशेषज्ञो जामदग्न्यो [11]द्विजोत्तमाः ।
पतित्वा पादयोर्मातुरिदं वचनमब्रवीत् ॥ ९५ ॥

न मत्तो ह्यधिको मातः पापीयान्पुरुषः क्वचित् ।
क इत्थं मातरं हन्यान्मदन्यो मतिमान्नरः ॥ ९६ ॥

---

[3] अस्रं अश्रु तेन कलुषितदृगिति । [5] 'पुनर्भीता' इति पाठ्यं युक्तमिति भाति । मातृकासु तु पुनर्नीतेति दृश्यते ।

---

[1] मुनिस्त्वेषः (च) [2] सेयं (क) [4] चिरं सुप्तोत्थितेव सा (ग च) [6] पपात सा (क)
[7] त्वरयोत्थापयामास (ग) [8] माश्लिष्य (ग) [9] पण्डिता (क ख ग घ)
[10] द्विजाग्र्यः (क ख ग घ) [11] महामुनिः (ग)

नाहं सुतस्ते वात्सल्यं मयि त्वं च परित्यज ।
पुत्रैश्च[1]द्रक्षिता मातुः स्यान्न हन्ता कथञ्चन ॥ ९७ ॥

वचनीयन्तु महतां मरणादधिकं किल ।
मृतिर्नामैकदा लोके [2]साऽऽजीवं वचनीयता ॥ ९८ ॥

तस्मात्त्वं शाधि मामेव गच्छ त्वं तपसे वनम् ।
कर्मणा येन मुच्येयं पापादस्मादशेषतः ॥ ९९ ॥

### रेणुकया क्षमादानं वरदानञ्च

इत्युक्त्वा भृशसंविग्नं रुदन्तं पुत्रवत्सला ।
उत्थाप्य राममालोक्य स्वाङ्कमारोपयत्सती ॥ १०० ॥

स्वयं चाश्रुपरीताङ्गी रेणुका तं पुनः पुनः ।
आश्लिष्य मूर्ध्न्युपाघ्राय वचनं चेदमब्रवीत् ॥ १०१ ॥

रेणुका —

वत्स त्वयार्जितो धर्मः सुमहानतिदुर्लभः ।
कुर्वता तु गुरोराज्ञां मां चोज्जीवयता पुनः ॥ १०२ ॥

यदि त्वं परवान् पित्रा त्वयात्मा प्रतिपादितः ।
कर्मणानेन ते तस्मात्प्रीतिं [3]प्राप परामहम् ॥ १०३ ॥

सर्वधर्मार्थवित्प्राज्ञस्तपस्वी दुष्टशासनः ।
वृद्धसेवी वदान्यश्च भव त्वं पुत्र सर्वदा ॥ १०४ ॥

वीर्यशौर्याद्यनेकेषु गुणेषु परिनिष्ठितः ।
स्ववंशे गुर्वनुज्ञातो निष्ठां त्वं प्राप्यसे पराम् ॥ १०५ ॥

---

[2] सा वचनीयत अपवादः आजीवं जीवनावधि इति छेदेनार्थः ।

---

[1] द्रहिता (क ख घ) द्रक्षिते (ग) [2] सा जीवन्वचनीयता (च) [3] प्राप्ता (क ख घ च)

सर्वभूतहितो मैत्रः शान्तात्मा गुरुदैवतः ।
[1]संप्राप्य स्वकुलश्रैष्ठ्यं जीव त्वं [2]शाश्वतीः समाः ॥ १०६ ॥

## जमदग्निना आशीर्दानम्

जमदग्निस्ततः प्रीतो [3]विनयावनताननम् ।
प्रतिपूज्य तदा राममिदं वचनमब्रवीत् ॥ १०७ ॥

जात्या च सदृशास्सर्वे कुलेन सदृशास्तथा ।
न तु शौर्येण बुद्ध्या च रूपद्रव्येण वा समाः ॥ १०८ ॥

त्वयाहं तारितः पुत्र महतो [4]वृजिनार्णवात् ।
त्वद्दतेऽहं तु [5]किं वक्ष्ये उभयोर्लोकयोरपि ॥ १०९ ॥

परत्र किल सत्पुत्रः [6]परित्राति पितॄन् स्वकान् ।
त्वं तु मां पितृभिस्सार्धं अरक्षीर्लोकयोर्द्वयोः ॥ ११० ॥

सोऽहं तारितवान्पुत्र त्वयाद्यैव न संशयः ।
प्रीतिस्सम्पादिता [7]पित्रोः शुश्रूषा चैव शाश्वती ॥ १११ ॥

तस्मात्त्वं सर्वलोकेषु यशोऽमल[8]मवाप्स्यसि ।
प्रमाणञ्चैव सर्वेषां [9]भवेथा धर्मनिर्णये ॥ ११२ ॥

तपस्वी वीर्यसंपन्नः सर्व[10]लोकेषु विश्रुतः ।
भव धर्मपरो नित्यं सर्वशास्त्रार्थतत्त्ववित् ॥ ११३ ॥

---

[4] पापसमुद्रादित्यर्थः । [6] त्रायते इति स्थाने बहुत्र पुराणेषु त्रातीति प्रयोगो दृश्यते । [9] भवेथा इति रूपमात्मनेपदमार्षम् ।

---

[1] संपूज्य (क) [2] शाश्वती समः (ख ग घ च) [3] विन .... .... ननः (क ख घ च)
[5] किं पण्ये लोकयोरुभयो (ग) किं पश्य (च) [6] परत्रापि (क) [7] पुत्रो (क ख घ च)
[8] मवाप्नुहि (क) [10] लोकपरिश्रुतः (क ख घ च)

सूतः —

एवं तस्मै वरं दत्वा दम्पती तौ परस्परम्[1] ।
ऊषतुः प्रीतिसंयुक्तं यथापूर्वं द्विजोत्तमाः ॥ ११४ ॥

जामदग्न्यस्ततो [1]धीमान् सर्वशास्त्रार्थतत्त्ववित् ।
पित्रोः शुश्रूषयाऽनैषीत्कालं मतिमतां वरः ॥ ११५ ॥

कथितं जामदग्न्यस्य चरित्रमपकल्मषम् ।
पितृभक्तिपरो भूत्वा [2]यः कीर्तिं प्राप शाश्वतीम् ॥ ११६ ॥

तथा दाशरथी रामः पितृवाक्यानुपालनात् ।
अवाप महतीं कीर्तिं सर्वलोकप्रकाशिनीम् ॥ ११७ ॥

पितृभक्त्या पुरा भीष्मो यच्चचार [3]दृढव्रतम् ।
[4]तत्सम्भवं [5]यशो नूनमपि वाचामगोचरम् ॥ ११८ ॥

तस्मान्महीतले विप्राः पितृभक्तिमतां नृणाम् ।
इह चामुत्र वा किं स्यादलब्धमपि वाञ्छितम् ॥ ११९ ॥

इति श्रीमत्पुराणसारे पितृभक्तौ जामदग्न्युपाख्यानं नाम
षड्त्रिंशोऽध्यायः

---

[1] नैषीत्कालं शुश्रूषया तयोः (ग) [2] यशः कीर्तिश्च (च) [3] दृढं (ग) [4] तत्सर्वं मनसा वापि मनोवाचा (च) [5] च सा (क)

## सप्तत्रिंशोऽध्यायः

## गुरुभक्तिप्रकरणे पितृप्रशंसा

[ शन्तनुचरितम् ]

[1]मुनयः —

पितृभक्तिमतां [2]पुंसां चारित्रं कथितं त्वया ।
तत्र शन्तनुपुत्रस्य [3]व्रतं वाचामगोचरम्
इत्युक्तं हि त्वया सूत तन्नः कथ विस्तरात् ॥ १ ॥

इति तेषां वचः श्रुत्वा सूतः पौराणिकोत्तमः ।
व्याजहार द्विजश्रेष्ठान् शौनकादीन्महामुनीन् ॥ २ ॥

### शन्तनुकथा

सोमवंशसमुद्भूतः शन्तनुर्नाम पार्थिवः ।
आसीद्भागीरथी भार्या त्रिषु लोकेषु विश्रुता[4] ॥ ३ ॥

तस्यां देवव्रतो जज्ञे पितृभक्तिपरायणः ।
गम्भीरः सत्वसम्पूर्णः पूर्णचन्द्रनिभाननः
महाबलो महावीर्यो महासत्वो महायशाः । ॥ ४ ॥

स तेन सह पुत्रेण रममाणो महीपतिः
कदाचिच्च वनं यतो यमुना[5]मभितो नदीम् । ॥ ५ ॥

महीपतिरनिर्देश्यमाजिघ्रन् गन्धमुत्तमम्

---

[1] अत्रत्यशन्तनुकथानकं महाभारतस्थं केषाञ्चन पदानां व्यत्यासमात्रेण । म.भा. आदिपर्व अ. ९४ । [4] तस्य शन्तनोर्भार्येति ।

---

[1] [illegible] (ग) [2] नृणां (ग) [3] वृत्तं (ग) [5] मभितो (क)

तस्य प्रभवमन्विच्छन् विचचार वनं नृपः । ॥ ६ ॥

स ददर्श ततः कन्यां [1]दाशानां देवरूपिणीम्

तामपृच्छत्ततो राजा कन्यामसितलोचनाम् । ॥ ७ ॥

कस्य त्वमसि का वासि किंचित्तेऽह चिकीर्षितम्

साऽब्रवीद्दाशकन्याऽस्मि धर्मार्थं वाहये तरिम्[2] ।

पितुर्नियोगाद्भद्रं ते [3]दाशराज्ञो महात्मनः ॥ ८ ॥

ज्ञात्वा च पितरं तस्याः वरयामास तां [4]तदा ।

## शन्तनुदाशराजसम्भाषणम्

सम्भ्रमात्प्रत्युवाचेदं [5]दाशराजो महीपतिम् ॥ ९ ॥

यदीमां धर्मपत्नीं त्वं मत्तः प्रार्थयसे नृप ।

योऽस्यां जातोऽथ तनयः स राजा पृथिवीपतिः ॥ १० ॥

त्वदूर्ध्वमभिषिक्तव्यो नान्यः कश्चन भारत ।

ततो दास्यामि राजेन्द्र तव कन्यामिमां नृप ॥ ११ ॥

सूतः —

[6]नाकामयत तं दातुं वरं दाशाय शन्तनुः ।

[7]अचिन्तयन्नेव गतो दाशकन्यां महीपतिः ॥ १२ ॥

[8]प्रत्यगाद्धस्तिनपुरं शोकोपहतचेतनः ।

---

[1] दाशाः धीवराः मत्स्यघातिनः । [2] तरिर्नौका । [3] दाशराज्ञ इति नान्तत्वमार्षम् । [7] सुचिन्तयन्नेवेति साध्वासीत् । यतः सा तस्य हृदये कृतपदासीत् ।

---

[4] सदा (क ख ग घ) [5] दाशराज्ञो (क ख घ च) [6] साकामयत (च)
[8] प्रत्यया (ग)

## पितरं प्रति देवव्रतस्य प्रश्नः

ततः कदाचिच्छोचन्तं शन्तनुं कृशविग्रहम् ।
पुत्रो [1]देवव्रतोऽभ्येत्य पितरं वाक्यमब्रवीत् ॥ १३ ॥

सर्वत्र भवतः क्षेमं विधेयास्सर्वशत्रवः ।
तत्किमर्थमिहाभीक्ष्णं परिशोचसि दुःखितः ॥ १४ ॥

कस्मान्न भुंक्षे राजंस्त्वं यत्किञ्चिदपि भाषसे[2] ।
व्याधिमिच्छामि ते ज्ञातुं प्रतिकुर्यां हि तत्र वै ॥ १५ ॥

एवमुक्तस्तु पुत्रेण शन्तनुः प्रत्यभाषत ।
असंशयं महाप्राज्ञ [3]यथैवात्थ तथैव तत् ॥ १६ ॥

अपत्यं च ममैवैकं कुले महति भारत ।
[4]अपुत्रं चैकपुत्रन्तमित्याहुर्धर्मवादिनः ॥ १७ ॥

[5]चक्षुरेकञ्च पुत्रश्च अस्ति [6]नास्तीति भारत ।
चक्षुर्नाशे तयोर्नाशः पुत्रनाशे कुलक्षयः ॥ १८ ॥

अनित्यताञ्च मर्त्यानां मत्वा शोचामि पुत्रक ।
सन्तानस्याविनाशन्तु कामये भद्रमस्तु ते ।
एतन्मे कारणं तात दुःखमूलमशेषतः ॥ १९ ॥

---

[1] देवव्रत इति शान्तनवस्य नाम । देवस्यैव व्रतं यस्येति दृढप्रतिज्ञ इत्यर्थः अथवा द्योतनशीलं व्रतमस्येति । [2] न भाषसे इत्यन्वयः ।

[4] एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत् । इति पुराणवाक्यम् । दशास्यां पुत्रानाधेहि इति मन्त्रविधिश्च ।

[5] सर्वेन्द्रियाणां नयनं प्रधानमित्याद्यभियुक्तोक्तेः ।

---

[3] यथात्थमा (ख) [6] नास्ति च (ग)

सूतः —

ततस्स पितुराज्ञाय सारथेर्वचना[1]त्तथा ।
दाशकन्या[2]गतं भावं प्रययौ यमुनां प्रति ॥ २० ॥

## देवव्रतदाशराजयोर्मिथः संभाषणम्

[3]उच्चैःश्रवसमागम्य कन्यां वव्रे यशस्विनीम् ।
तं दाशः प्रतिजग्राह विधिवत्प्रतिपूज्य च ।
अब्रवीच्चैनमागत्य राजसंसदि भूसुराः ॥ २१ ॥

कन्यापितृत्वात्किंचित्तु वक्ष्यामि भरतर्षभ ।
त्वत्तश्चैव महाबाहो संशयो मम विद्यते ॥ २२ ॥

अपत्यं यद्भवेत्तुभ्यं तत्र मे संशयो महान् ।
एतावानेव दोषोऽस्ति नान्यः कश्चन विद्यते ॥ २३ ॥

## देवव्रतस्य प्रतिज्ञा, पित्रर्थं कन्यावरणम् भीष्मनामप्राप्तिश्च

सूतः —

तस्य तन्मतमाज्ञाय [4]सर्वशस्त्रभृतां वरः ।
प्रतिज्ञां प्रत्यजानात्सः पितुः प्रियचिकीर्षया ॥ २४ ॥

ऋषयो वाऽ[5]थवा देवा भूतान्यन्त[6]र्हितानि च ।
यानि तानीह शृण्वन्तु नास्ति वक्ता च मत्समः ॥ २५ ॥

योऽस्यां जनिष्यते गर्भः स राजा नो भविष्यति ।
अपत्यहेतोरपि च करोम्येष विनिश्चयः ॥ २६ ॥

---

[3] उच्चैः श्रवः कीर्तिः यस्य सः इति दाशराजस्याप्येतद्विशेषणं भवति ।

---

[1] ततः (क ख घ च) [2] मतं (क च) [4] सर्वशास्त्र (ग च) [5] थदेवाश्च (ग)

अद्य प्रभृति मे दाश ब्रह्मचर्यं भविष्यति ।
यावत्प्राणा ध्रियन्ते वै मम देहसमाश्रिताः ।
तावन्न जनयिष्यामि पित्रे कन्यां प्रयच्छ मे ॥ २७ ॥

तस्य तद्वचनं श्रुत्वा सम्प्रहृष्टतनूरुहः ।
ददामीत्येव तं दाशः कुमारं प्रत्यभाषत ॥ २८ ॥

ततोऽन्तरिक्षेऽप्सरसो देवा ऋषिगणा[1]स्तथा ।
तं दृष्ट्वा दुष्करं कर्म प्रशशंसुश्च पार्थिवाः ॥ २९ ॥

प्रत्यवर्षन्त कुसुमैः [2]भीष्मोऽयमिति चाब्रुवन् ।
ततस्स पितुरर्थाय तामुवाच यशस्विनीम् ॥ ३० ॥

अधिरोह रथं मातः गच्छावस्स्वगृहानिति ।
एवमुक्त्वा तु भीष्मस्तां रथमारोप्य भामिनीम् ॥ ३१ ॥

आगम्य हस्तिनपुरं शन्तनोस्तन्न्यवेदयत् ।
तच्छ्रुत्वा दुष्करं कर्म कृतं भीष्मेण शन्तनुः ॥ ३२ ॥

स तेन कर्मणा सूनोः प्रीतस्तस्मै वरं ददौ ।
न ते प्रभविता मृत्युः यावदिच्छसि [3]जीवितुम् ॥ ३३ ॥

## सत्यवतीकुमारकथानकम्

सूतः —

[4]ततश्शान्तनवो धीमान्सत्यवत्यामजायत ।
पुत्रश्चित्राङ्गदो नाम बलवीर्यसमन्वितः ॥ ३४ ॥

---

[2] भीष्मा भयङ्करी प्रतिज्ञा अस्येति भीष्मः । दारुणप्रतिज्ञावान् ।
[4] अयं भागः आदिपर्वणि ९५ तमे अध्याये वर्तते ।

---

[1] स्तदा (ग) [3] जीवितम् (च)

विचित्रवीर्यं धर्मात्मा जनयामास चापरम् ।
अप्राप्तवति तस्मिंश्च यौवनं भरतर्षभे ।
स राजा शन्तनुर्वीरः कालधर्ममुपेयिवान् ॥ ३५ ॥

स्वर्याते शन्तनौ भीष्मश्चित्राङ्गदमरिन्दमः ।
स्थापयामास वै राज्ये सत्यवत्या मते स्थितः ॥ ३६ ॥

गन्धर्वराजो बलवान् [1]तुल्यनामाभ्यगात्तदा ।
तेनास्य युद्धमतुलं कुरुक्षेत्रे बभूव ह ॥ ३७ ॥

मायाधिकोऽवधीद्वीरं गन्धर्वः कुरुसत्तमम् ।
तस्मिंस्तु नृपशार्दूले निहते [2]सूर्यवर्चसि ॥ ३८ ॥

विचित्रवीर्यं च तदा बालमप्राप्तयौवनम् ।
कुरुराज्ये महाबाहुरभ्यषिञ्चदनन्तरम् ॥ ३९ ॥

संप्राप्तयौवनं पश्यन्भ्रातरं धीमतां [3]वरः ।
भीष्मो विचित्रवीर्यस्य विवाहायोपचक्रमे ॥ ४० ॥

## भीष्मकृतं काशीपतिकन्याहरणम्

ततः काशिपतेर्भीष्मः कन्यास्तिस्रोऽप्सरस्समाः ।
शुश्राव सहिता विप्रा[4]स्तिष्ठन्तीति स्वयंवरम् ॥ ४१ ॥

ततस्स रथिनां श्रेष्ठो रथेनैकेन धर्मवत् ।
जगामानुमते मातुः पुरीं वाराणसीं प्रति ॥ ४२ ॥

तत्र राज्ञः समुदितान् सर्वतः समुपागतान् ।
ददर्श कन्यास्ताश्चैव भीष्मः शन्तनुनन्दनः ॥ ४३ ॥

---

[1] तुल्यनामा चित्राङ्गद इति नामयुतः ।

---

[2] भूरिवर्चसि (ग) [3] वरम् (ग) [4] तिष्ठन्तीवैं (ग)

कीर्त्यमानेषु [1]राज्ञां तु नामधेयेषु भूसुराः ।
वृद्धः परमधर्मात्मा [2]वलीपलितधारणः ॥ ४४ ॥

किं कारणमिहायातो निर्लज्जो भरतवर्षभः ।
ब्रह्मचारीति [3]भीष्मो हि वृथैव प्रथितो भुवि ॥ ४५ ॥

इत्येवं प्रब्रुवन्तस्ते हसन्ति स्म [4]नराधमाः ।
क्षत्रियाणां वचः श्रुत्वा भीष्मश्चुक्रोध [5]वै द्विजाः ॥ ४६ ॥

ततस्ते पार्थिवास्सर्वे समुत्पेतुरमर्षिताः ।
तत्र युद्धमभूद्घोरं तेषां भीष्मेण केवलम् ।

एकस्य च बहूनाञ्च तुमुलं रोमहर्षणम् ॥ ४७ ॥
सोऽचिरेणैव कालेन [6]समाक्रम्य [7]महाबलः ।
अक्षतः क्षपयित्वारीन् तानसंख्येय[8]विक्रमान् ॥ ४८ ॥

आनयामास [9]काश्यस्य सुताः सागरगासुतः[10] ।
अभिगम्योपसंगृह्य दाशेयीमिदमब्रवीत् ॥ ४९ ॥

इमाः काशीपतेः कन्या मया निर्जित्य पार्थिवान् ।
विचित्रवीर्यस्य कृते [11]वीर्यशुल्का[12]दुपाहृताः ॥ ५० ॥

सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते ।
उवाच वाक्यं [13]सव्रीडा ज्येष्ठा काशीपतेस्सुता ॥ ५१ ॥

---

[2] वलीनां पलितत्त्वस्य च धारणमस्यास्तीति । [9] काश्यां भवः काश्यः । तत्रास्थो राजा । [10] सागरगा गङ्गा नदी । तस्याः सुतो भीष्मः ।
[11] वीर्यरूपेण पौरुषप्रदर्शनरूपेण शुल्केनेति । आहवे विजित्याहरणम् ।

---

[1] राज्ञा (क ख घ) राज्ञः (च) [3] भीष्मोऽयं (ग) [4] नृपाधमाः (च)
[5] धार्मिकः (ग) [6] अतिक्रम्य (क ख घ च) [7] नराधिपान् (क ख घ च)
[8] विक्रमः (ख) [12] समाहृताः (च) [13] सव्रीडं (च)

मया साल्वपतिः पूर्वं मनसा[1] हि वृतो वरः ।
तेन चास्मि वृता पूर्वं रहस्यविदिते पितुः ॥ ५२ ॥

एतद्विज्ञाय धर्मज्ञ धर्मतस्त्वं समाचर ।
एवमुक्तस्ततो भीष्मः कन्यया विप्रसंसदि ॥ ५३ ॥

चिन्तामभ्यगम[2]द्वीरो युक्तां तस्यैव कर्मणः ।
[3]अन्यभावगतां चापि को नारीं वासयेद्गृहे ॥ ५४ ॥

वाचा दत्ता मनोदत्ता कृतमङ्गलवाचना ।
निर्दिष्टा तु [4]वरस्यैव सा वर्ज्या परचिन्तनी ॥ ५५ ॥

इत्युक्त्वा चानुमान्यैव भ्रातरं स्ववशानुगम् ।
विनिश्चित्य च तैस्सार्धं ब्राह्मणैर्धर्मकोविदैः
समनुज्ञापयत्कन्यामम्बां ज्येष्ठां महाबलः । ॥ ५६ ॥

अम्बिकाम्बालिके भार्ये प्रादाद्भ्रात्रे यवीयसे ।
भीष्मो विचित्रवीर्याय विधिदृष्टेन कर्मणा ॥ ५७ ॥

इति श्रीमत्पुराणसारे पितृभक्तौ श्रीभीष्मचरितं नाम
सप्तत्रिंशोऽध्यायः

---

[3] एतत्पङ्क्तिस्थले महाभारते 'अन्यासक्ता त्वियं कन्या ज्येष्ठा क्षात्रे मया जिता' इति पाठो दृश्यते । म.भा. उद्योगपर्व ।

---

[1] संवृतो (म) [2] ह्रीरो (म) [4] परस्यैव (म)

## अष्टात्रिंशोऽध्यायः

### अम्बोपाख्यानम्

[1]सूतः —

अथाम्बा साल्वमागम्य साब्रवीन्मनसावृता ।
देवव्रतं समुत्सृज्य सानुजं पुरुषर्षभम् ॥ १ ॥

पुरा निर्दिष्टभावात्त्वा[2]मागताऽस्मि वरानना ।
प्रतिगृह्णीष्व भद्रं ते विधिवन्मां समुद्यताम् ॥ २ ॥

एवमुक्तस्स साल्वोऽपि प्रहसन्निदमब्रवीत् ।
निर्जितासीह भीष्मेण मां विनिर्जित्य राजसु ॥ ३ ॥

अन्येन निर्जितां भद्रे निसृष्टां तेन चाऽऽलयात् ।
न गृह्णामि वरारोहे तत्र चैव तु गम्यताम् ॥ ४ ॥

[3]इत्युक्ता सा समागम्य भीष्मं पुनरथाब्रवीत् ।
निर्जित्य हि रणाद्भीष्म त्वयाहं सहसा [4]वृता
क्षत्रधर्ममवेक्षस्व [5]भर्ता त्वमसि धर्मतः ॥ ५ ॥

भीष्म —

विसृष्टा ह्यसि [6]गच्छ त्वं यथाकाममनिन्दिते ।
ऊर्ध्वरेता ह्यहमिति प्रत्युवाच पुनः पुनः ॥ ६ ॥

---

[1] इयं कथा महाभारतात्समुद्धृता । म.भा. आदिपर्व अध्यायः ९६ । एतदनन्तरं परिशिष्टभागस्य अ. ५५ तमः । [3] इत्युक्तेति महाभारतपाठः ।

---

[2] मांगतोऽस्मि वरागन (क ख घ) [3] इत्युक्त्वा (क ख ग घ च) [4] वृथा (क ख घ) हृता (ग) [5] भर्तारमथ (क ख घ च) [6] गच्छाशु यथेष्टं त्वं (ग)

## तिरस्कृतयाऽम्बया हिमवति तपश्चचरणं, कुमारेण तस्यै वरदानञ्च

सूतः —

सा निष्क्रमन्ती नगराच्चिन्तयामास वै द्विजाः ।
न शक्यं काशिनगरीं पितुर्गन्तुं पुन[1]र्गृहम् ॥ ७ ॥

अवज्ञाता भविष्यामि बान्धवानां न संशयः ।
[2]अनयस्यास्य तु मुखं भीष्मः शन्तनुनन्दनः ॥ ८ ॥

[3]तद्भीष्मे प्रतिकर्तव्यमहं पश्यामि साम्प्रतम् ।
तपसा चायुधेनापि दुःखहेतुः स मां प्रति ॥ ९ ॥

एवं सा परिनिश्चित्य जगाम नगराद्बहिः ।
पार्श्वे हिमवतो रम्ये तपो घोरं समाददे ॥ १० ॥

तस्यास्तत्र तपो दृष्ट्वा कुमारो वरदः प्रभुः ।
मानयन्राजपुत्रीं तां ददौ तस्यै शुभां स्रजम् ॥ ११ ॥

कुमारः —

एषा पुष्करिणी[4]दिव्या यथाव[5]त्समुपासिता ।
[6]अम्बे त्वच्छोकशमनी भुवि माला भविष्यति ॥ १२ ॥

एतां च वै मया दत्तां मालां यो धारयिष्यति ।
[7]सोऽस्य भीष्मस्य निधने कारणं [8]वै भविष्यति ॥ १३ ॥

---

[2] अस्यानयस्य तिरस्काररूपस्य मुखं प्रधानकारणं भीष्म इति ।
[6] अम्बार्थशून्यस्य अंबेति नाम्नः सम्बुद्धौ 'अम्बे' इति रूपं प्रसिद्धम् ।

---

[1] गृहान् (ग) [3] सा भीष्मे (ग) [4] रम्या (च) [5] त्समुपाश्रिता (क ख)
[7] सास्य (क ख घ च) [8] तु (ग)

सूतः —

गृहीत्वा साऽथ तां मालां क्षत्रियानब्रवीत्तदा ।

अम्बा —

इयं वः क्षत्रिया माला [1]या भीष्मं निहनिष्यति ।
अहं च भार्या तस्य स्यां यो वीरं घातयिष्यति ॥ १४ ॥

तस्यां चङ्क्रम्यमाणायां समाः पञ्च गताः परम् ।
[2]नागच्छच्छरणं कश्चित् क्षत्रियो भीष्मजाद्भयात् ॥ १५ ॥

## अम्बायास्तपः, होतृवाहनपरशुरामाभ्यां तस्याः सान्त्वनम्

सूतः —

अगच्छत्सोमकं सा तु [3]पाञ्चालेषु यशस्विनम् ।[4]
[5]इत्युक्त्वा स्रजमासज्य [6]द्वारि[7]राज्ञोऽभ्युपाद्रवत् ॥ १६ ॥

---

[4] एतदनन्तरं 'इत्युक्त्वा' इति पदस्यादौ संबन्धनिर्वाहको भागः मातृकासु लेखने त्रुटित इति भाति । स च महाभारते आदिपर्वणः परिशिष्टे ५५ तमे विभागे एवं दृश्यते। तथा पूरिते सति अत्र उभयोः श्लोकार्धयोः सङ्गतिः सुलभः ।

सा सभाद्वारमागम्य पाञ्चालैरभिरक्षितम् ।
पाञ्चालराजमाक्रन्दत्प्रगृह्य सुभुजा भुजौ ॥

अम्बा —

भीष्मेण हन्यमानां मां मज्जन्तीमिव च ह्रदे ।
यज्ञसेनाभिधावेह पाणिमालम्ब्य चेश्वर ॥

\+ \+ \+ \+

---

[1] 'यो' इति मातृकासु असमीचीनः पाठः । [2] मा भवच्छ (घ च). [3] पाञ्चालें तु (क ख घ च) [5] इत्युक्त्वा (क ख ग घ च) [6] द्वारि (क च) [7] रक्षो (क ख घ)

व्युदस्ता सर्वलोकेन तपसे शंसितव्रता ।
आश्रमं पुण्यशीलानां तापसानां जगाम ह ॥ १७ ॥

राजर्षिस्तद्वनं [1]प्राप्तः तपस्वी होतृवाहनः ।
तां तथा [2]भामिनीं दृष्ट्वा श्रुत्वा चोद्विग्नमानसः ।
अब्रवीद्वेपमानाश्च कन्यामार्तस्वरां तदा ॥ १८ ॥

मा गा मातामहान् भद्रे मातुस्ते जनको ह्यहम् ।
दुःखं छेत्स्यामि तेऽहं वै मयि वर्तस्व पुत्रवत् ॥ १९ ॥

एवं ब्रुवति तां कन्यां [3]पार्थिवे होतृवाहने ।
ततो रामः प्रादुरासीत्प्रज्वलन्निव तेजसा ॥ २० ॥

शिष्यैः परिवृतो विप्रा जटाचीरसमन्वितः ।
धनुष्पाणिरदीनात्मा खड्गं बिभ्रत्परश्वधम् ॥ २१ ॥

ततस्तं तापसं दृष्ट्वा स च राजा महातपाः ।
तस्थुः प्राञ्जलयस्सर्वे सा च कन्या [4]तपस्विनी ॥ २२ ॥

---

यज्ञसेनः —

जानामि त्वां बोधयामि राजपुत्रि विशेषतः ।
यथाशक्ति यथाधर्मं बलं संधारयाम्यहम् ॥

\+ + + +

सा साधु व्रज कल्याणि न मां भीष्मो दहेद्बलात् ।
न हि भीष्मादहं धर्मं शक्तो दातुं कथञ्चन ॥

इत्युक्ता सा इत्यादि ।

---

[1] प्राप्य (ग) [2] भाविनीं (क ख घ च) [3] पार्थिवो होत्रवाहनः (ग)
[4] यशस्विनी (ग)

[1]पूजयामास च व्यग्रा मधुपर्केण भार्गवम् ।
पूजितश्च यथान्यायं निषसाद स तैस्सह ॥ २३ ॥
ततः कथान्ते राजर्षिर्भृगुश्रेष्ठं महाबलम् ।
उवाच मधुरं काले रामं वचन[2]मर्थवत् ॥ २४ ॥
रामेयं मम दौहित्री काशिराजसुता शुभा ।
अस्याः शृणु यथावृत्तं कार्यं कार्यविशारद ॥ २५ ॥
[3]परमं कथ्यतां चेति तं रामः प्रत्यभाषत ।
ततस्साभ्यगमद्विप्रा ज्वलन्तमिव पावकम् ॥ २६ ॥
तस्याभिवाद्य चरणौ रामस्येदमुवाच ह ।
भगवन् शरणं [4]त्वाद्य पपन्नास्मि महारथ ।
शोकपङ्कार्णवाद्घोरादुद्धरस्व महामुने ॥ २७ ॥

रामः —

यथासि [5]सृञ्जयस्यास्य तथा मम नृपात्मजे ।
ब्रूहि यत्ते मनोदुःखं करिष्ये वचनं तव ॥ २८ ॥
[6]सस्नेहमिति सा भूयो रामेणोक्ता शुचिस्मिता ।
सर्वमेव यथावृत्तं कथयामास भार्गवे ॥ २९ ॥

## श्रुतवृत्तेन परशुरामेण भीष्मसान्त्वनम्

श्रुत्वाऽथ जामदग्न्यस्तु राजपुत्र्या वचस्तदा ।
अभ्यगच्छत्कुरुक्षेत्रं यत्र भीष्मः प्रतिष्ठितः ॥ ३० ॥

---

[3] परममित्यङ्गीकारार्थकपदमव्ययम् । [5] सृञ्जयो होतृवाहनः ।
[6] सस्नेहमिति पूर्वेणान्वयः ।

---

[1] पूजयामासु (ग) [2] मब्रवीदिति सर्वमातृकापाठः न युज्यते । उपरि स्वीकृतः पाठः महाभारतस्थः । [4] त्वाद्य (ग)

समागतं च तं बुद्ध्वा [1]विषयान्तं महाबलम् ।
अभ्यगच्छज्जवे[2]नाशु भीष्मः पूजापुरस्सरम् ॥ ३१ ॥

सा तं चाभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान् ।
प्रतिजग्राह तां पूजां वचनं चेदमब्रवीत् ॥ ३२ ॥

भीष्म कां बुद्धिमास्थाय काशिराजसुता त्वया ।
अकामेयमिहानीता पुनश्चैव विसर्जिता ॥ ३३ ॥

परामृष्टां त्वया भीष्म कोऽधिकर्तुमिहार्हति ।
प्रत्याख्याता हि साल्वेन त्वयाऽऽनीता [3]हि भारत ॥ ३४ ॥

तस्मादिमां मन्नियोगात्प्रतिगृह्णीष्व भारत ।
न करिष्यसि चेदेतद्वाक्यं मे कुरुपुङ्गव ॥ ३५ ॥

हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः ।
[4]संरम्भादब्रवीद्रामः कोपपर्याकुलेक्षणः ॥ ३६ ॥

सूतः —

ततस्तं नातिमनसं वीक्ष्य शान्तनवोऽब्रवीत् ।

## अम्बातिरस्कारे भीष्मेण युक्तिप्रदर्शनम्

भीष्मः —

नाहमेनां पुनर्दद्यां भ्रात्रे ब्रह्मन्कथञ्चन ॥ ३७ ॥

न भयान्ना[5]भ्यवक्लेशान्न लोभान्नार्थकाम्यया ।
क्षात्र[6]कर्म त्विदं जह्यामिदं मे व्रतमाहितम् ॥ ३८ ॥

---

[1] विषयस्य अन्तं स्वराज्यपरिधिमिति । अथवा विषयं तमिति विना दीर्घं पठितव्यम् [4] संरम्भः कोपः ।

---

[2] नैव (ग) [3] हितारता (क ख घ च) [5] प्युति (च) [6] धर्मसिमं (ग)

इष्वस्त्रं मम बालस्य भवतैव चतुर्विधम् ।
उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव ॥ ३९ ॥
किं कारणं मया[1]ब्रह्मन् यत्त्वं योद्धुमिहेच्छसि ।

## भीष्मं प्रति परशुरामकोपः

ततस्तमब्रवीद्रामः क्रोधसंरक्तलोचनः ॥ ४० ॥
जानीषे मां गुरुं भीष्म नैवेमां प्रतिगृह्णसे ।
न हि ते विद्यते शान्तिरन्यथा कुरुनन्दन ॥ ४१ ॥
गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः ।

## विवदतोर्भीष्मपरशुरामयोर्युद्धोपक्रमः

गुरुत्वं त्वयि सम्प्रेक्ष्य [2]जामदग्न्य पुरातनम् ॥ ४२ ॥
[3]प्रसादये त्वां भगवन् त्यक्तैषा हि मया पुरा ।
न भयाद्वासवस्यापि धर्मं जह्यां महाद्युते ॥ ४३ ॥
स त्वं गुरुरिति प्रेम्णा मया संभावितो भृशम् ।
गुरुवृत्तं न जानीषे तस्माद्योत्स्याम्यहं त्वया ॥ ४४ ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
[4]उत्पथप्रतिपन्नस्य [5]परित्यागो विधीयते ।
प्रसीद मा वा यद्वा ते कार्यं तत्कुरु मा चिरम् ॥ ४५ ॥
[6]उद्यतेषुरथं दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ।

---

[4] उत्पथः कुमार्गः धर्मरहितो वा मार्गः । [6] इषुश्च रथश्च इषुरथौ उद्यतौ इषुरथौ यस्य सः ।

---

[1] राम योद्धुं यत्त्वं (ग) [2] जा .... न्यः पु .... नः (च) [3] प्रसीदये (क ख घ च)
[5] कार्यं भवति शासनम् (ग) [6] उद्यते प्ररथं (क) उद्यतेषु रणे (ग) उद्यतेषु रथो (ख)

यो हन्यात्समरे क्रुद्धो [1]युध्यन्तमपलायितम् ।
ब्रह्महत्या न तस्य स्यादिति [2]धर्मे विनिश्चयः ॥ ४६ ॥

तस्माद्योत्स्यामि सहितः त्वया राम[3]महामते ।
ततस्तमब्रवीद्रामः प्रहसन्निव भार्गवः ।
एहि शीघ्रं मया भीष्म युद्धमद्यैव वर्तताम् ॥ ४७ ॥

इति वाणं तं भीष्मो रामं परपुरञ्जयम् ।
[4]अभिवाद्य गुरुं धीरो विधिवद्वाक्यमब्रवीत् ॥ ४८ ॥

भीष्मः —

योत्स्ये त्वया रणे राम विशिष्टेनाधिकेन च ।
गुरुणा धर्मशीलेन जयमाशास्व मे विभो ॥ ४९ ॥

रामः —

एवमेतत्कुरुश्रेष्ठ कर्तव्यं भूतिमिच्छता ।
धर्मो ह्येष महाबाहो विशिष्टैस्सह युध्यताम् ॥ ५० ॥

शपेयं [5]त्वा महाभाग [6]मा गच्छेथा विशांपते ।
[7]युध्यस्व त्वं रणे मत्तो धैर्यमालम्ब्य कौरव ॥ ५१ ॥

न तु ते जयमाशंसे त्वां हि जेतुमहं स्थितः ।
गच्छ युध्यस्व धर्मेण प्रीतोऽस्मि चरितेन ते ॥ ५२ ॥

ततो रामं नमस्कृत्य रथमारुह्य सत्वरः ।
अकरो[8]द्रथमत्यर्थं भीष्मस्सज्जं[9] प्रतापवान् ॥ ५३ ॥

---

[8] सज्जम् , सिद्धम् ।

---

[1] यत्र मे नयपालितं (क) [2] धर्मस्य (ग) धर्मविदो विदुः (च) [3] महाहवे (ग घ)
[4] अभिवाद्य चैनं विधिवदब्रवीद्वाक्यमुत्तमम् (क ख घ च) [5] त्वाहवे देव (ग)
[6] मा गच्छेत (च) [7] युध्यसि (ग) [8] द्धनुरत्यर्थं (ग)

ततो युद्धं समभवत्तुमुलं [1]रामभीष्मयोः ।
दिवसान् सुबहून् विप्राः परस्परजिगीषया ॥ ५४ ॥

त्रयोविंशे दिनेऽतीते चतुर्विंशे दिने पुनः ।
प्रावर्तत तयोर्युद्धं तुमुलं रोमहर्षणम् ॥ ५५ ॥

प्रस्वापमस्त्रं दयितं भीष्मः प्रहरतां वरः ।
प्रसुप्तं वा मृतं वाऽपि मत्वा ह्यचिन्तयत् ॥ ५६ ॥

ततस्तच्चिन्तितं चास्य मनसि प्रत्यभात्तदा ।
ततो हलहलाशब्दो दिवि विप्रा महानभूत् ॥ ५७ ॥

प्रस्वापं भीष्म मा स्राक्षीरिति कौरवनन्दन ।
रामस्तपस्वी ब्रह्मण्यो ब्राह्मणश्च गुरुश्च ते ।
तस्यावमानं कौरव्य मा[2]स्म कार्षीः कथञ्चन ॥ ५८ ॥

ततोऽपश्यद्दिविष्ठान्वै वसूनष्टौ[3] सुरानपि ।
संजहार कुरुश्रेष्ठस्तदस्त्रं स्वापनं मृधे ॥ ५९ ॥

ततोऽपश्यत्पितरं जामदग्न्यः
पितुस्तथा पितरं तस्य चान्यान् ।
करे चैवं सम्परिवार्य तस्थु
रूचुश्चैवं सान्त्वपूर्वं त्विदानीम् ॥ ६० ॥

पितरः —

मा [4]मैवं सहसा वत्स पुनः कार्षीः कथञ्चन ।
भीष्मेण संयुगं कर्तुं क्षत्रियेण विशेषतः ॥ ६१ ॥

---

[3] धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः ॥

---

[1] रोमहर्षणं (ग) [2] विकार्षीः (क) [4] मैनं (च)

एष भीष्मः शान्तनवो देवैस्सर्वैर्निवारितः ।
रामेण सह मा योत्सी[1]गुरुणेति पुनः पुनः ॥ ६२ ॥

एवमुक्तस्तु पितृभिः पितॄन् रामोऽब्रवीदिदम् ।
नाहं युधि निवर्तेयं इति मे व्रतमाहितम् ॥ ६३ ॥

निवर्त्यतामापगेयः कामं युद्धात्पितामहाः ।
ततस्ते मुनयस्सर्वे नारदप्रमुखा द्विजाः ।
स्थितं महाहवे योद्धुं पुनस्ते राममब्रुवन् ॥ ६४ ॥

[2]नवनीतन्तु हृदयं विप्राणां सौम्य भार्गव ।
राम राम निवर्तस्व युद्धादस्माद्द्विजोत्तम ॥ ६५ ॥

एवं ब्रुवन्तस्ते सर्वे प्रतिरुध्य रणाजिरम् ।
वारयाञ्चक्रिरे युद्धात् पितरो भृगुनन्दनम् ॥ ६६ ॥

### भीष्मकृतपरशुरामप्रणतिः

ततस्तं राममासाद्य ववन्दे कौरवो गुरुम् ।
धिङ्मामस्त्विति चोक्त्वा वै कृपणः पर्यदेवयत् ॥ ६७ ॥

धिगस्तु क्षात्रमाचारं धिगस्तु खलु पौरुषम् ।
को हि ब्राह्मणमाचार्यमभिद्रुह्येत [3]मादृशः ॥ ६८ ॥

इत्थं निनिन्द स्वात्मानं गाङ्गेयो भृशदुःखितः ।
[4]रामश्चाप्यु[5]त्स्मयन् प्रेम्णा तमुवाच महामनाः ॥ ६९ ॥

त्वत्समो नास्ति लोकेऽस्मिन्क्षत्रियः पृथिवीतले ।
क्षाम्यतां भीष्म युद्धेऽस्मिन् तोषितोऽहं भृशं त्वया ॥ ७० ॥

---

[1] गुरुणैव (च) [2] नवनीतवद्धृदयं (क ख ग घ च) [3] मादृशम् (क ख)
[4] रामस्या (क ख घ च) [5] त्स्मयात् (ग)

भीष्मस्यैव समक्षे तां कन्यामाहूय भार्गवः ।
उवाच दीनया वाचा मध्ये तेषां तपस्विनाम् ॥ ७१ ॥

## परशुरामेण भीष्मं जेतुमम्बायाः पुरः स्वाशक्तताख्यापनम्

रामः —

प्रत्यक्षमेतल्लोकानां सर्वेषामेव भामिनि ।
तथा मया परं शक्त्या कृतं वै पौरुषं महत् ॥ ७२ ॥

न चैव युधि शक्नोमि भीष्मं जेतुं महाहवे ।
यथेष्टं गम्यतां भद्रे किमन्यद्वा करोमि ते ॥ ७३ ॥

अम्बा —

भगवन्नेवमेवैतद्यथाऽऽह भगवांस्तथा ।
दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् ॥ ७४ ॥

## क्रुद्धाया अम्बायास्तपः । शिवाद्वरप्राप्तिश्च

[1]एवमुक्त्वा ययौ कन्या रोषव्याकुललोचना ।
तपसे कृतसङ्कल्पा भीष्मं चिन्तयती सदा ॥ ७५ ॥

यमुनातीरमासाद्य तपस्तेपेऽतिमानुषम् ।
[2]निराहारा कृशा रूक्षा जटिला मलपङ्किनी ॥ ७६ ॥

तेषु तेषु च पुण्येषु तीर्थेषु नियतव्रता ।
आप्लावयत गात्राणि तीव्रमास्थाय वै तपः ॥ ७७ ॥
ततस्तां दर्शयामास शूलपाणिरुमापतिः ।
वरं वृणीष्वेत्यवदत्सा वव्रे वरमीप्सितम् ॥ ७८ ॥

---

[2] एतत्सर्वमाचरणं कठोरस्य तपसो लक्षणम् ।

---

[1] सैव (ग)

निराकृतास्मि भीष्मेण भ्रंशिता पतिधर्मतः ।
तस्मात्तं हन्तुमिच्छामि मम दुःखविवर्धनम् ॥ ७९ ॥

तामुवाच महादेवः कन्यां किल वृषध्वजः ।
मर्त्योऽपि शन्तनोः पुत्रः पितुः प्रीतिविवर्धनात्
स्वाधीनमरणो जातो दुर्जयश्च रणाजिरे ॥ ८० ॥

तथापि च महाभागा कस्मिंश्चित्कालपर्यये ।
द्रुपदस्य कुले जाता पुरुषत्वं च गच्छसि ।
वधिष्यसि रणे भीष्मं देहमन्यं गता सती ॥ ८१ ॥

अन्यथा तु तवैतस्मिञ्जन्मनि प्रबलो रिपुः ।
न शक्यते रणे जेतुं न च हन्तुं कथञ्चन ॥ ८२ ॥

एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
इति तस्य वचः श्रुत्वा सा कन्या क्रुद्धमानसा ॥ ८३ ॥

इदं भीष्मवधाधीनं मम जन्म निरर्थकम् ।

**जन्मान्तरप्राप्त्यर्थं अम्बाकृतोऽग्निप्रवेशः**

इति सञ्चित्य मनसा जन्मान्तरजिगृक्षया ।
[1]चितां कृत्वा तु महतीं प्रविवेश हुताशनम् ॥ ८४ ॥

एवमम्बा जिगीषन्ती तैस्तै[2]र्यत्नैर्महाव्रतम् ।
मनोरथमनासाद्य प्रमुमोच कलेवरम् । ॥ ८५ ॥

सोऽपि भीष्मो महातेजाः पित्रा दत्तवरः शुचिः ।
दुर्जयस्त्वं परां कीर्तिं स्वेच्छामरणमभ्यगात् ॥ ८६ ॥

---

[1] उद्योगपर्वण आदिपर्वणश्च संयोग एष अध्यायः । द्रोणपर्वण अपि श्लोक एको दृश्यते ।

---

[2] यत्नमहा (क)

## भीष्मकथानकपुरस्सरं गुरुमहिमप्रशंसा

तस्माद्गुरुप्रीतिकरः सर्वान्कामानवाप्नुयात् ।
गुरोर्वै वचनं पुण्यं स्वर्ग्यमायुष्करं नृणाम् ॥ ८७ ॥

[1]गुरुप्रसादात्त्रैलोक्यं [2]अन्वशासच्छतक्रतुः ।

## ज्येष्ठभ्रातुः गुरुस्थानम्

[3]ज्येष्ठो भ्राता पितृसमो मृते पितरि भूसुराः ॥ ८८ ॥

सर्वेषां वृत्तिदाता स्यात्स चैतान्परिपालयेत् ।
कनिष्ठास्तं नमस्येरन् सर्वे छन्दानुवर्तिनः ।
तमेव वोपजीवेरन् यथैव पितरं तथा ॥ ८९ ॥

ज्येष्ठं पितृसमं वापि भ्रातरं योऽवमन्यते ।
सोऽपि मृत्युमुपागम्य [4]क्रौञ्चयोनौ प्रजायते ॥ ९० ॥

भ्रातरं धार्मिकं ज्येष्ठं कोऽतिक्रमितुमर्हति ।
भरतश्च विशुद्धात्मा श्लाघ्योऽभूद्रामतत्परः ॥ ९१ ॥

सौमित्रिरपि धर्मात्मा राममेवान्ववर्तत ।
उपेन्द्रोऽपि बलिं जित्वा महेन्द्राय श्रियं ददौ ॥ ९२ ॥

भ्रातरोप्यन्ववर्तन्त भीमाद्या [5]धर्मनन्दनम् ।
एवमन्येऽ[6]पि बहवः सन्ति ज्येष्ठानुवर्तिनः ॥ ९३ ॥

---

[1] अत्र गुरुश्च बृहस्पतिः । [3] अनुशासनपर्वणि अ. १०८ म.भा.
[4] क्रौञ्चः बकसदृशः कश्चन पक्षी ।

---

[2] अनश्वाच्च (क) अन्वशाच्च (ग ग) [5] धर्मनन्दन (क ख घ) [6] च (ग)

यो भ्रातरं पितृसमं ज्येष्ठं मूर्खोऽवमन्यते ।
तेन दोषेण सम्प्रेत्य निरयं घोरमृच्छति ॥ ९४ ॥

य इदं शृणुयान्नित्यं श्रावयेद्द्विजपुङ्गवाः ।
स भुङ्क्ते विपुलान्भोगानिहलोके परत्र च ॥ ९५ ॥

इति श्रीमत्पुराणसारे पितृभक्तौ भीष्मभार्गवयुद्धं नाम
अष्टात्रिंशोऽध्यायः

## एकोनचत्वारिंशोऽध्यायः

[ गुरुभक्तिप्रकरणे आचार्यनिरूपणम् ]

### आचार्यलक्षणं तद्गुणाश्च

सूतः —

अथ देशिक[1]माचार्यं प्रवक्ष्यामि क्रमादहम् ।
आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ॥ १ ॥

तत्रादौ लक्षणं वक्ष्ये संक्षेपाद्गुरुशिष्ययोः ।
प्रख्यातकुलजो विप्रआश्रमी सर्वलक्षणः ॥ २ ॥

स्वधर्मनिरतस्सत्यशौचादिगुणसंयुतः ।
मिताशी मितदृष्टिश्च मितवाग्योगत[2]त्परः ॥ ३ ॥

जितेन्द्रियो जितद्वन्द्व[3]स्तपोदानदयापरः ।
शिवाग्निगुरुविद्यानां पूजकश्च दृढव्रतः ॥ ४ ॥

स्थिरबुद्धिः [4]स्थिराचारः क्षान्तः शान्तः प्रसन्नधीः ।
शक्तः [5]कल्यो निस्पृहश्च सर्वभूत[6]हिते रतः ॥ ५ ॥

वेदसिद्धान्ततत्त्वज्ञः [7]षडध्वज्ञानतत्परः ।
[8]निग्रहानुग्रहे दक्षः सर्वदोषविवर्जितः ।
एवंभूतो गुरुर्ज्ञेयो वरो दीक्षाप्रतिष्ठयोः ॥ ६ ॥

---

[3] सुखदुःखादिरूपं द्वन्द्वम् । [5] कल्यः साधुः, दक्षो वा । [7] अध्वा च मन्त्रपदवर्णभुवनतत्त्वकलाभेदेन षड्विधः । शैवपरिभाषा पृ. १३७

[8] निग्रहे अनुग्रहे चेति ।

---

[1] माचारं (ज) [2] स्पृहः (च) [4] स्थिरारम्भः (ग) [6] गुणान्वितः (क) दयान्वितः (च)

## वर्णक्रमेणाचार्यनिवेदनम्

ब्राह्मणस्सर्व[1]वर्णानां त्रयाणां क्षत्रियो गुरुः ।
द्वयोर्वैश्यो गुरुश्शस्तः शूद्रो वर्णानुपूर्वतः ॥ ७ ॥

ब्रह्मचारी गृहस्थश्च [2]वानप्रस्थो यतिस्तथा ।
त एते गुरवः प्रोक्ताः क्रमाच्छ्रेष्ठा [3]विचक्षणाः ।
शूद्राणां च तथा स्त्रीणां गुरुत्वं न कदाचन ॥ ८ ॥

## निषिद्धगुरुलक्षणम्

इहेष्टकामदं यत्तु परस्मि[4]न्नरकप्रदम् ।
यः प्रयच्छति तज्ज्ञानं स निषिद्धगुरुर्भवेत् ॥ ९ ॥

## काम्यगुरुलक्षणम्

इष्टाभीष्टप्रदं यद्वा परत्र स्वर्गभोगदम् ।
स काम्यगुरित्याहुः तज्ज्ञानं (यः) प्रयच्छति ॥ १० ॥

## विहितगुरुलक्षणम्

यन्मोक्षसुखदं ज्ञानं यो[5] ददाति दयापरः ।
तं प्राहुर्विहितगुरुं सात्विकं निरपेक्षकम् ॥ ११ ॥

## वाचकगुरुलक्षणम्

संसारविषयेऽत्यर्थं विरक्तिं वक्ति सर्वदा ।
भक्तिमध्यात्मविषये स गुरुर्वाचकस्स्मृतः ॥ १२ ॥

## सूचकलक्षणम्

उपदेशावशिष्टान्यः सूक्ष्मार्थान् सूचयत्यलम् ।
यमादिसद्गुणकरान् स भवेत्सूचको गुरुः ॥ १३ ॥

---

[1] भूतानां (ग) [2] वानप्रस्थश्च भिक्षुकः (ग) [3] द्विजोत्तमाः (ग) [4] नरके व्रजेत् (च)
[5] [illegible] (ग)

### कारकगुरुलक्षणम्

परब्रह्म[1]करं ज्ञानमुपदिश्य यथाविधि ।
करोति शिष्यं ब्रह्मैक्यं स कारकगुरुर्भवेत् ॥ १४ ॥

### शिवस्य गुरोश्चाभेदकथनम्

यो गुरुस्स शिवः प्रोक्तो यश्शिवस्स च [2]शङ्करः ।
शिवविद्यागुरूणाञ्च भेदो नास्ति कथञ्चन ॥ १५ ॥

[3]शिवे मन्त्रे गुरौ यस्य भावना सदृशी भवेत् ।
भोगो मोक्षश्च सिद्धिश्च शीघ्रं तस्य भवेद्ध्रुवम् ॥ १६ ॥

विद्यागुरुशिवानाञ्च यस्तु भेदं [4]प्रपश्यति ।
[5]स नरः सुचिरं घोरे नरके [6]पच्यते ध्रुवम् ॥ १७ ॥

तस्मात्सर्वप्रयत्नेन गुरौ मन्त्रे शिवे [7]तथा ।
कुर्यात्समरसीभावं तद्भेदं न कदाचन ॥ १८ ॥

### गुरोस्सर्वात्मकत्वकथनम्

गुरुश्शिवो गुरुर्मन्त्रो गुरुर्माता गुरुः पिता ।
गुरुर्भ्राता गुरुर्बन्धुः गुरुर्मित्रं गुरुर्धनम् ॥ १९ ॥

गुरुर्वेदो गुरुश्शास्त्रं गुरुर्योगो गुरुः फलम् ।
गुरुस्सर्वं गुरु[8]स्तत्वं गुरुरेव [9]परश्शिवः ॥ २० ॥

---

[5] यमदूतैरिति ज्ञेयम् ।

---

[1] पदं (ग) [2] शम्बरः (ग) [3] 'शिवमन्त्रगुरुष्वासीन् सदृशी यस्य भावना' इति ग-प्रतौ एतत्पङ्क्तिस्थाने । [4] प्रयच्छति (क ख घ च) [6] परिपच्यते (ग) [7] सदा (ग) तदा (घ) [8] स्सत्वं (क) [9] परो हरिः (ग) सदाशिवः (च)

## गुर्वभावे तत्स्थानमापन्नानां कथनम्

गुरोरभावे तत्पुत्रः शिष्यादिभ्यो निजेप्सितम् ।
अध्येतव्यमधीयीत न तु गुर्वन्तरं श्रयेत् ॥ २१ ॥

तथापि संश्रयेज्ज्ञात्वा गुरून् बुद्ध्युप[1]कारकान् ।
गृह्यमाणै[2]र्गुणैर्लिङ्गैः विविधैर्बुद्ध्युपा[3]श्रितैः ।[4] ॥ २२ ॥

मधुलुब्धो यथा भृङ्गः पुष्पाणामन्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं श्रयेत्[5] ॥ २३ ॥

## विशिष्टगुरुविवरणम्

[6]पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः ।
कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः ॥ २४ ॥

मधुपो हरिणो मीनः [7]पिङ्गला कुररोऽर्भकः ।
कौमारी शरकृत्सर्प ऊर्णनाभिस्सुपेशकृत्[8] ।
एते [9]हि गुरवो विप्राश्चतुर्विंशतिरीरिताः ॥ २५ ॥

---

[6] भागवतादुद्धृतोऽयं विभागः भाग. स्कन्धः ११ अध्यायः ७ ।

[7] पिङ्गलादीनां षण्णां गुरुत्वप्रतिपादनं महाभारते शान्तिपर्वणि यथा –

पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने ।
इषुकारः कुमारी च षडेते गुरवो मताः ॥ १२,१७१,६१

[8] पेशस्कृदिति साधुरूपम् ।

---

[1] कारगान् (ग) [2] स्तु तल्लिङ्गैः (च) [3] श्रयैः (च) [4] 'ज्ञात्वा गुरून् बुद्ध्युपकारत्व । गृह्यमाणगुणैर्लिङ्गैः विविधैर्बुद्ध्युपाश्रितैः' इति 'ग' प्रतौ एतदनतन्रम् ।

[5] निग्रहानुग्रहे दक्षः सर्वदोषविवर्जितः । एवंभूतो गुरुर्ज्ञेयो वरो दीक्षा प्रतिष्ठयोः । ब्राह्मणः सर्ववर्णानां प्रजानां क्षत्रियो गुरुः । द्वयोर्वैश्यो गुरुः स्वस्य शूद्रो वर्णानुपूर्वतः इति च पाठः अधिकः । [9] च (च)

### पृथिवीगुरुलक्षणम्

भूतैराक्रम्यमाणोऽपि धीरो [1]दैववशानुगैः ।
तद्विद्वान्न चलेन्मार्गादनुशिक्षन् क्षितेर्व्रतम् ॥ २६ ॥

### वायुगुरुलक्षणम्

विषयेष्वाविशन्योगी नानाधर्मेषु सर्वतः ।
गुणदोषव्यपेतात्मा न विषज्येत वायुवत् ॥ २७ ॥

### आकाशगुरुलक्षणम्

तेजोवान्भूमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ।
न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैर्भवेत् ॥ २८ ॥

### अब्गुरुलक्षणम्

स्वच्छः प्रकृतितः स्निग्धो मधुरस्तीर्थभूर्नृणाम् ।
मुनिः पुनात्याप इव दीक्षोपस्पर्शकीर्तनैः ॥ २९ ॥

### अग्निगुरुलक्षणम्

तेजस्वी तपसा दीप्तो धुर्धर्षश्चापरैरपि ।
सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥ ३० ॥

### चन्द्रगुरुलक्षणम्

निषेकाद्याः श्मशानान्ताः भावा देहस्य नात्मनः ।
कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥ ३१ ॥

### रविगुरुलक्षणम्

गुणैर्गुणानुपादत्ते यथाकाले विमुञ्चति ।
न तेषु युज्यते योगी गोभिर्गा इव गोपतिः[1] ॥ ३२ ॥

---

[1] गोपतिः सूर्यः गोभिः किरणैः गा इव, चलति गच्छति निम्नदेशमितिगौः जलम् ।

## कपोतगुरुलक्षणम्

नातिस्नेहःप्रसङ्गो वा कर्तव्यः क्वापि केनचित् ।
कुर्वन्विन्देत सन्तापं कपोत इव दीनधीः[1] ॥ ३३ ॥

## अजगरगुरुलक्षणम्

ग्रासं [2]कुमृष्टं [3]विरसं [4]महीयः स्वल्पमेव वा ।
यदृच्छयैवापतितं ग्रसेदजगरक्रियः ॥ ३४ ॥

शयीताहानि भूरीणि निराहारोऽनुपक्रमः ।
यदि नोपनमे[5]द्ग्रासो महाहिरिव दिष्टभुक्[6] ॥ ३५ ॥

---

[1] अत्रेयं कथानुसन्धेया—कस्मिंश्चिदरण्ये कपोतदम्पती वसतः स्म । अतिस्नेहानुरागिणोस्तयोः कालेनापत्यानि व्यजायन्त । तांश्चातिप्रेम्णा तौ पुपुषतुः । जात्वाहारान्वेषणार्थं गतयोस्तयोः पक्षिघाती व्याध आगत्य तानर्भकान् जाले बबन्ध । संगृहीताहारा कपोती स्वनीडमागत्यापत्यान्यपश्यन्ती सोत्कण्ठा दूरे जालं दृष्ट्वाऽन्वधावत् । स्नेहपरवशा धावन्ती सा स्वयमपि जाले पपात । कपोतस्त्रैवर्गिकमात्मनः संसारं विच्छिद्रतामापन्नं दृष्ट्वातीव खिन्नो बभूव । निर्दारपुत्रस्यात्मनः जीवितं वृथा मन्यमानः सः स्वमपि जाले स्वेच्छया अपातयत् । व्याधः सर्वानपि तान् गृहीत्वा ससन्तोषं गृहं गतः । एवमशान्तात्मा कुटुम्बी पतत्रिवत् कुटुम्बं पुष्णन् सानुबन्धोऽवसीदति : भागवतम् स्कन्ध. ११ अ. ८

[2] कुमृष्टं रुचिरहितमिति । [5] ग्रासः नोपलभेत इति युक्तं भवेत् ।

[6] दिष्टभुक् दैवाल्लब्धभोजी ।

---

[3] विरसं (क ख ग घ च) विरसमिति वियसमिति वा युक्तम् । [4] महान्त स्तोक (ग)

[5] द्ग्रासो (क ख ग) द्ग्रासौ (च)

## सिन्धुगुरुलक्षणम्

अनन्तपारो ह्यक्षोभ्यो [1]दुर्विगाह्यो दुरत्ययः ।
समृद्धकामो हीनो वा नारायणपरो मुनिः ।
नोत्सर्पेन्न शुष्येत सरिद्भिरिव सागरः ॥ ३६ ॥

## पतङ्गगुरुलक्षणम्

योषिद्धिरण्याभरणाम्बरादि-
द्रव्येषु मायारचितेषु मूढः ।
प्रलोभितात्माऽप्युपभोगवुद्ध्या
[2]पतङ्गवन्नश्यति नष्ट[3]दृष्टिः ॥ ३७ ॥

## मधुकृद्गुरुलक्षणम्

स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता ।
गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मुनिः ॥ ३८ ॥
[4]अणुभ्यश्च [5]महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतस्सारमादद्यात्पुष्पेभ्य इव [5]षट्पदः ॥ ३९ ॥

## गजगुरुलक्षणम्

पदाऽपि युवतीं भिक्षुर्नस्पृशेद्दारवीमपि ।
स्पृशन् करीव बद्ध्येत करिण्या अङ्गसङ्गतः ॥ ४० ॥

---

[2] दीपप्रभां पुष्पमिति आहार इति वा मत्वा पतङ्गः औष्ण्यमपि अलक्षयन् तत्रैव विनश्यति ।

---

[1] दुर्विदाह्यो (क) [3] वृद्धिः (ग) [4] अणुभि (च) [5] महद्भि (च) [6] षट्पदाः (क)

### मधुपगुरुलक्षणम्

न देयं नोपभोग्यञ्च लुब्धैर्यद्दुःख[1]सञ्चितम् ।
भुङ्क्ते तदपि तत्रान्यो मधुपेवार्थविन्मधु ॥ ४१ ॥

### हरिणगुरुलक्षणम्

ग्राम्यगीतं न शृणुयात् यतिर्वनचरः क्वचित् ।
शिक्षेत हरिणाद्बुद्धिं मृगयागीतमोहितात् ॥ ४२ ॥

### मीनगुरुलक्षणम्

जिह्वयातिप्रमाथिन्या जनो रसविमोहितः ।
मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु [2]बडिशैर्यथा ॥ ४३ ॥

### पिङ्गलागुरुलक्षणम्

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यथा संच्छिद्य कान्ता सा सुखं सुष्वाप पिङ्गला[3] ॥ ४४ ॥

### कुररगुरुलक्षणम्

सामिषं [4]कुररं जघ्नुर्बलिनो ये निरामिषाः ।
तदामिषं परित्यज्य स सुखं समविन्दत ।
तथैव सुखमाप्नोति तद्विद्वान्यस्त्वकिञ्चनः ॥ ४५ ॥

---

[3] पिङ्गला काचिद्वेश्या विशेषतोऽलङ्कृत्य बहिर्द्वारि विटान् निरीक्षते स्म । वित्तदानपि बहूनागतान् कान्तान् बहुद्रव्यमपेक्षमाणा नालक्षयत् । बहु द्रव्यदः आसायमपि नैव कोऽपि समागतः । तदाऽऽत्मानं विशेषतो निन्दन्ती मनः परमात्मनि निधाय आशां त्यक्त्वा सुखं शिश्ये । (भागवतं स्कन्धः ११ अध्यायः ८) बहूनां कलहो नित्यं द्वयोस्सङ्घर्षणं ध्रुवम् । (म.भा. १२-४७५) [4] कुररः क्रौंचः ।

---

[1] सञ्चयम् (ग) [2] त्वदशैं (क)

## अर्भकगुरुलक्षणम्

न मे मानावमानौ स्तो न चिन्तागेहपुत्रिणाम् ।
आत्मक्रीडो ह्यात्मरतो विचरे[1]द्बालवत्सदा ॥ ४६ ॥

## कुमारीगुरुलक्षणम्

वासो बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत्तस्मात्कुमार्या इव कङ्कणः[2] ॥ ४७ ॥

## शरकृद्गुरुलक्षणम्

यथैवमात्मन्यव[3]रुद्धचित्तो
न वेद किञ्चिद्बहिरन्तरं वा ।
तथेषुकारो नृपतिं व्रजन्त-
मिषौ गतात्मा न ददर्श पार्श्वे ॥ ४८ ॥

## सर्पगुरुलक्षणम्

गृहारम्भो हि दुःखाय [4]विफलश्चाधृतात्मनः ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ ४९ ॥

## ऊर्णनाभिगुरुलक्षणम्

यथोर्णनाभिर्हृदयादूर्णां संत्यज्य वक्त्रतः ।
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ ५० ॥

---

[3] काचित्कुमारी पित्रादिपरवशा गृहागतानतिथीन् प्रच्छन्नं भोजयितु-मिच्छन्ती व्रीहीनवहन्तुं प्रचक्रमे । तदा तस्याः प्रकोष्ठस्थाः शङ्खाः (भूषणभूताः) प्रचुक्रुशुः । पित्रादयो जानीयुस्तेन चानर्थो भवेदिति सा चैकैकशः शङ्खान् भङ्क्त्वा स्वकर्म समापितवती ।

म.भा. १२, १७१, ४७५

---

[1] न्तो (ग) [2] दिह बालवत् (ग) [4] बुद्ध (च) [5] न सुखाय कदाचय (ग)

## पेशस्कृद्गुरुलक्षणम्

यत्र यत्र मनो देही धारयेत्सततं धिया ।
स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्स्वरूपताम् ॥ ५१ ॥

[1]कीटः पेशस्कृतं ध्यायन्कुड्यं तेन प्रवेशितः ।
याति तत्तुल्यतां विप्राः पूर्वरुपमन्सत्यजन् ।
एवं गुरुभ्य एतेभ्यो भवेत्सा शिक्षिता मतिः ॥ ५२ ॥

एतेः हि गुरवः प्रोक्ताः मया बुद्ध्युपकारकाः ।

## गुरौ शिष्यस्य वृत्तिनिरूपणम्

सम्यग् ज्ञानप्रदः पुंसां स एकः परमो गुरुः ॥ ५३ ॥
वस्त्राभरणमाल्यानि शयनान्यासनानि च ।
प्रियाणि चात्मनो यानि तानि देयानि वै गुरोः ॥ ५४ ॥

तोषयेत्तं प्रयत्नेन कर्मणा मनसा गिरा ।
गच्छन् तिष्ठन् स्वपन् भुञ्जन् नान्यत्कर्म समाचरेत् ॥ ५५ ॥

समक्षं यत्र कुर्वीत तत्सर्वं गुर्वनुज्ञया ।
गुरोर्गेहे समक्षं वा न यथेष्टासनो भवेत् ॥ ५६ ॥

गुरुर्देवो गुरुस्साक्षात्तद्गृहं देवमन्दिरम् ।
मनसा कर्मणा वाचा गुरोः क्रोधं न कारयेत् ॥ ५७ ॥

तस्य क्रोधेन दह्यन्ते ह्यायुः श्रीर्ज्ञानसत्क्रियाः ।
श्रेयोऽर्थी चेन्नरो धीमान्न मिथ्याचारमाचरेत् ॥ ५८ ॥

गुरोर्हितं प्रियं कुर्यादादिष्टो वा न वा सदा ।
समक्षं वाऽसमक्षं वा तस्य कार्यं समाचरेत् ॥ ५९ ॥

---

[1] पेशो रूपान्तरं करोतीति । अनेन गृहीतस्य कीटस्यापि रूपान्तरं भवति ।

सर्वदेवात्मकश्चासौ सर्वमन्त्रमयो गुरुः ।
तस्मात्सर्वप्रयत्नेन तस्याज्ञां शिरसा वहेत् ॥ ६० ॥

गुरावतुष्टेऽतुष्टाः स्युस्सर्वे देवा द्विजोत्तमाः ।
तुष्टे तुष्टा यतस्तस्मात्सर्वदेवमयो गुरुः ॥ ६१ ॥

श्रेयोऽर्थी यदि गुर्वाज्ञां मनसापि न लङ्घयेत् ।
गुर्वाज्ञापालको यस्माद् ज्ञानसम्पत्तिमश्नुते ॥ ६२ ॥

इति श्रीमत्पुराणसारे आचारभक्तिनिरूपणं नाम
एकोनचत्वारिंशोऽध्यायः

## चत्वारिंशोऽध्यायः

[ गुरुभक्तिप्रशंसायां गौतमशिष्यकथा ]

### गुर्वर्थं फलाद्याहरणाय गौतमशिष्याणां वनगमनम्

सूतः —

अस्मिन्नर्थे पुरावृत्तमाख्यानं कथयामि वः ।
[1]पुरा भागीरथीतीरे सहशिष्यैस्स गौतमः ।
सिद्धाश्रमेऽवसद्धीमान् [2]नित्यकर्मपरायणः ॥ १ ॥

तस्य शिष्या महात्मनः त्रयः स्वाध्यायतत्पराः ।
मेधावी सुमतिश्चैव कपिलश्च [3]महामतिः ॥ २ ॥

सर्वे [4]ते संयतात्मानः शुश्रूषासु [5]सुसङ्गताः ।
सुमतिं प्रेषयामास [6]फलादाने स गौतमः ॥ ३ ॥

समित्पुष्पकुशादाने कपिलं समचूचुदत् ।
इन्धनार्थं स विप्रेन्द्रो मेधाविनमनिन्दितम् ॥ ४ ॥

तेन सम्बोधितास्तेऽपि प्रयाता गहनं वनम् ।
ततस्सर्वं समादाय तत्पार्श्वमगमन् द्विजाः ॥ ५ ॥

---

[1] सारोद्धारकार्तिकमाहात्म्ये कथेयं स्कान्दे दशमाध्याये अस्तीति सूचितमस्ति । परन्तु स्कान्दे कार्तिकमाहात्म्ये केवलमस्याः कथाया निरूपकः एक एव श्लोकः दृश्यते । महात्म्यसंग्रहोक्तकार्तिकमासमाहात्म्ये कथेयं पूर्णतया दृश्यते । कार्तिकमासमाहात्म्यं अ. ११

---

[2] निजधर्मं (ग च) [3] महामुनिः (ग) [4] सुसयता (ग) [5] सदोद्यताः (च)
[6] फलानादाय (च) फलादानाय (च)

## अल्पं फलादिकं दृष्ट्वा गौतमस्य कोपः

मत्वाऽल्पमिति तत्सर्वं तैरानीतं फलादिकम् ।
चुकोप तानदीनात्मा गौतमः [1]प्रत्युवाच ह ॥ ६ ॥

युष्माभिः किं कृतं ब्रूत कालेनैतावता वने ।
अल्पमेतदुपानीतं फलादिकमसारवत् ॥ ७ ॥

पुनर्गत्वा वनं मूढा बहून्यादाय सत्वराः ।
समागच्छत दुर्वृत्ता यदि जीवितुमिच्छथ ॥ ८ ॥

## गौतमशिष्याणां पुनश्च वनगमनम् । रात्रौ भीतानां कूपे पतनं सर्पदंशान्मृतिश्च

तच्छ्रुत्वा ते तदा भीता पुनरेव वनं ययुः ।
प्राविशत्सु वनं तेषु क्षुधाविष्टेषु च त्रिषु ॥ ९ ॥

[2]प्रावर्तत तदा सन्ध्या पश्चिमा मुनिसत्तमाः ।
तत्र ते सिंहनादांश्च व्याघ्रनादांश्च सर्वतः ॥ १० ॥

श्रुत्वा भयसमाविष्टाः प्रोचुश्चेदं परस्परम् ।[3]
तमसा संवृते घोरे न जानीमो दिश[4]स्तथा
न पश्यामः फलानीह समित्पुष्पकुशादिकम् ॥ ११ ॥

एवं चिन्तातुरास्सर्वे वने तस्मिन्द्विजोत्तमाः ।
इतस्ततो भ्रमन्तो वै निरालोके वने तदा ॥ १२ ॥

---

3 'अहो कष्टं वयं प्राप्ता वनेऽस्मिन् भयसङ्कुले' का.मा. अ. ११ अनया पङ्क्त्या अर्थः विशदो भवति ।

---

1 प्रत्यभाषत (ग) 2 अवर्तत (क ख घ च) 4 स्तदा (च)

महाहिकुलसङ्कीर्णे तोयहीने भयङ्करे ।
महाकूपेऽपतन्विप्रास्तृणगुल्मलता[1]ऽऽकुले ॥ १३ ॥

तत्र तान् पतितान् सर्वान् [2]तत्क्षणाच्च विषोल्बणाः ।
सर्पा ददंशुरिच्छातः कालधर्मेण योजिताः ॥ १४ ॥

विष[3]सर्पैश्च संदष्टास्ते सर्वे मुनिसूनवः ।
विचैतन्या[4]स्तदा कूपेऽभवंस्तस्मिन्द्विजोत्तमाः ॥ १५ ॥

## शिष्यानपश्यतो गौतमस्य विलापः

गौतमोऽपि स धर्मात्मा नागच्छत्सु द्विजातिषु ।
किमेतदिति चोद्विग्नश्चिन्तयामास तत्त्ववित् ॥ १६ ॥

किं ते नायान्ति मे शिष्याः किं वा सिंहेन [5]घातिताः ।
हता व्याघ्रेण किं वा ते राक्षसैर्वा निषूदिताः ॥ १७ ॥

माता पिता तथा भ्राता सुहृदो मित्रबान्धवाः ।
[6]यैर्मदर्थे परित्यक्ता [7]ते मया प्रापिता वनम् ॥ १८ ॥

## शिष्यान्वेषणार्थं गौतमस्य वनगमनम् । तत्र च मृतशिष्यदर्शनम्

सूतः —

बहुप्रकारमेवं हि विप्रलप्य [8]सुदुःखितः ।
ततो [9]रात्र्यामतीतायामहल्यासहितो मुनिः ।
जगाम तद्वनं विप्रा यत्रासन्वै द्विजोत्तमाः ॥ १९ ॥

प्रविश्य तद्वनं विद्वान् गौतमोऽहल्यया सह ।
नामभिस्तान्महातेजास्समाह्वयदनेकधा ॥ २० ॥

---

[1] वृते (ग) [2] न तते (क) तत्तत्त (ख घ) [3] सर्पा हि (ग) [4] स्तथा (ग)
[5] पातिताः (ग) [6] यैर्नधर्मे (क) [7] तैर्मेश्रा (क) [8] सुदुःखितम् (क ख घ)
[9] रात्र्यां व्यतीतायां (ग)

तत्रापश्यन्महाकूपं पातालमिव सन्नतम् ।
तस्मिन्कूपे मृतान् [1]पुत्रान् सर्पांश्च ददृशे मुनिः ॥ २१ ॥

अनादृत्यैव तान् सर्पान्नामभिस्तु द्विजोत्तमान् ।
उत्थापयितुमारेभे न शशाक [2]महामुनिः ॥ २२ ॥

## सर्पैस्सह गौतमसंभाषणम् । शिष्यमृतौ काल एव कारणमिति निर्णयश्च

अथोचुरुरगा ब्रह्मन् किं तवैतैर्गतासुभिः ।
नीताः पञ्चत्वमस्माभिरेते शिष्यास्तवानघ ॥ २३ ॥

ततः क्रुद्धस्स धर्मात्मा गौतमो [3]भगवान्मुनिः ।
उवाच वचनं धीमांश्शिष्यमाहात्म्यसूचकम् ॥ २४ ॥

कर्मणा मनसा वाचा पापमेभिः कृतं न [4]तत् ।
अकालमृत्युः [5]पापानां सर्वेषामिह जायते ।
न चैषां स्वल्पमप्यत्र पापं पश्यामि किञ्चन ॥ २५ ॥

पशवः पक्षिणश्चैव वायुरग्निर्जलं मृगाः ।
हेतवो जन्तुमरणे न कर्तारः कदाचन ॥ २६ ॥

तस्मान्न दोषो युष्माकमेतेषा[6]महिपुङ्गवाः ।
[7]कर्तैषां यम एवात्र मरणे नात्र संशयः ॥ २७ ॥

---

[1] पुत्रानिति शिष्येष्वतिवात्सल्यात् । कार्तिकमासमहात्म्ये तु शिष्यानित्येव दृश्यते ।

---

1 च वै मुनिः (ग) [3] भगवानृषिः (ग) [4] च (च) तु (ग) [5] प्राप्तानां (क) सर्वेषां पापिनां (ग) [6] मपि पन्नगाः (ग) मुनिपुङ्गवाः (च) [7] सर्वेषां (क ख घ)

## अकालमरणनिरूपणम् । यमाय शापदानोद्योगः

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्न[1]दोषाद्वा मृत्युर्विप्राञ्जिघांसति ॥ २८ ॥

एते दोषा न सन्त्येषां सर्वेषां [2]संयतात्मनाम् ।
तस्मादकालमरणं यमेन विहितं किल ॥ २९ ॥

तं वै वैवस्वतं मूढमहमन्यायचेष्टितम् ।
शापेन पातयिष्यामि मम शिष्यापहारिणम् ॥ ३० ॥

सूतः —

एवं कोपसमाविष्टो गृहीत्वाऽञ्जलिनोदकम् ।
यमं शप्तुमथारेभे गौतमस्तपसां निधिः ॥ ३१ ॥

तं विदित्वा यमस्साक्षात्सहसोत्थाय सत्वरः ।
आजगाम [3]ततो विप्राः यत्रास्ते [4]स हि गौतमः ॥ ३२ ॥

## यमेन गौतमस्य सान्त्वनं बालकेभ्यो जीवदानञ्च

यमः —

[5]जातानां हि ध्रुवो मृत्युः मृतानां जन्म वै ध्रुवम् ।
आत्मना विहितं जन्म विहितो मृत्युरात्मना ॥ ३३ ॥

[6]न मेऽपराधस्स्वल्पोऽपि [7]चात्र गौतम विद्यते ।
एतेषामपराधोऽयं इति विद्धि न चान्यथा ॥ ३४ ॥

तस्मादेतद्विदित्वा त्वं प्राणिनां जन्म चाव्ययम् ।
त्यक्त्वा कोपमिमं ब्रह्मन् स्वस्थानं गन्तुमर्हसि ॥ ३५ ॥

---

[1] शेषा (क ख घ) [2] संशया (क ख) [3] यतो (क ख घ च) [4] वै स (च) यै च (च)
[5] [illegible] (क ग) [6] ममापराधः (ग) [7] चात्र (ग)

गौतमः —

किं स्यात्स्थानेन मे देव किं वाऽन्येन प्रयोजनम् ।
शिष्यैरेतैर्वियुक्तस्य महद्भिर्नियतात्मभिः ॥ ३६ ॥

यन्मया[1]चरितं पुण्यं यन्मयोपासितो गुरुः ।
तप्तं मया [2]तपो यच्च तेन यास्यन्त्वमर्त्यताम् ॥ ३७ ॥

तस्मान्मत्तपसैवैते प्रसादात्तव वा यम ।
जीविष्यन्ति यथा देव तथा त्वं देहि मे वरम् । ॥ ३८ ॥

सूतः —

श्रुत्वा वैवस्वतो वाक्यं गौतमस्य महात्मनः ।
शापभीतो वरं प्रादाद्येन जीवन्ति ते द्विजाः ॥ ३९ ॥

ततस्ते सहसोत्थाय गुरुं दृष्ट्वा ववन्दिरे ।

## गुरुभक्तितुष्टेन गौतमेन शिष्येभ्यो वरदानम्

तानाह गौतमः प्रीतः स शिष्यान् संशितव्रतान् ॥ ४० ॥

तुष्टोऽहं [3]वो वरं दास्ये वृणीध्वमवि[4]शङ्कया ।
सर्वशास्त्राणि वेदाश्च समस्ताङ्गानि सुव्रताः ।
इतिहासपुराणानि मत्प्रसादेन वेत्स्यथ ॥ ४१ ॥

## इन्द्रदत्तेन वरेण गौतमशिष्याणां सशरीरं स्वर्गगमनम्

एतस्मिन्नन्तरे प्राप्तः पुरूहूतो दिवस्पतिः ।
गौतमं प्रेतराजं च तांश्च [5]विप्रानुवाच ह ॥ ४२ ॥

एतैर्द्विजैरतीवेह जिता लोकाश्च शाश्वताः ।
मम लोकमितस्तस्माद्गन्तुमर्हन्ति सुव्रताः ॥ ४३ ॥

---

[1] सुकृतं (ग च) [2] च यत्तप्तं (च) [3] वै (ग) [4] शङ्किताः (ग)
[5] प्रोवाच वै तदा (ग)

गौतमः —

शरीराण्यविहायैव यथा यास्यन्ति ते दिवम् ।
तथा गच्छन्तु मच्छिष्या नान्यथा च [1]पुरन्दरम् ॥ ४४ ॥

[2]सामर्थ्यमेतल्लोकेऽस्मि[3]न्महाकीर्तिश्च शाश्वती ।
गुरुपूजाफलं चैषां ख्यातिं यास्यति शाश्वतीम् ॥ ४५ ॥

तथेतीन्द्रोऽपि तान्सर्वान्विमाने सुरपूजिते ।
समारोप्य दिवं विप्रान् जगाम [4]त्यज्य मेदिनीम् ॥ ४६ ॥

ततो वैवस्वतः प्रीतो जगाम स्वं निकेतनम् ।
गौतमोऽपि सपत्नीको ययौ सिद्धाश्रमं प्रति ॥ ४७ ॥

इति गौतमशिष्याणां चरितं कथितं मया ।
एवं कृतार्था बहवो जाता गुर्वनुवर्तनात् ॥ ४८ ॥

### शिष्यपरीक्षणक्रमः, शिष्यलक्षणश्च

गुरुः [5]श्च स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ।
[6]ब्राह्मणं क्षत्रियं वैश्यं द्विवर्षञ्च त्रिवर्षकम् ॥ ४९ ॥

अहिंसका दयावन्तो नित्यमुद्युक्तचेतसः ।
अमानिनो बुद्धिमन्तस्त्यक्तस्पर्धाः प्रियंवदाः ॥ ५० ॥

ऋजवो मृदवः [7]स्वच्छा विनीताः स्थिरचेतसः ।
शौचाचारसमायुक्ता गुरुभक्ता द्विजातयः ॥ ५१ ॥

---

[2] 'सामर्थ्यमेषां लोके च तव कीर्तिस्तथा मम' इति कार्तिकमासमाहात्म्यपाठः समुचितः । [4] त्यज्येति उपसर्गहीनं पौराणिकं ल्यबन्तरूपम् ।
[6] ब्राह्मणमिति पूर्वेणान्वयः ।

---

[1] पुरन्दरम् (क ख घ च) [3] न्मम (ग च) [5] स्वस्वाश्रितं (क ख घ च)
[7] मुद्भिम (च) [8] स्वस्था (ग)

एवं वृत्तसमोपेता वाङ्मनःकायकर्मभिः ।
शोध्या बोध्या यथान्यायं इति शास्त्रेषु निश्चयः ॥ ५२ ॥

## नारीणां शिवदीक्षा

नाधिकारः स्वतो नार्यः शिवसंस्कारकर्मणि ।
नियोगाद्भर्तुरस्त्येव भक्तियुक्ता यदीश्वरे ॥ ५३ ॥

तथैव भर्तृहीनायाः [1]पुत्रादेरभ्यनुज्ञया ।
अधिकारो भवत्येव कन्यायाः पितुराज्ञया ॥ ५४ ॥

## शूद्राणां शिवदीक्षाक्रमः

शूद्राणामन्त्यजातीनां पतितानां विशेषतः ।
तथा सङ्करजातीनां भावशुद्धिर्विधीयते
तेऽप्यकृत्रिमभावाश्चेच्छिवे परमकारणे । ॥ ५५ ॥

स्त्रीशूद्रावपि [2]संस्कार्यौ गुरुणा कर्मदीक्षया
प्रणवं वैदिकान्मन्त्रानन्तरेण[3] यथोचितम् । ॥ ५६ ॥

[4]पादोदकप्रदानाद्यैः कुर्या[5]त्पाशविशोधनम्
ततो दीक्षां शिवेक्तां गुरुः कुर्यात्समाहितः । ॥ ५७ ॥

## दीक्षालक्षणम्

विशिष्टं दीयते ज्ञानं क्षीयते पापसञ्चयः ।
[6]मायाकर्ममलोद्भूता [7]यतो दीक्षेति सा स्मृता ॥ ५८ ॥

---

[3] वैदिकमन्त्रवर्जमिति ।

---

[1] पुत्रदाराद्य (ग) [2] संस्कार्या (क) [4] वासोदक (क) [5] त्पाप (च)
[6] मायाकाम (क ख घ च) [7] यया (ग)

## दीक्षाभेदकथनम्

यौगिकी मानसी चान्या स्पार्शिकी चाक्षुपी तथा ।
वाचिकी तान्त्रिकी [1]हौत्री दीक्षेयं सप्तधा मता ॥ ५९ ॥

## यौगिकी दीक्षा

योगमार्गेण शिष्यस्य देहमाविश्य यद्गुरुः ।
बोधयेद्देवतातत्त्वं सा दीक्षा यौगिकी [2]मता ॥ ६० ॥

## मानसी दीक्षा

[3]आदिश्य देवताभावं तेजसा यद्दयालुना ।
शिष्यं गुरुरनुध्यायेत् सा दीक्षा मानसी भवेत् ॥ ६१ ॥

## स्पार्शिकी दीक्षा

हार्द्रमन्त्रमयं ज्योतिर्हस्ते सञ्चित्य यद्गुरुः ।
ब्रह्मरन्ध्रे स्पृशेच्छिष्यं सा दीक्षा स्पार्शिकी भवेत् ॥ ६२ ॥

## चाक्षुषी दीक्षा

देवताविग्रहो भूत्वा यच्छिष्यं दयया गुरुः ।
प्रसन्नया दृशा पश्येत् सा दीक्षा चाक्षुषी [4]स्मृता ॥ ६३ ॥

## मान्त्रिकी दीक्षा

सञ्चिन्त्य हृदये तत्त्वं कर्णे शिष्यस्य यद्गुरुः ।
मन्त्रमुच्चारये[5]त्सम्यक् सा दीक्षा [6]मान्त्रिकी भवेत् ॥ ६४ ॥

## तान्त्रिकी दीक्षा

दिव्यानामपि मन्त्राणां यद्व्याख्यानेन देशिकः ।
शिष्यायोपदिशेतत्त्वं सा दीक्षा तान्त्रिकी [7]स्मृता ॥ ६५ ॥

---

[1] होत्री (ग) [2] स्मृता (च) [3] आविश्य (क ख ग घ) [4] भवेत् (च)
[5] न्मन्दः (क ख घ) देन (च) [6] वाचिकी (ग) मानसी स्मृता (च) [7] मता (ग)

## हौत्री दीक्षा

सकुण्ड[1]मण्डपा होमक्रियाकौशलशालिनी ।
अभिषेकादिसम्पन्ना हौत्री[2]दीक्षेयमुच्यते ॥ ६६ ॥

## दीक्षार्थं शिष्यपरीक्षणम्

तारतम्यं समालोक्य दीक्षा कार्या विपश्चिता ।
शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति ॥ ६७ ॥
अतः परं समालक्ष्य गुरुश्शिष्यस्य योग्यताम् ।
षडध्वशुद्धिं कुर्वीत सर्वबन्धविमुक्तये ॥ ६८ ॥

## षडध्वनिरूपणम्

[3]कलातत्त्वं च भुवनं वर्णः पदमतः परम् ।
मन्त्रं चेति समासेन षडध्वा परिपठ्यते[4] ॥ ६९ ॥

## साधनमार्गप्रशंसनम्

अत्रैव सर्वमेवेदं द्रष्टव्यं खलु साधकैः ।
[5]कृतकारुणिकेनैवमाचार्येण द्विजोत्तमाः ।
[6]शिष्यस्यात्मैव चिद्रूपः स्वयं भवति निर्मलः ॥ ७० ॥

## गुरुमहिमनिरूपणम्

यो गुरुर्भवति यस्य सुव्रताः
सोऽपि तस्य परवेदनाय तु ।
शुद्ध[7]सत्वमतिनिर्मलं परं[8]
तस्य भक्तिसहितस्य बोधयेत् ॥ ७१ ॥

---

[4] अध्वा च मन्त्रपदवर्णभुवनतत्त्वकलाभेदेन षड्विधः । शैवपरिभाषा पु. १३७

---

[1] मण्टपा (घ) [2] दीक्षा ह्यद हृता (च) [3] कलतत्त्वचतुर्वर्णं परं मन्त्रमतः परम् (च) [5] ऋते (क ख ग घ) [6] शिष्यस्यात्मनि (क ख घ) शिष्यस्यात्मैव चिद्रूपं स्वयं भवति निर्मलम् (ग) [7] तत्त्व (ग) [8] निजं (ग)

यस्य दवे परा भक्तिर्यथा [1]देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ७२ ॥

गुरुरेव शिवस्तस्य नान्य इत्यब्रवी[2]च्छिवः ।
गुरुभक्तिं ततः कुर्याच्छ्रेयसे भूयसे नरः ॥ ७३ ॥

यः पठेदिदमाख्यानं सर्वदा नियतश्शुचिः ।
सर्वपापविनिर्मुक्तः स याति [3]परमं पदम् ॥ ७४ ॥

इति श्रीमत्पुराणसारे गुरुशुश्रूषामाहात्म्ये दीक्षाविधानं नाम
चत्वारिंशोऽध्यायः

---

[1] वेदे (च) [2] च्छ्रुतिः ग) [3] परमां गतिम् (च)

# एकचत्वारिंशोऽध्यायः

[ देवताभक्तिप्रकरणम्—शिवभक्तिनिरूपणम् ]

## भक्तिमार्गदर्शननामानि

देवताभक्तिमधुना कथयामि समासतः ।
[1]शैवं च वैष्णवं शाक्तं सौरं वैनायकं तथा
स्कान्दं च भक्तिमार्गस्य दर्शनानि षडेव हि ॥ १ ॥

## भक्तिमहिमवर्णनम्

भक्त्या च प्राप्यते राज्यमिन्द्रत्वं ब्रह्मणः पदम् ।
विष्णुत्वमथ मुक्तिश्च नित्यं प्राप्नोति भूसुराः ॥ २ ॥

अपि पापानि घोराणि सदा कुर्वन्नरो यदि ।
लिप्यते नैव पापैस्तु भक्तिर्भवति चेच्छिवे ॥ ३ ॥

सकृत्पूजयते यस्तु भगवन्तमुमापतिम् ।
अस्याश्वमेधादधिकं फलं भवति भूसुराः । ॥ ४ ॥

तदेव सफलं कर्म [2]शङ्करार्थाय यत्कृतम्
भक्तिं वितन्वतश्शम्भोः पुंसः किन्नाम दुर्लभम् । ॥ ५ ॥

अल्पाश्रयानल्प[3]फलानसारा
नन्यान्धर्मान्प्राहुरिह द्विजेन्द्राः ।
महाऽऽश्रयं बहुकल्याण[4]भूषं
वदन्ति सन्तः शिवधर्ममेकम् ॥ ६ ॥

---

[1] दर्शनभेदश्च दर्शितः पुराणसार इत्यादिना पराशरमाधवीये शैवादिदर्शन-भेदाः निरूपिताः । प.मा. पृष्ठम् ३२७

---

[2] शङ्करार्थं च (च) [3] पालाख्यसारा (क ख घ च) [4] रूपं (ग)

## शिवभक्तिमाहात्म्यनिरूपणम्

[शिवपूजारतस्य श्वेतस्य मृत्युप्राप्तिः]

[1]अस्मि[2]न्नर्थे पुरावृत्तमाख्यानं कथयामि वः
राजर्षिः श्वेत नामासीच्छ्रीमान्परमधार्मिकः । ॥ ७ ॥

शिवशास्त्रैकसद्भावः शिवभक्तो दृढव्रतः
शान्तो निर्व्यसनो वाग्मी समयाचारपालकः । ॥ ८ ॥

स कृत्वा विधिवन्नित्यं [3]शिरः स्नानमथाह्निकम्
शैवं सम्पूजयामास नित्यं लिङ्गमतन्द्रितः ॥ ९ ॥

शिवपूजाप्रसक्तं तं कदाचिदथ भूसुराः ।
आजगाम समुद्दिश्य कालो मृत्युसहायवान् ॥ १० ॥

घृत्तरक्तान्तनयनः सर्पवृश्चिकरोमवान् ।
दंष्ट्राकरालवदनश्चूर्णिताञ्जनसन्निभः ॥ ११ ॥

समागम्य स तत्रासौ कालः पाश[4]मपासृजत् ।
कण्ठार्पितेन पाशेन श्वेतः कालमथाब्रवीत् ॥ १२ ॥

### श्वेतकृता मृत्युप्रार्थना

श्वेतः —

काल तावत्प्रतीक्षस्व कालं मम महामते ।

---

[1] इयं कथा स्कान्दपुराणे दृश्यते केवलं भावानुवादरूपेण । ब्रह्मपुराणे श्वेत-तीर्थोद्भवकारणतया प्रायः एवमेव कथेयं दृश्यते। अत्र विवरणन्तु विशेषः । स्कां.पु. खण्डः १ अ. ३२ । ब्रां.पु. गौतमीमाहात्म्यम् अ. २४ लिङ्गपुराणे तु श्वेतः मृत्युं जेतुं शिवं संस्तुत्य विजयी बभूवेति विशेष-स्तत्र । लिं.पु. अ. ३०

---

[2] न्वृत्ते (क ख घ च) [3] शिवस्नान (क ख घ च) [4] मथासृजत् (च)

निर्वर्तयाम्यहं यावद्यज्ञकर्म जगत्पतेः ॥ १३ ॥

शिवयज्ञमनिर्वर्त्य नं क्वचिच्च व्रजाम्यहम् ।
न स्वपामि न भुञ्जामीत्येतन्मे व्रतमाहितम् ॥ १४ ॥

न जीवितं कलत्रं वा न राज्यं न तथा सुखम् ।
प्रियं मम यथातीव लोकेऽस्मिंश्शिवपूजनम् ॥ १५ ॥

[1]यथा च नानृतां वाचमहमेतामिहोक्तवान् ।
सत्येनानेन सततं प्रसीदतु महेश्वरः ॥ १६ ॥

### दुःखं त्यक्तुं श्वेताय मृत्युक्त उपदेशः

तमब्रवीत्ततः कालः प्रहसन्निव भूपतिम् ।
न श्रुतं तु त्वया मन्ये वृद्धानां श्वेत जल्पितम् ॥ १७ ॥

पूर्वे वयसि यो धर्मं न करोति विमूढधीः ।
स पश्चात्तप्यते सुप्तः [2]सार्थभ्रष्ट इवाध्वगः ॥ १८ ॥

[3]मासाष्टकेन तत्कुर्याद्येन [4]वर्षाः सुखं वसेत् ।
दिवसेनैव तत्कुर्यात्तेन [5]रात्रौ सुखं वसेत् । ॥ १९ ॥

पूर्वे वयसि यत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवं तु [6]यः कुर्याद्येन प्रेत्य सुखं भवेत् ॥ २० ॥

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे वाऽपराह्णिकम् ।
न हि प्रतीक्षते कालः कृतमस्य [7]न वा कृतम्[8] ॥ २१ ॥

---

[8] अनेन कृतं वा न कृतम् । यदि न कृतं तर्हि कञ्चन कालं प्रतीक्षे इत्यादिकं कालः न चिन्तयतीति ज्ञेयम् ।

---

[1] तथा (क ख ग) [2] सार्थभ्रष्टो यथार्भकः (ग) सार्थभ्रष्टो यथाध्वगः (ग)
[3] मासष्टमेन (क) [4] रात्रिं (क) [5] रात्रिं (क ख घ) [6] तत् (ग)
[7] मया (क ख घ)

इदं कृतमिदं कार्यमिद [1]मन्यत्कृताकृतम् ।
[2]एवमीहासमायुक्तं [3]कालस्संहरते नरम् ॥ २२ ॥

नाप्राप्तकालो [5]म्रियते विद्धश्शरशतै[6]श्शितैः ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ २३ ॥

चक्रवर्तिसहस्राणि पुरन्दरशतानि च ।
मया नीतानि कर्तव्यो [6]न च मन्युस्त्वयाऽनघ ॥ २४ ॥

श्रुत्येवं वचनं तस्य कालस्यामोघवर्तिनः ।

## शिवपूजासमाप्तिपर्यन्तं प्रतीक्षार्थं श्वेतप्रार्थना

श्वेतः पुनरुवाचेदं शिवभक्तिपरायणः ॥ २५ ॥

[7]ये तु विघ्नं [8]प्रकुर्वन्ति शिवयज्ञोद्यतात्मनाम् ।
तेऽचिरेण विनश्यन्ति [9](त्वा)मतो वारयाम्यहम् ॥ २६ ॥

यथैव राजभृत्यानां शास्ता राजैव नेतरः ।
तथैव शिवभक्तानां शास्ताऽसौ परमेश्वरः ॥ २७ ॥

न मृत्योर्न तपो दानं न यमो यमदूतकाः ।
न चान्ये शिवभक्तानां भवन्ति प्रभविष्णवः ॥ २८ ॥

किन्न श्रुतं त्वया काल वाक्यमेतन्मनीषिणाम् ।
नृणामीश्वरभक्तानां न भवन्त्यापदः क्वचित् ॥ २९ ॥

---

[2] ईहा चेष्टा । इच्छा ।

---

[1] मन्यत्कृता (क ख ग घ) [3] कृतान्तः कुरुते वशे (ग) [4] नियतेः (क)
[5] रपि (ग) [6] नात्र (ग) नावपान्यस्त्वयानघ (च) [7] येन (क ख ग घ)
[8] प्रकुर्वीत (क ख ग घ) [9] त्वमतो (क ख ग घ च)

ब्रह्मादयोऽपि तं क्रुद्धा न शक्ता हन्तुमीश्वराः ।
स एवं तर्जितस्तेन भगवान्विकृतेक्षणः ॥ ३० ॥

## श्वेतस्योपरि मृत्योः क्रोधः

कालो भृशं रुषेत्याह ग्रसन्निव जगत्त्रयम् ।
यावन्त एव गङ्गायां [1]शीकराः श्वेत दुर्मते ॥ ३१ ॥
तावन्त एव ब्रह्माणो मया कालेन संहृताः ।
किं वात्र बहुनोक्तेन पश्य मे विक्रमं परम् ॥ ३२ ॥
स पातु त्वां महादेवो यस्य [2]दासोऽस्मि साम्प्रतम् ।
तेनैवं गर्जितो विप्राः कालेनासौ महीपतिः ॥ ३३ ॥
ग्रस्तुं जगत्समारब्धो राहुणेव तदा शशी ।

## शिवप्रादुर्भावः । कालस्य संहारश्च

लिङ्गादथ समुत्तस्थौ मूर्तिमान्परमेश्वरः ॥ ३४ ॥
अनिर्देश्यवयोरूपश्चन्द्रार्कज्वलनद्युतिः ।
गर्जन्मेघरवोदग्रहुङ्कृतेन स [3]तत्क्षणात् ॥ ३५ ॥
चक्रे भस्मावशेषाङ्गं कालं [4]कालमिवोद्यतम् ।
श्वेतस्यादाच्च तन्नाम्नि [5]गणेश्वरमसौ प्रभुः ॥ ३३ ॥
आगताः पद्मयोन्याद्याः देवास्सर्षिगणा[6]स्तदा ।
दृष्ट्वा कालं हतं सर्वे तुष्टुवुः परमेश्वरम् ।[7] ॥ ६७ ॥

---

[6] गणेश्वरस्थानमित्यर्थः ।

---

[1] शिकताः (ख ग) [2] दासोऽस्मि (क ख घ च) [3] तत्क्षणम् (ग)
[4] कालमिवोद्धतम् (ग) [5] स्तथा (क ख घ च) [7] एतदनन्तरं 'ब्रह्मादयः' (ख घ)

## ब्रह्मादिकृतशिवस्तोत्रं कालस्योज्जीवनञ्च

[1]ओं नमो नीलकण्ठाय सदा भक्तिप्रियाय ते ।
तत्कालोचितरूपाय कालकालाय ते नमः ॥ ३८ ॥

नमस्ते पाशहस्ताय त्रिशूलवरधारिणे ।
नमः परशुहस्ताय मृत्योरपि च मृत्यवे ॥ ३९ ॥

नमस्ते कालरुद्राय सर्वसंहारकाय ते ।
नमः स्वतन्त्रचेष्टाय सर्वस्मादधिकाय ते ॥ ४० ॥

नमः कालविनोदाय भक्तिप्राप्याय ते नमः ।
नमः स्तुत्याय नित्याय भक्ताना[2]माधिहारिणे ॥ ४१ ॥

नमः [3]प्रणतपादाय हरिब्रह्मादिभिस्सदा ।
सर्वस्तुत्यस्वरूपाय नमस्ते स्तोत्ररूपिणे ॥ ४२ ॥

नमो [4]विज्ञानगम्याय ध्यानगम्याय ते नमः ।
[5]नमः स्रष्टेऽखिलस्यास्य पालयित्रे नमो नमः ॥ ४३ ॥

[6]आगतिं ते न जानीमो गतिं नैव प्रभो वयम् ।
त्वन्मायामूढचित्तानामस्माकं रक्षणं कुरु ॥ ४४ ॥

काले [7]हते प्रभो पश्य [8]भूर्लोकं प्राणिपूरितम् ।
शून्याश्च स्वर्गनरकाः भवेयुः प्राणिवर्जिताः ॥ ४५ ॥

---

[1] स्कान्दपुराणे श्वेत एव शिवं स्तौति । अत्र तु ब्रह्मादय इति वैशिष्ट्यम् । एते श्लोकास्तत्र न दृश्यन्ते । [2] आर्तिः पीडा । आधिश्च मानसी व्यथेति ज्ञेयम् । [3] प्रणतौ पादौ यैर्हरिब्रह्मादिभिः । [4] विज्ञानं शास्त्रम् । [5] जगत्स्रष्टृत्वं पालकत्वं चैकस्मिन्नेवारोप्येयमुक्तिः ।

---

[2] मार्ति (ख घ) [6] मा गतिं ( ) [7] हेतोः (ग) [8] भूलोके (घ)

एवं चेत्सर्वजन्तूनां नालं वासाय [1]भूरियम् ।
विहितं नाचरन्तीमे यदि मृत्योर्न बिभ्यति ॥ ४६ ॥

तस्मात्प्रभो महादेव कालोऽयं जीव्यतां पुनः ।
[2]तव भक्तेषु सर्वेषु नापराधं करिष्यति ॥ ४७ ॥

इति ब्रह्मादिभिर्देवैरगस्त्याद्यृषिभिस्तदा ।
विज्ञापितो यथातत्वं सर्वज्ञोऽनुग्रहान्वितम् ॥ ४८ ॥

[3]कालकालोऽपि कालाय तस्मै प्राणान्ददौ पुनः ।
[4]ततः प्रभृति विप्रेन्द्राः कालः सङ्कलयन्प्रजाः ॥ ४९ ॥

न कैश्चिद् दृश्यते घोरो विदेहत्वाज्जगत्त्रये ।
स दग्ध्वैवं शिवः कालं महाकालोऽभवत्तदा ॥ ५० ॥

क्रीडत्यद्यापि स श्वेतः त्रैलोक्येऽस्मि[5]न्यथेच्छया ।
जितारातिजरामृत्युः प्राप्ताशेषमनोरथः ॥ ५१ ॥

तस्मादन्यतमा लोके शिवभक्तिपरायणाः ।
शिवभक्ता न पापैस्तु लिप्यन्ते न च कर्मभिः ॥ ५२ ॥

[6]व्याजेनापि हि ये कुर्युः किञ्चित्कर्म शिवालये ।
न ते यान्तीह नरकं पापात्मनो हि मानवाः ॥ ५३ ॥

---

[3] कालकालः परमेश्वरः । [6] व्याजश्च अकस्मान्मनसि पूर्वमनालोच्य । अनुद्दिश्येत्यर्थः । भूलेपनादिकम् ।

---

[1] भूरि च (क) [2] भव (क) [4] सूतः (ग) [5] न्यदृच्छया (ग)

## व्याजेनापि शिवालये किञ्चित्कर्मकरणेन फलविशेषनिरूपणम्
## एतदर्थं सुदेव्युपाख्यानम्

[1]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ ५४ ॥

## सुदेव्या हरमन्दिरे संमार्जनकरणम्

पाञ्चालविषये त्वासीन्नरवर्मा महीपतिः ।
तस्याग्रमहिषी नाम्ना सुदेवीत्यभिविश्रुता ॥ ५५ ॥

भर्तुश्चापि प्रिया साध्वी शिवस्यायतने सदा ।
प्रत्यहं सा [2]करोत्यग्र्या राज्ञी संमार्जनादिकम् ॥ ५६ ॥

## राज्ञीं दृष्ट्वा गालवस्याश्चर्यम्

तां तथाभिरतां दृष्ट्वा मुनिः पप्रच्छ गालवः ।
ब्रूहि सुभ्रु महाभागे किमर्थं हरमन्दिरे ॥ ५७ ॥

सम्मार्जनरता नित्यमन्यकर्मपराङ्मुखी ।
सैवमुक्ता तदा तेन मुनिमाह मुदान्विता ॥ ५८ ॥

## सुदेवीपूर्वजन्मचरितम्

न मेऽन्यत्र परा भक्तिः यथा सम्मार्जनादिषु ।
तवाहं कथयिष्यामि पुराकर्म कृतं मया ॥ ५९ ॥

पूर्वमासमहं गृध्री पक्षिणी व्योमचारिणी ।
कदाचिद्भ्रममाणा तु याता किष्किन्धपर्वतम् ॥ ६० ॥

---

[1] कथेयं स्कान्दपुराणस्थेति पुरुषार्थसुधानिधौ वर्तते । परन्तु सारांशमात्रेण उद्धृतायां पदभेदो बहुत्रास्ति । पु.सु.नि. धर्मस्कन्धः अ. २४

[2] 'अग्र' 'अग्रा' इति मातृकासु । परन्तु अग्र्येति समीचीनम्, अग्रे भवा प्रधानेत्यर्थः ।

सिद्धविद्याधराकीर्णं हेमकूटमिति स्फुटम् ।
आश्चर्यवन्निराबाधं तल्लिङ्गं यत्र तिष्ठति ॥ ६० ॥

यस्य सन्दर्शनादेव स्वर्गं यान्ति मनीषिणः ।
संपूज्याथ तमेवेशं पुष्पधूपाक्षतादिभिः ॥ ६१ ॥

न्यस्तं केनापि तत्पार्श्वे नैवेद्यं तत्तथैव हि ।
तदादातुं समागत्य लिङ्गं कृत्वा प्रदक्षिणम् ॥ ६२ ॥

क्षुधार्ताऽहं महाभाग तन्नैवेद्यकृतो[1]द्यमा ।
क्रमादगृह्णं विप्रेन्द्र पक्षाभ्यां पांसुमार्जनम् ॥ ६३ ॥

कृतं देवस्य पुरतो दैवयोगात् क्षणात्ततः ।
[2]तावत्तत्र समायातः तस्य देवस्य पूजकः ॥ ६४ ॥

[3]उद्गताहं ततः कालान्मृता जाता वसोर्गृहे ।
नृशर्मणे च तेनाहं प्रदत्ता प्रथमा वधूः ॥ ६५ ॥

दशराज्ञीसहस्राणामुत्तमा तत्प्रभावतः ।
[4]मान्या च दयिता राज्ञः पुत्रपौत्र[5]समन्विता ॥ ६६ ॥

अभूवमीश्वरागारे कृत्वैकं पांसुमार्जनम् ।
[6]दुहिता हि वसोर्जाता राज्ञो जातिस्मरा तथा ॥ ६७ ॥

---

[2] मातृकासु दृष्टः तावत्तस्येति पाठः युक्तो न भाति ।

[3] तस्मात्प्रदेशादन्यत्र गतेत्यर्थः ।

[6] पुरुषार्थसुधानिधौ ' संमार्जने कृतेऽकामाद्देवारामे ह्यकामतः । भवेत्कीदृक्-फलमिति प्रत्यहं तत्परायणा ' इति पाठो दृश्यते ।

---

[1] घमम् (च) [4] अन्याश्च (क ख घ च) [5] 'समन्विताः' इति सर्वमातृकासु पाठः ।

क्रमात्सम्मार्जनं कृत्वा किं भविष्यामि [1]वेद्मि न ।
नाम्नाऽपि कल्मषच्छेदः स्मरणाद्वैबुधं [2]पदम् ॥ ६९ ॥
पूजनाद्यस्य निर्वाणं तमीशं को न संश्रयेत् ।
शाठ्येनापि नरा नित्यं ये स्मरन्ति महेश्वरम् ॥ ७० ॥
[3]ते प्रयान्ति तनुं त्यक्त्वा शिवलोकमनामयम् ।
नामानि ये महेशस्य गृणन्त्यज्ञानतोऽपि वा ।
तेषामपि शिवो मुक्तिं ददाति किमतः परम् ॥ ७१ ॥

## शिवभक्तिमाहात्म्यवर्णने सुद्युम्नकथा

अत्रापि सम्प्रवक्ष्यामि कथां पापप्रणाशिनीम् ।
[4]प्रतिष्ठानपुरे रम्ये गङ्गातीरे बभूव ह
[5]सुषुम्न इति विख्यातो राजा परमधार्मिकः । ॥ ७२ ॥

## सुद्युम्नं प्रति तृणबिन्दोः प्रश्नः

कदाचित्तत्र भगवान् [6]तृणबिन्दुर्महामुनिः ।
आजगाम च तं द्रष्टुं सुद्युम्नं प्रियदर्शनम् ॥ ७३ ॥

---

[1] 'वेद्मि नो' इति पाठः समीचीनः ।

[2] वैबुधं विबुधानां पदं देवत्वं स्वर्गो वा ।

[4] कूर्मपुराणस्यादौ इन्द्रद्युम्नेतिहास इति काचन कथा दृश्यते । परन्तु कथाया अस्याः विवरणं तत्र नास्ति । उभयोः कथायां साधर्म्यमात्रं दृश्यते ।

[5] सुद्युम्न इत्येव स्यात् ।

[6] बन्धोः पुत्रः तृणबिन्दुः । इति वायु-भागवतानुसारम् । रामायणविष्णुपुराणानुसारेण बुधराजस्य पुत्रः । परंतु अयं क इति निर्णयो न भवति ।

---

[1] वेद्मनि (क ख घ) [3] तेऽपि (क ख घ च)

तत्रायान्तं मुनिं दृष्ट्वा प्रत्युत्थाय कृताञ्जलिः ।
यथावदभिवाद्याथ ददावासनमुत्तमम् ॥ ७४ ॥

[1]किमर्थमागतो ब्रह्मन् कृतकृत्योऽस्मि सुव्रत ।

तृणबिन्दुः —

[2]प्रष्टुं समागतो राजन् मनसस्तव गौरवम् ॥ ७५ ॥

## सुद्युम्नस्य पूर्वजन्मनि व्याधत्वप्राप्तिकथनम्

सुद्युम्नः —

जन्मन्यह[3]मतीतेऽस्मिन् [4]व्याधोऽहं गौतमीतटे ।
देवतानामपि [5]द्वेष्टा सर्वेषां प्राणिना[6]मपि ॥ ७६ ॥

सुव्याधिरिति [7]नाम्नाहं विख्यातोऽस्मि महामुने ।
न कश्चिद्धर्मलेशोऽस्ति पापकर्मस्वहं रतः ॥ ७७ ॥

मया [8]ये निहता मार्गे तेषां संख्या न विद्यते ।
[9]परस्य यच्चापहृतं तत्पापं पर्वतोपमम् ॥ ७८ ॥

एवं बहुतिथे काले गतेऽहं पञ्चतां गतः ।
धर्मराजस्य पुरतो नीतोऽहं यमकिङ्करैः ॥ ७९ ॥

मां दृष्ट्वाऽथाऽब्रवीद्धर्मः चित्रगुप्तं [10]विचारकम् ।
किमनेन [11]कृतो धर्मलेशोऽस्ति वद सुव्रत ॥ ८० ॥

---

1 किमत्र चागतो (क) किमत्रमागतो (ख घ) 2 'कथयस्व महाभाग श्रोतुं कौतूहलं हि मे' इति ग-प्रतिपाठः । 3 न्यतीते (क ग) नतीते (ख घ) 4 व्यालो (क)
5 दृष्ट्वा (क) श्वेष्टा (ग) द्वेष्टया (ख घ) 6 मिह (ग) 7 नामा [च] 8 त्र [च]
9 यत्परस्वापहरणे [च] 10 [illegible] (ग) 11 कृतं कर्म धर्मोऽस्ति वद सुव्रत: (ग)

## पापिनो व्याधस्य मोक्षप्राप्तिहेतुकथनम्

चित्रगुप्तः —

अनेन यत्कृतं पुण्यं मया वक्तुं न शक्यते ।
जानाति भगवानेव विश्वव्यापी महेश्वरः ॥ ८१ ॥

इदं पुण्यमिति ज्ञात्वा कृतं नानेन यद्यपि ।
[1]आहर प्रहरेत्यादि नामसङ्कीर्तनं [2]सदा ॥ ८२ ॥

करोति तेन पुण्येन दुष्कृतं भस्मसात्कृतम् ।
पापलेशोऽपि [3]नास्यास्ति इति मे निश्चिता मतिः ॥ ८३ ॥

एतस्मिन्नन्तरे तत्र विमानं सार्व[4]कामिकम् ।
देवदूतैस्समानीतमारुह्य [5]मुनिपुङ्गव ॥ ८४ ॥

धर्मराजमनुज्ञाप्य गतोऽहममरावतीम् ।
तत्र भुक्त्वा महाभोगान् लक्षाणामयुतं ततः ॥ ८५ ॥

गतोऽस्मि ब्रह्मसदनं ब्रह्मणा परिपूजितः ।
तत्राहं कल्पपर्यन्तं भोगान् भुक्त्वा यथेप्सितान्
ततस्तु कर्मशेषेण भोक्तुमत्र महीतले ॥ ८६ ॥

इन्द्रद्युम्नस्य राजर्षेः कुले जातोऽस्मि सुव्रत ।
स्मरामि [5]पूर्विकां जातिं प्रसादच्छूलिनो मुने ॥ ८७ ॥

ईश्वरे सहजा भक्तिः मम [6]त्रिदशपूजिते ।

---

[1] 'आहार' इति सर्वमातृकापाठः अयुक्त इति भाति । अतः 'आहर' इति विपरिरिवर्तितम् ।

---

[2] सह (क ख घ) हरेः (च) [2] नास्य स्यात् (ग) [3] कामगम् (च)
[4] मुनिपुङ्गवाः (ग) [5] पूर्विकीं (च) पौर्विकी (घ) [6] त्रिपुरपूजिते (क) त्रिपुरघातिने(च)

## शिवनामसङ्कीर्तनादिभिः पुण्यविशेषनिरूपणम्

जानाति को महेशस्य माहात्म्यं परमार्थतः ।
यस्य नाम्नः फलमिदमज्ञानोच्चारणादपि ॥ ८८ ॥

ज्ञात्वा नामानि यः शम्भोः कीर्तयेदमितौजसः
मुक्तिः करतले तस्य स्थितेति मुनयो जगुः ॥ ८९ ॥

सुदेवी —

इति सर्वमशेषेण चरित्रं तस्य [1]धीमतः ।
सुद्युम्नस्य मुनिः श्रुत्वा विस्मितोऽभूत्पुन पुनः ॥ ९० ॥

नामोच्चारणमात्रेण यस्य [2]क्षीणोऽघसञ्चयः ।
[3]भवत्यवाप्तकल्याणः यस्तेनाराधयेच्छिवम् ॥ ९१ ॥

ब्रह्मोपेन्द्रमहेन्द्रार्कपाशिवैश्रवणादिषु ।
या सम्पन्महती सा हि शिवपूजाविधेः फलम् ।
एवमुक्तस्तया राज्ञा प्रहृष्टस्तामथाऽब्रवीत् ॥ ९२ ॥

### गालवकृतं सुदेवीप्रशंसनम्

गालवः —

समाराध्य सुरेशानं सर्वगं [4]त्रिपुरान्तकम् ।
किमाश्चर्यगुणावासे[5] यदेतत्प्राप्तवत्यसि ॥ ९३ ॥

जातिस्मरत्वमैश्वर्यं विद्याज्ञानं [6]प्रजाः सुखम् ।
तस्मादन्य[7]तमा लोके सुदेवि त्वमनिन्दते ॥ ९४ ॥

---

[1] पाशी वरुणः । वैश्रवणः कुबेरः ।

---

[1] नामतः (च) [2] 'क्षीणाघसञ्चय' (क ख ग घ च) [3] भवताद्व्याप्त (क)
[4] त्रिपुरान्तक (क ख ग घ) [5] सं (क ख घ च) [6] महासुखम् (ख) त्वयि स्थिरा (च)
[7] तमो (च)

अनन्यसुलभा भक्तिः शिवे यस्मा[1]त्तव स्थिता ।

सूतः —

इति प्रशस्य बहुशो गालवः स्वाश्रमं ययौ ॥ ९५ ॥

## शिवपूजादिभिरिन्द्रियसाफल्यकथनम्

सत्यं वच्मि हितं वच्मि सारं वच्मि पुनः पुनः ।
[2]असारे दग्धसंस्कारे सारं [3]यच्छम्भुपूजनम् ॥ ९६ ॥

मनस्तद्विधिधर्मज्ञं शङ्करे यत्प्रवर्तते ।
[4]सा वाणी[5]वाक्पतिं शम्भुं या स्तौत्यच्युतमच्युतम् ॥ ९७ ॥

श्रवणौ विश्रुतौ याभ्यां श्रूयन्ते तत्कथाश्शुभाः ।
पादौ तौ सफलौ पुंसां शिवायतनगामिनौ ॥ ९८ ॥

ते च नेत्रे शुभायालं याभ्यां संदृश्यते [6]शिवः ।
सफलौ तौ स्मृतौ विप्रास्तत्पूजाकारिणौ करौ ॥ ९९ ॥

कुलं पवित्रं जननी कृतार्था
[7]वसुन्धरा पुण्यवती च तेन ।
अपार[8]संवित्सुखसागरेऽस्मिन्
लीनं परे ब्रह्मणि यस्य चेतः ॥ १०० ॥

---

[2] दग्धाः संस्कारा यस्मिन्निति । अत एव संसारोऽसारः । संस्कारबहुलस्तु साररूप एव ।

[5] शम्भुः सर्वशास्त्रद्रष्टेति स वाक्पतिः ।

---

[1] त्वयि स्थिरा (च) [3] यच्छिव (च) [4] श्राविणी (क) [6] शिरः (च)

[7] विश्वन्धरा (क ख घ च) [8] सच्चि (ग)

इत्येतत्परमं गुह्यं [1]कलिकल्मषनाशनम् ।
यः शृणोति पुमान् पापैः सर्वैरेव प्रमुच्यते ॥ १०१ ॥
शिवभक्तस्सदा ह्येतच्छ्रावयेच्छिवसन्निधौ ।
श्रोतव्यं शिवभक्तैस्तु [2]चतुर्वर्गफलार्थिभिः ॥ १०२ ॥

इति श्रीमत्पुराणसारे शिवभक्तिनिरूपणं नाम
एकचत्वारिंशोऽध्यायः

[2] धर्मार्थकाममोक्षाणां चतुर्वर्ग इतीरणा ।

[1] कलिश्रुद्भय (ग)

## द्विचत्वारिंशोऽध्यायः

[ विष्णुभक्तिनिरूपणम् ]

### दैवतेषु विष्णुप्राधान्यनिरूपणम्

सूतः —

अथातस्सम्प्रवक्ष्यामि विष्णुभक्तिमनुत्तमाम् ।
[1]यो ददात्यमलं पुंसः तद्विष्णोः परमं पदम् ॥ १ ॥

जन्मातरसहस्रेषु तपोज्ञानसमाधिभिः
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते । ॥ २ ॥

दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥ ३ ॥

सर्वे विष्णुमया देवाः सर्वे विष्णुमया गणाः ।
न हि विष्णुमृते काचिद्गतिरन्या विधीयते ॥ ४ ॥

इत्येवं सततं वेदा [2]गायन्ते नात्र संशयः ।
एष रुद्रश्च सर्वात्मा ब्रह्मा चैव सनातनः ॥ ५ ॥

एष कर्ता [3]विकर्ता च भूतानां प्रभवोऽव्ययः ।
अग्निहोत्रमुखा वेदा गायत्री छन्दसां मुखम् ॥ ६ ॥

---

[1] यः विष्णुः पुंसः अमलं पदं स्थानं ददाति । विष्णोः पदं तदेवेति । विष्णुः कृष्णश्च अवतारभेदमात्रम् । मूलस्वरूपं तु भगवान् विष्णुः । कृष्णस्तु भगवान् स्वयमित्युक्तेः ।

[2] आर्षमात्मनेपदम् ।

---

[3] च भोक्ता च भूतानां प्रभवोऽव्ययः (ग)

पर्वतानां [1]मुखं मेरुः गरुडः [2]पततां मुखम् ।
ऊर्ध्वं तिर्यगधश्चैव यावती जगतो [3]गतिः ॥ ७ ॥

[4]नारायणः परं ब्रह्म तत्त्वं नारायणः [5]परम् ।
सदेवकेषु लोकेषु भगवान्केशवस्सुखम् ॥ ८ ॥

कटकमकुटकुण्डलादिभेदैः
कनकमभेदमपीष्यते यथैकम् ।
[6]सुरपशुमनुजादिकल्पनाभिः
हरिरखिलाभिरुदीर्यते [7]तथैकः ॥ ९ ॥

आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहास्तथा ।
दिशश्चोपदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् ॥ १० ॥

[8]आलोक्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥ ११ ॥

नारायणमनाश्रित्य न कश्चिदिह मुच्यते ।
नारायणपरा लोका नारायणपरा मखाः ॥ १२ ॥

नारायण[9]परा देवा नारायणपराः क्रियाः ।
नारायणपरं ज्ञानं नारायणपरा गतिः ॥ १३ ॥

---

[1] मुखं प्रधान इत्यर्थः । [2] पततीति पतन् पक्षी । [6] अवताररूपैः सुरपशुमनुजादिभिः, कृष्णवराहरामरूपैरिति ज्ञेयम् । अथवा विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनीत्यादि भगवद्वाक्यानुसारेण सर्वत्र भगवत्सान्निध्यकल्पनया ।

---

[3] ऽवधिः (च) [4] नारायण (क ख ग घ) [5] परः (च) [7] यथैकः (ग)
[8] आलोढ्य (ग) [9] परो योगो नारायणपरं तपः (ग)

नारायणपरं ब्रह्म तत्त्वं नारायणः परम् ।
परादपि परं चासौ तस्मान्नास्ति परात्परः ।
नारायणपरं ज्योतिरात्मा नारायणः परः ॥ १४ ॥

सत्यं सत्यं पुनस्सत्य[1]मुत्क्षिप्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥ १५ ॥

## हरिनामस्मरणमाहात्म्यम्

साङ्केत्यं पारिहास्य[2]ञ्च [3]स्तोभं हेलनमेव [4]च ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ १६ ॥

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥ १७ ॥

कालक्षपितदेहानां [5]क्षीणारोग्यबलायुषाम् ।
नास्ति भेषजमन्यत्र नारायणरसायनात् ॥ १८ ॥

राष्ट्रस्य शरणं राजा पितरौ बालकस्य च ।
धर्मस्समस्तवर्णानां सर्वस्य शरणं हरिः ॥ १९ ॥

कृष्णः कृष्णः कृष्ण इत्यन्तकाले
जल्पन् जन्तुर्जीवितं यो जहाति ।
आद्यः शब्दः [6]कल्पते तस्य [7]मुक्त्यै
व्रीडानम्रौ तिष्ठतोऽन्यावृणस्थौ ॥ २० ॥

अवशेनापि [8]यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥ २१ ॥

---

[3] स्तोभः प्रशंसनम् । हेलनमवमानः ।

---

[1] मुद्धृत्य (च) [2] वा (ग) [3] स्तोमं (ख ग घ च) [4] वा (ग) [5] निरा (ग)
[6] कल्प्यते (क) [7] मुक्तिं (ग) मुक्तौ (क) [8] यन्नाम कीर्त्यते (ग)

## विष्णुभक्तिमाहात्म्यकथनेऽजामिलकथानकम्

[1]अत्र चोदारन्तीममितिहासं पुराविदः ।

## वेश्यासक्तं कामिनं दृष्ट्वाऽजामिलकृतभार्यात्यागः

[2]कन्याकुब्जे द्विजः कश्चिदासीन्नाम्ना ह्यजामिलः ।
[3]स्वभावरूपसंपन्नः शीलवृत्तगुणाश्रयः ॥ २२ ॥

एकदाऽसौ वनं यातः पितृसन्देशकृद्द्विजः ।
आदाय तत आवृत्तः फलपुष्पसमित्कुशान् ॥ २३ ॥

ददर्श कामिनं कञ्चित् शूद्रं सह भुजिष्यया ।
पीत्वा च मधु [4]मैरेयं मदाघूर्णितनेत्रया ॥ २४ ॥

दृष्ट्वा च कामदीप्तेन कामिना परिरम्भिताम् ।
जगाम [5]हृच्छयवशं सहसैव विमोहितः ॥ २५ ॥

तामेव मनसा ध्यायन् स्वधर्माद्विरराम ह ।
तामेव तोषयामास पित्रेणार्थेन [6]यावता ॥ २६ ॥

विप्रां स्वभार्यामप्रौढां कुले महति [7]लम्भिताम् ।
[8]विससर्जाचिरात्पापः [9]स्वैरिण्यापाङ्ग[10]विद्धधीः ॥ २७ ॥

एवं नष्टसमाचारो दासीसंसर्गदूषितः ।
[11]बन्ध्यक्षकैतवैश्चौर्यैः गर्हितां वृत्तिमाश्रितः ॥ २८ ॥

---

[2] कथेयं यथावद् भागवतादुद्धृता । भाग. स्क. ६ अ. १
[3] सत्स्वभाव इति ज्ञेयम् । [4] मैरेयं सुराभेदः । [5] हृदि शेत इति मनसिज; कामः । [7] लंभिता जातेति । [9] स्वैरिणी पुंश्चली वेश्या ।

---

[1] अत्रैवोदा (ग) [6] याचता (क घ) याचिता (च) [8] विससर्ज चिरात् (क ख च)
[10] पीढितः (ग) [11] त्वं ह्यक्षैः (क) बाह्यक्षैः (च)

बभारास्याः कुटुम्बिन्याः कुटुम्बं मन्दधीरयम् ।
एवं निवसतस्तस्य लालयानस्य तत्सुतान् ।
कालोऽत्यगान्महाविप्रा ह्यष्टाशीत्यायुषः समाः ॥ २९ ॥

### अन्तकालेऽजामिलकृतपुत्रनारायणाह्वानम्

तस्य प्रवयसः[1] पुत्रा दश तेषाञ्च योऽवमः[2] ।
बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् ॥ ३० ॥

स बद्धहृदयस्तस्मिन्नर्भके कलभाषिणि ।
निरीक्षमाणस्तल्लीलां मुमुदे [3]जरठो भृशम् ॥ ३१ ॥

भुञ्जानः प्रपिबन् खादन् बालकस्नेहयन्त्रितः ।
भोजयन् पाययन् मूढो न वेदागतमन्तकम्[4] ॥ ३२ ॥

स पाशहस्तांस्त्रीन् दृष्ट्वा पुरुषान् भृशदारुणान् ।
वक्रतुण्डानूर्ध्वरोम्ण आत्मानं नेतुमागतान् ॥ ३३ ॥

दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् ।
भीतिजेन स्वरेणोच्चैराजुहावाकुलेन्द्रियः ॥ ३४ ॥

### नारायणनामग्रहणेनाजामिलस्य मोक्षः

निशम्य म्रियमाणस्य मुखतो हरिकीर्तनम् ।
किरीटिनः कुण्डलिनो विष्णुदूता[5]स्समापतन् ॥ ३५ ॥

विकर्षन्तश्च हृदयाद्दासीपतिमजामिलम् ।
यमप्रेष्यान्विष्णुदूता वारयामासुरोजसा ॥ ३६ ॥

---

[1] प्रवयाः वृद्धः । [2] अवमः कनिष्ठतमः । [3] जरठो वृद्धः ।
[4] स्वमरणकालमित्यर्थः ।

---

[5] समागताः (ग)

अहो कष्टं धर्मदृशां अधर्मः स्पृशते [1]सताम् ।
[2]यत्रादण्ड्येष्वपापेषु दण्डो यैर्ध्रियते वृथा ॥ ३७ ॥

अयं हि [3]कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार[4]विवशो नाम [5]स्वस्त्ययनं हरेः ॥ ३८ ॥

अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम [6]यत् ।
सङ्कीर्तितमिदं पुंसो दहत्येधो[7] यथाऽनलः ॥ ३९ ॥

सकृन्नारायणेत्येतद्भगवन्नाम [8]मङ्गलम् ।
सर्वपापविनिर्हारं जगाद चतुरक्षरम् ।
मुच्यतां मुच्यतामेषो महात्मा विष्णुसम्मतः ॥ ४० ॥

किङ्कराः —

किमर्थमागता यूयं कस्य दूता महाबलाः ।
अथवा क्लेशितं दृष्ट्वा कृपया वा समागताः ॥ ४१ ॥

विष्णुदूताः —

यस्य प्रसादलेशेन ब्रह्मा ब्रह्मत्वमागतः ।
विष्णोस्त्रैलोक्यनाथस्य तस्य दूता वयं भटाः ।
वासुदेवाज्ञया प्राप्ता नेतुमेनमकल्मषम् ॥ ४२ ॥

---

[3] उपभुक्तरत्यानन्दः । [4] न बुद्धिपूर्वकं विष्णोर्नामग्रहणं कृतमनेन । परं केवलं भीत्या पुत्र आकारित आसीत् । [5] कल्याणमार्गसूचकम् ।
[6] उत्तमश्लोकाः कीर्तनीयगुणयुक्ताः । पुरुषोत्तमो विष्णुः अगणितगुणगणयुक्तः अत एव दोषलेशेनाप्यस्पृष्टः । [7] एधः काष्ठम् ।

---

[1] सभाम् (क) [2] अत्राद (ग) [3] निर्मलम् (च)

किङ्कराः —

ये यजन्ति महाविष्णुमनन्यमनसोऽमलाः ।
तेषामागमनार्थाय भवदागमनं यतः ॥ ४३ ॥

अयन्त्वतीव पापिष्ठः [1]सर्वलोकाहिते रतः ।
अनेन यातनाः कष्टाः भोक्तव्या बहुकालिकाः
यदाज्ञया वयं प्राप्ता कर्तुं [2]शासनमस्य तु । ॥ ४४ ॥

एतच्छ्रुत्वा तु रोषेण विष्णुदूता महाबलाः
हत्वा यमबलं सर्वं मृत्युं जित्वा [3]रणाजिरे । ॥ ४५ ॥

[4]छिन्नपाशं तमादाय ब्राह्मणं मुनिपुङ्गवाः
किङ्करा यानमारोप्य ययुर्वैकुण्ठमुत्तमम् । ॥ ४६ ॥

स तत्र वपुषा श्यामं [5]श्यामीकृतदिगन्तरम्
प्रवृद्धकमलाभाक्षं [6]लसत्कुण्डलमण्डितम् । ॥ ४७ ॥

सहस्रांशुसहस्राभं किरीटधरमच्युतम्
तारहारलसद्वक्षःस्फुरच्छ्रीवत्स[7]लक्षणम् । ॥ ४८ ॥

स्फुरदङ्गदसन्नद्धबाहापरिघमद्भुतम्
शङ्खचक्रधरं देवं दृष्ट्वा चात्यन्तविस्मितः ।
तुष्टाव पुण्डरीकाक्षं वाग्भिरिष्टाभिरच्युतम् ॥ ४९ ॥

## अजामिलकृतविष्णुस्तुतिः

अजामिलः —

नमस्ते पुण्डरीकाक्ष नमः पङ्कजनाभये ।

---

[2] शासनं शिक्षामिति ।

---

[1] सर्वलोकविगर्हितः (ग) [3] रणाङ्गणे (ग) [4] छित्वा (च) [5] पीतकौशेयवाससम् (ग)
[6] चलत्कु (ग) [7] लक्ष्मणम् (च)

नमः परावरेशाय नमस्ते परमात्मने ॥ ५० ॥

नमस्ते विश्वमूर्ताय चतुर्मूर्ताय ते नमः ।
अमूर्ताय नमस्तुभ्यमेकमूर्ताय विष्णवे ॥ ५१ ॥

सद्रूपाय नमस्तेऽस्तु सदसद्विश्वभावन ।
नमः प्रधानरूपाय [1]महद्रूपाय ते नमः ॥ ५२ ॥

नमोऽहङ्कृतिरूपाय त्रिधा भिन्नाय विष्णवे ।
नमो बुद्धीन्द्रियग्रामस्वरूपायामलात्मने । ॥ ५३ ॥

नमश्शब्दस्वरूपाय स्पर्शरूपाय ते नमः
वासुदेवाय देवाय नरसिंहस्वरूपिणे । ॥ ५४ ॥

नमो वराहरूपाय मत्स्यरूपाय ते नमः
नमस्ते कूर्मरूपाय वामनाय नमो नमः । ॥ ५५ ॥

नमो राघवरूपाय नमः कृष्णाय विष्णवे
नमस्ते कल्किरूपाय नमः परशुधारिणे । ॥ ५६ ॥

चराचरस्वरूपाय नमोऽनन्तस्वरूपिणे
विशुद्धज्ञानदेहाय शान्तानन्तविभूतये । ॥ ५७ ॥

सूरिभिर्दृश्य[2]मानाय ज्ञानानन्दात्मने नमः
[3]अनाश्रयाय देवाय निःस्पृहाय नमो नमः । ॥ ५८ ॥

नम आद्याय बीजाय अजिताय महात्मने
अनन्तराय चैकाय अव्यक्ताय नमो नमः । ॥ ५९ ॥

नमो गुह्याय गूढाय गुणाय गुणवर्तिने
अतर्क्यायाऽप्रमेयाय अतुल्याय नमो नमः । ॥ ६० ॥

---

1 भद्ररूपाय (ग) 2 रूपाय (ग) 3 अनाश्रिताय (ग)

नमो जगत्प्रतिष्ठात्रे गोविन्दाय नमो नमः
नमोऽस्तु पद्मनाभाय साङ्ख्ययोगोद्भवाय च । ॥ ६१ ॥

विश्वेश्वराय देवाय शिवाय हरये नमः
नारायणाय विश्वाय देवानां परमात्मने । ॥ ६२ ॥

श्रीवत्साङ्कं महादेवं वेदगुह्यमनामयम्
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् । ॥ ६३ ॥

प्रभवं सर्वभूतानां त्रिगुणं परमेश्वरम्
प्रपद्ये मुक्तसङ्गानां यतीनां परमां गतिम् । ॥ ६४ ॥

भगवन्तं गुणाध्यक्षं अक्षरं पुष्करेक्षणम्
शरण्यं शरणं भक्त्या प्रपद्ये भक्तवत्सलम् ॥ ६५ ॥

त्रिविक्रमं त्रिलोकेशं सर्वेषां प्रपितामहम् ।
योगात्मानं महात्मानं प्रपद्येऽहं जनार्दनम् ॥ ६६ ॥

[1]आदिदेव[2]मजं शम्भुं व्यक्ताव्यक्तं सनातनम् ।
नारायणमणीयांसं प्रपद्ये ब्राह्मणप्रियम् ॥ ६७ ॥

एकाय लोकत्राणाय परतः परमात्मने ।
नमस्सहस्रशिरसे अनन्ताय महात्मने ॥ ६८ ॥

नमस्ते पुण्डरीकाक्ष भक्तानामभयप्रद ।
सुब्रह्मण्य नमस्तेऽस्तु पाहि मां शरणागतम् ॥ ६९ ॥

सूतः —

एवं स्तुतस्स भगवान् [3]वैकुण्ठः फुल्ललोचनः ।
अजामिलस्य परमं अमुष्यामोघसंस्तवम् ॥ ७० ॥

---

[1] 'आदिदेश' इति सर्वमातृकापाठः असाधुरिति भाति । [2] महाशम्भुं (क ख घ च)
[3] श्रीवैकुण्ठजनार्दनः (ग)

प्रीतिमानभवद्विप्राः श्रुत्वा [1]चक्रगदाधरः ।
सान्निध्यं कल्पयामास वैकुण्ठस्तस्य लोकधृक् ॥ ७१ ॥

[2]एवं स विप्लावितसर्वधर्मा
दास्याः पतिः पतितो [3]गृह्यकर्मा ।
निपत्यमानो निरये हतव्रतः
सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥ ७२ ॥

## विष्णुनामग्रहणान्मुक्तानां निरूपणम्

सर्वात्मेति महाविष्णुं भावयन्भावितान्तरः ।
[4]प्रपेदे तत्प्रसादेन प्रह्लादः परमं पदम् ॥ ७३ ॥

[5]तिर्यग्योनौ प्रसूतोऽपि स्मृत्वा विष्णुपदाम्बुजम् ।
महतीमापदं लोके गजेन्द्रश्च [6]ततार सः ॥ ७४ ॥

[7]चित्रमालेति या कन्या वारस्त्रीतनया पुरा ।
[8]तपसा विष्णुमाराध्य सा लेभे गतिमुत्तमाम् ॥ ७५ ॥

इत्येवं बहवः पूर्वं नारायणपरायणाः ।
निर्धूताखिलपाप्मानः प्राप्नुवन्ति [9]परां गतिम् ॥ ७६ ॥

---

[3] गर्ह्यकर्मणा इति भागवतपठितं साध्विति भावयामि । गर्ह्यकर्मेति युक्तियुक्तं स्यात् ।

[7] चित्रमालाविषये कापि कथा निरूपणं वा न लब्धम् ।

[9] पूर्वं प्राप्नुवन्ति । प्रापुरिति ।

---

[1] स्तोत्रं गदा (ग) [2] 'सूतः' इति पूर्वम् (च) [4] प्रापदे (ग) [5] गीर्यमाणो (क ख ग च) वार्यमाणो (च) [6] ततोरगः (क) [8] तनया (ग)

किं ब्रूमो विष्णुभक्तानां माहात्म्यमनया गिरा ।
येषां सन्दर्शनादेव पापात्मापि विमुच्यते ॥ ७७ ॥

यश्चेदं शृणुयान्नित्यं सर्वदा प्रयतः शुचिः ।
न चैव नरकं याति [1]नेक्ष्यते यमकिङ्करैः ॥ ७८ ॥

इति श्रीमत्पुराणसारे विष्णुभक्तिनिरूपणं नाम
द्विचत्वारिंशोऽध्यायः

[1] याति वैकुण्ठमुत्तमम् (ग)

## त्रिचत्वारिंशोऽध्यायः

[ देवताभक्तिप्रकरणे शाक्तेयीभक्तिनिरूपणम् ]

### माहेश्वरीभक्तिवर्णनम्

सूतः —

[1]अधुना सम्प्रवक्ष्यामि शाक्तेयीं भक्तिमुत्तमाम् ।
अवाप्यते यत्प्रसादादैहिकामुष्मिकं फलम् ॥ १ ॥

पुरा पितामहे[2]नोक्तां मेरुपृष्ठे[3] सुशोभने ।
रहस्यमेतद्विज्ञानं गोपनीयं विशेषतः ॥ २ ॥

[4]सांख्यानां परमं साङ्ख्यं ब्रह्मविज्ञानमुत्तमम् ।
संसारार्णवमग्नानां जन्तूनामेकमोचनम्[5] ॥ ३ ॥

[6]या सा माहेश्वरी [7]भक्तिः [8]ज्ञानरूपाऽतिलालसा ।
योगसंज्ञा परा काष्ठा सेयं हैमवती परा ॥ ४ ॥

शिवा सर्वगताऽनन्ता गुणातीता तु निष्कला ।
एकाऽनेकविभागस्था ज्ञानरूपाऽतिनिर्मला ॥ ५ ॥

एका माहेश्वरी शक्तिरनेकोपाधियोगतः ।
परापरेण रूपेण क्रीडते तस्य सन्निधौ ॥ ६ ॥

---

[5] एकमोचनं, एकमेव संसारमोचनं, मोक्षसाधनमिति । [6] कूर्मपुराणात्सङ्गृहीतोऽयं स्तोत्रभागः । कू.पु. देवीमाहात्म्याध्यायः १२

---

[1] अथातः (ग) [2] नोक्तं (ख ग घ च) [3] मेरुपृष्ठं (ख ग घ च)
[4] शुशोभन (ख ग घ च) [5] आख्यानं (क ख घ च) [8] शक्तिः (ग)
[9] क्रीडते तस्य सन्निधौ (ग) ज्ञानरूपातिलालसा (च)

[1]सोऽयं करोति सकलं तस्याः कार्यमिदं जगत् ।
न कार्यं नापि करणमीश्वरस्येति सूरयः ॥ ७ ॥

तस्य सर्वजगत्सूतिः शक्तिर्मायेति विश्रुता ।
तयेदं [2]भ्राम्यते ईशो मायावी स महेश्वरः ॥ ८ ॥

एका सर्वगताऽनन्ता केवला निष्कला शिवा ।
एका शक्तिः शिवैकोऽपि[3] शक्तिमान् प्रोच्यते [4]शिवः ॥ ९ ॥

[5]शक्तिशक्तिमतोर्भेदं वदन्त्यपर[6]मार्थकम् ।
अभेदं चानुपश्यन्ति योगिनस्तत्वचिन्तकाः ॥ १० ॥

## शिवशक्त्योरभेदनिरूपणम्

यथा शिवस्तथा देवी यथा देवी तथा शिवः ।
नानयोरन्तरं विन्द्याच्चन्द्रचन्द्रिकयोरिव ॥ ११ ॥

उमाशङ्करयोर्भेदं ये पश्यन्ति नराधमाः ।
अधोमुखोर्ध्वपादास्ते यास्यन्ति नरकार्णवम् ॥ १२ ॥

## शक्तेर्विश्वात्मकत्वनिरूपणम्

आद्या सैका पराशक्तिश्चिन्मयी शिवसंश्रया ।
महामाया च माया च प्रकृतिस्त्रिगुणा[7]त्मिका ॥ १३ ॥

---

[1] सोऽयमिति महेश्वरः यद्यत्करोति तस्य सर्वस्यापि कार्यं जगच्छक्त्यधीनमिति ।
[3] सन्धिरार्षः । [6] वक्तव्यश्च भेदः न सत्यः । आभासकः । परमार्थेन शिवभक्त्योः भेद एव नास्तीत्यर्थः ।

---

[2] भ्रामयन्तीशो (ग) [4] बुधैः (च) [5] शिवशक्ति (च) [6] मार्थतः (ग च)
[7] त्मिकाः (च)

[1]लक्ष्मीवागादि[2]रूपेण शिवा खलु [3]शिवात्मिका ।
नर्तकीवा[4]न्गिरा नित्यमचिरादेव सिध्यति ॥ १४ ॥

या सा वर्णस्वरूपेण मातृकेति विजृम्भते ।
महाविद्या महामाया महामेधा महास्मृतिः ॥ १५ ॥

महामोहा भगवती महादेवी महेश्वरी ।
एषा सर्वेश्वरी देवी सर्वभूता[5]प्रवर्तिका ।
ब्रह्मा विष्णुर्हर[6]श्चापि गीयते वेदवादिभिः ॥ १६ ॥

रुद्रस्य रौद्री सा शक्तिः विष्णोर्वै वैष्णवी[7]मता ।
ब्रह्माणी ब्रह्मणः प्रोक्ता इन्द्रस्यैन्द्रीति कथ्यते ॥ १७ ॥

किमत्र बहुनोक्तेन यद्विश्वमिति निश्चितम् ।
शक्त्यात्मनैव तद्व्याप्तं यथा देहान्तरात्मना ॥ १८ ॥

उपासते ये परमां सर्वलोकैकमातरम् ।
तेऽभीष्टं सकलं यान्ति विद्यां मुक्तिप्रदामपि ॥ १९ ॥

अस्या एव प्रभावेण ब्रह्मेन्द्रादिविभूतयः ।
अनया रहितं सर्वमसदेव न सद्भवेत् ॥ २० ॥

एतामेव समाराध्य श्रद्धया सह [8]वैदिकाः ।
लभन्ते काङ्क्षितं सर्वं नान्यथा मुनिपुङ्गवाः ॥ २१ ॥

शैवा भागवतास्तेषामुपभेदावलम्बिनः ।
[9]यस्या आराधनेनैव लभन्ते[10]ऽभीप्सितं फलम् ॥ २२ ॥

---

1 लक्ष्मीनागा (क ख ग घ) 2 रूपैषा (ग) 3 मुनीश्वराः (ग) 4 वानया (ग)
5 प्रवर्तकी (च) 6 श्चैव (ग) 7 स्मृता (च) 8 वैदिकीम् (क ख घ च)
9 यस्यामाराधनेनैव (क) आराधनेन तस्याश्च (ख) यस्या नारा (ग)
10 का क्षितं (च)

[1]दैगम्बरा तथा बौद्धा अपभ्रंशावलम्बिनः ।
[2]यस्या आराधनेनैव लभन्ते[3]ऽभीप्सितं फलम् ॥ २३ ॥

यथा यथा शिवा[4]मेकां यो वा को वाऽऽदरेण तु ।
आराधयति [5]सोऽभीष्टं लभते फलमास्तिकाः ॥ २४ ॥

करुणासागरं चैतां यः पूजयति शङ्करीम् ।
किन्न सिध्यति तस्येष्टं तस्या एव प्रसादतः ॥ २५ ॥

## शक्तिपूजामाहात्म्यकथने सुरथराजकथा

अस्मिन्नर्थे पुरावृत्तं कथयामि निबोधत ।
[6]स्वारोचिषेऽन्तरे पूर्वं चैत्रवंशसमुद्भवः ।
सुरथो नाम राजाऽभूत्समस्ते क्षितिमण्डले ॥ २६ ॥

तस्य पालयतस्सम्यक्प्रजाः पुत्रानिवौरसान् ।

## शत्रुभिस्सुरथस्य पराजयः तस्य वनगमनं च

बभूवुश्शत्रवो भूपाः [7]कोलाविध्वंसिनस्तदा ॥ २७ ॥

तस्य तैरभवद्युद्धमतिप्रबलशत्रुभिः ।
न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः ॥ २८ ॥

---

[1] दैगम्बराः दिगम्बरव्रतनिष्ठाः । जैनमतावलम्बिनः श्वेताम्बरेतराः ।

[6] इयं कथा मार्कण्डेयपुराणादुद्धृता । मा.पु. अ. ७८

[7] को ब्रह्मा, अः विष्णुः उः महेश्वरः तान् अर्चयितुं गृह्णन्तीति कोमा ब्राह्मणादयः तान् आसमन्तात् विध्वंसयन्तीति कोलाविध्वंसिनः रक्षोयोनयः । अथ वा कोलाः शूकरादयः तान् विध्वंसयन्तीति यवनाः ।

(मा.पु. व्याख्यानम्)

---

[2] यस्यामाराधने (क) [3] कांक्षितं (च) [4] मेतां (ग) [5] याभीष्टं (क)

आक्रान्तस्स महाभागस्तैस्तदा प्रबलारिभिः ।
एकाकी हयमारुह्य जगाम गहनं वनम् ॥ २९ ॥

स तत्राश्रममद्राक्षी[1]द्द्विजवर्यं सुमेधसः ।
तस्थौ किञ्चित्स कालं तु मुनिना तेन सत्कृतः ॥ ३० ॥

तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श ह ।
स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेऽत्र कः ॥ ३१ ॥

### वने वैश्येन साकं सुरथस्य संवादः

इत्याकर्ण्य वचस्तस्य भूपतेः [2]प्रणयोदितम् ।
प्रत्युवाच स तं वैश्यः प्रश्रयावनतो भृशम् ॥ ३२ ॥

समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले ।
[3]पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ॥ ३३ ॥

वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ।
यैस्सन्त्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः ॥ ३४ ॥

[4]प्रीतिं स्वजनहार्दिं च हार्दि तेष्वेव मे मनः ।
किमेत[5]न्नाभिजानामि जानन्नपि महामते ।
यत्प्रेमप्रवणं चित्तं [6]विगुणेष्वेव बन्धुषु ॥ ३५ ॥

---

[1] द्विज इति संबुद्धिः वर्य इति राजविशेषणम् (मा.पु. व्याख्यानम्)

[3] 'निरस्तश्च' इति मार्कण्डेयपुराणपाठः अत्र स्वीकृतः साधुः ।

[4] यैः पितृस्नेहादिकं त्यक्त्वाहं वनवासी संभूतः तैस्साकं मम मनः इदानीमपि स्नेहयुक्तमेव वर्तते किं करोमीति तस्य जिज्ञासा ।

---

[2] ब्राह्मणोदितम् (च) [2]

[3] 'निरस्तस्य' इति सर्वमातृकापाठः अयुक्तः

[5] नाव (घ) [6] विगुणेष्वपि (ग च)

[1]ततस्तौ सहितौ विप्रास्तं मुनिं समुपस्थितौ ।
उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥ ३६ ॥

**संसारममत्वविषये ऋषिं प्रति सुरथकृतः प्रश्नः**

[2]राजा —

भगवन् त्वामहं द्रष्टुमिच्छाम्येकं वदस्व तत् ।
दुःखाय यन्मे मनसि [3]स्वचित्तायत्ततां विना ॥ ३७ ॥

ममत्वं हतराज्यस्य राज्याङ्गेष्वखिले[4]ष्वपि ।
[5]जानतोऽपि यथाऽज्ञस्य किमेतन्मुनिसत्तम ॥ ३८ ॥

अयं निराकृतः पुत्रैर्दारैर्भृत्यै[6]स्तथोज्झितः ।
[7]स्वजनेन च सन्त्यक्तः तेषु हार्दि तथाप्यति ॥ ३९ ॥

[8]एवमेव तथाहं च द्वावप्यत्यन्तदुःखितौ ।
दृष्टा दोषेऽपि विषये ममत्वाकृष्टमानसौ ॥ ४० ॥

तत्केनैतन्महाभाग यन्मोहो [9]ज्ञानिनामपि ।

**ऋषिणा मायां प्रति मोहस्य कारणता प्रतिपादनम्**

ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे ॥ ४१ ॥

विषयाश्च महाभाग यान्ति चैवं पृथक्पृथक् ।
ज्ञानिनो मनुजास्सत्यं किमु तेन हि केवलम् ॥ ४२ ॥

[10]यतो हि ज्ञानिनस्सर्वे पशुपक्षिमृगादयः ।
पुरुषेषु च सा बुद्धिः सा सा भवति शोभना ॥ ४३ ॥

---

[1] अत्रादौ सूतः इति 'ग-च' मातृकयोः । [2] राजोवाच (ग) [3] सच्चित्ता (ग)
[4] पु च (ग) [5] जानतोपयथा (क ख घ च) [6] स्ततोक्षितः (क ख ग)
[7] स्वजनैरपि (च) [8] एवमुक्तस्तथा (ख) [9] ज्ञानिनोरपि (ग) [10] यथा (च)
[11] पुरुषे बुद्धि (ग)

[1]हृष्यन्ति च जनास्सर्वे प्रज्ञया च स्वया स्वया ।
[2]तथापि [3]ममतागर्ते मोहगर्ते निपातिताः ॥ ४३ ॥

महामायाप्रभावेण संसारस्थिति[4]कारिणः ।
[5]तन्मात्र विस्मयः कार्यो महामाया दुरत्यया ॥ ४५ ॥

ज्ञानिनामपि चेतांसि देवी भगवती [6]हि सा ।
बलादाकृष्य मोहाय महामाया [7]प्रयच्छति ॥ ४६ ॥

तया विभ्राम्यते [8]सर्वं जगदेतच्चराचरम् ।
[9]सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥ ४७ ॥

राजा —

भगवन् का हि सा देवी महामायेति [10]यां भवान् ।
ब्रवीति कथमुत्पन्ना कर्म चास्याश्च किं द्विज ॥ ४८ ॥

## मायारूपकथनम्

ऋषिः —

नित्यैव सा [11]जगत्सूतिः तया सर्वमिदं [12]जगत् ।
देवानां कार्यसिध्यर्थमाविर्भवति सा सदा ॥ ४९ ॥

उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ।
[13]तथा त्वमेष वैश्यश्च तथैवान्ये विवेकिनः ।

---

[13] इतःपरं स्थितः कथाभागः मार्कण्डेयपुराणे ९० तमेऽध्याये दृश्यते । अस्मात् पूर्वं मार्कण्डेयपुराणे चण्डमुण्डरक्तबीजासुरादीनां वधोऽभिहितः ।

---

[1] कृष्यन्ति (क ख ग घ च) [2] तयापि (च) ममतापतौ (ग) [3] कारिणी (क ख ग घ)
[4] तस्मांत्र (क) तस्मान्त (च) [5] शिवा (ग) [6] दुरत्यया (च) [7] विश्वं (ग)
[8] सैव (ग) [9] या (क ख घ च) [10] जगन्मूर्तिः (ग) [11] ततम् (ग)

[1]मुह्यन्ति मोहिताश्चैव मोहमेष्यन्ति चापरे ॥ ५० ॥
तामुपेहि महाभाग शरणं परमेश्वरीम् ।
कपर्दिनीं चतुर्वक्त्रां त्रिणेत्रामतिलालसाम् ॥ ५१ ॥
[2]अष्टहस्तां विशालाक्षीं चन्द्रावयवभूषणाम् ।
निर्गुणां सगुणां साक्षात्सदसद्व्यक्तिवर्जिताम् ॥ ५२ ॥
अनन्तशक्तिरूपां तां स्वेच्छाविग्रहधारिणीम् ।
[3]आराधिता सैव नृणां[4] भोगस्वर्गापवर्गदा ॥ ५३ ॥

## वैश्यसुरथकृततपसाऽम्बाप्रादुर्भावः

सूतः —

इति तस्य वचः श्रुत्वा सुरथ[5]स्स नराधिपः ।
प्रणिपत्य महाभागं तमृषिं शंसितव्रतम् ॥ ५४ ॥
जगाम वैश्यस्तरसा स च राजा [6]महामतिः ।
संदर्शनार्थमम्बाया नदीपुलिनमास्थितौ ॥ ५५ ॥
तौ तस्मिन्पुलिने कृत्वा देव्या मूर्तिं [7]महीमयीम् ।
[8]अर्हणां चक्रतुस्तस्या गन्ध[9]धूपादितर्पणैः ॥ ५६ ॥
निराहारौ यताहारौ तन्मनस्कौ जितेन्द्रियौ ।
ददतुस्तौ [10]बलिञ्चैव निजगात्रासृगुक्षितम्[11] ॥ ५७ ॥

---

[1] पूर्वमिदानीमुत्तरत्र मुह्यन्तीत्यर्थः । [7] मृण्मयीमित्यर्थः । [8] अर्हणा पूजा ।
[10] बलश्चैवेति सर्वमातृकापाठः । बलिमिति मार्कण्डेयपुराणस्थः पाठः समीचीन इति भाति अतस्स आदृतः । [11] आत्मनः देहस्थ रक्तप्रोक्षणरूप बलिमिति ।

---

[1] मोह्यन्ते (क ख घ च) [2] अष्टवक्त्रां (क ख घ च) [3] आराधितश्चैव (क) आराधिताश्चैव (घ) [4] चैत्र (ग) [5] स्सु (ग) [6] महामुनिः (ग)
[7] महीपतिः (च) [9] धूपाग्नि (ग)

एवं समाराधयतोः महादेवी निरञ्जना ।
[1]परितुष्टा जगद्धात्री स्वस्वरूपमदर्शयत् ॥ ५८ ॥

कोटिसूर्यप्रतीकाशं कालानलशतोपमम् ।
दंष्ट्राकरालदुर्धर्षं जटामण्डलमण्डितम् ॥ ५९ ॥

[2]त्रिशूलवरहस्तञ्च घोररूपं भयानकम् ।
प्रशान्तसौम्यवदनमनन्ताश्चर्यसंयुतम् ॥ ६० ॥

चन्द्रावयवलक्ष्माणं चन्द्रकोटिसमप्रभम् ।
महेन्द्रोपेन्द्रयोगीन्द्रैर्वन्द्यममानपदाम्बुजम् ॥ ६१ ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
[3]शङ्खचक्रगदासौम्यं त्रिणेत्रं कृत्तिवाससम् ॥ ६२ ॥

सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
दृष्ट्वा तदीदृशं रूपं देव्या माहेश्वरं परम् ॥ ६३ ॥

विस्मयेन समाविष्टौ देवीं तुष्टुवतुस्तदा ।

## वैश्यसुरथकृतं देवीस्तोत्रम्

राजवैश्यौ —

अद्य नौ सफलं जन्म अद्य नौ सफलं तपः ॥ ६४ ॥

[4]यन्नौ साक्षात्त्वमव्यक्ता प्रसन्ना दृष्टिगोचरा ।
त्वया सृष्टं जगत्सर्वं [5]प्रधानाद्यं[6] त्वयि स्थितम् ॥ ६५ ॥

---

[1] एतदनन्तरस्थो भागः मार्कण्डेयपुराणे न दृश्यते । [4] नौ आवयोरिति षष्ठी । [5] प्रधानादिसर्गः ।

---

[2] त्रिशूलधर (ग) [3] शङ्खचक्रधरं (ग) [5] प्रसन्नाद्यं (क ख घ च)

वदन्ति केचित्त्वामेव प्रकृतिं प्रकृतेः पराम् ।
[1]अपरे परमार्थज्ञाः शिवेति शिवसंश्रयात् ॥ ६६ ॥

त्वयि प्रधानं पुरुषो महान् ब्रह्मा तथेश्वरः ।
अविद्या नियतिर्माया कालाद्या [2]शक्तयोऽभवन् ॥ ६७ ॥

त्वं हि सा परमा शक्तिरनन्ता परमेष्ठिनी ।
सर्वभेदविनिर्मुक्ता सर्वभेदाश्रया निजा ॥ ६८ ॥

त्वामधिष्ठाय योगीशो महादेवो महेश्वरः ।
प्रधानाद्यं जगत्कृत्स्नं करोति विकरोति[3] च ॥ ६९ ॥

[4]त्वयैव [5]संगतो देवः [6]सदानन्दं समश्नुते ।
त्वमेषा परमानन्दा त्वमेवानन्ददायिनी ॥ ७० ॥

स श्लाघ्यस्स गुणी धन्यः स कुलीनस्स बुद्धिमान् ।
स शूरस्स च विक्रान्तो यस्त्वया देवि वीक्षितः ॥ ७१ ॥

त्वमक्षरं परं व्योम परं ज्यौतिर्निरञ्जनम् ।
शिवं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम् ।
सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि ॥ ७२ ॥

रूपं तवाशेषकलाविहीन
मगोचरं निर्मलमेकरूपम् ।
अनादिमध्यान्तमनन्तमाद्यं
नमामि सत्यं तमसः [7]परस्तात् ॥ ७३ ॥

---

[3] विकरणं विनाशः प्रकृतेर्विभिन्नतासंपादनम् । [8] तमसः दूरे प्रकाशमयमिति ।

---

[1] अपारपरमार्थज्ञाः (क ख च) अपारमर (घ) [2] शाक्तवो भवन् (क ख) [4] त्वयेव सुमतो .... त्वभश्नुते (क) [5] संमतो .... त्वमश्नुते (घ) [6] सदानन्दत्व(च)[7] पुरस्तात् (घ)

ओंनमस्तेऽस्तु महादेवि नमस्ते परमेश्वरि ।
नमो भगवतीशानि शिवायै ते नमो नमः ॥ ७४ ॥

एवं स्तुता तदा देवी ततस्सा व्याजहार ह ।

### नृपवैश्याभ्यां देवीकृतं वरदानम्

देवी —

यत्प्रार्थ्यते त्वया भूप त्वया च कुलनन्दन ।
मत्तस्तत्प्राप्यतां सर्वं परितुष्टा [2]ददामि च ॥ ७५ ॥

सूतः —

ततो वव्रे नृपो राज्यं [3]हतशत्रुबलं बलात्[4] ।
सोऽपि वैश्यस्तदा ज्ञानं वव्रे निर्विण्णमानसः ।
ममेत्यहमिति प्राज्ञाः सङ्गविच्युतिकारणम् ॥ ७६ ॥

देवी —

स्वल्पैरहोभिर्नृपते स्वराज्यं प्राप्स्यते भवान् ।
हत्वा रिपूनस्खलितं [5]अभयञ्च भविष्यति ॥ ७७ ॥

मृतश्च भूयस्सम्प्राप्य जन्म देवाद्विवस्वतः ।
सावर्णिको नाम मनुर्भवान् वत्स भविष्यति ॥ ७८ ॥

वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः ।
तं प्रयच्छामि तत्सिद्धौ तव ज्ञानं भविष्यति ॥ ७९ ॥

---

[4] स्वसैन्यबलेन निर्जितं यापितं वा ।

---

[1] नमो महा (क) नमस्ते (ग) [2] ददाम्यहं (च) [3] हृतशत्रुबलं बलान् (क) अविभ्रंशान्यजन्मिनि । अत्र चैव नृपं राज्यं हतशत्रुबलं बलात् इति 'ग' अधिकः पाठः
[5] भवतश्च (क ख घ च)

इति दत्वा तयोर्देवी तथाऽभिलषितं वरम् ।
बभूवान्तर्विता सद्यो भक्त्या ताभ्यामभिष्टुता ॥ ८० ॥

इत्थं देव्या वरं लब्ध्वा सुरथः क्षत्रियवर्षभः ।
सूर्याज्जन्म समासाद्य सावर्णिर्भविता [1]मनुः ।
सोऽपि वैश्यो विमुक्तात्मा ययौ मुक्तिमनुत्तमाम् ॥ ८१ ॥

य इदं शृणुयान्नित्यं [2]श्रावयेद्वा समाहितः ।
न [3]तस्य दुष्कृतं किञ्चिद्दुष्कृतोत्था[4] न चापदः ॥ ८२ ॥

इति श्रीमत्पुराणसारे शक्तिभक्तिकथनं नाम
त्रिचत्वारिंशोऽध्यायः

---

[4] पापजन्या आपदो न भवन्तीत्यर्थः ।

---

[1] मुनिः (क ख य च) [2] पठेद्वा यस्स (ग) [3] तेषां (क ख घ च)

## चतुश्चत्वारिंशोऽध्यायः

[देवताभक्तिप्रकरणे सूर्यभक्तिनिरूपणम्]

### सूर्यभक्तिप्रशंसा । सूर्यपरिभ्रमणकारणनिरूपणम्

सूतः —

अधुना संप्रवक्ष्यामि भानुभक्तिमनुत्तमाम् ।
यस्य प्रसादादखिलं सञ्जीवति [1]चराचरम् ॥ १ ॥

[2]तपोयोगादिभि[3]र्युक्तैर्जन्मान्तरशतार्जितैः ।
जायते [4]भास्करे भक्तिस्त्रिगुणात्मनि देहिनाम् । ॥ २ ॥

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः
महेन्द्रो धनदः कालो यमः सोमो[5]ऽप्यपां पतिः । ॥ ३ ॥

पितरो वसवस्साध्या अश्विनो मरुतो मनुः
नक्षत्रग्रहताराणामधिपो विश्वभावनः । ॥ ४ ॥

धर्मध्वजो वेदकर्ता वेदाङ्गो वेदभावनः
[6]भूताश्रयो भूतपतिः पिता माता पितामहः । ॥ ५ ॥

[7]ऋचः स्तुवन्ति पूर्वाह्णे मध्याह्नेऽथ यजूंषि च
बृहद्रथन्तरादीनि सामान्यह्नः क्षये रविम् ॥ ६ ॥

पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशम् ।
ततोऽनुकम्पया तेषां सविता स्वपिता यथा ॥ ७ ॥

गत्वोत्तरायणमजो लोकानुद्धृत्य रश्मिभिः ।
दक्षिणायनमावृत्तो महीं वर्षति वारिभिः ॥ ८ ॥

---

[1] चराचरः (क ख घ च) [2] ततो (च) [3] पुण्यैः (ग) [4] भास्करी (क ख ग घ)
[5] ह्यपां (ख घ) [6] भूमा (ग) [7] एवं (क ख घ च)

ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि ।
तेन प्रीणात्यशेषाणि भूतानि भगवान् रविः ॥ ९ ॥

सूर्यरश्मिस्सुषुम्नो यस्तर्पितस्तेन चन्द्रमाः ।
कृष्णपक्षेऽमरैःशश्वत्पीयते वै सुधामयः ॥ १० ॥

पीतं तं द्विकलं सोमं कृष्णपक्षक्षये द्विजाः ।
पिबन्ति पितरस्तेषां भास्करात्तर्पणं तथा ॥ ११ ॥

पितृदेवमनुष्यादीनेवमाप्याय[1]यन् प्रभुः ।
परिवर्तयत्यहोरात्रकारणं [2]सर्वतो द्विजाः ॥ १२ ॥

### सूर्यभक्तिमाहात्म्यनिरूपणे राज्यवर्धनकथा

[3]श्रूयतामादिदेवस्य माहात्म्यं कथयामि वः ।
दमपुत्र इति [4]ख्यातो राजाऽभूद्राज्यवर्धनः ॥ १३ ॥

स सम्यक्पालनं चक्रे [5]पृथिव्या वसुधाधिपः ।
स्वधर्मस्याविरोधेन बुभुजे विषयान्बहून् ॥ १४ ॥

तस्यैवं कुर्वतो राज्यं सम्यक्पालयतः प्रजाः ।
सप्तवर्षसहस्राणि जग्मुरेक[6]महर्यथा ॥ १५ ॥

---

[3] इयं कथा मार्कण्डेयपुराणात्समुद्धृता । मा.पु. अध्यायः १०६

[5] 'वसुधां' इति सर्वमातृकापाठः न सङ्गच्छतेऽत्र । अतः मार्कण्डेयपुराणगतः 'पृथिव्याः' इति पाठः संयोजितः । [6] 'अहर्यथेति' मार्कण्डेयपुराण पाठः समादृतः । अहो यथेति मातृकापाठः ।

---

[1] तं भुवि (ग) [2] सवितुर (क) [4] ज्ञातो (क ख ग घ)

### वृद्धावस्थाप्रविष्टं राजानं वीक्ष्य राज्ञ्याः सन्तापः

विदूरथस्य तनया दाक्षिणात्यस्य भूपतेः ।
तस्य पत्नी बभूवाथ कामिनी नाम मानिनी ॥ १६ ॥

कदाचित्तस्य सा सुभ्रूः शिरस्यभ्यञ्जनोद्यता ।
पश्यतो राजलोकस्य मुमोचाश्रूणि मानिनी ॥ १७ ॥

तदा वीक्ष्याश्रुवदन[1]मपृच्छत स मानिनीम् ।
निश्शब्दमश्रु[2]पातेन रुदन्तीं तां विलोक्य वै ॥ १८ ॥

किमेतदिति पप्रच्छ मानिनीं राज्यवर्धनः ।
बहुशः पृच्छतस्तस्य [3]भूभृतस्सा सुमध्यमा ॥ १९ ॥

दर्शयामास पलितं केशभारान्तरोद्भवम् ।
[4]एतत्पश्येति भूपाल [5]किमन्यत् [6]मृत्युकारणम् ॥ २० ॥

### राज्ञा सन्तापस्य निर्हेतुताप्रतिपादनम्

स विहस्याब्रवीत्पत्नीं शृण्वतां सर्वभूभृताम् ।
शोकेनालं विशालाक्षि रोदितव्यं न ते शुभे ॥ २१ ॥

जन्मर्द्धिपरिणामाद्या [7]विकाराः सर्वजन्तुषु ।
[8]भुक्ता भोगास्त्वया सार्धं येन मर्त्येन दुर्लभाः ॥ २२ ॥

---

[4] 'पश्येत' इति सर्वमातृकासु दृश्यमानं 'पश्येति' इति विपरिवर्तितम् ।
[7] परिणामो वार्धकम् ।

---

[1] मपश्यत्तां नराधिपः (क ख ग घ) [2] मोचेन (क ख घ च) [3] भूपतेः (ग)
[5] किमर्थं (क ख घ च) [6] मन्युकारणम् (ग) [7] विकारां (क ख ग घ च)
[8] भुक्त्या (क ख ग घ)

[1]सा सम्यक्पालिता पृथ्वी साधु युद्धेष्वनुष्ठितम् ।
किमस्ति न कृतं भद्रे पलितेभ्यो बिभेषि तत् ॥ २३ ॥

बाल्ये बालक्रिया पूर्वं तद्वत्कौमारकेऽपि या ।
यौवने विषया योग्या वार्धके वनसंश्रयः ॥ २४ ॥

एवं मत्पूर्वकैर्भद्रे कृतं त्वत्पूर्वकैश्च यत् ।
ततो न तेऽश्रुपातस्य किञ्चित्पश्यामि कारणम् ॥ २५ ॥

सप्तवर्षसहस्राणि मयेयं पालिता मही ।
इदानीं वनवासस्य मम कालोऽयमागतः ॥ २६ ॥

यदेतत्पलितं मूर्ध्नि तद्विजानीत नागराः ।
दूतभूतमनार्यस्य मृत्योरत्युग्रकर्मणः ॥ २७ ॥

ततो यियासुस्स वनं दैवज्ञमवनीपतिः ।

**जरापलितत्वं संलक्ष्य राज्ञः वनागमननिश्चयः**

पुत्रं राज्याभिषेकाय यदा लग्नान्यपृच्छत ॥ २८ ॥

तदा संश्रुत्य नृपतेः वचो व्याकुलचेतसः ।
सर्वेऽमात्याश्च वृद्धाश्च भृत्याः पौरास्तथा[2] द्विजाः ।

**राज्ञः आयुवृद्ध्यै प्रजाकृतं सूर्याराधनम्**

समेत्य मन्त्रयामासुः किमत्र क्रियतामिति ॥ २९ ॥

तेषां मन्त्रयतां विप्रा निश्चयोऽयमजायत ।
तपसाऽऽराध्य भास्वन्तमायुरस्य महीपतेः ।
सत्यधर्मरता भूत्वा प्रार्थयामस्समाहिताः ॥ ३० ॥

अत्रैकनिश्चयास्सर्वे केचिद्देहेषु भास्करम् ।
सम्यक्पुष्पोपहाराद्यैरुपचारैरपूजयन् ॥ ३१ ॥

---

[1] स (क ख ग घ) [2] स्तदा (च)

अपरे मौनिनो भूत्वा [1]ऋग्जप्येन तथाऽपरे ।
[2]यजुषामथ साम्नां च तोषयाञ्चक्रिरे रविम् ॥ ३२ ॥

अपरे च निराहारा नदीपुलिनशायिनः ।
तपसा[3]चक्रुरायत्ता भास्कराराधनं द्विजाः ॥ ३३ ॥

अग्निहोत्रपराश्चैव रविसूक्तमहर्निशम् ।
जेपुस्तथान्ये [4]सन्तेपुर्भास्करे न्यस्तदृष्टयः ॥ ३४ ॥

इत्येवमतिनिर्बन्धं भास्कराराधनं प्रति ।
बहुप्रकारं चक्रुस्ते तं तं विधिमुपस्थिताः[5] ॥ ३५ ॥

पुष्पानुलेपनाद्यैश्च धूपगन्धादिकैस्तथा ।
जपहोमान्न[6]दानाद्यैः [7]पूजामतिसमाहिताः ।
कुर्वन्तस्तुष्टुवु[8]र्विप्रा विवस्वन्तं द्विजातयः ॥ ३६ ॥

## प्रजाकृतं भास्करस्तोत्रम्

देवदानवयक्षाणां ग्रहाणां ज्योतिषामपि ।
तेजसा ह्यधिकं देवं व्रजाम शरणं [9]हरिम् ॥ ३७ ॥

---

[5] मार्कण्डेयपुराणानुसारं सुदामनाम्नो गन्धर्वस्यादेशानुसारं भास्करं विशेषत स्तोषयितुं प्रजाः गुरुविशालवनस्थं कामरूपमहाशैलं प्रति गच्छन्ति । तदनन्तरं पुष्पानुलेपनाद्यैश्चेत्यादिकथा क्रमते । [9] मार्कण्डेयपुराणे रविमिति पाठो दृश्यते । हरिरिति पदं सूर्य इत्यर्थे भागवते दृश्यते । 'एवं स्तुतः स भगवान् वाजिरूपधरो हरिः' । भाग १२-६-७३

---

[1] ऋजाप्येनं (क ख घ) ऋग्जापेन (च) [2] गजुषां च तथा (च) [3] चक्रुरा यत्ना (ग)
[4] संतस्थुः (ग) [6] दीपाद्यैः दानैश्च (च) [7] पूजां प्रति (ग) पूजामथ (च)
[8] श्चैव (ग)

दिवि स्थितं च देवेशं द्योतयन्तं समन्ततः ।
वसुधामन्तरिक्षं च व्याप्नुवन्तं मरीचिभिः ॥ ३८ ॥

आदित्यं भास्करं भानुं सवितारं दिवाकरम् ।
पूषाणमर्यमाणञ्च स्वर्भानुं दीप्तदीधितिम् ॥ ३९ ॥

[1]चतुर्युगान्तकालाग्निं दुष्प्रेक्षं प्रलयान्तकम् ।
योगीश्वरमनन्तञ्च रक्तं पीतं सितासितम्[2] ॥ ४० ॥

ऋषीणामग्निहोत्रेषु यज्ञवेदिष्ववस्थितम्[3] ।
अक्षरं परमं गुह्यं मोक्षद्वारमनुत्तमम्[4] ॥ ४१ ॥

अमृतं परमं सत्यं पुण्यतीर्थं पृथग्विधम् ।
विश्वस्थितिमचिन्त्यञ्च [5]प्रपन्नाः स्म दिवाकरम् ॥ ४२ ॥

यो ब्रह्मा यो महादेवो यो विष्णुर्यः प्रजापतिः ।
वायुराकाशमापश्च पृथ्वी सगिरिसागरा ॥ ४३ ॥

ग्रहनक्षत्रताराद्याः [6]वनस्पतिलतौषधम् ।
व्यक्ताव्यक्तेषु भूतेषु धर्माधर्म[7]प्रवर्त्तकम् ॥ ४४ ॥

ब्राह्मी माहेश्वरी चैव वैष्णवी चापि ते तनुः ।
त्रिधा यस्य स्वरूपं तु सोऽस्मांत्सर्वान् [8]प्रसीदतु ॥ ४५ ॥

---

[2] भगवतस्सूर्यस्य नानावर्णमयता एभिर्विशेषणैः सूच्यते ।

[3] 'यज्ञवेदेषु' इति मातृकापाठादयं पाठः समीचीनः ।

[4] द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ 'परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः' इति स्मृत्युक्तेः अस्य मोक्षद्वारता ।

---

[1] चतुर्गुणं तत्काला (क). [5] प्रपन्नोऽस्मि (क ग च) [6] वनसत्यमथौषधम् (क ख घ च)
[7] प्रवर्तकः (क ख ग) प्रवर्तक (घ) [8] प्रसीददि (क ख ग घ)

यस्य सर्वमजस्येदं [1]अंशभूतं जगत्पतेः ।
स नः प्रसीदतां भास्वान् जगतां यश्च जीवनम् ॥ ४६ ॥

[2]यस्येदं भास्वरं रूपं प्रभामण्डलदुर्दृशम्[3] ।
द्वितीयमैन्दवं सौम्यं स नो भास्वा[4]न्प्रसीदतु ॥ ४७ ॥

[5]द्वाभ्यां यस्य तु रूपाभ्यां इदं विश्वं विनिर्मितम् ।
अग्नीषोममयं भास्वान् स नो देवः प्रसीदतु ॥ ४८ ॥

## द्विजेभ्यः सूर्यदर्शनप्राप्तिः

सूतः —

इत्थं [6]स्तुत्या तदा भक्त्या सम्यक्पूजयतां तदा ।
तुतोष भगवान् भास्वान् [7]सर्वभूतहिते रतः ॥ ४९ ॥

ततस्स्वमण्डलादुद्यन्निजबिम्बसमप्रभम् ।
अवतीर्य ददौ तेभ्यो दुर्दर्शो दर्शनं रविः ॥ ५० ॥

ततस्तं स्पष्टरूपं तु सवितारमजं जनाः ।
पुलकोद्भासिनो विप्राः भक्तिनम्राः प्रणेमिरे ॥ ५१ ॥

## सूर्येण विप्रेभ्य यथाभिलषितवरदानम्

नमो नमस्तेऽस्तु सहस्ररश्मे
सर्वस्य हेतुस्त्वमशेषहेतुः ।
पाता त्वमीड्योऽखिलयज्ञधाम
ध्येयस्तथा योगिविदां प्रसीद ॥ ५२ ॥

---

[3] दुर्दशमिति सर्वमातृकापाठः समीचीन इति न भाति । अतः दुर्दृशमिति विपरिवर्तितम् ।

---

[1] संभूतं तु (च) [2] यस्यैवं (ग) [4] प्रसीदताम् (च) [5] द्वाभ्यां स्वस्य स्वरूपाभ्या. मिदं विश्वं (ग) [6] श्रुत्वा (क) [7] सर्वलोक (ग)

## सूर्यकृपया राज्ञः यौवनलाभः

[1]ततः प्रसन्नो भगवान्भानु[2]राहाखिलं जनम् ।
व्रियतां यदभिप्रेतं मत्तः प्राप्तुं [3]द्विजोत्तमाः ॥ ५३ ॥

[4]ततस्ते प्रार्थयामासुः प्रसन्नं [5]तिमिरापहम् ।
दशवर्षसहस्राणि ततो नो [6]जीवतान्नृपः ॥ ५४ ॥

निरामयो जितारातिः सुकेशः स्थिरयौवनः ।
तथेत्युक्त्वा [7]ततो भास्वानदृश्योऽभून्मुनीश्वराः ॥ ५५ ॥

तेऽपि लब्धवरा हृष्टाः समाजग्मुर्नराधिपम् ।
यथावृत्तं च ते तस्मै नरेन्द्राय न्यवेदयन् ॥ ५६ ॥

तच्छ्रुत्वा [8]जहृषे तस्या सा पत्नी मानिनी द्विजाः ।
स तु राजा चिरं दध्यौ नाह किञ्चिच्च तं जनम् ॥ ५७ ॥

सा पुनः प्राह भर्तारं चिन्तयानमधोमुखम् ।
कस्मान्न हर्षमभ्येषि परमाभ्युदये नृप ।
कथमभ्युदयं मत्वा त्वं [9]सभाजयसे न माम् ॥ ५८ ॥

## राज्ञः असन्तोषकारणनिरूपणम्

राजा —

प्राप्तं दुःखसहस्रं मे किन्नु शोकेन शोष्यसे ।
दशवर्षसहस्राणि जीविष्याम्यहमेककः ॥ ५९ ॥

---

[1] मार्कण्डेयपुराणस्य १०६ तमाध्यायात्सङ्गृहीतोऽयं कथांशः । [8] जहृष इति पौराणिकं प्रामादिकं रूपम् । [9] सभाजनं स्वागतं, प्रशंसनं वा ।

---

[2] राहाखिलाद् जनात् (ग) [3] द्विजातयः (ग) [4] ते सर्वे (ग) [5] तिपुरा (क)
[6] जीवितां (क ख घ) [7] तदा (ग)

न वेतरविपत्तौ मे किन्नु दुःखं भविष्यति ।
पुत्रान् पौत्रान्प्रपौत्रांश्च तथान्यान्पूर्वबान्धवान् ॥ ६० ॥
[1]पश्याम्यहं मृतान् दुःखं [2]किमन्यद्धि भविष्यति ।

## प्रजायुर्वृद्ध्यर्थं राज्ञस्तपः

सोऽहमद्यप्रभृत्यस्माद्वनं गत्वा समाहितः ॥ ६१ ॥
तपस्तप्स्ये निराहारो भानोराराधनोद्यतः ।
दशवर्षसहस्राणि यथाहं स्थिरयौवनः ॥ ६२ ॥
तथा यदि प्रजास्सर्वाः भृत्यास्त्वं च सुतास्तथा ।
पौत्राः प्रपौत्राः सुहृदः तत्सूतिश्च वरानने ॥ ६३ ॥
जीवन्त्येवं प्रसादं मे करोति भगवान् रविः ।
ततोऽहं भविता राज्ये भोक्ष्ये भोगान्मुदान्वितः । ॥ ६४ ॥
इत्युक्ता सा तदा तेन तथेत्याह नराधिपम् ।
जगाम [3]च समं तेन कामरूपं महीधरम् ॥ ६५ ॥
स तदायतनं गत्वा भार्यया सह पार्थिवः ।
भानोराराधनं चक्रे शुश्रूषानिरतो द्विजाः ॥ ६६ ॥
तेपे तपस्तदैवोग्रं शीतवातातपाहतः ।
तस्य पूजयतो भानुं तप्यतश्च [4]तपो महत् । ॥ ६७ ॥
सहस्रकिरणस्सूर्यः ततस्तुष्टो विभावसुः ।
समस्तपुत्र[5]भृत्यादि पौत्राणां च कृते द्विजः ॥ ६८ ॥
ददौ यथाऽभिलषितं तस्मै प्रीतो विभावसुः ।

---

[1] पश्यतो मे मृताद्दुखं (ग) [2] किमल्पं (ग) [3] तरसा (च) [4] तपोत्तमम् (च)
[5] मित्रादि (च)

### लब्धवरेण राज्ञा प्रजाभिस्साकं चिराय राज्यपालनम्

लब्ध्वा वरं स नृपतिः[1]समुपेत्यात्मनः पुरम् ॥ ६९ ॥

यथाभिलषितं सर्वं राजा धर्मेण पालयन् ।
इयाज यज्ञान् सुबहून् ददौ दानान्यहर्निशम् ।
मानिन्या सहितो भोगान् बुभुजे [2]च स धर्मवित् ॥ ७० ॥

दशवर्षसहस्राणि पुत्रपौत्रादिभिस्सह ।
भृत्यैश्च सहितः [3]पौरैस्सोऽभवत्स्थिरयौवनः ॥ ७१ ॥

एवं दिवाकरे भक्तः स राजा राज्यवर्धनः ।
आयुषो वर्धनो जातः स्वजनस्य तथात्मनः ॥ ७२ ॥

[4]कृपाणपाणिर्भगवान् भास्करं स्तुतवान् पुरा ।
पूतो वै पापनिर्मुक्तः परां सिद्धिमवाप्तवान् ॥ ७३ ॥

[5]साम्बोऽपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनम् ।
विपाप्मा विरजाः श्रीमान् सद्यो रोगात्प्रमुक्तवान् ॥ ७४ ॥

आदिदेवस्य माहात्म्यमादित्यस्य महात्मनः ।
पठंश्च मुच्यते पापैरहोरात्रकृतैर्नरः ॥ ७५ ॥

---

[1] रसधर्मविदिति सर्वमातृका पाठं त्यक्त्वा मार्कण्डेयपुराणपाठः स्वीकृतः ' च स धर्मविदिति । [4]कृपाणः खड्गः, नन्दकः । नन्दकपाणिर्विष्णुः ।

[5] साम्बः महारूपसंपन्नः । अत एव कृष्णस्य भार्यासु कापि अस्मिन्ननुरक्ता भवेत्कदापि ' इति नारदः श्रीकृष्णं प्रत्यकथयत् । स च एनं कुष्ठरोगी भूयाः इति शशाप । साम्बः तदनु सूर्याराधनेन उल्लाघो बभूव ।

—स्कांन्दपुराणम् खण्डः ४ अ. १

---

[1] समभ्येत्या (ग) [3] पौत्रैरिति मातृकासु ।

अरोगी धनधान्याढ्यो कुले महति धीमताम् ।
जायते च महाप्राज्ञो यश्चैतद्धारयेद्धृदि ॥ ७६ ॥

समस्त[1]मस्य माहात्म्यं यस्य चायतने [2]रवेः ।
पठ्यते [4]तत्र भगवान् सान्निध्यं न विमुञ्चति ॥ ७७ ॥

तस्माद्भवद्भिर्विप्रेन्द्राः भानोर्माहात्म्यमुत्तमम् ।
धार्यं मनसि जप्यं च महत्सौख्यमभीप्सुभिः ॥ ७८ ॥

इति श्रीमत्पुराणसारे भानुभक्तिनिरूपणं नाम
चतुश्चत्वारिंशोऽध्यायः

[1] मेतत् (ग) [2] रविः (क ख घ च) [3] तस्य (चं)

## पञ्चचत्वारिंशोऽध्यायः

### देवताभक्तिनिरूपणे गणेशभक्तिनिरूपणम्

सूतः —

[1]अथ विघ्नेश्वरे भक्तिं साम्प्रतं कथयाम्यहम् ।
भवन्ति यत्प्रसादेन देहिनां [2]सर्वसिद्धयः । ॥ १ ॥

एकदा विबुधास्सर्वे पुरन्दरपुरोगमाः ।
असत्कारिषु विघ्नार्थं सर्व एव न्यमन्त्रयन् ॥ २ ॥

धर्मविघ्नं तदा कर्तुं दैत्यानां क्रूरकर्मणाम् ।
पुत्रार्थं चैव नारीणां नराणां कर्मसिद्धये । ॥ ३ ॥

ततस्तेषां [3]तदा मन्त्रं कुर्वतां तु दिवौकसाम् ।
बभूव बुद्धिर्गमने रुद्रं पति महाबलम् ॥ ४ ॥

ततस्ते रुद्रमागम्य कैलासनिलयं गुरुम् ।
विघ्नेशं शङ्करं प्रष्टुं पूजयामासु[3]रोजसा ॥ ५ ॥

ऊचुस्सविनयं सर्वे प्रणिपातपुरस्सरम् ।

देवाः —

देव देव महादेव शूलपाणे त्रिलोचन ।
[4]विघ्नार्थमवि[6]शिष्टानां विघ्नेशं स्रष्टुमर्हसि । ॥ ६ ॥

---

[1] वराहपुराणलिङ्गपुराणयोः संगृह इव दृश्यते । व.पु. अध्यायः १२, लि.पु. अध्यायः १०४ । [5] विघ्नार्थमविशिष्टानां इति वराहपुराणपाठः सुसम्बद्ध इति भाति । अतः स एवादृतः ।

---

[2] सर्वसम्पदः (ग) [3] हितं (ग) [4] रीश्वरम् (ग)
[6] शिष्यानां (ग) अवशिष्टानां (क ख घ)

एवमुक्तो महादेवस्तद्भक्त्या हृष्टमानसः ।
लीलया लोकरक्षार्थं द्विधाभूतो महेश्वरः ॥ ७ ॥

द्वैमातुराख्यया ख्यातो बभूव द्विरदाननः ।
'आत्मा वै पुत्रतां' नाम श्रुतिमन्वर्थतां नयन् ॥ ८ ॥

तं दृष्ट्वा विबुधास्सर्वे नत्वा स्तुत्वा गजाननम् ।
संपूज्य परया भक्त्या लेभिरे वाञ्छितं फलम् ॥ ९ ॥

दैत्यानां धर्मविघ्नं च चकारासौ गणेश्वरः ।
तदा प्रभृति लोकेऽस्मिन् पूजयन्ति गणेश्वरम् ॥ १० ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव तपोधनाः ।
सुगन्धपुष्पधूपाद्यैर्भक्ष्यभोज्यादिभिश्शुभैः ॥ ११ ॥

ये चैनमवमंस्यन्ति मन्तव्यमधुना नराः ।
[1]ब्रह्मदण्डहतास्ते तु निहन्तव्याः शठा इव ॥ १२ ॥

अधर्मरतयो मूढा दुश्शीला दुर्मनोरथाः ।
निर्ह्रीका निर्घृणाः स्तब्धा निर्वेदश्रवणा द्विजाः ।
अधमाः पुरुषास्ते वै [2]नियन्तव्याः शठा इव ॥ १३ ॥

तस्मिन् संपूजिते विष्णुरीशो भानुस्तथा उमा ।
हव्यवाहमुखा देवा पूजिताः स्युर्न संशयः ॥ १४ ॥

चण्डिकाद्या मातृगणा परितुष्टा भवन्ति [3]च ।
यः पूजयति विघ्नेशं सर्वविघ्नैः प्रमुच्यते ॥ १५ ॥

विद्यां श्रियं यशः [4]सौख्यं प्राप्नोत्य[5]तुलविक्रमम् ।

---

[1] ब्रह्मदण्डः ब्राह्मणशापः

---

[2] निहन्तव्याः (क ख घ ङ) [3] वै (ग) [4] शौर्यं (च) [5] विकलं सा ? (ग)

अपुत्रो लभते पुत्रं दरिद्रस्तु तथा धनम् ।
कन्यार्थी लभते कन्यां परत्र च शुभां गतिम् ॥ १६ ॥

## विघ्नेश्वरपूजामाहात्म्यकथने अविक्षितकथानकम्

श्रूयते हि पुरा राजा श्रीमान् परपुरञ्जयः ।
[1]आविक्षितो महातेजाः धर्मनित्यः प्रतापवान् ॥ १७ ॥

चतुस्सागरपर्यन्तं सहितेमां वसुन्धराम् ।
प्रशशास प्रजास्सर्वा प्रजापतिरिवापरः ॥ १८ ॥

तस्य विद्युत्प्रभा नाम भार्या परमशोभना ।
अतीव रूपसंपन्ना नयनोत्सवकारिणी ॥ १९ ॥

स यदाऽऽत्मसमं पुत्रं न लेभे यत्नवानपि ।
ततस्तीव्रं तपस्तेपे सभार्यो देविकातटे ॥ २० ॥

तमुपागम्य चाहेदं संवर्तो मुनिसत्तमः ।
किन्ते [2]च विहितं कार्यं किमर्थं तप्यते तपः ॥ २१ ॥

स एवमुक्तो राजर्षिर्यथावदभिवाद्य च ।
कृताञ्जलिपुटो भूत्वा योगीश्वरमथाब्रवीत् ॥ २२ ॥

अपुत्रोऽस्मि तथा शोच्योऽगर्वितश्च सतां प्रभो ।
तेनाहं तप आस्थाय क्लेशयिष्ये कलेवरम् ॥ २३ ॥

वृथा जन्म वृथा राज्यं वृथा च मम जीवनम् ।
वृथा श्रुतं वृथा सौख्यं अपुत्रस्याधुना मुने ॥ २४ ॥

---

[1] महाभारते अविक्षितस्य पुत्रः मरुतः इति दृश्यते । स च अविक्षितः कस्य पूजनेन पुत्रवानभूदिति मृग्यम् । म.भा. द्रोणपर्व ।

---

[1] अविष्ठितो (क) [2] विरक्षितं (ग) [3] सुखं (ग)

धन्यास्त एव लोकेऽस्मिन् सुखिनश्च सुजन्मनः ।
ये पुत्रमुखमीक्षन्ते स्वर्गद्वारमिवापरम् ॥ २५ ॥
श्रुत्वैवं वचनं धर्म्यं संवर्तस्तस्य भूपतेः ।
आराधय गणाध्यक्षमिति राजानमब्रवीत् ॥ २६ ॥
स चाप्यविक्षितो राजा पूजयामास शाङ्करिम्[1] ।
ओङ्कारममृतं ब्रह्म शिव[2]मक्षरमव्ययम् ॥ २७ ॥
ज्ञेयं दुर्ज्ञेयमद्वैतं [3]त्रयीसारं त्रिलोचनम् ।
वर्षमेकं सभार्यस्तु शुचिः प्रयतमानसः ॥ २८ ॥
पूजान्ते च महाभाग शङ्करात्मा विनायकः ।
प्रसन्नश्चाह विघ्नेशो वरं ब्रूहीति पार्थिवम् ॥ २९ ॥
स च वव्रे वरं धीमान् प्रणिपत्येदमावृतः ।
अपत्यं देहि मे देव सर्वशास्त्रार्थपारगम् ॥ ३० ॥
असंख्यातगुणं धीरं ब्रह्मभूतमकल्मषम् ।
धर्मज्ञं च महात्मानं प्रख्यात[4]कुलपौरुषम् ॥ ३१ ॥
ममापि च परं स्थानं प्रयच्छ गणनायक ।
एवमस्त्विति चोक्त्वा तु तत्रैवान्तरधीयत ॥ ३२ ॥
सोऽप्येवं तत्क्षणात् राजा स्वपत्न्या लब्धवान् सुतम् ।
मरुत्तं [5]तु महाकीर्तिमनेकक्रतुयाजकम् ।
अस्याद्यापीह गायन्ति श्लोकं वेदविदो [6]जनाः ॥ ३३ ॥

---

[1] शाङ्करिः गणेशः ।

---

[2] अक्षय (च) [3] त्रयीशास्त्रार्थपारगम् (च) [4] बल (ण) गुण (च) [5] सु (ग)
[6] द्विजाः (रा)

द्विजः —

मरुत्तः परिवेष्टारो मरुतस्यावसन् गृहे ।
आविक्षितस्य कामप्रे विश्वेदेवास्सभासदः ॥ ३४ ॥
[1]राजापि तं सुतं लब्ध्वा चक्रवर्ति[2]प्रभाविनम् ।
भुक्त्वा च विपुलान्भोगाँल्लेभे च परमां गतिम् ॥ ३५ ॥

## विघ्नेशपूजकानामन्येषां दृष्टान्तः

हयमेधस्य विघ्ने तु सञ्जाते सगरः पुरा ।
विघ्नेशपूजनेनैव पुनाश्वाश्वमुपेयिवान् ॥ ३६ ॥
[3]स्वकार्यसिद्धिदं शम्भुर्देवं दृष्ट्वा विनायकम्[4] ।
संपूज्य भक्ष्यभोज्यैश्च फलैश्च विविधैश्शुभैः ॥ ३७ ॥
मण्टपैर्मोदकैर्दिव्यैः पुष्पैश्चैव मनोरमैः ।
तथा तस्य प्रसादेन त्रिपुरं दग्धवान् पुरा ॥ ३८ ॥
भगवत्या पुरा चैव पार्वत्या पद्मया सह ।
सरस्वत्या महेन्द्रेण विष्णुना धनदेन च ॥ ३९ ॥
अन्यैश्च देवैर्मुनिभिर्गन्धर्वैः किन्नरै[5]स्तथा ।
सम्पूजितो गणाध्यक्षो ददौ तेषामभीप्सितम् ॥ ४० ॥
यदा चोद्वहते भक्तिः तदा पूज्यो गणाधिपः ।
पूजान्ते च स्तुतिं कुर्यात्स्तोत्रेणानेन सत्तमाः ॥ ४१ ॥

## गणेश्वरस्तोत्रम्

विघ्नराजं जगन्नाथं गजवक्त्रं त्रिलोचनम् ।
[6]कार्यार्थसिद्धये पूर्वं तं नमामि विनायकम् ॥ ४२ ॥

---

[1] राजेप्सितं (च) [2] पताकिनम् (ग) प्रतापिनम् (च) [3] स्वकार्यसिद्धये (च)
[4] पिनाकिनमिति सर्वमातृका पाठः न सङ्गच्छते । [5] रपि (ग)
[6] कार्यार्थं सिद्धयते (क)

महागणपतिं शूरमजितं जयवर्धनम् ।
[1]एकवक्त्रं द्विदन्तं च चतुर्दन्तं चतुर्भुजम् ॥ ४३ ॥

त्र्यक्षं त्रिशूलहस्तञ्च रक्तनेत्रं वरप्रदम् ।
अम्बिकेयं शङ्कुकर्णं प्रचण्डं दण्डनायकम् ॥ ४४ ॥

आरक्तं दण्डिनञ्चैव [2]वह्निवक्त्रं घृतप्रियम् ।
अनर्चितो विघ्नकरः सर्वकार्येषु [3]यो नृणाम् ॥ ४५ ॥

तं नमामि गणाध्यक्षं भीममुग्रमुमासुतम् ।
मदमत्तं विरूपाक्षं भववक्त्रसमुद्भवम् ॥ ४६ ॥

सूर्यकोटिप्रतीकाशं भिन्नाञ्जनचयप्रभम् ।
ध्रुवं सुनिश्चलं शान्तं नमस्यामि विनायकम् ॥ ४७ ॥

नमोऽस्तु ब्रह्मरूपाय विष्णुरूपाय ते नमः ।
नमोऽस्तु रुद्ररूपाय शिवरूपाय ते ममः ॥ ४८ ॥

नमोऽस्तु [4]वेदरूपाय यज्ञरूपाय ते नमः ।
स्वाहारूप नमस्तेऽस्तु स्वधारूपाय ते नमः ॥ ४९ ॥

[5]नमस्ते गजरूपाय [6]गजानां पतये नमः ।
मेरुमन्दररूपाय नमः कैलासवासिने ॥ ५० ॥

विरूपाय [7]सुरूपाय नमस्ते ब्रह्मचारिणे ।
[8]भक्तस्तुताय देवाय नमस्तुभ्यं विनायक ॥ ५१ ॥

त्वया [9]पुरा हि पूर्वेषां देवानां कार्यसिद्धये ।
गजरूपं समाश्रित्य त्रासितास्सर्वदानवाः ॥ ५२ ॥

---

[1] एकदन्तं (च) [2] वाह्निरक्तं (च) [3] यन्नृणां (क ख ग घ) [4] देव (ग) [5] नमोऽस्तु (ग)
[6] गजारूपाय (क ख घ च) सरूपाय (ग) [8] भक्तिप्रियाय (ग) [9] पुराणे (ग)

ऋषीणां [1]देवतानाञ्च [2]नायकत्वं प्रकाशितम् ।
यत[3]स्त्वतस्सुरैरग्रे पूज्यसे त्वं भवाय वै ॥ ५३ ॥

त्वामाराध्य गणाध्यक्षं सर्वज्ञं कामरूपिणम् ।
कार्यार्थं रक्तकुसुमैः रक्तचन्दनवारिभिः ॥ ५४ ॥

रक्ताम्बरधरो भूत्वा [4]चतुर्थ्यामर्चयन् स्तुवन् ।
त्रिकालमेककालं वा नियतो नियताशनः ॥ ५५ ॥

राजानं राजपुत्रं वा राजमन्त्रिणमेव वा ।
राज्यं वा सर्वविघ्नेश वशं कुर्यात्सराष्ट्रकम् ॥ ५६ ॥

अविघ्नं तपसो मह्यं कुरु विघ्नविनायक ।
[5]मयेत्थं संस्तुतो भक्त्या पूजितश्च विशेषतः । ॥ ५७ ॥

एवं स्तुत्वा गणाध्यक्षं प्रणमेद्भक्तिपूर्वकम् ।

सूतः —

यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् ।
तत्फलं समवाप्नोति स्तुत्वा देवं विनायकम् ॥ ५८ ॥

इष्टमन्नं भवेत्तस्य न च गच्छे[6]त्पराभवम् ।
न च विघ्नो भवेत्तस्य [7]न कृच्छ्रेष्ववसीदति ॥ ५९ ॥

य इदं पठते स्तोत्रं षड्भिर्मासैर्वरं[8] लभेत् ।
संवत्सरेण सिद्धिञ्च लभते नात्र संशयः ॥ ६० ॥

---

[4] इयं चतुर्थी च सिद्धिविनायकपूजार्थं प्रोक्ता भाद्रपदशुक्ला । सङ्कष्टहरगणपति-पूजायां तु कृष्णचतुर्थी । [8] वरो नाम फलमेव । वाञ्छितं फलम् ।

---

[1] दानवानां (क ख घ च) [2] नायकं यत्प्र (ग) [3] स्तत (ग) [5] कयेत्थं (क घ)
[6] त्पराजयम् (च) [7] जातो जातिस्मरो भवेत् (ग)

य: [1]पूजयत्यखिललोकनताङ्घ्रिपद्मं
गौरीसुतं [2]फणिगणोदरमादिदेवम् ।
[3]विघ्नाश्च तस्य न भवन्ति गृहे कदाचित्
धर्मार्थकामसुखसिद्धि[4]विघातका ये ॥ ६१ ॥

तं सप्तमीन्दुशकलाकृति[5]कान्तिदन्तं[6]
विघ्नेशमर्चयति यः सुकृती चतुर्थ्याम् ।
स स्वे गृहे सुखशतान्यनुभूय भूयो
[7]हेरम्बतातभवनं मुदितः प्रयाति ॥ ६२ ॥

स्थविरगणपतिं ये पूजयन्तीह भक्त्या
सकृदपि समुपेत्य ध्वस्तदोषास्समस्ताः ।
द्विरदवदनमीड्यं ते प्रयान्तीह [8]धन्याः
शिवपुरममरस्त्रीलोचनैः पीयमानाः ॥ ६३ ॥

य इदं शृणुयान्नित्यं समभ्यर्च्य विनायकम् ।
भक्ष्यभोज्यादिभिश्शुद्धैश्चतुर्थ्यां शुचिरादरात् ।
स लब्ध्वाभिमतान् कामानन्ते [9]याति परां गतिम् ॥ ६४ ॥

---

[2] फणिगणोदर इति कदाचिद्बहुनागवेष्टितोदरतायां साधुः । अथ वा फणिवरोदर इति वा स्यात् । [6] सप्तम्यां इन्दुकला अर्धवक्रा कान्तियुता धवला भवति । [7] हेरम्बतातः शिवः । तस्य भवनं कैलासः हे रणे शिवसमीपे वा रमते इति हेरम्बः ।

---

[1] पूजयेत्य (क ख घ च) [3] विघ्नेश्वरस्य (क ख घ च) [4] विघातकानि (क ख घ च)
[5] कान्त (ग) [7] मर्त्या (ग) [8] प्राप्तः (च)

कीर्तनीयमिदं [1]सद्भिः कार्यारम्भेषु सर्वदा ।
कार्यसिद्धिर्भवेत्तेषामचिरान्नात्र संशयः ॥ ६५ ॥

इति श्रीमत्पुराणसारे विनायकभक्तिनिरूपणं नाम
पञ्चचत्वारिंशोऽध्यायः

---

[1] वाग्भिः (च) [2] गणपति (ग)

# षट्चत्वारिंशोऽध्यायः

[देवताभक्तिप्रकरणे स्कन्दभक्तिनिरूपणम्]

## [1]स्कन्दभक्तिप्रशंसनम्

सूतः —

अथातः सम्प्रवक्ष्यामि भक्तिं देवे षडानने ।
यस्य प्रसादाद्द्विपदो निस्तरन्ति शरीरिणः ॥ १ ॥

स एष भगवान्विष्णुरिन्द्रश्चैव प्रजापतिः ।
स चादित्यः कुबेरश्च ईशानो वरुणस्तथा ।
स यमस्स च सोमश्च स वायुर्भूसुरोत्तमाः ॥ २ ॥

यस्य स्मरणमात्रेण प्राप्यते [2]त्रैबुधं[3] पदम् ।
तमुपास्य कथं देवं प्रयान्ति नरकं नराः ॥ ३ ॥

[4]उपसर्गाः क्षयं यान्ति [5]पूज्यमाने षडानने ।
मनः प्रसन्नतां याति पूज्यमाने षडानने ।
अपुत्रो लभते पुत्रान् अधनोऽपि धनं लभेत् ॥ ४ ॥

[6]यं यमिच्छेत्तु मनसा तं तं लभति मानवः ।
साम्राज्यं लेभिरे केचित्स्वराज्यं च तथापरे ॥ ५ ॥

---

[1] स्कन्दते उत्प्लुत्य गच्छति स्कन्दति शोषयति वा दैत्यानिति स्कन्दः पदं स्थानम् । स्वर्ग इति । [3] त्रैबुधं, विबुधः देवः तत्सम्बन्धि ।
[4] उपसर्गः रोगभेदः । यथा सुश्रुते ' क्षीणं हन्युश्चोपसर्गाः प्रभूताः इति । अथ वा महामार्यादि उपप्लवाः । [6] यं यं काममिति ।

---

[2] वैष्णवं (च) [5] सिद्धयन्ते सर्वसिद्धयः (ग च)

ब्रह्मत्वं राज्यमन्ये च स्कन्दमिष्ट्वा[1] शिवात्मजम् ।
अस्मिन्नर्थे पुरावृत्तमाख्यानं कथयामि वः ॥ ६ ॥

## दानवपराजितानां देवानां महेश्वरदर्शनम्

[2]देवासुराः पुरावृत्ताः [3]विनिघ्नन्तः परस्परम् ।
तत्राजयंस्तदा देवान् दानवा[4]श्चोररूपिणः ॥ ७ ॥

तदा चिन्तार्णवे मग्नो देवैस्सह पुरन्दरः ।
[5]क एतान् दानवान् हत्वा शरणं नो भवेदिति ॥ ८ ॥

ततो देवास्सगन्धर्वा ऋषयस्सिद्धचारणाः[6] ।
देवराजं पुरस्कृत्य जग्मुः कैलासपर्वतम् ॥ ९ ॥

तत्र दृष्ट्वा महादेवं शिवं पशुपतिं विभुम् ।
तुष्टुवुर्विविधैः स्तोत्रैस्सशक्रास्त्रिदिवौकसः ॥ १० ॥

## देवकृतं शिवस्तोत्रम् ।
## दानवदमनार्थं सेनानीदानप्रार्थनं च ।

नमाम सर्वे शरणार्थिनो वयं
महेश्वर त्र्यम्बक भूतभावन ।
उमापते विश्वपते मरुत्पते
जगत्पते शङ्कर पाहि नः स्वयम् ॥ ११ ॥

---

[1] इष्ट्वेति यज धातो त्वान्तं रूपम् । [2] अयं कथाभागः वराहपुराणस्थः । व.पु. अ. २४ [6] चारयति नृत्यगीतादि विद्यां तज्जन्यकीर्तिं वा इति चारणः गन्धर्वविशेषः ।

---

[3] निर्विघ्नन्तः (क ख घ) [4] घोर (ग) [5] एकदा (ग)

जटा[1]कलापाग्रशशाङ्कदीधिति-
प्रकाशिताशेषजगत्त्रयामल ।
त्रिशूलपाणे पुरुषोत्तमाच्युत
प्रपाहि नो दैत्यभयान्महेश्वर ॥ १२ ॥

त्वमादिदेवः पुरुषोत्तमो हरिः
भगो महेशस्त्रिपुरान्तको विभुः ।
[2]भगाक्षहा दैत्यरिपुः पुरातनो
वृषध्वजः पाहि सुरोत्तमोत्तम ॥ १३ ॥

गिरीशजानाथ गिरिप्रियाप्रिय
प्रभो [3]समस्ताखिललोकपूजित ।
गणेश लोकेश शिवाक्षयाव्यय
प्रपाहि नो [4]दैत्यवरान्तकाच्युत ॥ १४ ॥

[5]पृथ्व्यादितत्वेषु भवान्प्रतिष्ठितो
ध्वनिस्वरूपो गगने विशेषतः ।
[6]वायौ द्विधा तेजसि च त्रिधा जले
चतुःक्षितौ पञ्च[7]गुणप्रधान ॥ १५ ॥

---

[2] दक्षयज्ञे भग इति कश्चन ऋत्विक् । तेन च शिवनिन्दापरो दक्षः स्वनेत्र-संज्ञया प्रेरेपितः । तत् विज्ञाय रुद्रः तस्य नेत्रे निष्कासयामास । म.भा. अनुशासनपर्व अ. २६८ । [3] समस्तामरलोकेति वराहपुराणपाठ एव ग्राह्य इति भाति । [6] 'लीनो द्विधा' इत्यादि वराहपुराणपाठः । 'लीनो द्विधा तेजसि' इति वराहपुराणपाठः सङ्गच्छतेऽत्र ।

---

[1] कलापाग्रय (ग) [4] दैत्यभया (च) [5] द्रव्यादि (ग) भूम्यादि (च)
[7] गुणप्रपाहितः (ग)

अग्निस्वरूपोऽसि तरौ तथोपले
गन्धस्वरूपो हि तथा तिलेष्वपि ।
तैलस्वरूपो भगवान् महेश्वरः ।
प्रपाहि नो दैत्य[1]भयार्दितात् हर ॥ १६ ॥

नासीद्यदा[2] चाण्डमिदं[3] त्रिलोचन
प्रभाकरेन्द्रद्रविणाधिपाः [4]कुतः ।
तदा भवानेव विरुद्धलोचन
[5]प्रमाणगन्धादिविवर्जितः स्थितः ॥ १७ ॥

कपालमालिन् शशिखण्डशेखर
श्मशानवालिन् स्मितभस्म[6]मण्डित ।
फणीन्द्रसंवीत [7]तनोऽन्धकापह
प्रपाहि नो दक्षरिपो सुरेश्वर ॥ १८ ॥

भवान् पुमान् शक्तिरियं [8]गिरेस्सुता
सम्ब्रोधिरूपा भगवंस्तथा त्वयि ।
त्रिशूलरूपेण [9]जगत्त्रयं करे
स्थितं [10]त्रिनेत्रेषु मखाग्रयस्त्रयः[11] ॥ १९ ॥

---

[3] अण्डः भुवनकोशः । [5]प्रमाणगन्धादीति वराहपुराणे दृश्यते ।
[11] दक्षिणो गार्हपत्योऽऽहवनीय इति त्रयोऽग्नयः ।

---

[1] वरान्तकाच्युत (क ख घ च) [2] चान्द्रमसं (क ख घ च) [4] कृतः (क ख घ च)
[6] गुंफित (च) मुण्डित (ख घ) [7] तमोऽग्र (क ख घ च) [8] गिरेस्सुत (क)
[9] जगद्भयङ्करो (च) [10] त्रिलोकेषु (च)

जटास्वरूपेण समस्तसागराः
कुलाचलास्सिन्धुवहाश्च सर्वशः ।
नारायणस्त्वं जगतां समुद्भवः
तथा भवानेव चतुर्मुखोऽ[1]भवत् ॥ २० ॥

[2]सत्वादिभेदेन तथाग्निभेदतो
जगत्प्रभेदेन च संस्थितस्त्रिधा । ॥ २१ ॥

भवन्तमेते सुरनायकाः प्रभो
भवार्थिनोऽभ्येत्य पदं नता वयम् ।
यतस्ततो नो भव [3]सर्पभूषण
प्रपाहि विश्वेश्वर विश्व ते नमः ॥ २२ ॥

एवं स्तुतस्तदा देवो रुद्रः पशुपति[4]स्ततः ।
उवाच देवानव्यग्रः किं कार्यं ब्रूत मा चिरम् ॥ २३ ॥

देवाः —

त्रिलोचनं मृत्युहीनं सर्वशस्त्रभृतां वरम् ।
सेनापतिं नो देवेश देहि दैत्यवधाय वै ॥ २४ ॥
देवानां ब्रह्ममुख्यानामेतदेव हितं भवेत् ।

## कुमारोत्पत्तिः

शिवः —

ददामि सेनानाथं वो देवा भवत विज्वराः ॥ २५ ॥

---

[2] सत्वरजस्तमोरूपेण, दक्षिणगार्हपत्याहवनीयरूपेण स्वर्भूपातालरूपेण च ।

---

[1] भव (ग) [3] भूति (ग) भूषणोऽव्यय (च) [4] प्रभुः (ग)

एवमुक्त्वा हरो देवान् विसृज्य स्वाङ्गसंस्थिताम् ।
शक्तिं संक्षोभयामास पुत्रहेतोः [1]परंतपः ॥ २६ ॥

तस्य क्षोभयतः शक्तिं ज्वलनार्कसमप्रभः ।
जज्ञे श्वेतगिरौ पुण्ये शरस्तम्बसमावृते ॥ २७ ॥

षडाननो मृत्युहीनो व्योमकेशस्य तेजसा ।
कुमारः सहजां शक्तिं बिभ्रत् ज्ञानाह्वयां शुभाम् ॥ २८ ॥

अर्काग्नितेजाः षड्वक्त्रस्तथाष्टादशलोचनः ।
भुजैर्द्वादशभिश्चैव शोभमानोऽभवत्तदा ॥ २९ ॥

शक्तिर्वर्म बलं तेजः कान्तत्वं सत्यमक्षतिः ।
ब्रह्मण्यत्वमसंमोहो भक्तानां परिरक्षणम्
स्कन्देन सह जातानि सर्वाण्येव द्विजोत्तमाः ॥ ३० ॥

देवाः काले ह्यथैस्मिन् देवराजाय वज्रिणे ।
[2]श्वेते जातं तथाऽऽचख्युः कुमारं दीप्ततेजसम् ॥ ३१ ॥

तच्छ्रुत्वा देवराजस्तु सर्वदेवगणैर्युतः ।
कुमारमुपगम्यासौ प्रणिपत्यास्तुवत्तदा ॥ ३२ ॥

## इन्द्रकृतकुमारस्तोत्रम्

वर्धस्व देवदेव त्वं महेश्वर[3]सुत प्रभो ।
षण्मुख त्वं हि विश्वेशः कुक्कुटध्वज पावके[4] ॥ ३३ ॥

---

[2] श्वेतः श्वेतगिरिः क्रौञ्चपर्वतः सप्तकुलाचलेष्वन्यतमः ।
[4] पावकस्यापत्यमित्यर्थ

---

[1] परं परः (ग) [3] सुर (क ख घ च)

कम्पितारे कुमारेश स्कन्द [1]बासग्रहानुग ।
जितारे [2]क्रौञ्चविध्वंस कृत्तिका[3]पुत्र मातृज ॥ ३४ ॥

महाभूतपतेः पुत्र त्रिलोचन नमोऽस्तु ते ।
एवं स्तुतस्तदा तेन [4]ववृधे भवनन्दनः ।
द्वादशादित्यसङ्काशो बभूवाद्भुतदर्शनः ॥ ३५ ॥

तत. [5]पुरन्दरमुखैर्विबुधैः शङ्करात्मजः ।
अर्चितश्च स्तुतश्चैव प्रीतश्चैवाभ्यभाषत ॥ ३६ ॥

## स्कन्दकृतो दानवसंहारः

स्कन्दः —

तुष्टोऽस्मि स्तुतिपूजाद्यैर्भक्त्या चानन्यपूर्वया ।
वरं वृणीष्व भद्रं ते देवराज शतक्रतो ॥ ३७ ॥

इन्द्रः —

दानवानां विनाशाय देवानामभिवृद्धये ।
गोब्राह्मणहितार्थाय षडानन शिवात्मज ।
देवसेनापतिर्देव भव लोकहितेप्सया ॥ ३८ ॥

एवं [6]सम्प्रार्थितस्तेन देवेन्द्रेण षडाननः ।
अमराणां महाबाहुः सैनापत्य[7]मवाप ह ॥ ३९ ॥

---

[2] क्रौञ्चनामकः पर्वतः क्रौञ्चासुरो वा ।
[5] पुरन्दरः इन्द्रः स एव मुखं अन्येषामिति । इन्द्रादिभिरिति अर्थः ।

---

[1] कपिल (च) [3] श्रुत मातृन (क ख घ) [4] ववर्ध (क ख घ च) [6] सम्प्रापितः (घ)
[7] मवाप्य (ग)

[1]जघ्ने स दैत्यान् [2]दुर्वृत्तान् शक्त्या शक्तिधरो युधि ।
[3]कुम्भतारकवज्राङ्गहयग्रीववलीमुखान् ।
शण्डा[4]मर्कालचक्रादीन् ससैन्यान् समहा[5]रथान् ॥ ४० ॥

सूतः —

ततो निष्कण्टकं राज्यं प्राप्य देवश्शतक्रतुः ।
पूजयामास सततं कुमारं [6]वरदं [7]प्रभुम् ॥ ४१ ॥

अपूजयन् महात्मनो ब्राह्मणास्तं महाबलम् ।
तदा प्रभृत्ययं सर्वैः पूज्यते भुक्तिमुक्तिदः ॥ ४२ ॥

ब्रह्मर्षिभिस्तथा देवै राजर्षिभिरुपासितः ।
गन्धर्वैश्च [8]महाभागो [9]सर्वारोग्य[10]सुखाप्तये ॥ ४३ ॥

पुत्रार्थिना च नहुषेण पुरार्चितोऽयं
विप्राः कलत्रसुखवित्त[11]धनर्द्धिदाता ।
विद्यार्थकामसुखधर्मयशोऽर्थिभिश्च
काकुत्स्थवैन्यनृगहेहय[12]हस्तिकामैः ॥ ४४ ॥

यः पूजयेच्छरवणोद्भवमादिदेवं
शम्भोस्सुतं [13]सदयितं गिरिराजपुत्र्याः ।

---

[3] कुम्भः प्रह्लादपुत्रः । तारकः दनुकश्यपयोः पुत्रः । वज्राङ्गः हयग्रीवश्च दितिकश्यपयोः पुत्रौ । [4] शण्डामर्कौ राक्षसपुरोहितौ ।
[12] वल्लीसना इति पत्निद्वयं स्कन्धस्येति पुराणेषु दृश्यते ।

---

[1] जहि (च) [2] दुर्धषान् (ग) [4] मकालवक्रा (ग) [5] श्च महासुरान् (ग)
[6] सतत विभुम् (च) [7] शुभम् (ग) [8] महाभागाः (क घ) [9] स्वर्गारोग्य (ख घ)
[10] सुखाय वै (च) [11] सुखर्द्धि (ख) [12] हस्तिरामैः (क ख ग घ) [13] सुदयितं (घ)

स्वर्गे निरर्गसुखान्यनुभूय भूयः
सेनापतिर्भवति राज्यदुरन्धरोऽसौ ॥ ४५ ॥
यश्चैतत्पठते [1]वृत्तं कार्तिकेयस्य मानवः ।
तस्य गहे कुमाराणां क्षेमारोग्यं भविष्यति[2] ॥ ४६ ॥

इति श्रीमत्पुराणसारे स्कन्धभक्तिनिरूपणं नाम
षट्चत्वारिंशोऽध्यायः

[2] कुमारः स्कन्दः बालानां सौख्यवर्धनः इति ख्यातः ।

[1] नित्यं (गं)

## सप्तचत्वारिंशोऽध्यायः

### शास्त्रप्रामाण्यनिरूपणम्

सूतः —

इत्येवं भक्तिमार्गोऽयं षड्विधः कथितस्त्वया ।
भुक्तिमुक्तिप्रदो नृणां [1]वेदैस्सम्यगुदाहृतः ॥ १ ॥

मुनयः —

अथातः श्रोतुमिच्छामः शास्त्रप्रामाण्य[2]निर्णयम् ।
त्वं हि तत्त्वविदां श्रेष्ठः प्रसादात्परमेष्ठिनः ॥ २ ॥

### प्रसङ्गतो वसुहोमेतिहासकथनम्

सूतः —

[3]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अङ्गेषु राजा द्युतिमान् [4]वसुहोम इति श्रुतः ।
ब्राह्मणानामनुमतो देवर्षिसदृशोऽभमत् ॥ ३ ॥

तं कदाचि[5]द्दीनात्मा मान्धाता शत्रुकर्शनः ।
अभ्यगच्छन्महीपालो वसुहोमं नराधिपम् ॥ ४ ॥

---

[3] दुष्टो दण्ड्य एवेत्यस्मिन्नर्थे महाभारते कथेयं दृश्यते । म.भा. शान्ति-पर्वोत्तरार्धम् अ. १२२ ।

[4] अयं अङ्गदेशस्य राजा । असौ मञ्जुपृष्ठनामके पर्वते तपश्चरन्नासीत् । तत्र अस्य मान्धातुश्च संवादो बभूव । असौ तस्माद्दण्डनीतिशिक्षां जग्राह । वसुहुम इति अस्य नामान्तरम् । म.भा. शान्तिपर्व अ.१२२

---

[1] देवैः (च) [2] निश्चयम् [5] दिमेयात्मा (च)

दृष्ट्वा प्रकृष्टं तपसा विनयेनोपतिष्ठते ।
[1]वसुहोमोऽपि वै राज्ञो [2]गामर्घ्यं च न्यवेदयत् ॥ ५ ॥

[3]सप्ताङ्गस्य च राज्ञश्च पप्रच्छ कुशलाव्ययौ ।
अब्रवीद्वसुहोमस्तं राजन् किं करवाणि ते ॥ ६ ॥

सोऽब्रवीत्परमप्रीतो मान्धाता [4]राजसत्तमः ।
वसुहोमं महाप्राज्ञं आसीनं मुनिपुङ्गवाः ॥ ७ ॥

मान्धाता —

कथं ज्ञातानि शास्त्राणि किं निमित्तानि तानि च ।
प्रामाण्यं कथमेतेषां एतन्मे वक्तुमर्हसि ॥ ८ ॥

वसुहोमः —

तत्सर्वं सम्प्रवक्ष्यामि शृणुष्वेकमना नृप ।

[ वसुहोमेन शास्त्रप्रामाण्यविषये पूर्वेतिहासकथनम् ]

### तत्र प्राकृतप्रजासङ्करः

पुरा किलमहाराज [5]प्रजानां सङ्करोऽभवत् ।
नैव कार्यं न चाकार्यं भोज्याभोज्यं च विद्यते ॥ ९ ॥

पेयापेयं [6]कुतस्सन्त्रिर्हिंसन्निव परस्परम् ।
गम्यगम्यं तदा नासीत्परस्वं स्वं च वै [7]समम् ॥ १० ॥

---

[1] वसुहोमेऽपीति सर्वमातृकापाठान्महाभारतपाठः समीचीनः । अतस्स एवादृतः।
[2] गां वाणीं स्वागतव्याहारोपयोगिनीमित्यर्थः । 'वाक् चतुर्थी च सूनृता' इति सुभाषितं स्मर्यते। [3] महाभारतेऽष्टाङ्गस्य राज्यस्येति पाठः । स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा । सप्त प्रकृतयो ह्येताः सप्ताङ्गं राष्ट्रमुच्यते । मनुस्मृतिः अ.९ श्लो. २९४

---

[4] सुरसत्तमः (ग) [5] प्रजानाशङ्करो (च) [6] परम् (क ख घ च)

परम्परं विलुम्पन्ते [1]सारमेया [2]इवामिषम् ।
अबलान्बलिनो जानुः निर्मर्यादमवर्तत ॥ ११ ॥

ततः पितामहो ब्रह्मा भगवन्तं सनातनम् ।
सम्पूज्य वरदं देवं महादेवमथाब्रवीत् ॥ १२ ॥

## ब्रह्मप्रार्थनया महादेवकृतशास्त्रसृष्टिः

त्वं हि सर्वविधानज्ञः सत्त्वानां त्वं गतिः परा ।
सङ्करो न भवेदत्र यथा तद्वै [3]विधीयते ॥ १३ ॥

ततस्स भगवान् ध्यात्वा तदा शूलवरायुधः ।
देवदेवो महादेवः कारणं जगतः परम् ॥ १४ ॥

ब्रह्मविष्ण्विन्द्रसहितः सर्वैश्चैव सुरासुरैः ।
लोकसन्धारणार्थाय धर्मसंस्थापनाय च ॥ १५ ॥

असृजत्सर्वशास्त्राणि महादेवो महेश्वरः ।

## महादेवसृष्टानां शास्त्राणां नामानि

विद्याश्चतस्रः कूटस्थास्तासां भेदविकल्पनाः ॥ १६ ॥

[4]अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च [5]विद्या ह्येताश्चतुर्दश ॥ १७ ॥

---

[1] सारमेयाः श्वानः । [3] विधीयताम् इति महाभारतपाठः ।

[4] अङ्गानि च — शिक्षा व्याकरणं छन्दो निरुक्तं ज्यौतिषं तथा । ऋग्यजुस्सामाथर्वणाः वेदाः । मीमांसापदेन पूर्वोत्तरमीमांसाद्वयम् । न्यायश्च प्राचीननवीनभेदेन द्विधा । पुराणपदेन अष्टादशपुराणानि धर्मशास्त्रपदेन तत्प्रतिपादकाः समग्राः स्मृतिनिबन्धग्रन्थाः ।

---

[2] इवामिषः (क ख घ च) [5] श्वेता (च)

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव [1]च ॥ १८ ॥

एतासामेव विद्यानां व्यासमाह महेश्वरः ।
शतानि त्रीणि शास्त्राणामाह[2]तन्त्राणि सप्ततिम् ॥ १९ ॥

[3]तत्र पाशुपतं [4]नाम पञ्चरात्रमिति श्रुतम् ।
योगशास्त्रं च सांख्यं च तन्त्रं लोकायतं तथा ॥ २० ॥

तन्त्रं [5]ब्रह्मतुलं नाम कामिकाद्यागमानपि ।
कापालं [6]लाकुलं सोमं भैरवप्रमुखागमान् ॥ २१ ॥

विष्ण्वागमांस्तथा ब्रह्म [7]बुद्धयार्हाद्यागमानपि ।
धर्मशास्त्राणि च तथा महाभारतमेव च ॥ २२ ॥

अष्टादशविकल्पान्तां दण्डनीतिञ्च शाश्वतीम् ।
नानार्थानि च सर्वाणि तर्कशास्त्राणि शङ्करः ॥ २३ ॥

प्रोवाच भगवान् [8]कालः कालज्ञानानि यानि च ।
एकार्थानि पुराणानि वेदार्थान्यार्थसंहिताः ॥ २४ ॥

धर्मशास्त्राणि तद्वच्च एकार्थानीति नान्यथा ।
इत्येता शङ्करप्रोक्ता विद्याश्शब्दार्थसंयुताः ॥ २५ ॥

---

[7] मातृकासु बुधार्ह, बुध्रार्ह इति वा दृश्यते । परं बुद्ध इति न स्यात् । बुद्धयेति स्वरचितम् । अथ वा बुद्ध, अर्ह इति वा स्यात् । परं तदागमद्वयं कुत्रापि नोक्तं, वेदवादविरुद्धत्वात् ।

---

[1] हि (च) [2] मन्त्राणि (ग) [3] मन्त्रं (ग) [4] अष्ट (च) [5] ब्रह्मतुला (ग)
[6] लाकुटं (ग) [8] देवः (ग)

## वेदपारगाणां निरूपणम्

एतासां [1]पारगो यश्च स चोक्तो वेदपारगः ।
वेदानां पारगो रुद्रो विष्णुरिन्द्रो बृहस्पतिः ।
शुक्रः स्वायम्भुवश्चैव मनुः परमधर्मवित् ॥ २६ ॥

ब्रह्मा च परमो देवः [2]सह सर्वैस्सुरप्रभुः ।
[3]सर्वस्यानुग्रहाच्चैव व्यासो वै वेदपारगः ॥ २७ ॥

[4]अयं शान्तनवो भीष्मः प्रसादान्माधवस्य च ।
वेदपारग इत्युक्तो याज्ञवल्क्यश्च [5]सर्वशः ॥ २८ ॥

## कल्पभेदाद्वेदभेदनिरूपणम्

कल्पे कल्पे महाभागै ऋषिभिस्तत्वदर्शिभिः
शिवेन ब्राह्मणा चैव विष्णुना च विकल्पिताः ॥ २९ ॥

आदिकल्पे पुनश्चैव भिद्यन्ते [6]वाधुना पुनः ।
इदानीमपि विद्वद्भिर्भिद्यन्ते च विकल्पकैः ।
तर्कैरेते हि मार्गास्तु न हन्तव्या मनीषिभिः ॥ ३० ॥

## साधने मार्गबहुत्वस्य निर्दोषताप्रतिपादनम्

येक केन प्रकारेण जनोऽ[7]प्येभिरुपासितः ।
तत्तन्मार्गानुगुण्येन साधकत्व[8]मुपैति सः ॥ ३१ ॥

तत्प्रसादात्क्रमान्मार्गान्विशिष्टानेति मानवः ।
तत्र तत्र स्थितो देवः [9]प्रमाणं कुरुतेऽस्य [10]तत् ॥ ३२ ॥

---

[3] शर्वस्येति महाभारपाठः युक्तः ।

---

[1] पाठयोमाश्च (ख ग) पारयोगश्च (ख घ) [2] सर्वैरपि सुरासुरैः (ग) [4] अहं (च)
[5] सम्मतः (ग) [6] चाधुना (ग) [7] ह्येभिरुदारधीः (ग) [8] मपास्थितः (च)
[9] प्रसादं (ग) [10] तृ (ग)

सोपानक्रमतो देवा: वेदमार्गस्य हेतव: ।
वेदमार्गस्थितो देव: साक्षान्मुक्तेस्तु कारणम् ॥ ३३ ॥

तत्रापि [1]कर्मभागस्थो ज्ञानश्रद्धाप्रदो हर: ।
ज्ञान[2]भागस्थित: शम्भु: ज्ञान[3]द्वारेण मोक्षद: ॥ ३४ ॥

## वैदिकमार्गस्य प्रशंसनम्

यथा तोयप्रवाहाणां समुद्र: परमावधि: ।
तथैव सर्वमार्गाणां वैदिक: [4]परमावधि: ॥ ३५ ॥

यथा शम्भुसमो देवो नास्ति [5]पुण्यवतां नरा: ।
यथैवान्नसमं भोज्यं नास्ति तत्र विचक्षणा: ।
तथा वेदसमं मानं नास्ति [6]तत्र न संशय:[7] ॥ ३६ ॥

यथा [8]दभ्रसमातुल्यं स्थानं लोके न विद्यते ।
तथा वेदसमं मानं नास्ति तत्र न संशय: ॥ ३७ ॥

---

[7] यथा वाराणसीतुल्या पुरी लोके न विद्यते
तथा वेदसमं मानं नास्ति तत्र न संशय: ॥
x x x x वदं विना न हि ।
यथा गङ्गासमा नास्ति सरिद्वेदसमस्तथा ।
यथा दभ्रसमेत्यादि .... .... .... .... इति 'ग' मातृका
पाठोऽधिक: क्रिमिदुष्ट इति अधोनिर्दिष्ट: ।

[8] दभ्रशब्द: पुल्लिङ्ग: समुद्रवाची । नपुंसकेऽल्पार्थक: ।

---

[1] कर्ममार्गस्थो (च) [2] ज्ञानभोग (ग) [3] मार्गेण (ग) [4] परमो (ग)
[5] वेदसमस्तथा (ग) [6] नास्ति (च)

वेदमार्गजनितं तु वेदनं[1]
दोषहीनमतिशोभनं तदा ।
अन्यमार्गजनितं विचारतो
वेदमार्गरुचिकारणं [2]क्रमात् ॥ ३८ ॥

अतो मार्गान्तराज्जाते [3]यातारो मतिमत्तमाः ।
अविद्या नैव विद्या [4]स्यादिति [5]सम्यङ्निरूपणम् ॥ ३९ ॥

तेषां मार्गान्तराणां तु प्रामाण्यं वेदवित्तमाः ।
मुक्तेरन्यत्र [6]नात्रैव क्रमेणैवात्र [7]नानृतम् ॥ ४० ॥

अतो वेदान्तभागस्थो [8]महादेवोऽचिरेण तु ।
मुक्तिं ददाति नान्यत्र स्थितस्सोऽपि क्रमेण तु ॥ ४१ ॥

ददाति परमां मुक्तिमित्येषा शाश्वती श्रुतिः ।
अतो [9]वेदे स्थितो मर्त्यो नानामार्गं समाश्रयेत् ॥ ४२ ॥

वेदमार्गैकनिष्ठानां न किञ्चिदतिदुर्लभम् ।
अत्रैव परमा मुक्तिः भुक्तयश्चात्र पुष्कलाः ॥ ४३ ॥

अतोऽधिकारभेदेन मार्गमानं [10]न संशयः ।
मार्गाणां ये विरुद्धांशा वेदान्तेन विचक्षणाः ॥ ४४ ॥

तेऽपि मन्दमतीनां च महामोहावृतात्मनाम् ।
वाञ्छामात्रानुगुण्येन प्रवृत्तानां यथार्थतः ॥ ४५ ॥

---

[1] वेदनं ज्ञानम् । [8] वेदान्तभागस्थः उपनिषत्प्रतिपादितः ।
[10] मार्गस्य मुक्तिमार्गस्य ज्ञानमार्गस्य वा मानं प्रमाणम् ।

---

[2] क्रमः (च) [3] यातयो (क) [4] स्युरिति (क ख ग घ) [5] सम्य .... पितम् (ग च)
[6] वात्रै वा (च) [7] नानृतः (क ख ग घ) नानृतः (च) [9] वेदस्थितो (च)

भेददर्शनमास्थाय मुक्तिं वाञ्छन्ति ये नराः ।
ते महाघोरसंसारे पतन्त्येव न संशयः ॥ ४६ ॥
इति ते सर्वमाख्यातं पृष्टवानसि यन्नृप ।

सूतः —

एतच्छ्रुत्वा तु मान्धाता मुदं परमिकां ययौ ॥ ४७ ॥
इतीदं शृणुयाद्यस्तु शास्त्रप्रामाण्यमञ्जसा[1] ।
श्रुत्वा तु सम्यग्वर्तेत सुलोकानाप्नुया[2]द्द्विजः ॥ ४८ ॥

इति श्रीमत्पुराणसारे शास्त्रप्रामाण्यकथनं नाम
सप्तचत्वारिंशोऽध्यायः

---

[1] अञ्जसा, द्रुतम् ।

---

[2] सुखम् (ग)

## अष्टाचत्वारिंशोऽध्यायः

### धर्मार्थकामजिज्ञासूनां ऋषीणां प्रश्नः

ऋषयः —

सूत धर्मार्थकामानां श्रोतुमिच्छामि निश्चयम् ।
लोकत्रयी हि कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता । ॥ १ ॥

धर्मार्थकामाः किंमूलाः प्रधानः प्रलयश्च कः ।

### शीलप्रशंसनम्

सूतः —

[1]धर्ममूलोऽर्थ इत्युक्तः कामोऽर्थफल [2]उच्यते ॥ २ ॥

सङ्कल्पमूलास्ते सर्वे सङ्कल्पो विषयात्मकः ।
मूलं शीलं त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥ ३ ॥

इमे जना मुनिश्रेष्ठा प्रशंसन्ति [3]तथा भुवि ।
धर्मस्य शीलमेवादिस्तत्र सर्वे गुणाः स्थिताः ॥ ४ ॥

शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
न हि किञ्चिदसाध्यं स्याल्लोके शीलवतां सताम् ॥ ५ ॥

### शीलप्रशंसायां प्रह्लादेतिहासः । शीलवता तेनेन्द्रराज्यापहरणम्

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादेन हृतं राज्यं देवेन्द्रस्य महात्मनः ॥ ६ ॥

---

[1] अयमध्यायः महाभारतादुद्धृतः । पूर्वं दुर्योधनाय धृतराष्ट्रेण प्रोक्तं शीलवर्णनं भीष्मः धर्मराजाय वर्णयति । म.भा. शान्तिपर्व अध्यायः १२४.

---

[2] मुच्यते (क ख घ च) [3] सदा (ग)

शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशीकृतम् ।

**इन्द्रेण श्रेयोविषये गुरुशुक्रसमीपे प्रश्नकरणम्**

ततो [1]बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः ॥ ७ ॥

उवाच सहसा प्राज्ञः श्रेय [2]इच्छामि वेदितुम् ।
ततो बृहस्पतिस्तस्मै ज्ञानं [3]नैः श्रेयसं परम् ।
कथयामास भगवान् देवेन्द्राय मुनीश्वराः ॥ ८ ॥

एतावच्छ्रेय [4]इत्येतद्बृहस्पतिरभाषत ।
इन्द्रस्तु भूयः पप्रच्छ किं विशेषो भवेदिति ।
[5]विशेषोऽस्ति महांस्तात भार्गवस्य महात्मनः ॥ ९ ॥

[6]तत्वागमाय भद्रं ते भूय एव सुरोत्तम ।
अथेन्द्रो भार्गवं [7]प्राह पृष्ट्वा श्रेयः कृताञ्जलिः ॥ १० ॥

आत्मनस्तु ततः श्रेयो भार्गवात्सुमहायशाः ।
ज्ञान[8]माह स यत्प्रीत्या पुनस्स परमद्युतिः ॥ ११ ॥

इन्द्रस्स भूयः पप्रच्छ किं विशेषो भवेदिति ।

**द्विजवेषधरेणेन्द्रेण श्रेयोविषये प्रह्लादसमीपे प्रश्नः**

भार्गवेणाथ धर्मज्ञः प्रह्लादस्य महात्मनः ।
[10]ज्ञानमस्ति विशेषेणेत्युक्तो हृष्टश्च सोऽभवत् ॥ १२ ॥

---

[1] बृहस्पतिरिति सकलमातृकापाठात् महाभारतपाठ एव वरम् ।
[5] बृहस्पतिरुवाचेति महाभारतीयपाठः सङ्गच्छतेऽत्रपूर्वम् ।

---

[2] इच्छाम (क ख घ च) [3] निःश्रेयसं (क ख घ च) [4] इत्युक्त्वा (ग)
[6] तत्रागमया (ग) [7] प्राप्य पृष्टः (च) [8] माश्रयता प्रीत्या (च) [9] एतदारभ्य ४८ पङ्क्तयः 'च' प्रतौ न सन्ति ।

स तत्र ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
स्तुत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ १३ ॥

प्रह्लादस्त्वब्रवीद्विप्रं [1]क्षणो नास्ति द्विजोत्तम ।
त्रैलोक्यराज्ये [2]शक्तस्य ततो नोपदिशामि ते ॥ १४ ॥

ब्राह्मणस्त्वब्रवीद्वाक्यं [3]यस्मिन्काले क्षणो भवेत् ।
तदोपदिष्टमिच्छामि यदि कार्यान्तरं भवेत् ॥ १५ ॥

ततः प्रीतोऽभवद्राजा प्रह्लादो [4]ब्रह्मवादिनम् ।
इत्युक्त्वा प्रददौ काले ज्ञानतत्त्वं [5]द्विजे तदा ॥ १६ ॥

ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यद्य[6]त्स मनसेच्छति ॥ १७ ॥

पृष्टश्च तेन बहुशः प्राप्तं कथमरिन्दम ।
त्रैलोक्यराज्यं धर्मज्ञ कारणं तद्ब्रवीहि मे ॥ १८ ॥

## प्रह्लादेनेन्द्राय ज्ञानतत्त्वनिवेदनम्

प्रह्लादः —

नासूयामि द्विजान्विप्र राजास्मीति कथञ्चन ।
काम्यानि वदतां [6]तत्र [7]संयच्छामि [8]च यानि च ॥ १९ ॥

ते [9]विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
तेषां कार्यपथे सक्तं शुश्रूषुमनहङ्कृतम् ॥ २० ॥

---

[1] क्षण इति महाभारतपाठः । मातृकासु 'क्षणे' इति । [3]क्षण इति समयः । अवकाशो वा । त्रिंशत्कलाः मिलित्वापि क्षणः । [9] विस्रब्धाः विश्वस्ताः ।

---

[2] विन्यस्य (ग) [4] ब्रह्मवादिने (ग) [5] द्विजातये (ग) [6] सर्वमवेत्स्यति (क ख घ च)
[7] तात (ग) [8] संयजामि (ग) [9] वहानि (ख ग घ)

धर्मात्मानं जितक्रोधं [1]नियतं संयतेन्द्रियम् ।
[2]समाचिन्वन्ति शास्त्रज्ञाः [3]क्षौद्रं मध्विव मक्षिकाः ॥ २१ ॥

एतत्पृथिव्याममृतं एतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखे हव्यमेत[4]त्कृत्वा प्रवर्तते ॥ २२ ॥

एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम् ।
शुश्रूषितस्तेन सदा दैत्येन्द्रो वाक्यमब्रवीत् ॥ २३ ॥

यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ।
वरं वृणीष्व भद्रं ते प्रदातास्मि न संशयः ॥ २४ ॥

इन्द्रकृतप्रह्लादशीलयाचना

यदि राजन् प्रसन्नस्त्वं ममेच्छसि च यद्धितम् ।
भवतः शीलमिच्छामि [5]प्राप्तुमेष वरो मम ॥ २५ ॥

ततः प्रीतः स दैत्येन्द्रो भयं चास्याभवन्महत् ।
वरे प्रदिष्टे विप्रेण [6]नाल्पचेतायमित्युत ॥ २६ ॥

एवमस्त्विति तं प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य च विप्राय वरं दुःखान्वितोऽभवत् ॥ २७ ॥

दत्ते वरे गते विप्रे चिन्तासीन्महती ततः ।
प्रह्लादस्य मुनिश्रेष्ठा विस्मयं [7]न च जग्मिवान् ॥ २८ ॥

---

[2] 'समासिञ्चति' इति क ख छ पाठः । 'समासीनञ्च' इति ग पाठः । उभावपि त्यक्त्वा महाभारतपाठो गृहीतः । [3] क्षुद्राभिः पिङ्गलवर्णमक्षिकाभिः निर्मितम् । मधु । [6] नाल्पतेजायमिति महाभारतम् ।

---

[1] निश्चितं (ग) [4] च्छ्रुत्व (ग) [5] ज्ञातु (ग) [7] नैव (ग)

## प्रह्लाददेहान्निर्गतस्य शीलस्य इन्द्रप्रवेशः

तस्य चिन्तयतश्चैव छायाभूतं महाद्युतेः ।
तेजो विग्रहवत्तस्य शरीरमजहात्तदा ॥ २९ ॥

तमपृच्छन्महाकायं प्रह्लादः को भवानिति ।
प्रत्याह तव [1]शीलो[2]ऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥ ३० ॥

तस्मिन्द्विजोत्तमे राजन् वत्स्याम्यहमनिन्दित ।
योऽसौ शिष्यत्यमागत्य तव नित्यं समाहितः ॥ ३१ ॥

इत्युक्त्वा[3]ऽन्तर्हितं तद्वै शक्रं चात्याविशन्महः ।

## शीलमनु प्रह्लाददेहाद्धर्मादीनां निर्गमनम्

तस्मिंस्तेजसि याते तु तादृग्रूपस्तथाऽपरः ।
शरीरान्निसृतस्तस्य [4]को भवानिति चाब्रवीत् ॥ ३२ ॥

धर्मं प्रह्लाद मां विद्धि यत्र चासौ द्विजोत्तमः ।
तत्र यास्यामि दैत्येन्द्र [5]यतश्शीलं ततो ह्यहम् ॥ ३३ ॥

ततोऽपरो महाभागाः प्रज्वलन्निव तेजसा ।
शरीरान्निसृतस्तस्य प्रह्लादस्य महात्मनः ॥ ३४ ॥

को भवानिति पृष्टश्च तमाह स महाद्युतिः ।
सत्यमस्म्यसुरेन्द्राद्य यास्येऽहं धर्ममन्विह ॥ ३५ ॥

तस्मिन्ननुगते धर्मं पुरुषे पुरुषोऽपरः ।
निश्चकाम ततः पश्चात्पृष्टश्चाह [6]महातपाः ॥ ३६ ॥

---

[1] शीलमिति नपुंसकं प्रायः । तथापि चरित्रमित्यर्थे पुलिङ्गेऽपि शब्दोऽयं दृश्यते।

---

[2] स्मीत्युक्तो (क) स्मीत्युक्ते (ख घ) [3] न्तर्हितस्त (ग) [4] प्रह्लादस्य महात्मनः (क)
[5] यत्र (क ख घ) [6] महारथः (च)

वृत्तं प्रह्लाद मां विद्धि यतस्सत्यं ततो ह्यहम् ।
तस्मिन् गते महाश्वेतः शरीरात्तस्य निर्ययौ ॥ ३७ ॥

पृष्टश्च मां बलं विद्धि यतो वृत्तमहं ततः ।
इत्युक्त्वा स ययौ तत्र [1]यतो वृत्तं मुनीश्वराः ॥ ३८ ॥

ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ।
तामपृच्छत दैत्येन्द्रः सा श्रीरित्येवमब्रवीत् ॥ ३९ ॥

उषिताऽस्मि सुखं नित्यं त्वयि सत्यपराक्रम ।
त्वया त्यक्ता गमिष्यामि बलं यत्र ततो ह्यहम् ॥ ४० ॥

ततो भयं प्रादुरभूत्प्रह्लादस्य महात्मनः ।
अपृच्छत च [2]तां भूयः त्वं यासि कमलालये[3] ॥ ४१ ॥

त्वं हि सत्यवती देवी लोकस्य परमेश्वरी ।
कश्चासौ [4]ब्राह्मणश्रेष्ठः तत्त्वमिच्छामि वेदितुम् ॥ ४२ ॥

## श्रीनिर्गमकारणं कथनं शीलप्रशंसनं च

श्रीरुवाच —

स शक्रो ब्रह्मचारी च [5]यस्तु तेनापि शिक्षितः ।
त्रैलोक्ये ते यदैश्वर्यं तेन तत्ते हृतं [6]प्रभो ॥ ४३ ॥

शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ निर्जिताः ।
तद्विज्ञाय महेन्द्रेण तव शीलं हृतं प्रभो ॥ ४४ ॥

---

[1] वृत्तिर्यात इति सर्वमातृकापाठादत्र स्थापितः महाभारतपाठस्समीचीनः ।
[3] त्वं यासि किमिति प्रश्नः । महाभारते तु क्व यासीति युक्तः पाठो दृश्यते ।

---

[2] तं (च) [4] ब्राह्मणः (घ) [5] यस्तत्रैवोपि (ख घ च) [6] भवेत् (ग)

[1]एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिवान् ॥ ४५ ॥

एते हि पार्थिवास्सर्वे शीलवन्तो [2]यशोऽन्विताः ।
धर्मस्सत्यं तथा वृत्तं बलं चैव तथा ह्यहम् ॥ ४६ ॥

शीलमूला महाराज तथा नास्त्यत्र संशयः ।
[3]एवमुक्त्वा गता सा च ते च सर्वे मुनीश्वराः ॥ ४७ ॥

ऋषयः —

शीलं [4]तत्सम्यगिच्छामो वेदितुं रोमहर्षण ।
प्राप्यते च महाशीलं तच्चोपायं ब्रवीहि नः ॥ ४८ ॥

## सूतकृतं शीलप्रशंसनम्

सूतः —

संक्षेपतस्तु शीलस्य शृणुत प्राप्तिमादृताः ।
अद्रोहस्सर्वभूतेषु कर्मणा मनसा गिरा ।
[5]अनुग्रहप्रदानं च शीलमेतत्प्रशस्यते ॥ ४९ ॥

यदन्येषां हितं [6]न स्यादात्मनः कर्म पौरुषम् ।
अपि त्रपेत वा येन न तत्कुर्यात्कथञ्चन ॥ ५० ॥

तत्तु कर्म तथा कुर्याद्येन श्लाघेत संसदि ।
शीलं समासेनैतद्वः कथितं मुनिपुङ्गवाः ॥ ५१ ॥

---

[1] मान्धाता इति पृषदाज्यपानेन युवनाश्वोदराज्जातः । इन्द्राङ्गुलिमेव चूचुक वल्लेढि असौ । असौ एकेनैव दिवसेन समस्तायाः पृथ्व्याः पादक्रमणमकरोत् इति कथा ।

---

[2] यशस्विनः (च) [3] सूतः (ग) इति आदौ [4] तच्छ्रोतु (ग) [5] अनुग्रहं च (ख घ)
[6] तस्माद् (ग)

यद्यप्यशीलाः पुरुषाः प्राप्नुवन्ति श्रियं क्वचित् ।
न भुञ्जते श्रियं गन्तुं समूलाश्च पतन्ति ते ॥ ५२ ॥

एतद्विदित्वा तत्त्वेन सुशीला भवत द्विजाः ।
उपायः पूर्वमुद्दिष्टः प्रह्लादेन महात्मना ॥ ५३ ॥

इतिहासमिमं पुण्यं यो वेत्ति परमार्थतः ।
शीलं धर्मं सत्यवृत्तं बलं श्री[1]स्तं न मुञ्चति ॥ ५४ ॥

इति श्रीमत्पुराणसारे शीलप्रशंसा नाम
अष्टाचत्वारिंशोऽध्यायः

[1] नं मुमोचति (च)

# एकोनपञ्चाशोऽध्यायः

[ योषिद्धर्मप्रकरणम् ]

## स्त्रीकर्तव्यविषये ऋषीणां जिज्ञासा

ऋषयः —

भवता सर्वमाख्यातं संक्षेपाद्विस्तरादपि ।
तथापि भगवन् किञ्चित्प्रष्टव्यं नो हृदि स्थितम् ॥ १ ॥

[1]त्वद्वाक्यामृतपीतानां नैव तृप्तिर्हि जायते ।
पुंसामस्ति मतिः पुण्या शास्त्रागमविचारतः ।
स्त्रीणां तु का गतिर्लोके कर्तव्यं किं नु कथ्यताम् ॥ २ ॥

## पतिव्रताधर्मप्रशंसा

सूतः —

[2]पतिर्नार्याः परो बन्धुः पतिरेव हि देवता ।
पतिरेव [3]परं मित्रं पतिरेव परा गतिः ॥ ३ ॥

धर्ममर्थं च कामं च [4]यशः स्वर्गतिमेव च ।
पत्यौ प्रसन्ने स्त्री सर्वमेतत्प्राप्नोत्यसंशयम् ॥ ४ ॥

कर्मणा मनसा वाचा या स्त्री [5]पतिमनुव्रता ।
इह [6]स्थैवमहाभागा देवैरपि सुपूज्यते ॥ ५ ॥

---

[1] त्वद्वाक्यमृतपीतं येषां अस्तीति । न तु त्वद्वाक्यमृतेन पीता इति ।
[2] पातिः । पाति रक्षति पालयतीति वा इत्यस्मिन्नर्थे । पाणिग्रहीतेति ।

---

[3] परो बन्धुः (च) [4] मोक्षं च गतिरेव (च) [5] मनुपति (घ च)
[6] सैव (क ख घ च)

व्रतानामुत्तमं [1]विप्राः पातिव्रत्य[2]व्रतं मतम् ।
पातिव्रत्ये स्थिता [3]नारी पूज्यते हि [4]सुरैरपि ॥ ६ ॥

न व्रतेनोपवासेन धर्मेण विविधेन च ।
नारी स्वर्गमवाप्नोति [5]प्राप्नोति पतिपूजनात् ॥ ७ ॥

पतिव्रताया वचनमतिक्रान्तु न शक्यते ।
देवैरपि महाभागा किमुता[6]न्यैश्च जन्तुभिः ॥ ८ ॥

### पतिव्रतामाहात्म्यनिरूपणेऽनसूयेतिहासः

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पुत्रः शरधृतेर[7]त्रिरासीन्नाम्ना महामुनिः ।
अनसूया च तद्भार्या दक्षस्य दुहिताऽभवत् ॥ ९ ॥

पतिव्रता महाभागा पतिशुश्रूषणे रता ।
तया सहात्रिर्भगवान् गार्हस्थ्यमवसत्पुरा ॥ १० ॥

### अनसूयया उत्तरस्यां दिशि पत्युः पादोदकप्रक्षेपणम्

एकदा चरणौ पत्युः प्रक्षाल्यासौ पतिव्रता ।
[8]दधार शिरसा किञ्चित्ततीर्थां[9]त्स्मितभाषिणी ॥ ११ ॥

उदीच्यां दिशि तच्छेषं क्षिपन्तीं तां उवाच सः ।
मम पादोदकं बाले कस्मान्मुञ्चस्युदङ्मुखम् ।
श्रुत्वा पत्युरिदं वाक्यं तं प्रत्याह ससाध्वसा ॥ १२ ॥

---

[7] असावत्रिः ब्राह्मणः मानसपुत्रः इति ख्यातोऽस्ति ।

---

[1] स्त्रीणां (च) [2] मनुत्तमम् (च) [3] देवी (ग) [4] सुरासुरैः (ग) [5] सौख्यञ्च (ग)
[6] न्येन जन्तुना (ग) [8] दशधा (ग) [9] तीर्थं मित (ग)

## अनसूयया पादोदकप्रक्षेपणकारणकथनम् ।

### तत्र शीलवत्याः कथा

अनसूया —

अस्ति शीलवती नाम सखी मे [1]प्राणसम्मता ।
सङ्क्रीडमानां तां बाल्ये प्राह वागशरीरिणी ॥ १३ ॥

भवत्या भविता भर्ता कुष्ठवानिति निश्चितम् ।
तां निशम्य गिरं कन्या मनसा भृशदुःखिता ॥ १४ ॥

उद्वाहविमुखी भूत्वा तपस्तेपे सुदारुणम् ।
इदानीं हिमवत्सानौ तपस्यन्तीमनिन्दिताम् ॥ १५ ॥

दग्ध[2]पर्यन्तकान्तारो [3]दिधक्षति [4]दवानलः ।
तस्योपशान्तिमुद्दिश्य [5]क्षिप्तं पादोदकं तव ॥ १६ ॥

इति तस्या वचः श्रुत्वा स मुनिर्हृष्टमानसः ।
दृष्ट्वा ज्ञानेन तत्सर्वं प्रशशंस सधर्मिणीम् ॥ १७ ॥

द्रष्टुं कौतुहलाविष्टः स गत्वा हिमवत्तटम् ।
दृष्ट्वा च तां तपस्यन्तीं उवाच मधुरां गिरम् ॥ १८ ॥

तपश्चरसि कस्मात्त्वं बाले ब्रूह्यतिमानुषम् ।
श्रुत्वैतद्वचनं तस्य तं प्रणम्य जगाद सा ॥ १९ ॥

दुश्चर्मा भविता भर्ता ममेत्याकर्ण्य [6]खे गिरम् ।
तपस्याम्यपवर्गार्थं [7]परिणीतिपराङ्मुखी ॥ २० ॥

---

[5] दीप्तमिति सर्वमातृकापाठः न सङ्गच्छते । 'क्षिप्तं' इति युक्तम् ।

---

[1] प्राणवल्लभा (ग) प्राणसस्मिता (च) [2] चर्यान्त (घ) [3] द्विधृक्षति (घ च)
[4] दिवानलः (च) [6] खेरितम् (च) [7] विवाहे च (च)

अत्रि —

स्त्रीणां नास्ति पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
[1]पतिशुश्रूषणेनैव गतिस्तासां प्रकीर्तिता ॥ २१ ॥

दुश्शीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।
पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥ २२ ॥

रक्षेत्कन्यां पिता [2]विन्नां पतिः पुत्रस्तु वार्धके ।
अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित् स्त्रियः ॥ २३ ॥

## गर्गपुत्रीकथानकम्

[3]ऋषिरासीन्महावीर्यः पुरा गर्गो महायशाः ।
तस्य पुत्री महाभागा कृत्वाऽऽश्रममनिन्दिता ॥ २४ ॥

उपवासैः पूजयन्ती पितॄन् देवांश्च सा पुरा ।
तस्यास्तु तपसोऽग्रेण महान्कालो[4]ऽत्यागच्छुभे ॥ २५ ॥

सा पित्रा दीयमानापि पतिं नैच्छदनिन्दिता ।
आत्मनः सदृशं सा तु भर्तारं [5]नान्वपश्यत ॥ २६ ॥

जगाम [6]वृद्धभावञ्च कौमारब्रह्मचारिणी ।
[7]ततस्तां तपसोग्रेण पीडयित्वात्मनस्तनुम् ।
मोक्तुकामां [8]तदा दृष्ट्वा शरीरं नारदोऽब्रवीत् ॥ २७ ॥

---

[2] विन्नां पतिः रक्षेदिति । विन्ना अङ्गीकृतेति ।

[3] महाभारतादुद्धृतेयं कथा । वैशम्पायनेन जनमेजयाय कथ्यमानायां कथायां गार्ग्यस्थाने 'कुणिगार्ग्य' इति दृश्यते । म.भा. शल्यपर्व अ. ५१

---

[1] पतिशुश्रूषयैवात्र नान्यत्र गतिरिष्यते (ग) [4] ऽभ्यगा (ग) [5] नान्वपद्यत (ग)
[6] वृद्धभावेन (क ख घ च) [7] ततस्सा (क ख घ च) [8] ततो (ग)

### अनूढाया एव स्वर्लोकगमनेच्छाप्रदर्शनम्

असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे ।
एवं हि श्रुतमस्माभिर्देवलोके महाव्रते ॥ २८ ॥

तपः परमकं [1]प्राप्तं न तु लोकास्त्वयार्जिताः ।
तन्नारदवचः श्रुत्वा साऽब्रवीदृषिसंसदि ॥ २९ ॥

### नारदवचसा गर्गपुत्र्या विवाहः

तपसोऽर्धं प्रयच्छामि पाणिग्रहस्य सत्तमाः ।
इत्युक्तेऽस्यास्तु जग्राह पाणिं गालवसम्भवः ॥ ३० ॥

ऋषिः प्राक् [2]शृङ्गवन्नाम समयं च ततोऽब्रवीत् ।
समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने ॥ ३१ ॥

यद्येकरात्रं वस्तव्यं त्वया सह मयेति वै ।
तथेति सा प्रतिश्रुत्य [3]तस्य पाणिं ददौ पुनः ॥ ३२ ॥

सा रात्रावभवद्बाला तरुणी दिव्यरूपिणी ।
दिव्याभरण[4]वस्त्राढ्या दिव्यस्रगनुलेपना ॥ ३३ ॥

तां दृष्ट्वा [5]गालवः प्रीतो रमयामास कामिनीम् ।
उवास च क्षपामेकां प्रभाते साऽब्रवीच्च तम् ॥ ३४ ॥

---

[1] 'प्राप्तां' इति सर्वमातृकापाठः सङ्गतो न भाति ।
[2] गालवपुत्रस्य शृङ्गवानिति नाम पुराणेषु दृश्यते । श्रुतवानिति नास्ति । अतः महाभारतपाठः स्वीकृतोऽत्र । श्रुतवानिति सर्वमातृकापाठः परित्यक्तः । [3] तस्मै इत्यर्थे । [5] गालविरिति साधुः ।

---

[1] वस्त्रा च (ग)

यस्त्वया समयो विद्वन् कृतो ब्रह्मर्षिसंसदि ।
तेनोषितास्मि भद्रं ते स्वस्ति तेऽस्तु व्रजाम्यहम् ॥ ३५ ॥

एवमुक्त्वा तु सा साध्वी देहं त्यक्त्वा दिवं ययौ ।
तस्मादेतत्तपो हित्वा पतिमेकं भजस्व ह ॥ ३६ ॥

## अत्रिकृतमनसूयाप्रशंसनम्

पश्यानसूयां [1]मद्भक्तां [2] यस्त्वां दावानलावृताम् ।
विज्ञाय दिव्यया दृष्ट्वा चक्रे तच्छान्तिमञ्जसा ॥ ३७ ॥

सूतः —

माहात्म्यमनसूयायाः श्रुत्वा [3][सा] मुनिनोदितम् ।
निवृत्ता तपसो घोरादासीत्परिणयोन्मुखी ॥ ३८ ॥

इति श्रीमत्पुराणसारे शीलवतीचरितं नाम
एकोनपञ्चाशोऽध्यायः

---

[3] श्रुत्वास्येति सर्वमातृकापाठः न सङ्गच्छते । सेति सम्पादकनिवेशितः पाठः ।

---

[1] यद्भक्त्या (च) [2] या त्वा (ग)

## पञ्चाशोऽध्यायः

### पतिव्रतामाहात्म्यनिरूपणे शीलवतीकथानकम्

[1]एतस्मिन्नेव काले तु [2]धर्मशास्त्रार्थतत्त्ववित् ।
महर्षिस्सुतपा नाम बभूव भृगुवंशजः ॥ १ ॥

तस्य चोग्रतपा नाम पुत्रोऽभूद्भृशकोपनः ।
तपसा यस्य संक्षोभं त्रैलोक्य[3]मगमत्पुरा ॥ २ ॥

विषये कस्यचिद्राज्ञो गृहं कृत्वा [4]महाश्रमम् ।
न्यवसत्पितुरादेशात्स मुनिर्नातिहृष्टवत् ॥ ३ ॥

### कोपिनोऽपि भर्तुः शीलवतीकृतं शुश्रूषणम्

तस्य शीलवती सा तु भार्यासीच्छीलमण्डना ।
पतिव्रता महाभागा [5]पतिप्रियहिते रता ॥ ४ ॥

सर्वलक्षणसम्पन्ना शुभाचारा सुरूपिणी ।
कुलशीलगुणोपेता दयादाक्षिण्यशालिनी ॥ ५ ॥

दक्षिणा गृहकृत्येषु सततं प्रियवादिनी ।
स नातिप्रीतिमांस्तस्यां दुःशीलः क्रोधनः शठः ॥ ६ ॥

नित्यम[6]प्रियवाक्क्रूरः शुश्रूषापरिदूषकः ।
दोषदर्शी गुणत्यागी सदोद्विग्न[7]मतिर्द्विजाः ॥ ७ ॥

---

[1] अस्याः कथाया मूलं मार्कण्डेयपुराणम् । तत्र कौशिकब्राह्मणस्य कथा इत्थमेव सङ्क्षेपतो निरूपिताऽस्ति । विवरणं त्वीदृशं न दृश्यते ।

—मा.पु. अध्यायः १६

---

[2] सर्वधर्मार्थ (ग) [3] मभवत् (क ख ग घ) [4] गृहाश्रमम् (क ख घ) [5] पत्युः (ग)
[6] प्रियवांक्रूरः (क ख घ) [7] मना (ग)

न करोति प्रियालापं तया सह कदाचन ।
करोति [1]सहसोद्वेगं [2]वदत्यत्यन्तनिष्ठुरम् ॥ ८ ॥

अत्यर्थमधुरं तस्या वचस्त[3]द्धृदि केवलम् ।
पुष्णाति कोपमेवाहेर्गोः क्षीरमिव वै विषम् ॥ ९ ॥

तथापि सा महाभागा तच्छुश्रूषापरायणा ।
अनन्यापाश्रया साध्वी बभूव पतिदेवता ॥ १० ॥

सुप्रसन्नमुखी नित्यं भीता [4]स्निग्धा प्रियंवदा ।
मनसा कर्मणा वाचा तदेकशरणा[5]वसत् ॥ ११ ॥

[6]तत्पारुष्यं च सा बाला भवितव्यमिवात्मनः ।
मन्वाना कुरुते कोपं नैवातीव मनस्विनी ॥ १२ ॥

एवं प्रवर्तमानेऽपि स्त्रीकामस्य तदा भवत् ।
सोऽन्यजन्मकृतैः पापैः कुष्ठरोगातुरोऽभवत् ॥ १३ ॥

परिचंक्रमणाशक्तः स्नानपानाशनाक्षमः ।
शौचाचारविहीनश्च स शिश्ये [7]शयने मुनिः ॥ १४ ॥

ततस्तां प्रति सोऽत्यर्थमप्रियानृत[8]निष्ठुरम् ।
विलपन्नसकृद्वाचः शेते व्याधिबलार्दितः ॥ १५ ॥

---

[7] शिश्ये इति शीङ्शयने इत्यस्य धातोः लिट्रूपम् ।

---

[1] यदि सोद्वेगं (ग) सततोद्वेगं (ग) [2] वदत्यन्यत्र (क) [3] द्वृद्धि (क ख ग घ)
[4] स्निग्ध (क ख घ च) [5] भवत् (च) [6] तत्पार्श्वेनैव सा बाला भवितव्या महात्मनः (क ख ग घ) [8] निष्ठुरः (ग)

तं तथा व्याधितं भार्या पतिं देवमिवार्चयन् ।
अनिच्छतोऽपि सा भर्तुः [1]प्रयुनक्त्यौषधादिकम् ॥ १६ ॥

भिक्षित्वा द्विजगेहेषु पुपोष पतिमादरात् ।
तथापि क्रोधनोऽत्यर्थं पुरुषो लोल एव च ॥ १७ ॥

नित्यमप्रियवादी च स तां प्रति बभूव ह ।
ततस्तं प्रापितव्याधिं द्विजैर्भोक्तुं निमन्त्रितम् ॥ १८ ॥

प्रयाति स्कन्धमारोप्य भर्तारं सा तदिच्छया ।
तस्यामेवं प्रवर्तन्त्यां कदाचिद्द्विजपुङ्गवाः ।
निशि स्तिमितमूकायामिदं भार्यामभाषत ॥ १९ ॥

### कुष्ठिनः उग्रतपसः वेश्यासक्तिः

अतीते दिवसे भोक्तुमावां ननु निमन्त्रितौ ।
केनचिद्द्विजवर्येण प्रयातौ [2]तौ द्विजालयम् ॥ २० ॥

तत्र गत्वा यथाजोषं भुक्त्वा [3]चैव गतेऽहनि[4] ।
तत्राहं व्रजमानायाः स्कन्धस्थो भवनं शुभम् ॥ २१ ॥

सुधाधवलितं हर्म्यमपश्यं भवनोत्तमम् ।
तदा सा त्वं शनैर्दूरात्सम्परिक्रम्य वर्त्मनि ॥ २२ ॥

उद्वहन्त्येव मां कृच्छ्रान्नन्वायातासि वेगिता ।
किमर्थमागता मार्ग[5]मपसृत्यासि तत्र वै ॥ २३ ॥

---

[1] प्रयुनक्ति संयोजयतीत्यर्थः । [4] गतेऽहनि, पूर्वस्मिन्दिने, सायङ्काले वेत्यर्थः ।
[2] तद्द्विजालयमिति युक्तमासीत् ।

---

[3] तप्रगते (क ख ग घ) चैत्रागते (च) [5] मा स्मृत्य हि (ग)

गृहं च तच्छुभे तस्या यदि जानासि मे वद ।
इति पृष्टोग्रतपसा तदा शीलवती द्विजाः ।
शनैर्मधुरया वाचा भर्तारमिदमब्रवीत् ॥ २४ ॥

शीलवती —

आयुष्मन्भवनं तत्तु गणिकाया महाधनम् ।
कस्याश्चित्पथि यद्दृष्टं भवता व्रजता तदा ॥ २५ ॥
[1]अत्यर्थधनिकाधीनशरीरा गणिकाङ्गनाः ।
[2]यतस्ते[3]नाद्रियन्तेऽङ्गप्रतिकर्मक्रियास्ततः ॥ २६ ॥
तदाप्लुतनिशामिश्रजलजम्बालदुस्सहम्[4] ।
[5]अपसृत्याहमायाता [6]पदवीं मुनिसत्तम ॥ २७ ॥
आचारायुर्यशोलक्ष्मीतपोहानिकरं सदा ।
स्नानतोयाक्तधरणीलङ्घनं किल देहिनाम् ॥ २८ ॥
तस्मादहमनिच्छन्ती विलङ्घयितुमञ्जसा ।
[7]अपसृत्यागता भूमि[8]माप्लुतोदकपङ्किलाम् ॥ २९ ॥
इति तस्या वचः श्रुत्वा स मुनिर्द्विजसत्तमाः ।
अस्वस्थ इव सोद्वेगं निद्रां लेभे न [9]चिन्तया ॥ ३० ॥

---

[2] यतस्तासां धनाशा अत एव स्नानलेपनादिकं परपुरुषाकर्षकं कुर्वन्ति विशेषतः । [4] स्नानादिभिर्देहाक्तस्य जलस्य अशुचित्वम् । तल्लङ्घनं च आयुरादिहानिकरम् ।

---

[1] अभ्यर्थि धनिकादीन (च) .... अभ्यर्थि .... धीन (ग) [3] नाद्रियन्ति (क ख घ च)
[5] अपवृत्य (क ख ग घ) [6] वर्त्माहं (ग) [7] अपश्यन्त्या (च) [8] मावृतो (ग)
[9] किञ्चन (च)

[1]ततश्शीलवती दृष्ट्वा भर्तुरिन्द्रिय[2]विक्रियाम् ।
चिन्तयित्वा बहुविधं भूयस्तमिदमब्रवीत् ॥ ३१ ॥

अस्वस्थ इव किं विद्वन्नधुना दृश्यते भवान् ।
केनापि मानसेन त्वं तापेन परिभूयसे ॥ ३२ ॥

अङ्गानि निर्भराणीव विनिद्रः क्षिपसे क्षितौ ।
अभियुक्तं बलवता[3] दुर्बलं हीनसाधनम्[4] ॥ ३३ ॥

[5]हृतस्त्वं कामिनं चोरमाविशन्ति प्रजागराः ।
चिन्तयन्त्यपि नोपैमि तवेदृक्क्लेश[6]कारणम् ॥ ३४ ॥

ध्रुवं चाकुण्ठितौत्सुक्यमवगच्छामि सुव्रत ।
तस्मात्करिष्ये किमहं येन ते मानसो ज्वरः ।
प्रशमं यात्यशेषेण तन्ममाख्यातुमर्हसि ॥ ३५ ॥

## आत्मानं वेश्यागृहं प्रापयितुं उग्रतपसः पत्नीसविधे प्रार्थनम्

उग्रतपाः —

सत्यमुक्तं त्वयात्यर्थं अस्वास्थ्याकुलितं मम ।
मानसं हि गतिं मन्ये सतामपि यथाश्रयम् ॥ ३६ ॥

सुदुर्लभो [7]हि मां कश्चित्संक्लिश्यति मनोरथः ।
अश्रद्धेयमनाख्येयं यस्य मूलमनिन्दिते ॥ ३७ ॥

---

[3] बलवता परिभूतम् । [4] दुर्बलोपायम् ।

---

[1] अत (क ख घ च) [2] विप्लवम् (च) [5] हतस्त्वं (क ख ग घ)
[6] कारिणम् (क ख घ) [7] पि (च)

सुदुर्लभतरार्थाप्तिपराधीनधिया[1]मपि ।
चिन्ताज्वरो नृणां [2]किन्न विधत्ते विदुषामपि ॥ ३८ ॥

शरीरदोषवैवर्ण्यपरितापप्रजागराः ।
जडताऽ[3]ध्यासमूकत्वं विद्वेषः सर्ववस्तुषु ॥ ३९ ॥

आलस्यं नेत्ररोगश्च दीर्घोष्णश्वास एव च ।
[4]हृद्येष्वप्यरतिर्नित्यं शयनान्नासनादिषु ॥ ४० ॥

[5]चिन्ताज्वरस्य सुभगे चिह्नान्येतानि सुव्रते ।
तेनाभिभूयमानत्वात् [6]क्लिश्यन्त्येते हि मामपि ॥ ४१ ॥

भद्रे मां बाधते [7]मारः सर्वभूत[8]विमोहकः ।
येनाहं भृशमस्वस्थः सञ्जातोऽद्य विधेर्बलात् ॥ ४२ ॥

तस्मान्मां प्रापय क्षिप्रं गणिकाभवनं शुभम् ।
संयोजयस्व च तया जीवन्तं मां यदीच्छसि ॥ ४३ ॥

अविलङ्घ्यं [9]पतिवचः सर्वावस्थासु योषिताम् ।
[10]किमतस्तर्हि [11]मां तत्र नय [12]त्वमविचारितम् ॥ ४४ ॥

इति शीलवती भर्तुर्वचः श्रुत्वा [13]ससाध्वसम् । [14]
भर्तारमसितापाङ्गी सान्त्वयामास सान्त्वनैः ॥ ४५ ॥

---

[3] अध्यासः मिथ्याज्ञानम् । [7] मारः स्मरः । [14] भीतियुक्तं यथा तथा ।

---

[1] मिह (ग) [2] केन (क ख घ च) [3] ध्यान (ग) [4] हृष्येत्ववेरति (ग) हृद्वेष्वपि रियत्वं (च) [5] चिन्ताज्वरन्यस्य हस्ते (ग) [6] क्लिश्यन्त्येत्यमिमानपि (ग) क्लिश्यतेत्ये हि मामपि (घ) [8] विमोहनः (ग) [9] यदि (क ख घ च)
[10] कमितुस्तर्हि (ग) किमत्र तर्हि (ख घ) किमित (च) [11] मामत्र (ग)
[12] त्वमविचारय (च) [13] ससाध्वसा (ग)

### भर्त्रे शीलवतीकृत उपदेशः

न करिष्ये कथं ब्रह्मन्नविलङ्घ्यं वचस्तव ।
जानतां च विशेषेण धर्मं [1]सद्भिरनुष्ठितम् ॥ ४६ ॥

किन्त्वस्वस्थो भवानद्य कामेन [2]परिपीडितः ।
तेन धैर्यधनो भूत्वा निबोध वचनं मम ॥ ४७ ॥

भर्ता स्त्रियं गुरुश्शिष्यं शासितारौ न तौ तयोः ।
अर्हतश्शासने विद्वन् एष धर्मस्सनातनः ॥ ४८ ॥

तथापि त्वाऽनुशास्मीह वशगं रागरोगयोः ।
ज्ञात्वा परं धर्ममतः श्रृणुष्वात्ममतं वचः ॥ ४९ ॥

न जातु जीवन्पुरुषः सदाचारं परित्यजेत् ।
स तु तस्यापवर्गस्य[3] समस्तस्य प्रसाधकः ॥ ५० ॥

कः कस्याञ्चिदवस्थायां कर्म सज्जननिन्दितम् ।
[4]विद्वन्न जातु कुर्वीत पुरुषो यः सचेतनः ॥ ५१ ॥

[5]सदाचाररतो मैत्रः[6] सर्वभूतहिते रतः ।
[7]वश्येन्द्रियः प्रसन्नात्मा सन्तुष्टो येनकेनचित् । ॥ ५२ ॥

सत्यवादी जितक्रोधः शुचिस्सज्जन[8]वत्सलः ।
एवं विधगुणाचारः पुरुषस्सततं द्विजः[9] ॥ ५३ ॥

---

[3] अपवर्गः फलप्राप्तिः मोक्षः । [6] मित्रभावमापन्नः ।
[9] स एव द्विजपदार्हो भवति न त्वन्य इति ।

---

[1] सम्यगनुष्ठितम् (च) [2] च न पीडितः (क ख घ) ल निपातितः (च)
[4] विद्वान् (च) [5] उदारचरितो (ग) [6] तस्येन्द्रियः (क ख घ च) [7] वल्लभः (च)

[1]न तस्य [2]हीयते किञ्चिल्लोकयोरुभयोरपि[3] ।
तस्मात्स्व[4]धर्मसन्तुष्टो भवेद्वै यो गृहाश्रमे ॥ ५४ ॥

कृतकृत्यो भवेत्तस्य तुष्टास्स्युस्सर्वदेवताः ।
भवान् हि सम्यग्वेदैवं धर्मं धर्मभृतां वर ॥ ५५ ॥

सर्वार्थनाशके विद्वन्नित्यं खलु जनावृते ।
कथमद्य करोषि त्वं मनः कर्मणि गर्हिते ॥ ५६ ॥

गणिकाः प्रकृतिक्षुद्राः क्रूराः पापपरायणाः ।
परुषानृतभाषिण्यस्तथा पुरुषवञ्चकाः ॥ ५७ ॥

परद्रव्यहराः [5]पापचारिण्यः कलहप्रियाः ।
[6]कदर्याभिमता नित्यं सर्वदोषाश्रयाशयाः ॥ ५८ ॥

अत्यर्थं तेन लोभेन स्वस्वदेहसमर्पणम् ।
कस्मैचिदपि कुर्वन्ति काः स्युस्ताभ्योऽधमाः स्त्रियः ॥ ५९ ॥

कामातुरखला[7]नीकनखदन्तक्षताशुचि[8]
यासामङ्गं द्विजः स्पृष्ट्वा स कथं शुध्यते पुनः ॥ ६० ॥

अपेय[9]पाननिरताः अकृत्याहृतचेतनाः ।
अकामतोऽपि [10]ताः स्पृष्ट्वा द्विजः स्नायात्सचेलकम् ॥ ६१ ॥

[11]स्वभावनिकृतिप्रज्ञाः [12]शठाः शौचविवर्जिताः ।
वेश्यासंभोगिनः पुंसो निष्कृतिः क्वोपपद्यते ॥ ६२ ॥

---

[3] इह अमुत्र च । [6] कुत्सितः अर्यः कदर्यः । [8] अनीक इति पाठे संख्याबाहुल्यात्सेनावत्कामुकाः समागच्छन्तीति ज्ञेयम् ।
[11] स्वभावतः शठबुद्धय इति । [12] क्रूरहृदयाः वञ्चनानिपुणाः इत्याद्यर्थः ।

---

[1] यस्तस्य (क ख घ च) [2] लीयते (ग) [4] दारसन्तुष्टो वर्तते यो गृहाश्रमे (ग)
[5] कामकारिण्यः (ग) [7] नेक (ग) [9] पानाभिरता (ग) [10] वा कामात् (च)

पुंसस्सुशीलदारस्य कृतकृत्यस्य धीमतः ।
हन्त ते जायते [1]भक्तिर्गणिकासु [2]कथं सतः ॥ ६३ ॥

कामाद्रागान्मत्सराद्वा यो वेश्याममिमन्यते ।
स [3]जन्मशतकं याव[4]न्नरके स्यान्न संशयः ॥ ६४ ॥

सहधर्मचरीं भार्यां हित्वा वेश्यां प्रयाति यः ।
[5]षण्ढस्स्यात्सप्तजन्मानि [6]स इह प्रेत्य [7]नारकी ॥ ६५ ॥

तासु यो[8]ऽसत्प्रवृत्तासु रतिं प्रकुरुते द्विजः ।
[9]तस्येष्टं प्रतिगृह्णन्ति पितृदेवद्विजातयः ।
वृषली च सुरा चैव नैव सेव्या द्विजातिभिः ॥ ६६ ॥

विश्वासयित्वा तरुणीं यः स्वभार्या[10]मनागसम् ।
उपैति [11]वेश्यां जन्मानि [12]स सप्त स्त्रीत्वमश्नुते ॥ ६७ ॥

दारिद्र्यं कुलटासङ्गो [13]महारोगोऽतिमूर्खता ।
वर्तन्ते [14] यस्य चत्वारि कुतस्तस्येह गौरवम् ॥ ६८ ॥

गणिकाभिरतेः पुंसः [15]परदाररतेषु च ।
प्रापयेदापदं घोरां इति पौराणिकी श्रुतिः ॥ ६९ ॥

बाल्यात्प्रभृति येऽधीताः वेदाश्शास्त्राणि च त्वया ।

---

[8] असत्सु मनुष्येषु असत्सु पानादिव्यवहारेषु वा प्रवृत्ता इति ।
[9] यज्ञयागादयः इष्टसंज्ञकाः ।

---

[1] शक्तिः (क ख घ च)  [2] नघं सतः (क घ) कथं यतः (ग)  [3] जन्मसप्तकं (ग)
[4] न्नारकी (ग)  [5] शठः (च)  [6]समुपेत्येह नारकी (च)  [7] नारकात् (क ख घ च)
[10] मनागसीम् (ग च)  [11] चेत्स (च)  [12] सप्तस्त्रीत्वं समश्नुते (च) सप्त स्त्रीत्वमुपाश्नुते (ग)  [13] महारागो (क)  [14] यत्र चत्वारः (क ख घ)  [15] परधारधनेषु (ग)

विस्मृतास्ते ध्रुवं येन कर्मैतत्कर्तुमिच्छसि । ॥ ७० ॥
तस्मान्निरूप्य [1]मनसा सच्छास्त्रपरिवर्तिनीम् ।
कुरु बुद्धिं स्थिरां विद्वन्निजधर्मानुवर्तिनीम् । ॥ ७१ ॥
अहं तु सर्वभावेन सततं पतिदेवता ।
सन्मार्गवर्तिनी चैव त्वदधीना विशेषतः ॥ ७२ ॥

## पत्नीबोधितस्यापि उग्रतपसः वेश्यागृहगमनविनिश्चयः

उग्रतपाः —

एवमेतद्यथा[2]त्थ त्वं भद्रे [3]जानाम्यशेषतः ।
श्रुतं यथार्थवद्वाक्यं त्वदीयमिह सूनृतम् ॥ ७३ ॥
रक्षः पोष्यश्च सततं भार्यया पतिरातुरः ।
अर्धं पुंसः शरीरस्य पत्नीति प्रोच्यते ततः ॥ ७४ ॥
[4]अकार्ये यदि सद्वृत्तः सत्येनैव स्वभार्यया ।
अनुनेयो यतस्तस्मान्नापराधस्त्वया कृतः ॥ ७५ ॥
अथापि ते वचस्तथ्यं [5]लोकत्रयहितं मम ।
हृदि सन्तिष्ठते नैव [6]तथापहृतचेतसः ॥ ७६ ॥
असत्कर्मप्रवृत्तानां पुंसां स्वायम्भुवादयः ।
प्रायश्चित्तानि जगदुः [7]सत्यं सत्कर्मलब्धये ॥ ७७ ॥

## वेश्यागमनजनितं पापं प्रायश्चित्तैर्व्यपोहतीति कण्ड्वादिदृष्टान्तः

येन कण्ड्वादयः पूर्वं नन्वसत्कर्मकारिणः ।
प्रायश्चित्तेन भूयश्च प्रापुरेवोत्तमां गतिम् ॥ ७८ ॥

---

[5] सद्वृत्तः अकार्ये यदि प्रतिष्ठते तदा सः स्वभार्यया अनुनेय इति ।

---

[1] माना सा (च) [2] च (च) [3] जानास्य (क ख घ च) [4] लोकद्वय (क ख घ च)
[6] तथापि हृत (क ख घ) [7] सतां (ग)

[1] ...नाचाख्यामप्सरसं कण्डुर्नाम महामुनिः ।
अभिपेदे पुरा कामी विश्वामित्रोऽपि मेनकाम्[2] ॥ ७९ ॥

गौतमस्य मुनेः पत्नीमहल्यां बलसूदनः[3] ।
[4]इन्दुर्भार्यां गुरोर्मित्रावरुणावुर्वशीमपि[5] ॥ ८० ॥

एवमन्येऽपि सम्पूर्य स्वाभिप्रायं यथा सुखम् ।
प्रायश्चित्तैस्तपोभिश्च पूतात्मानोऽभव[6]न्पुनः ॥ ८१ ॥

तस्मादद्याहमप्येवं विनिवर्त्य मनोरथम् ।
प्रायश्चित्तं करिष्यामि यथा पूतो भवा[7]म्यलम् ॥ ८२ ॥

तथापि मदभिप्रायं [8]संपूरयितुमर्हसि ।
अविचारितमेवाद्य यथा नासूनहासिषम् । ॥ ८३ ॥

तत्तथा वचनं श्रुत्वा भर्तुः कामातुरस्य सा

---

[1] कण्डूकथा विष्णुपुराणे भागवते च दृश्यते । वि.पु. अं. १ अ. १५, भा. स्कं. ४. अ. ३० । [2] शकुन्तलायाः पिता विश्वामित्रः दुष्यन्त-समकालिकः । त्रिशङ्कसमकालिकस्त्वन्यः । रामकालिकडः त्रिशङ्कुकालि-कश्च विश्वामित्रः भिन्नौ । वा.रा- बालकाण्डः अ. ५७

[3] इन्द्रकृताहल्याधर्षणकथा बहुषु पुराणेषु प्रसिद्धा । ब्र.पु. अ. ८७, १२२ म.भा. उद्योगवर्वे १२ अनु. १५३ वा.राः उत्तरकाण्डः ३० स्कं.पु. १-२-५२ । [4] चन्द्रस्य गुरुस्त्रीगमनकथा द्रष्टव्या । भा. स्कं.९-१४ पद्म.पु. पातालखण्डः १२. ब्र.पु. ९. मत्स्य.पु. १३ दे.भा. स्कं १-११ वायु.पु. २-२८-२९ [5] उर्वशीमित्रावरुणप्रसङ्ग बृहद्देवताग्रन्थे द्रष्टव्यः । बृ.दे. ५. १३४

---

[6] न्पुरा (ग) [7] म्यहम् (च) [8] त्वं (ग)

## पत्न्याः साहाय्येन उग्रतपसः वेश्यागृहगमनं, अणिमाण्डव्यात् शापावाप्तिश्च

तत्पत्नी सत्कुलोत्पन्ना महाभागा पतिव्रता । ॥ ८४ ॥

गाढं परिकरं बध्द्वा [1]शुल्कमादाय चाधिकम्
स्कन्धे भर्तारमादाय जगाम मृदुगामिनी । ॥ ८५ ॥

निशि मेघावृते व्योम्नि चलद्विद्युत्प्रकाशिते
राजमार्गे प्रियं भर्तुः चिकीर्षन्ती द्विजाङ्गना । ॥ ८६ ॥

अभ्यस्तबलसञ्चारा बलानुमितवर्त्मना
जगाम शनकैरंसे समारोप्य पतिं तदा । ॥ ८७ ॥

शूलार्पितो मुनिर्मार्गे माण्डव्यश्चोरशङ्कया
तया वहन्त्या भर्तारं शीलवत्या विचालितः । ॥ ८८ ॥

शङ्कौ सञ्जातदुःखः सन् माण्डव्यः कुपितोऽब्रवीत्
येनाहमेवमत्यर्थं दुःखितश्चालितो वृथा । ॥ ८९ ॥

इदं कष्टमनुप्राप्तः स पापात्मा [2]नराधमः ।
सूर्योदयेऽ[3]वशः प्राणै[4]र्वियोक्ष्यति न संशयः ॥ ९० ॥

## शापवैफल्यार्थं शीलवत्या सूर्योदयस्थगनम्

तच्छ्रुत्वाऽतीव सम्भ्रान्ता ततश्शीलवती मुनिम् ।
उवाच किं मुने पापं त्वया व्यवसितं वृथा
अकारणे कृतश्शापः त्वयाऽहो साहसं कृतम् । ॥ ९१ ॥

पतिं विना कथमहं [5]जीविष्ये दुःखिता भृशम्

---

[1] शुष्क (क) शुक्र (च) [2] नराधिपः (ग) [3] बः श्वः (ग) च यः (च)
[4] वियोज्यति (क ख घ च) [5] न जीविष्ये कथञ्चन (ग)

[illegible]मता[illegible] [illegible]राणां [1]जीवितं किं सुखावहम् । ॥ ९२ ॥
[1]नच्च [illegible]
पतिहीना च या नारी तोयहीना [2]च या नदी
क्षीरहीना च या धेनुस्तासां जन्म निरर्थकम् । ॥ ९३ ॥

भर्तारमवलम्ब्यैव [3]भार्यास्तु स्थितिरिष्यते
अवलम्ब्य [4]धृतं वल्ली तिष्ठते न विना द्रुमम्[5] । ॥ ९४ ॥

शोभते सा कथं नारी लोकेऽस्मिन्मृतभर्तृका
[6]नलिनी शिशिरध्वस्तपङ्कजैव न राजते । ॥ ९५ ॥

नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः
नापतिः सुखमाप्नोति नारी बन्धुशतैरपि[7] । ॥ ९६ ॥

वरं [8]गरलपानं मे पतनं च हविर्भुजि
सर्वथा न हि सोढव्या हानिर्निज[9]धवस्य हि । ॥ ९७ ॥

उदिते भास्करे भर्ता विनशिष्यति शापतः
मयाप्यद्यैव शापस्य विधेयेह प्रतिक्रिया । ॥ ९८ ॥

यथा न विप्रियं किञ्चिन्मनसापि करोम्यहम्
भर्तु [10]स्तथाद्य सत्येन तेन नोदेतु भास्करः । ॥ ९९ ॥

ततस्तस्यास्तु वचनात्सम्प्राप्तुमुदयं रविः ।
न शशाक [11]सतीवाक्यं देवैरप्यनुमन्यते ॥ १०० ॥

इति श्रीमत्पुराणसारे स्त्रीधर्मे पतिव्रतामाहात्म्यं नाम
पञ्चाशोऽध्यायः

---

[5] धृतं द्रुमं विना त तिष्ठतीति । [6] नलिनी कुमुदिनी सरोवर इत्यर्थः ।
[7] बन्धुशतैस्सम्पन्नापि इति ज्ञेयम् । [8] गरलं विषम् । [9] धवः पतिः ।

---

[1] जीवितुं किं (क ख घ) जीवितं हि (च) [2] यथा (च) [3] नार्यास्तु (क ख घ च)
[4] द्रुमं (ग च) [10] स्तथास्य (ग) [11] सतां (ग)

## एकपञ्चाशोऽध्यायः [illegible]मन, ॥ ७८

[ पतिव्रतामाहात्म्यकथनेऽनसूयावरप्रदाननिरूपणम् ]

### शापभीतस्य उग्रतपसः भार्यया सान्त्वनम्

सूतः —

[1]शप्तमात्रस्तु स मुनिर्भयविह्वललोचनः ।
दुःखेन महताविष्टो भार्यामिदमुवाच ह ॥ १ ॥

अस्य शापेन मे भद्रे वेपथुर्जायते भृशम् ।
तस्मान्निवृत्य मां क्षिप्रं गृहमेव स्वकं शुभे ॥ २ ॥

[2]नयाद्यान्यत्र किं कृत्यं मरणे समुपस्थिते ।
ततो निवृत्य सा साध्वी स्वमेव भवनं ययौ ॥ ३ ॥

[3]आश्वासयामास च तं भीतं मरणजाड्यात् ।

### शीलवत्या शापेन जगत्क्षोभः देवानां चिन्ता च

ततस्सूर्योदयाभावादभवत्सन्तता निशा ॥ ४ ॥

बहून्यहः प्रमाणानि [4]निरालोकमभूज्जगत् ।
ततः प्रव्यथिता लोका देवाश्च परमर्षयः ।
कार्पण्य[5]मभजन्सर्वे [6]कर्तव्याज्ञानभीरवः ॥ ५ ॥

### इन्द्रादिभिः लोकरक्षार्थं ब्रह्मादीनां सन्दर्शनम्

सुरसिद्धगणास्सर्वे ततो गत्वा बलद्विषम् ।
व्यज्ञापयन्समस्तानां जगतां क्षोभमुत्थितम् ॥ ६ ॥

---

[4] निरालोकं निष्प्रकाशम् ।

---

[1] शप्तरात्रस्तु (ग) [2] न वाद्य तत्र (ग) [3] आवासया (ग) [5] मगम (ग)
[6] कर्तव्य (क ख घ च)

[1]तत्र [illegible] सकलैरमरैस्सहितो विभुः ।
मन्त्रयामास [1]जिज्ञासुः जगतः क्षोभकारणम् ॥ ७ ॥

जगाम शक्रस्सर्वेषां लोकाना[2]ञ्च पितामहम् ।
स्रष्टारं सर्वलोकानां सर्वदेवगुरुं विभुम् ॥ ८ ॥

प्रणम्य वेधसे तस्मै पृष्टस्तेन यथातथम् ।
शक्रश्शशंस लोकानां [3]प्रक्षोभं समुपस्थितम् ॥ ९ ॥

श्रुत्वा तद्वचनं तेन सम्प्रधार्य पितामहः ।
कैलासं शङ्करावासं प्रययावमरैस्सह ॥ १० ॥

ददर्श देवदेवेशं भूतकोटिसमन्वितम् ।
अथ तानागतान्सर्वानुवाच वृषभध्वजः ॥ ११ ॥

किमर्थमागता यूयं सहितास्सकलामराः
करणीयं किमस्माभिः युष्माकं ब्रूत मेऽखिलम् ॥ १२ ॥

ततस्तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
आचचक्षेऽखिलं तस्मै वासवेन यदीरितम् ॥ १३ ॥

तच्छ्रुत्वा भगवांश्शम्भुः वाक्यं पङ्कजजन्मनः ।
चिरं निरुपायमास कथमेतद्भवेदिति ॥ १४ ॥

यथा विरञ्चिशक्राद्यैस्सहितो भगनेत्रहा[4] ।

---

[4] दक्षयज्ञे शिवः भगस्य नेत्रं हन्तीति सः भगनेत्रहा । भगाख्यः दक्षयज्ञे ऋत्विगासीत् । स च शिवनिन्दाकारं दक्षं स्वनेत्रनिमेषेण प्रोत्साहयत् । अतः रुद्रः तस्य नेत्रे विस्फोटयासामास । (म. अनु. ३६५-२८).

---

[1] विज्ञप्तुं जगत्प्रक्षोभ (क ग) [2] प्रपिता (ग) [3] संक्षोभ (ग)

## देवकृतं विष्णुदर्शनम् ... मन, ॥ ७८

नान्वपश्यत सम्मन्त्र्य कार्यान्तं स्वमनीषया ॥ १५ ॥

तदामरगणैस्सार्धं द्रष्टुकामो जनार्दनम् ।
प्रययौ त्वरितं देवः क्षीराब्धिं वृषभध्वजः । ॥ १६ ॥

देवैस्समस्तैस्सहितः पुरस्कृत्य पितामहम् ।
ते क्षणेन समासाद्य क्षीराब्धिं देवतागणाः ॥ १७ ॥

रचिताञ्जलयो विष्णुं वाग्भिरग्र्याभिरस्तुवन् ।
अथ तानाह देवेशश्शक्रब्रह्ममहेश्वरान् ॥ १८ ॥

भो ब्रूत मत्तो विबुधाः कृत्यं वः क्रियतां नु किम्
इत्युक्ते सकलं ब्रह्मा कथयामास विष्णवे ॥ १९ ॥

मुनेः पतिव्रतायाश्च यथावच्छापकारणम् ।

## अनसूयाप्रसादनार्थं देवैस्सह विष्णोः अत्र्याश्रमगमनम्

तच्छ्रुत्वा सकलं विष्णुः प्राह ब्रह्मादिनिर्जरान् ॥ २० ॥

तेजः परं तेजसैव तपसा च तपस्तथा ।
[1]प्रशाम्यतेऽमरास्तस्माच्छृणुध्वं वचनं मम ॥ २१ ॥

पतिव्रताया माहात्म्या[2]न्नोदेति च दिवाकरः ।
तस्य चानुदये हानिर्मर्त्यानां [3]भवतां तथा ॥ २२ ॥

तस्मत्पतिव्रतामत्रेरनसूयां तपस्विनीम् ।
प्रसादयत वै पत्नीं भास्करोदयकाम्यया ॥ २३ ॥

इत्युक्त्वा सहितो देवैरत्रेराश्रममाययौ ।
प्रघुष्टं वेदघोषेण मुनिशिष्योपबृंहितम् ॥ २४ ॥

---

[1] प्रशाम्य ते सुर (च) [2] नोद्गच्छति (ग) [3] ब्रुवतां (क ख ग घ)

[1]तत्र [illegible]वाः ब्रह्मविष्ण्वीश्वरादयः ।
अनसूयां च तद्भार्यां प्रणतामग्रतः स्थिताम् ।
इदमूचुर्महाभागा देवा[1]स्सोत्प्रासकं वचः ॥ २५ ॥

त्वां द्रष्टुमागताः पद्मभवविष्णुशिवादयः ।
वयं देवास्समस्तस्य जगतः कारणं पृथक् ॥ २६ ॥

[2]एकैकशोऽपि मर्त्यानां दुर्लभं यत्प्रदर्शनम् ।
ते त्वामुपागतास्सर्वे सुजातं युगपत्तव ॥ २७ ॥

दास्यन्ति ये न याचन्ते सन्तः किञ्चन कुत्रचित् ।
तेषां त्वयास्ति कर्तव्यं सभाग्या भवती [3]भुवि ॥ २८ ॥

तस्माद्यत्प्रार्थ्यतेऽस्माभिः सर्वलोकहितेप्सया ।
भवत्या तदनुष्ठेयं नात्र कार्या विचारणा ॥ २९ ॥

काचित्पतिव्रता शप्ता मुनिना केनचिच्छुभे ।
[4]प्रातः प्रोषितभर्तृत्वं सम्प्राप्नोतीति कुत्रचित् ॥ ३० ॥

साप्याह नोदेतु रविर्मम [5]वैधव्यकृद्यदि ।
इति तद्वचनादर्कः संप्राप्नोति न चोदयम् ॥ ३१ ॥

नास्माभिः क्रियते भद्रे तच्छापशिथिलीक्रिया ।
भवत्या तन्निराकर्तुं युज्यतेऽस्मदपेक्षया ॥ ३२ ॥

---

[2] एकैकशोऽपि पृथक्कारणम् । येषामस्माकं दर्शनं मर्त्यानां सुदुर्लभम् ।

[4] अत्र प्रोषितभर्तृत्वं नाम मृतभर्तृकतेति ज्ञेयम् । न त्वष्टविधनायिकान्तःपातिनी प्रोषितभर्तृकता, प्रकरणात् ।

---

[1] श्शोत्रसुखं (च) [3] त्वया (क ख घ च) [5] वैधव्यमस्त्विति (ग)

तथा कुरुष्व भद्रे त्वं [1]यथाद्योदेति [illegible] [illegible]मन्, ॥ ७[illegible]
सर्वलोकोपकारित्वाच्छ्रेयः परमवाप्स्यसि ॥ ३३ ॥

सुलभा हि स्त्रियो लोके [2]संन्यस्तास्तु वयं तव ।
आधिक्यस्थापना[3]र्थाय त्वां हि याचेम साम्प्रतम् ॥ ३४ ॥

[4]अस्मद्याच्ञामिमां तस्मादमोघां कुरुषे यदि ।
अस्माकं महतीं प्रीतिर्लोकानां चाभयं भवेत् ॥ ३५ ॥

### भर्त्राज्ञां पुरस्कृत्यानसूयाकृतं देवप्रार्थनानिर्वहणम्

सूतः —

इति तेषां वचः श्रुत्वा कृताञ्जलिपुटाश्शनैः ।
प्रणम्य देवानखिलान् अनसूयाब्रवीदिदम् ॥ ३६ ॥

कारणं विश्वसर्गादौ [5]प्रथमे त्रिबुधोत्तमाः ।
तेषां मयास्ति चेत्कृत्यं प्राप्तं मे जन्मनः फलम् ॥ ३७ ॥

युष्माभिः [6]प्रार्थितं देवा न करिष्याम्यहं कथम् ।
किं त्वभीप्साम्यनुमतिं भर्तुस्तत्कर्तुमेव हि ॥ ३८ ॥

यथा नाप्नोति वैधव्यं स यथोदेति भास्करः ।
तथाहं प्रयतिष्यामि देवा युष्मदनुग्रहात् ॥ ३९ ॥

[7]एवमुक्त्वा तथा विप्रास्सकलामरदृष्टयः ।
निपेतुरत्रिवदने [8]भृङ्गव्रात इवाम्बुजे ॥ ४० ॥

---

[7] एवमुक्त्वा तस्याः दृष्टिस्तथा सर्वेषामिति ज्ञेयम् । [8] भृङ्गव्रातः भृङ्गसमूहः ।

---

[1] यथाद्योतिदेति (च) [2] सन्यस्तासु (ग) [3] र्थंत्वामभियामास (ग) [4] अस्मदाज्ञा (ग)
[5] पृथग्ये (क ख ग घ) [6] अर्थितं (ग)

[1]तत्र शक्रांम्बरश्रेणीनामिङ्गतज्ञोऽत्रिरीप्सितम् ।
तामुवाच कुरुष्वेति तत्र साध्वीं महामुनिः ॥ ४१ ॥

ततोऽनसूया [1]कमितुः पुरस्कृत्यानुशासनम् ।
प्रस्थिता शनकैस्साध्वी यत्रास्ते सा पतिव्रता ॥ ४२ ॥

## अनसूयाकृतं शीलवतीसन्दर्शनम्

[2]तामन्वग्विधिविष्ण्वाद्या विबुधास्सम्प्रतस्थिरे ।
[3]श्रुतिमागमवाक्यानामर्था इव पृथक्पृथक् ॥ ४३ ॥

अन्धकारावृते लोके देवास्तु द्विजमन्दिरम् ।
ययुः स्वाभरणश्रेणीकिरणोद्भ्रान्तवर्त्मना ॥ ४४ ॥

ततोऽनसूया विबुधैरनुज्ञाता [4]द्विजोटजम् ।
प्रविश्य ददृशे तत्र शुश्रूषन्तीं पतिं तदा ॥ ४५ ॥

ततोऽनसूयामायातामवलोक्य पतिव्रता ।
शनैरेत्य निषीदेति प्रददावासनं शुभम् ॥ ४६ ॥

कृताञ्जलिपुटा भूत्वा स्वागतोक्तेरनन्तरम् ।
सम्पूज्य च यथार्हं तां प्रणनाम च सादरात् ।
पप्रच्छ [5]चास्यागमने कारणं विनयान्विता ॥ ४७ ॥

---

[1] कमितुः प्रियस्यात्रेः । [2] अन्वक् पश्चादिति । [3] श्रुतिमागम्येति सर्वमातृकापाठः न सङ्गच्छतेऽतः आगम इति विपरिवर्तितम् ।
[5] अस्या आगमने इति ज्ञेयम् । आर्षः सन्धिः ।

---

[4] द्विजो गृहम् (क ख घ)

## अनसूयाकृतं शीलवतीस... ...मन, ॥ ७८
## देवकार्यार्थं प्रार्थनं च ... ॥

अनसूया —

पञ्चवर्णानि मनुष्येण साध्वि देयानि सर्वदा ।
तथाऽऽत्मवर्णधर्मेण कर्तव्यो धनसंग्रहः ॥ ४८ ॥

प्राप्तश्चार्थस्तथा पात्रे विनियोज्यो विधानतः ।
क्रियाश्च शास्त्रनिर्दिष्टा रागद्वेष[1]विनिर्जिताः ॥ ४९ ॥

[2]कर्तव्याहरहश्शुद्धाः पुरस्कारेण पंक्तितः ।
स्वजातिविहितानेवं लोकानाप्नोति मानवः ॥ ५० ॥

क्लेशेन महता [3]साध्वि प्रजापत्यादिकान् क्रमात् ।
स्त्रियश्चैवं समस्तस्य नरै[4]र्दुखार्दितस्य वै ॥ ५१ ॥

पुण्यस्यार्धापहारिण्यः पतिशुश्रूषयैव हि ।
नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ॥ ५२ ॥

पतिशुश्रूषयैवैता[5] लोकानिष्टान् व्रजन्ति हि ।
तस्मात्साध्वि महाभागे भर्तृशुश्रूषणं प्रति ॥ ५३ ॥

त्वया मतिस्सदा कार्या यतो भर्ता सदा गतिः ।
एते देवास्सहेन्द्रेण मामुपागम्य दुःखिताः ॥ ५४ ॥

तद्वाक्यादस्तसत्कर्मदिवानक्तनिरूपणाः ।
याचन्तेऽहर्निशासंख्यां यथावदविखण्डिताम् ॥ ५५ ॥

---

[2] कर्तव्याः अहरह इति । सन्धिश्चार्षः ।

---

[1] विवर्जिताः (च) [3] साध्वी (च) [4] दुःखार्जि (ग) [5] न् शृणु चैवं वचो मम (च)

[1]तत्र शुक्लाम्बरधरौ शृणु चैवं वचो मम ।
स्वधर्माभावात्समस्तानामभावो [1]यागकर्मणाम्
[2]तदभावात्सुरा दृष्टिं नोपयास्यन्ति भामिनि । ॥ ५६ ॥

अर्कोदयं विना त्वस्माल्लोके[3]ऽप्यद्य शुभव्रते
नाशाय सर्वभूतानां जायते कर्मविप्लवः । ॥ ५७ ॥

अथ किं बहुनोक्तेन स्वाश्रमाचारवर्जितः
सर्वज्ञो वा तपोनिष्ठः सद्यः पतति तद्दिने । ॥ ५८ ॥

एवमेवैतदखिलं त्वं न जानासि सुव्रते
कुरु मद्वचनं तस्मा[4]दुदेत्यर्को गिरा तव ।
अवाप्स्यसि परं श्रेयः ततस्त्वं च न संशयः ॥ ५९ ॥

शीलवत्याऽनसूयाप्रार्थनाङ्गीकारः । सूर्योदयादुग्रतपसो मृतिः

तस्यास्तद्वचनं श्रुत्वा प्रतिपूज्य च सादरम् ।
प्रत्युवाचात्रिपत्नीं तामनसूयामिदं वचः ॥ ६० ॥

धन्यास्म्यनुगृहीतासि देवैश्चाप्यवलोकिता ।
[5]जानाम्येवं न नारीणां काचिद्भर्तृसमा गतिः ॥ ६१ ॥

तत्प्रीतिश्चोपकाराय इहलोके परत्र च ।
माण्डव्येन महाभागे शप्तो भर्ता [6]ममेश्वरः
सूर्योदये विनाशं त्वं प्राप्स्यसीत्यतिमन्युना । ॥ ६२ ॥

---

[2] सुराः पुष्टिमिति मार्कण्डेयपुराणपाठस्समीचीन इति भाति ।

---

[1] योग (च) [3] ध्वस्तन् (च) [4] दुदेत्यस्मद् (च) [5] जानान्येवं (ग)
[6] महेश्वरः (क ख घ)

यदि ते रोचते भद्रे ततस्तद्वचना[illegible]मिन, ॥ ७८
करोमि पूर्ववदहर्भागं च वचनात्तव । [illegible] ॥ ६३ ॥

सर्वलोकहितं कर्म त्वयोक्तं सविशेषतः
[1]देवैश्च चोदिता नाहमनुमंस्यामि तत्कथम् । ॥ ६४ ॥

तस्मात्त्वद्वचसा [2]मातः सम्प्राप्नोत्युदयं रविः
उदितो भासयत्वर्कः स्वभाभिर्भुवनत्रयम् । ॥ ६५ ॥

ततो विवस्वान् भगवान् फुल्लपद्मारुणाकृतिः
[3]शैलराजानमुदयमारुरोहोरुमण्डलः[4] । ॥ ६६ ॥

समनन्तरमेतस्या भर्ता प्राणै[5]र्व्ययुज्यत
पपात च महीपृष्ठे [6]पतन्तं जगृहे [7]च सा ॥ ६७ ॥

## अनसूयापातिव्रत्यमहिम्ना उग्रतपसः पुनरुज्जीवनम्

न विषादस्त्वया भद्रे कर्तव्यः पश्य मे बलम् ।
पतिशुश्रूषयाऽवाप्तं तरसा किं चिरेण ते ॥ ६८ ॥

[8]यथा भर्तृसमं नान्यमपश्यं पुरुषं क्वचित् ।
रूपतश्शीलतो बुद्ध्या वाङ्माधुर्यात्तभूषणैः ॥ ६९ ॥

तेन सत्येन विप्रोऽयं व्याधिमुक्तः पुनर्युवा ।
प्राप्नोतु जीवितं भार्यासहायश्शरदां शतम् ॥ ७० ॥

---

[3] शैलनराजानमिति नान्तत्वं पौराणिकम् । [4] उरुमण्डलः विस्तृतमण्डल इति ।

---

[1] देवैश्चोदितया (क ख घ च) [2] जातः (क ख घ च) [5] र्वियोजितः (च)
[6] पतङ्गः ज्वलने तथा (च) [7] तदा (क ख घ) [8] यदा (क ख ग घ)

[1]तत्र शुक्लाम्बरधरौ [illegible]महं पश्यामि दैवतम् ।
[illegible]वप्राऽय पुनर्जीवत्वनामयः[1] ॥ ७१ ॥

मनसा कर्मणा वाचा भर्तुराराधनं प्रति ।
यथा ममोद्यमो नित्यं तथा जीवत्वयं द्विजः ॥ ७२ ॥

ततो विप्रस्समुत्तस्थौ व्याधिमुक्तः पुनर्युवा ।
[3]स्वभाभि[4]र्भूषयन् वेश्म वृन्दारक इवापरः ॥ ७३ ॥

ततोऽपतत्पुष्पवृष्टिः दिव्यवाद्यादि[5]निःस्वनः ।
लेभिरे च मुदं देवा अनसूयामथाब्रुवन् ॥ ७४ ॥

देवाः —

वरं वृणीष्व कल्याणि देवकार्यं महत्कृतम् ।
त्वया तस्मात्ततो देवा वरदास्ते तपस्विनि ॥ ७५ ॥

### अनसूयायै देवकृतं वरदानम्

अनसूया —

यदि देवाः प्रसन्ना मे पितामहपुरोगमाः ।
वरदा वरयोग्या च यद्यहं [6]भवतां मता ॥ ७६ ॥

तद्यान्तु मम पुत्रत्वं ब्रह्मविष्णुमहेश्वराः ।
योगं च प्राप्नुयां [7]भर्तृसहिता क्लेशमुक्तये ॥ ७७ ॥

एवमस्त्विति ते देवाः ब्रह्मविष्णुशिवादयः ।
प्रोक्त्वा जग्मुर्यथान्यायमनुमान्य तपस्विनीम् ॥ ७८ ॥

---

[1] आमयो रोगः । अनामयत्वं च नीरोगता । [3] भाः कान्तिः ताभिरित्यर्थः ।

---

[2] जीवत्वनामयम् (च) [4] भुवनं (क ख घ च) [5] स स्वनः (क ख घ च)
[6] भवतात्मना (ग) भवतात्मजाः (च) [7] भर्तुस्तथा (च)

शीलवत्यपि भर्तारं तं मुनिं प्राप[illegible] [illegible]मन, ॥ ७८
चकारानुदिनं तस्य शुश्रूषां धर्मतत्परा [illegible] ॥ ७९ ॥
ततः काले बहुतिथे तस्यामत्रेरजायत ।
[3]सोमो ब्रह्माभवद्विष्णुः दत्तात्रेयो[4]प्यजायत ॥ ८० ॥
दुर्वासाः शङ्करो जज्ञे वरदानाद्दिवौकसाम् ।
इति[1] पुत्रत्रयं तस्यां [5]महो ब्रह्मेश[6]वैष्णवम् ॥ ८१ ॥

## दृष्टान्तत्वेनान्यासां पतिव्रतानां निरूपणम्

एवं पतिव्रता नार्यः सन्त्यनेकगुणान्विताः ।
[7]दुहिता जनकस्यासीद्वैदेही लोकविश्रुता
पतिमन्वचरत्सीता महारण्यनिवासिनी । ॥ ८२ ॥
[8]लोपामुद्रा तु सा देवी भर्तारमृषिसत्तमम्[9]
भगवन्तमगस्त्यं सा वनायैवान्वपद्यत । ॥ ८३ ॥
सुकन्या नाम [10]शार्याती भार्गवच्यवनं वने[11]

---

[2] सोमयाजिनं इत्यर्थः । अनेनैव विशेषणेनायं मुनिः सोमपाः इति ज्ञायते ।
[3] अत्रेः एते त्रयः पुत्राः वायुब्रह्माण्डमत्स्यहरिवंशब्रह्ममार्कण्डेयपद्मकूर्माग्निभागवतानुसारेण । [7] अयं दृष्टान्तभागः महाभारतादुद्धृतः । म.भा. कीचकवधपर्व अ. २० [9] लोपामुद्रा स्वेच्छयैव अगस्त्यमृषिं परिणीय वनं जगाम । तस्यास्सेवया प्रसन्नो ऋषिः यौवनादिकं लेभे इति महाभारते वनपर्वणि द्रष्टव्यम् । [11] सुकन्याच्यवनकथा महाभारतादिपर्वणि

---

[1] शोभनम् (क ख घ च) [4] भ्यजायत (च) [5] जज्ञे (क ख ग घ) [6] विष्णवः (ग)
[8] लोपमुद्रेति वा (ग) [10] दाशार्हा (च)



[illegible]तं अन्वपद्यत भामिनी । ॥ ८४ ॥

[1]तत्र शुक्लांम्बरधरौ [illegible]

[illegible] [2] [illegible]नी रूपेणाप्रतिमा भुवि

पतिमन्वचरद्वृद्धं पुरा वर्षसहस्रकम्[1] । ॥ ८५ ॥

नलं राजानमेवाथ दमयन्ती वनान्तरे

अन्वगच्छत्पुरा साध्वी पातिव्रत्यगुणान्विता ।

तस्मात्स्त्रीणां परो धर्मः पतिशुश्रूषणं द्विजाः ॥ ८६ ॥

## पतिव्रताऽऽख्यानश्रवणादिफलम्

या स्त्री शृणोति नियता पुनरेतदेवं

भक्त्याऽन्विता सकल[2]पापविमुक्तदेहा ।

प्राप्नोति सा स्वजन[3]बन्धुशतैरुपेता

गौरीपदं हरिपुरन्दरदेवजुष्टम् ॥ ८७ ॥

एतत्समस्तकलुषापहरं नराणां

स्त्रीणां च सच्चरितमक्षयसौख्यकारि ।

जन्मान्तरेष्वपि च पुत्रधनार्थसम्प-

त्सम्प्राप्तये भवति भूमिसुराः सदैव ॥ ८८ ॥

---

भागवतनवमाध्यायेऽन्यत्र बहुषु स्थलेषु प्रसिद्धा । शर्यातपुत्री सुकन्या । इयं शार्याती सुकन्येति प्रसिद्धा । भृगुपुत्रश्च्यवनः ।

[1] नालायनीति इन्द्रसेनाया नामान्तरम् । नलस्येयं पुत्री ।

---

[2] दोष (च) [3] पुत्रसुखैः (ग) बन्धुश्रुतैः (क)

यः पठेदिदमाख्यानं ब्रह्मविष्णवी[illegible]मन, ॥ ७[illegible]
लभते पुष्कलां लक्ष्मीं, यशः, प्रेत्य[illegible] ॥ ८९ ॥

इति श्रीमत्पुराणसारे अनसूयावरप्रदानं नाम
एकपञ्चाशोऽध्यायः[2]

---

[1] अस्मिन्नध्याये पतिव्रतामाहात्म्यप्रस्तावेऽनसूयाचरिते ग्रन्थकृता मार्कण्डेय-पुराणभागः यथानुकूलं स्वीकृतः । तथा कासाञ्चन पतिव्रतानां निदर्शनार्थं महाभारताद्भागः उद्धृतोऽस्ति । अत्र संग्रहकर्तुः वैशिष्ट्यं विशदं भवति ।

[2] 'च' प्रतौ एतावत्पर्यन्तमेव ग्रन्थः उल्लिखितोऽस्ति ।



[1]तत्र शुक्लाम्बरधरौ [illegible]शोऽध्यायः

[illegible] [2] [illegible]षिद्धर्मप्रकरणम्]

## स्त्रीणामापद्धर्मनिरूपणम्

ऋषयः —

[1]व्रतचर्या तपो वापि स्नानमन्त्रौषधानि वा ।
विद्यावीर्यं मूलवीर्यं जपहोमास्सुरार्चनाः ।
एतेषां कतमं वा स्यात्पतिप्रीतिविवर्धनम् ॥ १ ॥

## स्त्रीणामसद्धर्मनिरूपणम्

सूतः —

असत्स्त्रीणां समाचारो मन्त्रमूलादिसाधनम् ।
यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम्
उद्विजेच्च तदैवास्याः सर्पाद्वेश्मगतादिव । ॥ २ ॥
उद्विग्नस्य कुतश्शान्तिरशान्तस्य कुतस्सुखम्
न जातु वशगो भर्ता स्त्रियस्स्यान्मन्त्रकारणात् । ॥ ३ ॥
अमित्रप्रहिताश्चापि भेदास्स्युश्च सुदारुणाः
[2]मूलप्रदानेन विषं प्रापयन्ति जिघांसवः[3] । ॥ ४ ॥

---

[1] अस्याध्यायस्य विषयः प्रायः कर्त्रा महाभारतात् संगृहीतः । अरण्यपर्वणि द्रौपदीसत्यभामासंवादे धर्मा एते प्रोक्ताः । अनुशासनपर्वणः स्त्रीस्वभाव-कथनादपि केचिच्छ्लोकाः समुद्धृताः दृश्यन्ते । अरण्यपर्व अ. २३३ अनुशासनपर्व अ. ३८.

[3] मूलादिकानां भक्षणार्थं दानेन पतिं वशीकर्तुं यतेरन् स्त्रिय इति भावना ।

---

[2] मूलप्रमादेन (ग)

जिह्वया यानि [1]पूरुषः[2] स्वया च [illegible] मन, ॥ ७८ [illegible]
तानि चूर्णानि दत्तानि हन्युः क्षिप्र। [illegible] ५ ॥

चलस्वभावा दुस्सेव्या[3]दुर्ग्राह्या भावतस्तथा ।
प्राज्ञस्य पुरुषस्येह यथा भावस्तथा स्त्रियः ॥ ६ ॥

[4]असत्यस्सर्वलोकेऽस्मिंत्सततं सत्कृताः प्रियैः ।
भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः ॥ ७ ॥

एष स्वभावो नारीणां अनुभूय पुरा सुखम् ।
आल्पामप्यापदं प्राप्य दुष्यन्ति [5]प्रजहन्ति वा ॥ ८ ॥

न कुलं न कृतं विद्यां न दत्तं नापि संग्रहम् ।
स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ॥ ९ ॥

नासां कश्चिदगम्योऽस्ति नासां वयसि संस्थितिः ।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ १० ॥

अलाभात्पुरुषाणां हि भयात्परिभवस्य च ।
वधबन्धभयाद्वापि स्वयं गुप्ता भवन्ति ताः ॥ ११ ॥

न तासां रक्षणं कर्तुं पुंसा शक्यं कथञ्चन ।
अपि [6]विश्वकृता विप्राः कुतस्तु पुरुषैरिह[7] ॥ १२ ॥

---

[1] पूरुषः त्वचा वाप्युपसेवते इति महाभारतपाठः साधुरिति भाति ।
[4] उत्तरत्र श्लोकत्रयं वाल्मीकिरामायणस्थं दृश्यते । [5] प्रजहतीत्येव साधुरूपम् ।
[6] ब्रह्मणापि असाध्यम् । पुरुषाणां क कथेति । शिवपुराणे रुद्रसंहितायां पार्वतीखण्डे बहवःस्त्रीधर्माः प्रोक्ताः । परंतु तेषामेषां च साम्यं न दृश्यते ।

---

[2] पुरुषं स्ववाचाप्युपसेकता (क) .... सेवत (ख ग घ) [3] सुग्राह्या (ग)
[6] विप्रकृता (ग)

[illegible] कथितो मुनिसत्तमाः ।

[1]तत्र शुक्लांम्बरधरौ

[illegible] [2] [illegible] सतीव्रतमनुत्तमम् ॥ १३ ॥

## सतीधर्मनिरूपणम्

कुरूपो वा कुवृत्तो वा दुस्स्वभावोऽथवा पतिः ।
रोगान्वितः पिशाचो वा मद्यपः क्रोधनोऽथवा ॥ १४ ॥

वृद्धो वाथ विदग्धो वा मूकोऽन्धो बधिरोऽपि वा ।
रौद्रो वाऽथ दरिद्रो वा कदर्यः कुत्सितोऽथवा ॥ १५ ॥

कातरः कितवो वापि ललनालम्पटोऽथवा ।
सततं देववत्पूज्यः साध्व्या वाक्कायकर्मभिः ॥ १६ ॥

न जातु विप्रियं भर्तुः स्त्रिया कार्यं कथञ्चन ।
बालया वा युवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किञ्चित्कार्यं गृहेष्वपि ॥ १७ ॥

अहङ्कारं विहायाथ कामक्रोधौ च सर्वदा ।
मनसो रञ्जनं पत्युः कार्यमन्यस्य वर्जनम् ॥ १८ ॥

सकामं वीक्षिताप्यन्यैः प्रियैर्वाक्यैः प्रलोभिता ।
स्पृष्टा वा जनसंमर्दे न विकारमुपैति या ॥ १९ ॥

पुरुषं सेवते नान्यं मनोवाक्कायकर्मभिः ।
लोभितापि परेणार्थैः सा [1]सती लोकभूषणा ॥ २० ॥

दैन्येन प्रार्थिता वापि बलेन विवृतापि वा[2] ।
वस्त्राद्यैर्वासिता वापि नैवान्यं भजते सती ॥ २१ ॥

---

[2] विवृता प्रदर्शितेति ।

---

[1] साध्वी साधुभूषणा (ग)

वीक्षिता वीक्षते नान्यैर्हसिता न[illegible]मन, ॥ ७८
भाषिता [1]भाषते नैव सा साध्व[illegible] ॥ २२ ॥

रूपयौवनयुक्तापि गीतकृत्ये[2]ऽपि कोविदा ।
[3]स्वानुरूपं नरं दृष्ट्वा न याति विकृतिं सती ॥ २३ ॥

सुरूपं तरुणं रम्यं कामिनीनां च वल्लभम् ।
या नेच्छति परं कान्तं विज्ञेया सा महासती ॥ २४ ॥

देवो मनुष्यो गन्धर्वः सतीनां [4]नापरः प्रियः ।
अप्रियं नैव कर्तव्यं पत्युः पत्न्या कदाचन ॥ २५ ॥

[5]भुङ्क्ते भुङ्क्ते तथा पत्यौ दुःखिते दुःखिता च या ।
मुदिते मुदिताऽत्यर्थं प्रोषिते मलिनाम्बरा ॥ २६ ॥

सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते ।
प्रविशेच्चैव या वह्निं याते भर्तरि पञ्चताम् ।
[6]नान्यं कामयते चित्ते सा [7]विज्ञेया [8]पतिव्रता ॥ २७ ॥

भक्तिं श्वशुरयोः कुर्यात्पत्युश्चापि विशेषतः ।
धर्मकार्यानुकूलत्वमर्थकार्ये[9]ऽतिसंयमम् ॥ २८ ॥

प्रागल्भ्यं कामकार्येषु शुचित्वं निजविग्रहे ।
मङ्गलं सम्मतं पत्युः सततं प्रियभाषणम् ॥ २९ ॥

---

[1] भाषितेनैवेति सर्वमातृकापाठः । अत्र तु भाषत इति विपरिवर्तितः ।
[5] भुङ्क्त इति भुञ्जाने सतीत्यर्थे । [6] नान्य इति सर्वमातृकासु ।

---

[2] विशारदा (ग) [3] सानुरूपं (क ख घ) [4] ह्यपरः (ग) [5] भुङ्क्तेऽथवा (क ख घ)
[7] विधेया (क ख) [8] महासती (ग) [9] पि संय (ग)

[1]तत्र शुक्लाम्बरधरौ [illegible] [1]गृहमण्डनशीलया ।
[illegible] [2][illegible]ज्जया [2]प्रतिवासरम् ॥ ३० ॥

क्षेत्राद्वनाद्वा ग्रामाद्वा गृहं भर्तारमागतम् ।
प्रत्युत्थायाभिनन्देत आसनेनोदकेन [3]वा ॥ ३१ ॥

प्रसन्नभाण्डा [4]मृष्टान्ना काले भोजनदायिनी ।
संयता [5]गुप्तधान्या च सुसंमृष्टनिवेशना ॥ ३२ ॥

गुरूणां पुत्रमित्राणां [6]बन्धूनां कर्मकारिणाम् ।
आश्रितानां च भृत्यानां दासीदासजनस्य च ॥ ३३ ॥

अतिथ्यभ्यागतानाञ्च भिक्षुकाणाञ्च लिङ्गिनाम्[7] ।
आसने भोजने दाने सन्माने प्रियभाषणे ॥ ३४ ॥

तत्तद्गुणानुसारेण प्राप्ते काले यथोचितम् ।
[8]दक्षया सर्वदा भाव्यं [9]भार्यया गृहमुख्यया ॥ ३५ ॥

गृहकार्याय यद्द्रव्यं दिशेत्पत्न्याः करे पतिः ।
निवृर्त्य गृहकार्याणि किञ्चिद्बुध्यावशेषयेत् ॥ ३६ ॥

त्यागार्थमर्जिते द्रव्ये लोभात्किञ्चिन्न धारयेत् ।
भर्तुराज्ञां विना नैव स्वबन्धुभ्यो दिशेद्धनम् ॥ ३७ ॥

---

[5] धान्यादिकं कियद्वर्तने कियद्वा व्ययितमिति स्वयमेकैव जानीयात् । तेन आयव्यययोः समतोलनं भवेत् ।

[7] लिङ्गिनः चिह्नधारकाः । ते च शैववैष्णवबौद्धकापालिकादिभेदोदिताः ।

---

[1] गृयमङ्गल (घ) [2] प्रतिवासनं (क ख घ) [3] च (ग) [4] मृष्टान्नकाले (क ख घ)
[6] बधूनां (क ख घ) [8] द्रक्षीयात् (क) [9] यथानुग्रहसुखयया (ग)

अन्यालापमसन्तोषं परव्यापारस[illegible] [illegible]मन, ॥ ७८
अतिहासातिरोषौ च क्रोधस्थान[illegible] ॥ ३८ ॥

यच्च भर्ता न पिबति [1]यच्च भर्ता न खादति ।
यच्च भर्ता न चाश्नाति सर्वं तद्वर्जयेत्सती ॥ ३९ ॥

तैलाभ्यङ्गं तथा स्नानं शरीरोद्वर्तनक्रियाम् ।
मार्जनञ्चैव दन्तानामलकानाञ्च [2]वर्तनम् ॥ ४० ॥

भोजनं वमनं निद्रां परिधानञ्च वाससाम् ।
प्रारम्भं मण्डनानाञ्च न कुर्यात्पश्यति प्रिये ॥ ४१ ॥

### रजस्वलाकृत्यनिरूपणम्

त्रेताप्रभृति नारीणां मासि मास्यार्तवं द्विजाः ।
प्रथमेऽहनि चण्डाली यथा वर्ज्या तथाङ्गना ॥ ४२ ॥

द्वितीयेऽहनि विप्रा हि यथा वै [3]ब्रह्मघातिका ।
तृतीयेऽह्नि तदर्धेन चतुर्थेऽहनि सुव्रताः ॥ ४३ ॥

स्नानं शौचं तथाङ्गानां रोदनं हसनं तथा ।
यानमभ्यञ्जनं नारी द्यूतं चैवानुलेपनम् ॥ ४४ ॥

दिवास्वापं विशेषेण [4]तथैवं दन्तधावनम् ।
मैथुनं मानसं वापि [5]वाचिकं देवतार्चनम् ॥ ४५ ॥

वर्जयेत्सर्वयत्नेन नमस्कारं रजस्वला ।

---

[1] न च भर्तेति सर्वमातृकापाठः यच्चेति विपरिवर्तितः ।

---

[2] कर्तनम् (ग) [3] ब्रह्मघातिनी (ग) [4] तथा वै (ग) [5] याचितं (ग)

[1]तत्र शुक्लाम्बरधरौ [illegible] सम्भाष्यं च तया सह ।
[illegible] [illegible]गां वर्जयेत्सर्वयत्नतः ॥ ४६ ॥

स्नात्वान्यपुरुषं नारी न पश्येच्च रजस्वला ।
ईक्षेत भास्करं देवं [2]ब्रह्मकूर्चं ततः पिबेत् ॥ ४७ ॥

केवलं [3]पञ्चगव्यं वा क्षीरं वात्मविशुद्धये ।
यथोपदेशं नियता वर्तयेत वराङ्गना ॥ ४८ ॥

स्वलङ्कृता सुप्रयता भर्तुः प्रियहिते रता ।

## गर्भिणीकृत्यनिरूपणम्

गर्भिणी चेत्तदा नारी नियमेन समाचरेत् ॥ ४९ ॥

[4]नोपस्तरेषूपविशेन्मुसलोलूखलादिषु ।
जलं न चावगाहेत शून्यागारं विसर्जयेत् ॥ ५० ॥

---

[1] सन्त्यागश्चैयेति सर्वमातृकापाठः । स त्वसमीचीन इति 'संयोग' पदं स्वीकृतम्।

[2] ब्रह्मकूर्चः ब्रह्मणो ब्राह्मणत्वस्य कूर्चमिव, व्रतविशेषः अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः । पञ्चगव्यं पिबेत्प्रातः ब्रह्मकूर्चविधिः स्मृतः ।

[3] पञ्चगुणितं गव्यम् । तच्च दधिक्षीरघृतगोमूत्रगोमयैस्सिध्यति । परिमाणं च–

गोशकृद् द्विगुणं मूत्रं पयः स्यात्तच्चतुर्गुणम् ।
घृतं तद्द्विगुणं प्रोक्तं पञ्चगव्ये तथा दधि ॥

गव्यार्थं गोभेदाश्च –

पयः काञ्चनवर्णायाः श्वेतायाश्चैव गोमयम् ।
गोमूत्रं ताम्रवर्णायाः नीलवर्णाभवं घृतम् ।
दधि स्यात्कृष्णवर्णायाः दर्भोदकसमायुतम् ॥

[4] उपस्तरः शय्या । (शब्दकल्पद्रुमे स्मृतिवाक्यानि)

भिन्नासने नोपविशेन्न चोद्विग्नमन[illegible]मन, ॥ ७[illegible]
न शयालुस्समातिष्ठेत् व्यायामञ्च[illegible] [illegible] ५१ ॥

वर्जयेत्कलहं गेहे [1]गात्रभङ्गं तथैव च ।
मुक्तकेशी न तिष्ठेत नाशुचिः स्यात्कदाचन ॥ ५२ ॥

न शयीतोतीत्तरशिरा नोपधाना[2] न भूतले ।
नामाङ्गल्यां वदेद्वाचं न च हास्यपरा भवेत् ॥ ५३ ॥

कुर्याच्च गुरुशुश्रूषां नित्यं मङ्गलतत्परा ।
सर्वौषधीभिः कोष्णेन[3] वारिणा स्नानमाचरेत् ॥ ५४ ॥

कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ।
तिष्ठेत्प्रसन्नवदना भर्तुः प्रियहिते रता ॥ ५५ ॥

कुस्त्रिया नाभिभाषेत [4]शूर्पवातं विवर्जयेत् ।
मृतवत्सादिसंसर्गं परपाकं च सुन्दरी ॥ ५६ ॥

न बीभत्सां किञ्चिदिप्सेत् न रौद्रां शृणुयात्कथाम् ।
गुरु वाऽत्युष्णमाहारं भुञ्जीयान्न च कुत्सितम् ॥ ५७ ॥

अनेन विधिना साध्वी शोभनं पुत्रमाप्नुयात् ।
अन्यथा गर्भपतनं स्तम्भनं वा प्रपद्यते ॥ ५८ ॥

---

[1] गात्रभङ्गः, अङ्गपीडनम् ।

[2] उपधानम् उपधीयते आरोप्यते शिरः अत्रेति । शिरोधानम् ।

[3] कोष्णं, मन्दोष्णम् ।

[4] शूर्पवातः, शूर्पयति धान्यादीनिति तण्डुलादिस्फोटनार्थं वंशादिनिर्मितपात्रविशेषः ।

## [illegible]काकृत्यनिरूपणम्

[1]तत्र शुक्लाम्बरधरौ [illegible]
[illegible] [2][illegible] कुटुम्बार्थेन केनचित् ।
सुमनोवर्णकापेता [1]तदा च व्रतचारिणी ॥ ५९ ॥

## सपत्नीकृत्यनिरूपणम्

तरुणी वा सुरूपा वा पुत्रिणी वाऽहितापि वा ।
भूषिता वा सुविद्या वा कुलीना वाऽप्रियापि वा ॥ ६० ॥

ज्येष्ठां वापि कनिष्ठां वा परोक्षे सम्मुखेऽपि वा ।
हीनां निजगुणैरन्यां सपत्नीं न विगर्हयेत् ॥ ६१ ॥

ईर्ष्यारागसमुद्भूते विद्यमानेऽपि मत्सरे ।
अप्रियं नैव वक्तव्यं सपत्नीभिः परस्परम् ॥ ६२ ॥

## पतिसन्निधौ पत्न्या आचारनिरूपणम्

ईर्ष्यां मुक्त्वा वदेद्वाक्यं पत्युः प्रेमविवृद्धये ।
न गायेदन्यनामाङ्कं न कुर्यादन्यवर्णनम् ॥ ६३ ॥

न वसेद्दूरतः पत्युः स्वयं वल्लभसन्निधौ ।
निर्दिष्टे च महीभागे वल्लभाभिमुखं वसेत् ॥ ६४ ॥

नावलोक्या दिशः स्वैरं नावलोक्यः परो जनः ।
विलासैरवलोक्यं स्यात्पत्युराननपङ्कजम् ॥ ६५ ॥

[2]कथ्यमाना कथा भर्त्रा श्रोतव्या सादरं स्त्रिया ।
पत्युस्सम्भाषमाणस्य नान्यं सम्भाषयेत्स्वयम् ॥ ६६ ॥

आहूता सत्वरं गच्छेद्रहःस्थानं रतोत्सुका ।
पत्यौ गायति सोत्साहं श्रोतव्यं हृतचेतसा ॥ ६७ ॥

---

[1] तदा च(क ख घ) [2] कुप्यमानरता भर्ता श्रोतव्यः सादरं स्त्रियः(क) कुप्यमानस्तथा(ख)

नृत्यन्तं वल्लभं पश्येत्प्रहर्षोत्फुल्ल[illegible]मन, ॥ ७[illegible]
शास्त्रादिकौशलं [1]विद्यां कलाप्रा[illegible]
दर्शयन्तं पतिं दृष्ट्वा भवेदानन्दनिर्भरा ॥ ६८ ॥

भर्तुस्समीपे न स्थेयं सोद्वेगव्यग्रचिन्तया ।
कलहो नैव कर्तव्यः प्रणयेन बहिष्कृतः ॥ ६९ ॥

[2]अर्थार्थे निजबन्ध्वर्थं सम्पत्यर्थं सकोपया ।
कलहो न विधातव्यः कलियोग्ये प्रिये स्त्रिया ॥ ७० ॥

भर्त्सिता निर्जितात्यर्थं ताडिता [3]प्रेयसा प्रिया ।
व्यथितापि भयं त्यक्त्वा कण्ठे गृह्णीत वल्लभम् । ॥ ७१ ॥

उच्चैर्न रोदनं कार्यं नैवाक्रोशेज्जनं प्रति ।
पलायनं न कर्तव्यं निजगेहबहिःस्थया ॥ ७२ ॥

त्वं पिता त्वं मम भ्राता नेच्छामि त्वामतः परम् ।
विरक्तलक्षणं वाक्यं नेदृग्वाच्यं कदाचन ॥ ७३ ॥

उत्सवादिषु बन्धूनां सदनं यदि गच्छति ।
लब्धानुज्ञा तदा प्रत्युः गच्छेदध्यक्षरक्षिता ॥ ७४ ॥

न वसेत्सुचिरं तत्र प्रत्यागच्छेद्गृहं सती ।
प्रस्थानाभिमुखे पत्यौ भवेन्मङ्गलभाषिणी ।
न वार्योऽसौ निषेधोक्त्या न कार्यं रोदनं तथा ॥ ७५ ॥

अकृत्वा वर्तनं नित्यं पत्यौ देशान्तरं गते ।
बन्धुजीवित[4]जात्यर्थं कर्म कुर्यादनिन्दितम् ॥ ७६ ॥

---

[1] विद्यात् (ग) [2] अर्धार्धं (क) [3] प्रेयसापि या (ग) [4] जात्यर्थं (क ख घ)

[1]तत्र शुक्लाम्बरधरौ ... र्ता व्रजेद्देशान्तरं तदा ।
... [2]... वर्तेत गृहमेधिनी[2] ॥ ७७ ॥

श्वश्रूश्वशुरयोः पार्श्वे निद्रा कार्या न चान्यतः ।
[3]प्रत्यहं पतिवार्ता च तयाऽन्वेष्या प्रयत्नतः ॥ ७८ ॥

दूताः प्रस्थापनीयाश्च पत्युः [4]क्षेमोपलब्धये ।
देवतानां प्रसिद्धानां [5]कर्तव्यमभिवादनम् ।
एवमादि विधातव्यं सत्या प्रोषितयोषिता ॥ ७९ ॥

भर्तृदुःखदं स्त्रीदोषनिरूपणम्

अप्रक्षालनमङ्गानां मलिनाम्बरधारणम् ।
तिलकाञ्जनहीनत्वं गन्धमाल्यविवर्जनम् ॥ ८० ॥

नखरोम्णामसंस्कारं दशनानाममार्जनम् ।
ताम्बूलचर्वणालस्यमिति [6]कश्मलता स्त्रियः ॥ ८१ ॥

परसद्मनि निद्राश्च पत्युर्द्वेषरतिस्तथा ।
बह्वाशित्वं सदा निद्रा कलहे सर्वदा रुचिः ॥ ८२ ॥

उच्चैर्हासो जनैर्नर्म परचेष्टाविनिन्दनम् ।
स्वेच्छापर्यटनञ्चैव परपुंसोऽङ्गमर्दनम् ॥ ८३ ॥

अटनं चैकवस्त्रेण निर्लज्जत्वं वृथागतिः ।
इत्यादि कथिता दोषाः योषितो भर्तृदुःखदाः ॥ ८४ ॥

---

[2] गृहमेधिनी गृहं मेधते पुनाति, शास्त्रोक्तदानदयादाक्षिण्यादिना सङ्गच्छते इत्यर्थः ।

---

[1] वर्तेते (क ख घ) [3] प्रत्यक्षं (क ख घ) [4] प्रेमो (ग)
[5] वक्तव्यमुपयाचते (क ख घ)

निर्वर्त्य गृहकार्याणि हरिद्रालेपनै[illegible] [illegible]मन, ॥ ७[illegible]
प्रक्षाल्य शुचितोयेन कुर्यान्मण्डनमु[illegible] ॥ ८५ ॥

समीपं प्रेयसो गच्छेद्विकसन्मुखपङ्कजा ।
अनेन नारी वृत्तेन मनोवाग्देहसंयता ।
इहाग्र्यां कीर्तिमाप्नोति [1]पतिलोके परत्र च ॥ ८६ ॥

नैतादृशं दैवतमस्ति किंचित्
सर्वेषु लोकेषु सदैवतेषु ।
[2]यथा पतिस्तस्य हि सर्वकामा
[3]लभ्याः प्रसादे कुपितश्च हन्यात् ॥ ८७ ॥

तस्मादपत्यं विविधा[4]स्स्वभोगाः
शय्यासनान्यद्भुतदर्शनानि ।
वस्त्राणि माल्यानि तथैव गन्धाः
स्वर्गश्च लोके विपुला च कीर्तिः ॥ ८८ ॥

इति श्रीमत्पुराणसारे सतीवर्तनं नाम
द्विपञ्चाशोऽध्यायः

---

[1] इह (ग) [2] यदा (ग) [3] लंघाः प्रसन्नो विमुखश्च हन्यात् (ग)
[4] श्च (ग)

[1]तत्र शुक्लांम्बरधरौ [illegible] ८४मत

# [illegible]श्वाशोऽध्यायः

[[2]स्त्री[illegible]धर्मप्रकरणे पतिव्रताधर्मनिरूपणम्]

## सावित्र्युपाख्यानम्

[1]अस्मिन्नर्थे पुरावृत्तं [2]कथयामि निबोधत ।
पतिव्रतायास्संवादं कस्यचिद्ब्रह्मचारिणः ॥ १ ॥

## सावित्र्या साकं कश्यपस्य गार्हस्थ्यम्

काश्यपो नीतिमान्नाम ब्राह्मणो वेदपारगः ।
तस्य पत्नी महाभागा [3]सावित्री नाम नामतः ॥ २ ॥

पतिव्रता महाभागा पत्युः प्रियहिते रता ।
भर्तुः शुश्रूषयैवासौ दीर्घकालमनिन्दिता ॥ ३ ॥

तया सह स धर्मात्मा मध्यदेशे महामतिः ।
नन्दिग्रामेऽवसद्धीमान्स्वानुष्ठानपरायणः ॥ ४ ॥

## यज्ञशर्मणः तपः

अथ [4]कौसलको विप्रो यज्ञशर्मा महामतिः ।
तस्य भार्याऽभवत्साध्वी रोहिणी नाम नामतः ॥ ५ ॥

सर्वलक्षणसम्पन्ना पतिशुश्रूषणे रता ।
सा प्रासूत सुतं [5]त्वेकं तस्माद्भर्तुरनिन्दिता ॥ ६ ॥

---

[1] अस्याध्यायस्य कथा महाभारतात्समुद्धृता । तत्र मार्कण्डेयः युधिष्ठिरं प्रति स्त्री धर्मात् वक्ति । कथेयं महाभारतकथामेवानुकरोति । तत्र तत्र शब्द-व्यत्यासः दृश्यते । म.भा. अरण्यपर्व पतिव्रतोपाख्यानम् अ. १९७.

---

[2] आख्याने कथयामि वः (ग) [3] पत्युः प्रियहिते रता (क) [4] कौसलिको (क ख घ)
[5] चैकं (ग)

तस्य गर्भाष्टमे वर्षे व्रतबन्धं चक[illegible]मन, ॥ ७[illegible]
उपनीतो यथान्यायं [1]पितुर्वेदमधीत[illegible] ७ ॥

धर्ममास्थाय मेधावी साधुभिः [2]प्रेरितः पुरा ।
गङ्गादिषु स तीर्थेषु स्नानं कृत्वा यथाविधि ।
तमेव प्राप्तवान् ग्रामं यत्रास्ते सा पतिव्रता ॥ ८ ॥

स वृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन् स्थितः ।
उपरिष्टाच्च वृक्षस्य बलाका संव्यलीयत ॥ ९ ॥

ततः पुरीषमुत्सृष्टं ब्राह्मणस्य तथोरसि ।
समवेक्ष्य ततः क्रुद्धः तामवध्यायत द्विजः ॥ १० ॥

भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ।
[3]अवेक्षिता च विप्रेण न्यपतद्वसुधातले ॥ ११ ॥

तपसा न मया कश्चित्सदृशोऽस्ति महीतले ।
इति मत्वा ततो भिक्षामटति ग्राममञ्जसा ॥ १२ ॥

**तपोदृप्तेन यज्ञशर्मपुत्रेण भिक्षार्थं सावित्रीगृहगमनम्**

अटन् ब्राह्मणगेहेषु ब्रह्मचारी तपःस्मयी[4] ।
प्रविष्टस्तद्गृहं विप्रा गृहे यत्र पतिव्रता ॥ १३ ॥

देहीति याचमानो[5]ऽसौ तिष्ठेत्युक्तस्तया तु सः ।
शौचं तु यावत्कुरुते भाजनस्य कुटुम्बिनी ॥ १४ ॥

---

[1] पितुस्सकाशात्पितुस्समीपे वेत्यर्थः । [3] महाभारते तु ऋषिरयं पक्षिमरणेन भृशं दुःखी भवति । [4] तपोदृप्त इत्यर्थः ।

---

[2] प्रेरितं (क ख घ) [3] अवध्याता (ग) [5] वै (ग)

[1]तत्र शुक्लाम्बरधरौ [illegible]ः क्षुधासम्पीडितो भृशम् ।
[illegible] [2][illegible] सा तस्या विप्रवरो गृहम् ॥ १५ ॥

सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यपहाय तम् ।
पाद्यमाचमनीयञ्च ददौ भर्त्रे तथाऽऽसनम् ॥ १६ ॥

[1]प्रह्वा पर्यचरच्चापि भर्तारमसितेक्षणा ।
आहारेणाथ भक्ष्यैश्च वाक्यैस्सुमधुरैस्तथा ॥ १७ ॥

सा ब्राह्मणं तदा दृष्ट्वा संस्थितं भैक्षकाङ्क्षिणम् ।
कुर्वती पतिशुश्रूषां सस्माराथ शुभेक्षणा ॥ १८ ॥

व्रीड़िता साऽभवत्साध्वी तदा द्विजवरोत्तमाः ।
भैक्षमादाय विप्राय निर्जगाम यशस्विनी ॥ १९ ॥

## द्विजपुत्रेण सावित्रीभर्त्सनम्

ब्राह्मणः —

किमिदं भवति त्वं मां तिष्ठेत्युक्त्वा वरानने ।
[2]उपरोधं कृतवती न विसर्जितवत्यसि ॥ २० ॥

सूतः —

ब्राह्मणं [3]कृतसन्तापं ज्वलन्तमिव तेजसा ।

## सावित्रीकृतः द्विजानुनयः

दृष्ट्वा सा स्त्री द्विजवराः सान्त्वपूर्वं वचोऽब्रवीत् ॥ २१ ॥

क्षन्तुमर्हसि भो विप्र भर्ता मे दैवतं महत् ।
स चापि क्षुभितश्श्रान्तः प्राप्तश्शुश्रूषितो मया ॥ २२ ॥

---

[1] प्रह्वा विनयशीला । नतस्वभावा । [2] उपरोधः विघ्नः ।
[3] भिक्षाकालातीतत्वात् सन्तापः ।

ब्राह्मणः — ... मन, ॥ ७८ ...

ब्राह्मणा न गरीयांसो गरीयांस्ते प... ...

गृहस्थधर्मे [2]वर्तन्ती ब्रह्माणानवमन्यसे ॥ २३ ॥

इन्द्रो ह्येषां प्रणमते किं पुनर्मानुषा भुवि ।
अवलिप्ते न जानीषे वृद्धानां न श्रुतं [3]त्वया ॥ २४ ॥

ब्राह्मणाश्चाग्निसदृशाः दहेयुः पृथिवीमिमाम् ।
सपर्वतवनद्वीपां क्षिप्रमेवावमानिताः ॥ २५ ॥

## सावित्र्या पतिशुश्रूषामहत्त्वप्रतिपादनम्

[4]नावजानाम्यहं विप्र देवैस्तुल्या मनस्विनः ।
अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ ॥ २६ ॥

जानामि तेजो विप्राणां [5]महाभाग्यञ्च धीमताम् ।
अपेयस्सागरः क्रोधात्कृतो हि लवणोदकः ॥ २७ ॥

एषां क्रोधाग्निरद्यापि [6]दण्डकेनोपशाम्यति ।
[7]कस्मात्परिभवेन्मूढो ब्राह्मणानमितौजसः ॥ २८ ॥

[8]ब्राह्मणानां परिभवाद्वातापिश्च दुरात्मवान् ।
अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः ॥ २९ ॥

---

[2] आर्षं शतृजन्तम् । [4] अवज्ञानं तिरस्क्रिया । [6] समुद्र इति महाभारत-पाठोऽपि युक्तः । यत ओर्व एव विप्रक्रोधाग्निरिति तात्पर्यात् ।
[8] हिरण्यकशिपोः पुत्रः ह्लादः । ह्लादस्य धमन्यां भार्यायां सञ्जातौ इल्वलो वातापिश्च । इल्वलः इन्द्रसमं पुत्रं कामयमानः कञ्चन ऋषिं अभ्यर्थयत् । ऋषिणा निराकृतस्सः । स च क्रोधेन य यं ब्राह्मणं पश्यति तं तं

---

[1] किल (ग) [3] मतम् (क ख घ) [5] माहात्म्यञ्चैव (ग) [7] तस्मात् (क)

[illegible] श्रूयन्ते ब्रह्मवादि[2]नाम् ।
[1]तत्र शुक्लांम्बरधरौ [illegible]न् प्रसादाश्च महात्मनाम्　॥ ३० ॥
आस्मिस्त्वति[2]क्रमे ब्रह्मन् क्षन्तुमर्हसि मेऽनघ ।
पतिशुश्रूषया धर्मो यस्स मे रोचते द्विज　॥ ३१ ॥
दैवतेष्वपि सर्वेषु भर्ता मे दैवतं मतम् ।
शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम्
बलाका हि त्वया दग्धा [3]क्रोधात्तद्विदितं [4]मया ।　॥ ३२ ॥

## ब्राह्मणलक्षणकथनम्

क्रोधः शत्रुः शरीरस्थो मनुष्याणां [5]द्विजोत्तम ।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः　॥ ३३ ॥
[6]यो वदेदिह सत्यानि [7]गुरुं सन्तोषयेत [8]च[9] ।

---

भोजनार्थमाहूय पूर्वं सत्कृत्य तदनन्तरं स्वबन्धुं वातापिं मेषभूतं पाककर्मणि उपयोज्य तस्मै परिवेषयति स्म । ततश्चोदरस्थो वातापिः ब्राह्मणोदरं भित्वा बहिरागत्य पूर्ववन्मेषो भूत्वा तिष्ठति स्म । कदाचिदगस्त्यः द्रव्यार्थी कुत्रापि धनमलभमानः इल्वलसमीपमाययौ । अगस्त्यश्च इल्वलस्य कापट्यं संवीक्ष्य भोजनानन्तरमेव 'वातापि जीर्णो भवेति' तं जीर्णीकृतवान् । इल्वलश्च मरणभयात्तं क्षमां ययाचे । अगस्त्यः स्वेप्सितं द्रव्यं गृहीत्वा ब्राह्मणावमाननं मा कुरु इति तं उपदिदेश । म. वनपर्व अ. ९४

[9] सन्तोषयन्ति च इति पाठ असमञ्जसः । सन्तोषयेत इति आत्नेपदरूपं संपादककृतं श्लोकशुद्ध्यर्थम् ।

---

[1] प्रभावात् (ग)　[2] नी (ग)　[3] रोषात् (ग)　[5] मम (ग)　[6] द्विजोत्तमाः (ग)
[7] योवदन्तीह (क ख घ)　[8] गुरून् (क ख घ)　[9] ये (क ख घ)

हिंसितश्च न हिंसेत तं देवा ब्रा[illegible] ॥ ३४ ॥

जितेन्द्रियो धर्मपरः [1]स्वाध्यायनि[illegible]

कामक्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः ॥ ३५ ॥

ब्रह्मचारी च वेदाढ्यो [2]विमलो विजितेन्द्रियः ।

स्वाध्याये चाप्रमत्तो [3]वै तं देवा ब्राह्मणं विदुः ॥ ३६ ॥

धनं तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवम् ।

इन्द्रियाणां निग्रहञ्च शाश्वतं [4]द्विजसत्तम ॥ ३७ ॥

सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः ।

दुर्ज्ञेयः शाश्वतो धर्मः स तु सत्ये प्रतिष्ठितः ॥ ३८ ॥

नित्यं क्रोधात्तपो [5]रक्षेन्नित्यं रक्षेत मत्सरात् ।

विद्यां मानवमानाभ्यां आत्मानन्तु प्रमादतः ॥ ३९ ॥

श्रुतिः प्रमाणं धर्माणां इति वृद्धानुशासनम् ।

बहुधा दृश्यते धर्मः [6]सूक्ष्म एष द्विजोत्तम ॥ ४० ॥

भवानपि च धर्मज्ञः स्वाध्याननिरतः शुचिः ।

न तु तत्त्वेन भगवन् धर्मान्वेत्सीति मे मतिः ॥ ४१ ॥

मातापितृभ्यां शुश्रूषुः सत्यावदी जितेन्द्रियः ।

मिथिलायां वसन्व्याधः स तु धर्मान्प्रवक्ष्यति ।

तत्र [7]गच्छस्व भद्रं ते यथाकामं द्विजोत्तम ॥ ४२ ॥

---

[7] आर्षं आत्मनेपदम् ।

---

[1] वेदवादरतः (ग) [2] ह्यधीयान् द्विजपुङ्गवः (क ख घ) [3] यस्तं (ग)
[4] धनमुत्तमम् (ग) [5] रक्षेत् श्रियं (ग) [6] सूक्ष्ममेतद् (ग)

[illegible]स्वाध्यायनिरतश्शुचिः ।
[1]तत्र शुक्लाम्बरधरौ [illegible] स ते छेत्स्यति संशयान् ॥ ४३ ॥

[illegible] [2][illegible]

दुरुक्तमपि मे सर्वं क्षन्तु[1]मर्हस्यनिन्दित ।
स्त्रियो ह्यवध्यास्सर्वेषां [2]ये च धर्मविदो जनाः[3] ॥ ४४ ॥

## द्विजपुत्रकृतं धर्मव्याधदर्शनम्

ब्राह्मणः —

प्रीतोऽस्मि तव भद्रन्ते गतः क्रोधश्च शोभने ।
उपालम्भस्त्वयाप्युक्तो मम निःश्रेयसं प्रति ॥ ४५ ॥

स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने ।
धन्या त्वमसि कल्याणि यस्यास्ते [4]वृत्तमीदृशम् ॥ ४६ ॥

सूतः —

तया विसृष्टो निर्गम्य तमेवावसथं ययौ ।
चिन्तयित्वा तदाश्चर्यं स्त्रिया चोक्तमशेषतः ॥ ४७ ॥

कृतात्मा धर्म[5]वित्तस्तु श्रद्दधानः स्त्रिया वचः ।
सम्प्रतस्थे स मिथिलां कौतूहलसमन्वितः ॥ ४८ ॥

अपश्यत्तत्र गत्वा तं [6]सूनामध्ये व्यवस्थितम् ।

---

[2] अयं पाठः महाभारतात्स्वीकृतः साधुः । [5] धर्मवित्ति इति पाठे धर्म एव वित्तं धनं यस्येति ज्ञेयम् । अयं भागः महाभारतादुद्धृतोऽपि मिथिलानगरीवर्णनं परित्यक्तमत्र । केवलं सारभूतोंऽश एव गृहीतः दृश्यते ।

[6] सूना वधस्थानम् ।

---

[1] मर्हसि भो द्विज (ग) [3] ये धर्मविदुषो जनाः (क ख ग घ) [4] वित्त (क) व्रत (ग)

[1]मार्गमाहिषमासानि विक्रीणन्तं [illegible] ॥ ४९ ॥
आकुलत्वात्तु क्रेतृणामेकान्ते स[illegible]
स तु ज्ञात्वा द्विजं प्राप्तं सहसा सम्भ्रमात्स्थितः ।
आजगाम यतो विप्रः स्थित एकान्त आसने ॥ ५० ॥

### द्विजपुत्राय धर्मव्याधकृतं स्वागतम्

व्याधः —

अभिवादये त्वां भगवन् स्वागतं ते द्विजोत्तम ।
अहं व्याधस्तु भद्रन्ते किं करोमि प्रशाधि माम् ॥ ५१ ॥

एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति ।
जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः ॥ ५२ ॥

श्रुत्वा तस्य च तद्वाक्यं स विप्रो भृशहर्षितः ।
द्वितीयमिदमाश्चर्यमित्ययं चिन्तयन् द्विजः ॥ ५३ ॥

अदेशश्च हि ते स्थातुमिति व्याधोऽब्रवी[3]द्वचः ।
गृहं गच्छाव भगवन् यदि रोचयसेऽनघ ॥ ५४ ॥

बाढमित्येव संहृष्टो विप्रो वचनमब्रवीत् ।
अग्रतस्तु द्विजं कृत्वा [4]स जगाम गृहं प्रति ॥ ५५ ॥

प्रविश्य च गृहं रम्यमासनेनाभिपूजितः ।
ततस्सुखोपविष्टं तं व्याधं वचनमब्रवीत् ॥ ५६ ॥

---

[1] मार्गं मृगस्य मांसम् ।

---

[2] असेव्यश्च स्थितोऽवस्था (क ख घ) [3] द्‌द्विजम् (ग) [4] जगाम स्वगृहं (ग) स जगाम गृहान् (ख घ)

[1]तत्र शुक्लांम्बरधरौ [illegible]वतः [1]प्रतिभाति मे ।
[illegible] [2][illegible] तव घोरेण कर्मणा ॥ ५७ ॥

## व्याधकृतं स्वधर्ममार्गावस्थानप्रतिपादनम्

कुलोचितमिदं कर्म [2]पितृपैतामहं मम ।
धात्रा तु विहितं पूर्वं कर्म स्वं पालयाम्यहम् ॥ ५८ ॥

राजानुशास्ति धर्मेण स्वधर्मनिरताः प्रजाः ।
विकर्माणश्च ये केचित् तान्युनक्ति स्वकर्मसु ॥ ५९ ॥

[3]प्रयतश्च गुरू वृद्धौ शुश्रूषामि द्विजोत्तम ।
सत्यं वदे नाभ्यसूये [4]यथाशक्ति ददामि च ॥ ६० ॥

देवतातिथिभृत्यानामवशिष्टेन वर्तये ।
न कुत्सयाम्यहं किञ्चिन्न गर्हे बलवत्तरम् ॥ ६१ ॥

कृतमन्वेति कर्तारं पुराकर्म द्विजोत्तम ।
ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः ॥ ६२ ॥

[5]तान् सर्वान् परिणीतेन कर्मणा योजयाम्यहम् ।
कर्म शूद्रे कृषिर्वैश्ये संग्रामः क्षत्रिये स्मृतः ॥ ६३ ॥

ब्रह्मचर्यं तपो मन्त्रास्सत्यञ्च ब्राह्मणे सदा ।
यदहं त्वाचरे कर्म घोरमेतदसंशयम् ॥ ६४ ॥

---

[4] देवतातिथिभृत्येभ्यः यथाशक्ति ददामीत्यन्वयः। अवशिष्टं यदन्नं तेन वर्तनं करोमीति भावः।

---

[2] प्रतिशास्ति (क) [2] पितृपैतामहागतम् (ग) [3] प्रियतश्च (क ख घ)
[5] स तान् सुपरिणीतेन (क ख) स भान् (घ)

विधिस्सुबलवान् ब्रह्मन् दुस्तरं [illegible] [illegible]मन, ॥
दोषस्यैतस्य वै ब्रह्मन् [1]निघाते यत्[illegible] ॥ ६५ ॥

[2]विधिना विहितं पूर्वं निमित्तं घातुको भवेत् ।
निमित्तभूता हि वयं कर्मणोऽस्य द्विजोत्तम ॥ ६६ ॥

तेषां हतानां मांसानि विक्रीणीमो वयं द्विज ।
तेषामपि [3]भवेन्नाश उपभोगेन कर्मणाम् ।
देवतातिथिभृत्यानां पितॄणां प्रतिपूजनात् ॥ ६७ ॥

ओषध्यो [4]वीरुधश्चापि पशवो मृगपक्षिणः ।
अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः ॥ ६८ ॥

वेदोक्तः प्रथमो धर्मो धर्मशास्त्रेषु चापरः ।
शिष्टचीर्णस्तु [5]शिष्टानां त्रिविधं धर्मलक्षणम् ॥ ६९ ॥

[6]शिष्टा वै कारणं तत्र तद्वृत्तमनुवर्तयेत् ।
असद्भिर्यस्समाचीर्णो न स धर्म[7]स्सनातनः ॥ ७० ॥

यदर्थमुक्तो भगवन् गच्छ त्वं मिथिलामिति ।
पतिशुश्रूषपरया दान्तया सत्वशीलया[8] ।
मिथिलायां वसन्व्याधः स च धर्मान्प्रवक्ष्यति ॥ ७१ ॥

---

[1] निघातः = निर्यासः । [2] 'विधिना विहिते' इति महाभारतपाठ एव समीचीनो दृश्यते । [3] 'भवेद्धर्म' इति महाभारतपाठस्समीचीन इति भाति । [4] वीरुत् शाखादिभिः विस्तृता लता ।
[6] स्मृतिशीले च तद्विदाम् इति मनूक्तेः । मनुः. अ. २ श्लो. ६
[8] पतिशुश्रूषादि धर्मपरया भार्यया सहेति ।

---

[1] निर्यते (क ख घ) [5] सकलं (ग) [7] इतीरितः (ग)

[1]तत्र शुक्लांम्बरधरौ [illegible] [illegible]षु नियुक्तो मां प्रति प्रभो ।
[illegible] [2][illegible] कपत्न्या न संशयः ॥ ७२ ॥

यथा भूतमिदं सर्वं समासेन द्विजोत्तम ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ७३ ॥

## द्विजपुत्रस्य धर्मरहस्यजिज्ञासा

ब्राह्मणः —

पतिव्रतायास्सत्यायाश्शीलाढ्याया यतव्रत ।
संस्मृत्य वाक्यं [3]धर्मज्ञ गुणवानसि मे मतः ॥ ७४ ॥

प्रष्टव्यं किं वदान्यत्र तत्प्रतिब्रूहि मे लघु ।
किं कार्यं सर्ववर्णानां [4]किं वाच्यं सर्वदा नृणाम् ॥ ७५ ॥

किं चक्षुस्सर्वभूतानां किमेकं, सर्वदा बहु ।
वर्तते किमनाधारं [5]ब्रूहि बह्वल्पकञ्च किम्[6] ॥ ७६ ॥

किं सत्किमसदन्यत्किं किमजं बहुजं च किम्
केनस्विद्वर्तते नित्यं जगदेतच्चराचरम् ॥ ७७ ॥

## धर्मव्याधेन धर्मरहस्यनिरूपणम्

व्याधः —

धर्मः कार्योऽनिशं सर्वैः स्ववर्णाद्यनुसारतः ।
सर्वेषां सूनृतं वाच्यं सर्वजन्तुहितं मुने ॥ ७८ ॥

---

[1] 'यत्तया त्वं' इति महाभारतपाठोऽपि सङ्गच्छते । [4] 'को वाच्यः' इति पाठात्किं वाच्यमिति पाठः युक्तः उत्तरत्र नपुंसकसूनृतपदस्योक्तेः ।
[6] बह्वल्पकमिति परिवर्तितः पाठः उत्तरत्र दृश्यमानोत्तररूपमनुसृत्य ।

---

[2] तद्द्विजश्रेष्ठ (क ख घ) [3] धर्मेण विधिनावासि (ग) [5] ब्रूहि देवात्मकञ्च (क ख घ) बहुदेवाल्पकञ्च (ग)

विज्ञानं सर्वजन्तूनां चक्षुः परम[illegible]मन, ॥
प्रधान[1]मेकं त्वं विद्धि [2]कार्यरूपं [illegible] ॥ ७९ ॥

आधारहीनं ब्रह्माहुः बहु स्वल्पञ्च तन्मतम् ।
अक्षरं सत्परं चासदन्यद्ब्रह्म परं मुने ॥ ८० ॥

अजमीश्वरमप्याहुः बहुजं चापि तं विदुः ।
विष्णुशक्त्या [3]समायुक्तं वर्तते विश्वमप्युत ॥ ८१ ॥

ब्राह्मणः —

न्याययुक्तमिदं सर्वं भवता परिकीर्तितम् ।
न तेऽस्त्यविदितं किञ्चिद्धर्मे[4]ष्वधिसमीक्षिते[5] ॥ ८२ ॥

ब्रवीषि सूनृतं धर्मं यस्य वक्ता न विद्यते ।
दिव्यप्रभावः [6]सुमहानृषिरेव मतोऽसि मे ॥ ८३ ॥

## धर्मव्याधकारितं प्रत्यक्षधर्मदर्शनम्

प्रत्यक्षं मम यो धर्मस्तं पश्य द्विजसत्तम ।
येन सिद्धिरियं प्राप्ता मया ब्राह्मणपुङ्गव ॥ ८४ ॥

उत्तिष्ठ भगवन्विप्र प्रविशाभ्यन्तरं गृहम् ।
द्रष्टुमर्हसि [7]धर्मज्ञ मातरं पितरं च मे ॥ ८५ ॥

सूतः —

इत्युक्तस्य प्रविश्याथ ददर्श [8]परमार्चितम् ।
सौधं हृद्यं चतुश्शालं अतीव च मनोहरम् ॥ ८६ ॥

---

[5] अधिसमीक्षिते एव धर्मं ब्रवीषि इति ज्ञेयम् ।

---

मेतत्त्वं (ग) [2] कार्यमेकं (ग) [3] समाविष्टं (ग) [4] ष्वभि (ग) [6] स (क)
[7] धर्मज्ञ (ग) [7] परमार्चितः (ग)

[1]तत्र शुक्लांम्बरधरौ पितरावस्य पूजितौ ।
कृताहारौ [2]च सन्तुष्टावुपविष्टौ वरासने ॥ ८७ ॥

तस्य व्याधस्य पितरौ ब्राह्मणस्सन्ददर्श ह ।
धर्मव्याधस्तु तौ दृष्ट्वा पादेषु शिरसाऽपतत् ॥ ८८ ॥

वृद्धौ —

उत्तिष्ठोत्तिष्ठ धर्मज्ञ धर्मस्त्वामभिरक्षतु ।
प्रीतौ स्वस्तव धर्मेण दीर्घमायुरवाप्नुहि ॥ ८९ ॥

सत्पुत्रेण त्वया पुत्र नित्यकालं सुपूजितौ ।
सुखमावां वसावोऽत्र देवलोकगताविव ॥ ९० ॥

जामदग्न्येन रामेण यथा वृद्धौ सुपूजितौ ।
तथा त्वया कृतं सर्वं तद्विशिष्टं हि पुत्रक ॥ ९१ ॥

सूतः —

इत्युक्तो ब्राह्मणं ताभ्यां धर्मव्याधो न्यवेदयत् ।
तौ स्वागतेन तं [3]विप्रमर्चयामासतुस्तदा ॥ ९२ ॥

प्रतिगृह्य च तां पूजां द्विजः पप्रच्छ तावुभौ ।
सुपुत्राभ्यां सभृत्याभ्यां कच्चिद्वां कुशलं गृहे ।
[4]अनामयं च वां कच्चित्सदैव हि शरीरयोः ॥ ९३ ॥

वृद्धौ —

कुशलं नो गृहे विप्र भृत्यवर्गेषु सर्वशः ।
कच्चित्त्वमप्यविघ्नेन सम्प्राप्तो भगवन्निह ॥ ९४ ॥

---

[1]तत्रेति महाभारतपाठः निवेशितः । [4]आमयो रोगः अनामयता नीरोगतेत्यर्थः ।

---

[2] स तुष्टौ वा (घ) [3] विप्रं वाचया (क ख)

वाढमित्याह तौ विप्रः कौतूहलसमन्वितः ।
धर्मव्याधस्तु तं विप्रमर्थवद्वाक्यमब्रवीत् ॥ ९५ ॥

पितृसेवामहत्त्वप्रतिपादनम्

व्याधः —

पिता माता च भगवन्नेतौ मे दैवतं परम् ।
यद्दैवतेभ्यः कर्तव्यं तदेवाभ्यां करोम्यहम् ॥ ९६ ॥

त्रयस्त्रिंशद्यथा देवास्सर्वे शक्रपुरोगमाः ।
सम्पूज्यास्सर्वलोकस्य तथा वृद्धाविमौ मम ॥ ९७ ॥

उपहारानाहरन्तो देवतानां यथा द्विज ।
कुर्वते तद्वदेताभ्यां करोम्यहमतन्द्रितः ॥ ९८ ॥

एतौ मे परमं ब्रह्मन् पिता माता च दैवतम् ।
[1]पत्रैः पुष्पैः फलैरन्यैस्तोषयामि सदा द्विज ॥ ९९ ॥

एतावेवाग्नयो मह्यं यान्वदन्ति मनीषिणः ।
यज्ञा वेदाश्च चत्वारः सर्वमेतौ मम द्विज ॥ १०० ॥

एतदर्थं मम प्राणा भार्यापुत्रसुहृज्जनाः ।
सपुत्रदारश्शुश्रूषां नित्यमेव करोम्यहम् ॥ १०१ ॥

स्वयञ्च [2]स्नापयाम्येतौ सदा पादौ प्रधावये ।
आहारं सम्प्रयच्छामि स्वयञ्चैव द्विजोत्तम ॥ १०२ ॥

अनुरूपाः कथा दद्मि विप्रियं परिवर्जयन् ।
अधर्मेणापि संयुक्तः प्रियमाभ्यां करोम्यहम् ॥ १०३ ॥

धर्ममेव गुरू मत्वा साक्षादेतौ द्विजोत्तम ।
अतन्द्रितस्तु सततं शुश्रूषां वै करोम्यहम् ॥ १०४ ॥

---

[1] एतैः पुष्पफलै (ग) [2] स्नापया (ग)

वाक्यं च श्रृणु मे तात यत्ते वक्ष्ये हितं द्विज ।
त्वया विनिष्क्रुता माता पिता च द्विजसत्तम ॥ १०५ ॥
अविसृष्टो विनिष्क्रान्तो [1]गृहे ताभ्यामनिन्दित ।
तदोच्चारणकार्यार्थमयुक्तं तत्त्वया कृतम् ॥ १०६ ॥
ततश्शोकेन वृद्धौ [2]तौ वन्ध्यौ स्यातां तपस्विनौ ।
तौ प्रसादयितुं गच्छ तव धर्मोऽत्यगान्महान्[3] ॥ १०७ ॥
[4]तपस्व्यलं महात्मा च धर्मे च निरतस्सदा ।
सर्वमेतदपार्थं ते क्षिप्रं तौ सम्प्रसादय ॥ १०८ ॥
तौ प्रसाद्य द्विजश्रेष्ठ यच्छ्रेयस्तदवाप्स्यसि ।
श्रद्धस्व [5]मयि ब्रह्मन्नान्यथा कर्तुमर्हसि ॥ १०९ ॥
अतः परमहं धर्मं नान्यं पश्यामि किञ्चन ।

स्वकृताधर्माचरणार्थं द्विजपुत्रस्य खेदः

ब्राह्मणः —

यदेतदुक्तं भवता सर्वमेतदसंशयम् ॥ ११० ॥
प्रीतोऽस्मि तव [6]धर्मज्ञ साध्वाचारसमन्वित ।
इहाहमागतो दिष्ट्या दिष्ट्या वै सङ्गतस्त्वया ॥ १११ ॥
ईदृशा दुर्लभा लोके नरा धर्मप्रदर्शकाः ।
एको नरस्सहस्रेषु धर्मविद्युज्यते न वा ॥ ११२ ॥

---

[1] गृह इति सप्तमी पञ्चम्यर्थे । [2] शोकेन वध्न्याविव भवेतामथवा अन्धाविति । अध्यायान्ते 'अन्धाभ्यां' इति स्थितत्वात् । [3] तव धर्मः मा अत्यगा दिति महाभारतपाठोऽनुसन्धेयः । [4] तपस्वीरुं इति मातृकापाठः एवं विपरिवर्तित महाभारतपाठस्तु 'तपस्वी त्वं' इति निस्सन्दिग्धः ।

---

[5] मम (ग) [6] सर्वज्ञ (ग)

पतमानो हि नरके भवतास्मि समुद्धृतः ।
[1] राजा ययातिर्दौहित्रैः पतितस्तारितो यथा ॥ ११३ ॥

मातापितृभ्यां शुश्रूषां करोमि वचनात्तव ।
[2]नाकृतात्मा वेदयति धर्माधर्मविनिश्चयम् ॥ ११४ ॥

दुर्ज्ञेयः शाश्वतो धर्मः शूद्रयोनौ हि वर्तताम् ।[3]
एतदिच्छामि विज्ञातुं तत्त्वेन तव शूद्रताम् ॥ ११५ ॥

## धर्मव्याधस्य पूर्वजन्मेतिहासः

व्याधः —

शृणु सर्वं यथावृत्तं [3]पूर्वदेहे ममानघ ।
अहं हि ब्राह्मणः[4] पूर्वमासं द्विजवरात्मज ॥ ११६ ॥

वेदाध्यायी सुकुशलो वेदाङ्गानां च पारगः ।
कश्चिद्राजा मम सखा धनुर्वेदपरोऽभवत् ।
संसर्गाद्धनुषि श्रेष्ठस्ततोऽहमभवं द्विज ॥ ११७ ॥

एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः ।

---

[1] इयमत्र कथा—राजा ययातिः स्वर्गे देवानृषींश्च तिरश्चकार । देवैः सः भौमनरके पातितः। तस्य प्रार्थनानुसारं सः नैमिषारण्ये, यत्र स्वदौहित्राः यज्ञं निर्वहन्ति स्म तत्रैवापतत् । माधव्याः पुत्राश्चत्वारः वसुमनाः 'प्रतर्दनः शिबिः अष्टक इति । एतैर्दौहित्रैः स्वपुण्यप्रदानेन ययातिः पुनश्च स्वर्गे संमानितो बभूव । (महाभारतम् उ.प. १०६–१२०)

[2] अकृतात्मा आत्मज्ञानहीनः ।

[3] वर्ततामिति सर्वमातृकापाठः न सङ्गच्छते । वर्ततेति महाभारतपाठः ।

---

[3] अकृतात्मा न वेदेह (ग) [4] पूर्वजन्मनि यन्मम (ग) [5] कश्चित्पूर्वं (ग)

ततोऽभ्यहन् मृगांस्तत्र सुबहूनाश्रमं प्रति ॥ ११८ ॥

अथ क्षिप्तः शरो [1]घोरो मया च द्विजसत्तम ।
ताडितश्च मुनिस्तेन शरेणानतपर्वणा ॥ ११९ ॥

भूमौ निपतितो ब्रह्मन्नुवाच प्रतिवादयन् ।
नापराध्याम्यहं किञ्चित्केन पापमिदं कृतम् ॥ १२० ॥

मन्वानस्तन्मृगं चाहं सम्प्राप्तस्स महामुनिम् ।
अपश्यंस्तमृषिं विद्धं शरेणानतपर्वणा ॥ १२१ ॥

तमुग्रतपसं विप्रं दृष्ट्वा चैव महीतले ।
अकार्यकरणाच्चापि भृशं मे व्यथितं मनः ॥ १२२ ॥

अजानता कृतमिदं मयेत्यथ तमब्रुवम् ।
क्षन्तुमर्हसि मे ब्रह्म[2]न्निति प्रोक्तो मया मुनिः ॥ १२३ ॥

ततः प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्च्छितः ।
व्याधस्त्वं भविता क्रूरश्शूद्रयोनाविति द्विज ॥ १२४ ॥

एवं शप्तोऽथ मुनिना तदा द्विजवरात्मज ।
अथ प्रासादयमृषिं गिरा वाक्यविशारदम् ॥ १२५ ॥

अजानता कृतमिदमकार्यन्तु मयाद्य वै ।
क्षन्तुमर्हसि मे विद्वन् प्रसीद भगवन्निति ॥ १२६ ॥

ऋषिः —

नान्यथा भविता शाप एवमेतदसंशयम् ।
आनृशंस्यादहं किञ्चित्कर्तानुतहमद्य [3]ते ॥ १२७ ॥

शूद्रयोनौ वर्तमानो धर्मज्ञो भविता ह्यसि ।

---

[1] ऽमोघो (ग) [2] न्प्रसीद भगवन्निति (क ख घ) [3] वै (क ख घ)

इत्युक्तवन्तं तमृषिमहं प्राञ्जलिरब्रुवम् ।
शूद्रजन्मनि जातस्य मम [1]धर्मात्मता कथम् ॥ १३० ॥

ऋषिः —

मातापित्रोश्च शुश्रूषां करिष्यसि न संशयः ।
तयोश्शुश्रूषया शुद्धिं महतीं [2]समवाप्स्यसि ॥ १३१ ॥

जातिस्मरश्च भविता स्वर्गञ्चैव गमिष्यसि ।
शापक्षयान्ते निर्वृत्ते भवितासि पुनर्द्विजः ॥ १३२ ॥

एवं शप्तः पुरा तेन द्विजे[2]नात्युग्रतेजसा ।
प्रसादश्च कृतस्तेन ममैवं वदतां वर ।
आत्मदोषेण विषमां गतिं प्राप्तोऽस्मि दारुणाम् ॥ १३३ ॥

एवमेतानि पुरुषा दुःखानि च सुखानि च ।
प्राप्नुवन्ति महाबुद्धे नोत्कण्ठां कर्तुमर्हसि ॥ १३४ ॥

ब्राह्मणः —

क्षीणदोषमहं मन्ये [3]जातितस्त्वां नरोत्तम ।
कृतप्रज्ञोऽसि मेधावी बुद्धिश्च विपुला तव ॥ १३५ ॥

पापान्निवृत्तिश्च सदा ज्ञानतृप्तोऽसि धर्मवित् ।
आपृच्छे त्वां स्वस्ति तेऽस्तु धर्मस्त्वामभिरक्षतु ॥ १३६ ॥

अप्रसादस्तु कर्तव्यो धर्मे धर्मभृतां वर ।

सूतः —

बाढमित्येव तं व्याधः कृताञ्जलिरुवाच ह ॥ १३७ ॥

---

[1] धर्मात्मनः (ग) [2] नास्म्यु (ग) [3] वाहित (ग)

[1]प्रदक्षिणमथो कृत्वा [2]प्रतस्थे द्विजसत्तमः ।
पतिव्रताया माहात्म्यं श्लाघमानः पुनः पुनः ॥ १३८ ॥

स तु गत्वा द्विजः [3]पुत्रो शुश्रूषां कृतवान् सदा ।
मातापितृभ्यामन्धाभ्यां यथान्यायं सुखं श्रितः ॥ १३९ ॥

तस्मात्स्त्रीणां परो धर्मः पतिशुश्रषणं द्विजाः ।
पतिशुश्रूषया नारी लभते सर्वमीप्सितम् ॥ १४० ॥

इति श्रीमत्पुराणसारे [3]स्त्रीधर्मे सावित्र्युपाख्यानं नाम
त्रिपञ्चाशोऽध्यायः

---

[3] पुत्रस्थाने सर्वामिति महाभारतपाठः युक्त इति भाति ।

---

[1] प्रदक्षिणं ततो (ग) [2] प्रस्थितो (ग) [3] सावित्रीब्रह्मचारिसंवादो (ग)

## चतुःपञ्चाशोऽध्यायः

## योषिद्धर्मप्रकरणे भर्तुर्वचनपालनमहत्त्वनिरूपणम्

सूतः —

रता या वचने भर्तुः नारी भवति भामिनी ।
तस्या लोकाश्शुभाः प्रोक्ताः साविञ्यास्तु [1]यथा मताः ॥ १ ॥

यस्याः कृते भवेद्भर्ता दुःखोपहतचेतनः ।
[2]या तं निन्दति पापायास्तस्याः प्रोक्ता ह्यधोगतिः ॥ २ ॥

भर्तुरर्थे यदा [3]वृत्तिं विद्यमानं न यच्छति ।
जीवितं वा वरारोहा [4]विष्ठायां जायते क्रिमिः ॥ ३ ॥

### सन्ध्यावलीचरितम्

[5]अत्रापि कीर्तयिष्यामि इतिहासं पुरातनम् ।
कस्यचिद्भूमिपालस्य मन्दिरे काष्ठपाटकः ।
अग्नेः प्रज्वलनार्थाय स कष्ठानि व्यपाटयत् ॥ ४ ॥

सखीभिस्सहिता तत्र रममाणा नृपात्मजा ।
गता सन्ध्यावली नाम यत्रास्ते काष्ठपाटकः ॥ ५ ॥

---

[3] वृत्तिशब्दः वित्तार्थकोऽत्र । नारदपुराणे 'वित्तं' इत्येव दृश्यते । विद्यमानं जीवितमित्यन्वयः । [4] विष्ठा मलम् ।

[5] कथेयं नारदपुराणात्संगृहीता । तत्र च मोहिनीचरिते काष्ठीलोपाख्यानमिति निर्देशो दृश्यते । ना.पु. उत्तरखण्डः अ.२७,२८,२९,३०,३१

---

[1] यथामलाः (ग) [2] सा स्त्री निन्द्येत (ग) सा तं निन्दितपापा (घ)

## सन्ध्यावल्या काष्ठीलादर्शनम्

तत्र दृष्ट्वा तया भ्रष्टा [1]काष्ठीला काष्ठमध्यतः ।
तां दृष्ट्वा पतितां भूमौ हन्तुं ध्वांक्षस्समागतः ॥ ६ ॥

यावद्गृह्णाति वक्त्रेण काष्ठीलां क्षुभितो भृशम् ।
तावन्निवारितो ध्वांक्षस्तया लोष्टेन तत्क्षणात् ॥ ७ ॥

सा मुक्ता ताडितेनाथ वायसेन मुनीश्वराः ।
उवाच तां तदा कन्यां व्यक्तं मधुरया गिरा ॥ ८ ॥

## काष्ठीलाजन्मान्तरेतिहासः

काष्ठीला —

सन्ध्यावलि यथा पूर्वमहमासं शृणुष्व तत् ।
आसीत्कौण्डिन्यनगरे ब्राह्मणस्संशितव्रतः ।
तस्याहं दुहिता भीरु सुप्रिया [2]चारुलोचना ॥ ९ ॥

ततोऽहं विप्रपुत्राय प्रदत्ताऽलंकृता तदा ।
श्वशुरेण [3]च मे दत्तं मणिमुक्ताफलं बहु ॥ १० ॥

पितृश्वशुरपुत्राढ्या परिपूर्णाभवं शुभे[4] ।
कालेन पञ्चतां प्राप्तः श्वशुरो धर्मतत्त्ववित् ॥ ११ ॥

[5]तं पतिं च मृतं दृष्ट्वा श्वश्रूर्मम पतिव्रता ।
विवेशाग्नौ तदा दीप्ते भर्त्रा सह पतिव्रता ।
भर्ता [6]मम जलं दत्वा पित्रोश्श्राद्धमथाकरोत् ॥ १२ ॥

---

[1] काष्ठीलेति कृमिविशेषः स्यात् । [4] 'शुभे' इति सन्ध्यावलीसम्बोधनम् ।
[5] 'तपन्ति', 'तपन्ती' इति च मातृकापाठः समीचीनो न दृश्यते ।

---

[2] चारुलोचने (क ख घ) [3] तु (क ख घ) [6] मे च (ग)

### मृतपितृकस्य सुप्रियाभर्तुः राजमन्दिरे वेश्यानुरक्तिः

गते मासद्वये देवि भर्ता मे राजमन्दिरम् ।
ययौ निमित्ते कस्मिंश्चि[1]त्पितृहीनो निराश्रयः ॥ १३ ॥
तत्र वेश्यास्सुरूपास्ता दृष्टास्तेन द्विजन्मना ।
तासां मध्ये सुरूपैका सुन्दरी सुस्तनी तदा ॥ १४ ॥
आनीता स्वगृहं [2]तेन रत्यर्थमसितेक्षणा ।
तया सहैव बुभुजे विषयान्विषयप्रियः ॥ १५ ॥
तेनैवं वर्तमानेन वित्तं नीतं क्षयं शुभे ।
ततो मां प्रार्थयामास देहीत्येकं विभूषणम् ॥ १६ ॥

### वेश्यारतस्य सुप्रियाभर्तुः दारिद्र्यप्राप्तिः । समुद्रपतितेन तेन पर्वतासादनम्

न तन्मया तस्य दत्तं भर्तुर्व्यसनिनस्तदा ।
सर्वं वस्तु समादाय गताहं पितृमन्दिरम् ॥ १७ ॥
ततो भर्ता गृहं हृद्यं सप्तभूमिकमुत्तमम् ।
अल्पमूल्येन दत्वा तु गतो [3]नदनदीपतिम् ॥ १८ ॥
आरुह्य नावं तरसा प्रविष्टश्च [4]महोदधिम् ।
प्रभञ्जनवशा[5]न्नौस्तु उन्मार्गेण गता तदा ॥ १९ ॥
तत्रस्थाः पञ्चतां याताः क्षुत्पिपासार्दिता नराः ।

---

[3] नदः, नदति प्रवाहवेगेन शब्दायत इति । स च सिन्धुभैरवशोणदामोदर-ब्रह्मपुत्रादिः ।

---

[1] द्वित्त (क ख घ) [2] तेनात्यर्थं (क ख घ) [4] मनोहरम् (क ख घ)
[5] देव नौरुन्मार्गमुपैति सा (ग)

तत्रैको दैवसंयोगान्न मृतो मे पतिश्शुभे ॥ २० ॥
वायुना नीयमानोऽसौ प्राक्कर्मवशगेन हि ।
आससादाचलं देवि बहुशृङ्गविभूषितम् ॥ २१ ॥
तं दृष्ट्वा पर्वतश्रेष्ठं [1]सुतृष्णार्तस्सुलोचनः ।
[2]अभक्षयत्तदा द्राक्षां जरारोगविनाशिनीम् ॥ २२ ॥
अपिबच्छीतलं तोयं सुरनिर्झरजं शुचि ।

**पर्वते राक्षसवृत्तान्तः । राक्षसेन काशीराजपुत्र्याः अपहारः**

यावत्सुप्तस्सुखेनासौ तावदस्तं गतो रविः ॥ २३ ॥
[3]तमगाद्राक्षसो घोरो गर्जमानो घनो यथा ।
[4]अङ्कमारोप्य तन्वङ्गीं [5]सीतामिव दशाननः ॥ २४ ॥
सुप्तां काशीपतेः पुत्रीं नाम्ना रत्नावलीं तदा ।

**दुराचारतो राजपुत्र्याः अपहारकारणकथनम्**

अधौतपादां स्वगृहे विपरीत[6]शिरःस्थिताम् ।[7] ॥ २५ ॥
दीपच्छायां समाश्रित्य शयानां तां तदा किल ।
जहार राजभवनात्स तदा चारुहासिनीम् ॥ २६ ॥
वायुमार्गं समाश्रित्य क्षणात्तत्र स्वमालयम् ।

---

7 'सौम्यदिक्शीर्षशायिनीम्' इति नारदपुराणपाठ एव साधुः । यतः उत्तरदिक्शीर्षता स्वापे निषिद्धः । तत्र दोषबाहुल्य उक्तः । गार्ग्योऽपि 'न कदाचिदुदक्शिराः' । इति आह ।

---

1 त्यक्त्वा नावं स मे पतिः (ग) 2 द्राक्षामभक्षयत्तत्र (ग) 3 तत्रागाद् (ग)
4 अङ्क आरोप्य (ग) 5 शीतामिव दशासनः (घ) 6 शिरोरुहाम् (ग)

महत्तरां तां तु गुहामाविश्य स च राक्षसः ।
शयनीये शुभे शुभ्रे पर्यङ्के तां न्यवेशयत् ॥ २७ ॥

**भर्तुः कर्मणा रुष्टाया राक्षसपत्न्याः गृहान्निर्गमनम्**

तस्यास्तद्रुदितं श्रुत्वा गुहायां राक्षसी तदा ।
तां दृता देवगर्भाभां [1]भार्या दुष्टस्य रक्षसः ॥ २८ ॥

पप्रच्छ सा हि भर्तारं किमर्थमियमागता ।[2]
भार्यायां मयि दुष्प्रज्ञ स्त्रियमन्यां समीक्षसे ॥ २९ ॥

नाहं भार्या तवेदानीमित्युक्त्वा कोपसंयुता ।

**गुहामुखे ब्राह्मणदर्शनम् । तस्मिन् स्वानुरागप्रदर्शनम्**

सा निर्गत्य गुहायास्तमपश्यद्द्विजसत्तमम् ॥ ३० ॥

रूपं मनोहरं कृत्वा तदा षोडशवार्षिकम् ।
अब्रवीत्प्रयतोपेता ब्राह्मणं तत्र [3]संस्थितम् ॥ ३१ ॥

[4]कस्माद्भवान्समायातः किमर्थमिह तिष्ठसि ।
पृच्छामि पतिकामाहं राक्षसी [5]हृच्छयातुरा ॥ ३२ ॥

[6]निराकृत्य स्वभर्तारं त्वां पतिं कर्तुमागता ।
सापत्न्यदोषो जनितो मम भर्त्रा दुरात्मना[7] ॥ ३३ ॥

येनाहृता कुमारीयं भार्यार्थं पापबुद्धिना ।

---

[2] इयमाहृतेति नारदपुराणपाठः युक्ततर इति भाति । [5] हृदि शेते इति हृच्छयः कामः । [7] दुरात्मनः इति मातृकापाठः न सम्य सङ्गच्छते ।

---

[1] भार्या (घ) [3] चागतम् (ग) [4] राक्षसी इति इतः पूर्वम् (ग) [6] निराकृताः (ख घ)

**शक्तिसाहाय्येन भर्तुर्वधार्थं राक्षसीकृता याञ्चा**

या चेयं तिष्ठते [1]शक्तिर्वासवी सालमाश्रिता[2] ॥ ३४ ॥
पुरन्दरात्समानीता मद्भर्त्रा दस्युकर्मणा ।
सेयमेतमहत्वा तु न गच्छति पुरन्दरम् ॥ ३५ ॥
यस्मिन्वै क्षिप्यते शक्तिस्सोऽमरोऽपि विनश्यति ।
तव दास्यामि भद्रं ते भर्तुर्निधनकाम्यया ॥ ३६ ॥
यदि त्वमनया शक्त्या न हिंस्यसि [3]निशाचरम् ।
[4]खादयिष्यति दुर्मेधास्त्वामद्य निरपत्रपः ॥ ३७ ॥

**राक्षस्याः शपथः**

यद्यसत्यं [5]वदे वाक्यमसत्यं [6]रतिवर्धनम् ।
जन्मोपार्जितपुण्यस्य न भवेयं हि भाजनम् ॥ ३८ ॥
संयम्य गां वसेद्गेहे [7]रक्षितां घासचारिणीम् ।
तैलेन संक्रमे स्नातो तृषार्तां गां न्यषेधि यः ॥ ३९ ॥
परकीयोदपाने तु अनुद्धृत्य मृदं नरः ।
करोत्या[8]प्लावनं यस्तु योऽन्यथा वचनं वदेत् ॥ ४० ॥
गोहीनां महिषीं यस्तु गेहे धारयते द्विजः ।
सत्कथायां प्रवृत्तायां विघ्नमाचरते च यः
तत्पापभगिनी विप्रा यदि मिथ्या ब्रवीम्यहम् ॥ ४१ ॥

---

[2] नारदपुराणेऽपि 'वासवी शालं' इति पाठः । [3] हिंस्यसीति आर्षः पाठः । नारदपुराणे हिंससीति दृश्यते । [4] खादतीति स्थाने खादयिष्यतीति आर्षप्रयोगः । [5] आत्मनेपदमार्षम् । [8] आप्लावनं स्नानम् ।

---

[1] शक्तिर्मासकी पाल (क ख घ) [6] रतिवर्धन (ग) [7] रक्षसां (क)

संवीतोऽधौतदग्धेन पारक्येण विशेषतः ।
छिन्नसन्धितवस्त्रेण देवार्चां वै करोति यः ।
तत्पापभागिनी विप्र यदि मिथ्या ब्रवीम्यहम् ॥ ४२ ॥

विपक्षादपि सद्बुद्धिः ज्ञातव्या धर्मबुद्धिना ।
[1] किं पुनस्सखि[2]धर्माया मत्तश्शशिनिभानन ॥ ४३ ॥

## राक्षसीवचनाद्ब्राह्मणेन रक्षोविनाशः

इति सम्बोधितो देवि भर्ता मे पापया तया ।
[3]निर्दयो व्यसनी चैव पतिर्मे चारुहासिनि ।
तद्वाक्यं कलुषं श्रुत्वा राक्षसीं वाक्यमब्रवीत् ॥ ४४ ॥

शीघ्रमानीयतां शक्तिः करोमि वचनं तव ।
सैवमुक्ता तथा भर्त्रा तथेत्युक्त्वा वरानने ॥ ४५ ॥

तत्क्षणाद्राक्षसी गृह्य शक्तिं वृक्षाग्र[4]संस्थिताम् ।
ददौ सा गुह्यमाख्याय विमुञ्चेति [5]यथार्चिषम् ॥ ४६ ॥

अत्रान्तरे राक्षसस्य राक्षसीं कुपितां गताम् ।
अन्विष्य गच्छतो देवि [6]क्षुतं जातं तदा किल ॥ ४७ ॥

सव्यं च स्फुरितं नेत्रं स्ववस्त्रस्खलितं ततः ।
अनादृत्य च तत्सर्वं निर्जगाम त्वरान्वितः ॥ ४८ ॥

---

[1] अहं सखिधर्मा सुहृत्त्वयुक्ता । अतः मद्वचनं स्वीकर्तव्यमेवेत्यर्थः ।
[3] निर्द्रव्य इति नारदपुराणपाठः ।

---

[2] धर्म्यायामुक्तः शशिनिभानने (ग) [4] संश्रिताम् (ग) [5] तथा (ग) [6] स्वयं जातं क्षुतं किल (ग)

सालवृक्षसमीपस्थामपश्यत्तनुमध्यमाम् ।
घटयन्तीं च संबन्धं [1]पतिभार्यात्मकं ततः ॥ ४९ ॥

क्रोधामर्षविवृत्ताक्षः तदाऽधावत राक्षसः ।
राक्षसं धावमानन्तु कालान्तकयमोपमः[2] ॥ ५० ॥

तदा दृष्ट्वा [3]पतिर्मह्यं पौरुषे स्वे व्यवस्थितः ।
मुमोच विपुलां शक्तिं रक्षोवक्षःस्थलं प्रति ॥ ५१ ॥

ज्वलज्ज्वलनसङ्काशा द्योतयन्ती दिशो दश ।
पपात [4]हृदये सा तु कामिनी कामुके यथा ॥ ५२ ॥

कृत्वा भस्मावशेषन्तु राक्षसं गगनं ययौ[5] ।
शक्त्या निहत्य भर्तारं निजहस्तविमुक्तया ॥ ५३ ॥

कृतकृत्यामिवात्मानं मेने सा रजनीचरी ।

## राक्षस्या पतित्वेन ब्राह्मणवरणम्

सा गृहीत्वां [6]करे कान्तं प्रविष्टा च स्वकां गुहाम् ।
कुचाभ्यां सा पतिं देवि पीडयित्वा[7]ऽब्रवीदिदम् ॥ ५४ ॥

[8]विवाहार्थं समानीतां वाराणस्याः द्विजोत्तम ।
एतां त्वमद्य सुभगां गृहं [9]पित्र्यं नयस्व च ॥ ५५ ॥

---

[2] कालान्तकयमोपममिति नारदपुराणपाठः युक्ततर इति भाति। [3] पतिर्मह्यमिति मे पतिरित्यर्थे ज्ञेयम्। [5] सा शक्तिः पुनरपि देवेन्द्रसमीप-मेव जगामेति।
[9] मातृकासु पौत्रमिति पाठो दृश्यते। तत्रार्थव्यक्तिर्न भवति इति विपरिवर्तितम् ।

---

[1] पतिभार्यात्मतां तदा (क ख घ) [4] हृदयेऽस्या (क) [6] ततः (ग) [7] ब्रवीद्वचः (ग)
[8] विहारार्थं (क ग)

इमानि तव रत्नानि शयनान्यासनानि च ।
तथाहं च तवाधीना कुरु नाथ यदिच्छसि ॥ ५६ ॥

त्वदर्थं राक्षसो घोरो मया ब्रह्मन्निषूदितः ।
भजस्व मां [1]विशालाक्ष भक्ताधीनामनागसम् ॥ ५७ ॥

श्रुत्वैतद्वचनं भीरुर्भर्ता मे चारुलोचने ।

## नारीणां मनोदार्ढ्यविषये संशयप्रदर्शनम्

उवाच राक्षसी तत्र साशङ्कं च तदा वचः ॥ ५८ ॥

[2]स्ववर्णं या पतिं [3]हंसि सा कथं [4]मा न हिंससे ।[5]
मत्तो रूपाधिकं दृष्ट्वा मां चाप्येवं (वरानने)[6] ॥ ५९ ॥

[7]शम्बरस्य च या माया या माया [8]नमुचेरपि ।
बलेश्च माया या विष्णोस्सर्वास्ता योषितो विदुः ॥ ६० ॥

---

[5] मां न हिंसस इति नारदपुराणपाठः । [6] मातृकासु 'निपानसे' इति रूपं न साधु । अतः नारदपुराणमनुसृत्य 'वरानने' इति विपरिवर्तितपाठः ।

[7] शम्बरः कश्यपदनोः पुत्रः । अस्य पत्नी मायावती । असौ स्वशत्रुं प्रद्युम्नं जन्मतः षष्ठेऽह्नि एव चोरयित्वा सागरे अपातयत् । मत्स्यगीर्णस्सः कदापि । स एव मत्स्यः पाकार्थं शंबरमहानसे आनीतो बभूव । मायावत्या शंबरपत्न्या दारिते मत्स्ये असौ लब्धः । नारदेन ज्ञातवृत्ता बभूव मायावती । सैव पूर्वं रतिरासीत् यस्याः पतिः मदनः शङ्करेण दग्धोऽभवत् । अयं मदनः प्रद्युम्नरूपेणात्रावततार । स च मायावत्याः लब्धविद्यः काले शंबरं

---

[1] विशालाक्षि (क ग) [2] अवर्णं (क ख घ) [3] हिंसीः (ग)
[4] मामहिंससे (क ख ग घ)

उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।
[1]स्वभावादेव तत्सर्वं स्त्रीबुद्धौ [2]साम्प्रतिष्ठति ॥ ६१ ॥

स्त्रियं हि यः प्रार्थयति सन्निकर्षञ्च गच्छति ।
ईषच्च कुरुते सेवां तं तमिच्छन्ति योषितः ॥ ६२ ॥

हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्ति च ।
अप्रियं प्रियभावैश्च गृह्णन्ते कालयोगतः ॥ ६३ ॥

न चासां मुच्यते कश्चित्पुरुषो हस्तमागतः ।
गावो नवतृणानीव [3]गृह्णन्त्योऽपि नवान्नवान् ॥ ६४ ॥

[4]अन्तकस्स मनो मृत्युः पातालं बडवामुखम् ।
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ॥ ६५ ॥

यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः ।

---

घातितवान् । विष्णुपुराण अंशः ५ जध्यायः २६

[8] नमुचिः मायाविधानत्रेषु प्रसिद्धः । हिरण्यकशिपोः सैन्याधिपतिः । वृत्रासुरानुयायी सः । स्वर्भानोः कन्या सुप्रभाऽस्य भार्या । स चैकदा भीतः सूर्यक्किरणेष्वेव लीनो बभूव । तथा च इन्द्रस्य सख्यमाप। इन्द्रस्य नमुचेश्च भगवद्विषये सम्भाषणमभूत् । आर्द्रेण शस्त्रेण कशया वा केनापि तस्य मरणं मास्त्विति इन्द्रो वरं प्रादात् । कदापि अमुं इन्द्रः समुद्रफेनेनैव जघान । खण्डितं तस्य शिरः इन्द्रस्य पृष्टलग्नमभवत् । तदनन्तरं ब्रह्मण आदेशानुसारं पूर्वं नमुचिकृतस्नाने अरुणतीर्थे सः सस्नौ । तत्र च नमुचिशिरः पतितं बभूव । म.भा. शल्यपर्व अ. ४४

[4] 'गृह्णन्तो वनवान्नवान्' इति मातृकापाठः प्रामादिको भवेत् ।

---

[1] सहदेवोऽपि यत्सर्वं (ग) [2] तत्प्रतिष्ठितम् (ग) [4] अन्तकस्य मनः पत्युः (ग)

यद्बहिस्तन्न कुर्वन्ति विचित्रचरितास्त्रियः ॥ ६६ ॥

तवाधीनोऽस्ति सुभगे कुरु यत्तव रोचते ।

## राक्षस्या ब्राह्मणे प्रीतिदार्ढ्यप्रदर्शनम्

राक्षसी —

[1]विश्वस्तहनने विप्र ब्रह्महत्यासमं भवेत् ॥ ६७ ॥

रुष्टाहं पतिना विप्र सपत्नीं कुर्वता भृशम् ।

तेनासौ कारणेनाद्य [2]घातितः पापकृत्तथा ॥ ६८ ॥

विश्वस्तो हि यतस्त्वं मे सर्वभावेन मानिनी[3] ।

तेन त्वां गोपयिष्येऽहं सत्यमेतद्ब्रवीमि ते ।

मद्वाक्ये सर्वथा स्थेयं सर्वभावेष्वहर्निशम् ॥ ६९ ॥

तच्छ्रुत्वा वचनं देवि हृद्यं सुमधुरं तदा ।

प्रतिपेदे वचस्सर्वं यदुक्तं च तया तदा । ॥ ७० ॥

## ब्राह्मणेन, काशीराजपुत्र्या च साकं राक्षस्या काशीराजसमीपे गमनम्

ततस्सा राक्षसी सर्वं संगृह्याथ गुहाधनम् ।

[4]करेणुस्सा तदा भूत्वा पृष्ठे कृत्वा पतिं मम ॥ ७१ ॥

तया सह [5]विशालाक्ष्या सम्प्राप्तश्शङ्करालयम् ।[6]

---

[1] विश्वस्तहनने कृते सति तत्पातकं ब्रह्महत्यासममिति । नारदपुराणे तु विश्वस्तहननमित्येव दृश्यते । [4] करेणुः हस्तिनी । [6] शङ्करालयः प्रकरणाद्वाराणसी ।

---

[2] घातिनः पापकृत्तया (ग) [3] 'मानिनी' इति ह्रस्वपाठः सर्वमातृकासु

[5] विशालाक्षः (क ख घ)

उवाच तां पुरीं प्राप्य भर्तारमसितेक्षणा ।
समर्पयस्व तन्वङ्गीं काशीशस्य महात्मनः ॥ ७२ ॥

भर्ता मे तद्वचः श्रुत्वा राक्षस्या धर्मसंयुतम् ।
अददाच्च तया सार्धं राज्ञे रत्नावलीं [1]तदा ॥ ७३ ॥

सा परिष्वज्य पितरं यथावृत्तं न्यवेदयत् ।
तद्वाक्यं नृपतिः श्रुत्वा दुहित्रा भाषितं तदा ।
पूजयित्वा तु तं विप्रं सान्त्वयामास राक्षसीम् ॥ ७४ ॥

## पुत्रीदर्शनसन्तुष्टेन काशीराजेन ब्राह्मणाय तस्या दानम्

एषा सुता मे सुभगे त्वामेव शरणं गता ।
सेयमिच्छति भर्तारं योऽयं विप्रस्त्वया [2]कृतः[3] ॥ ७५ ॥

यस्यार्थे निहतः कान्तस्त्वया पूर्वतरः किल ।
शरणं त्वां प्रपन्नोऽस्मि पाहि मां त्वं वरानने ॥ ७६ ॥

सापत्न्यभावं त्यक्त्वा त्वं मत्सुतां परिपालय ।
एतच्छ्रुत्वा तु वचनं काशीशस्य निशाचरी ॥ ७७ ॥

अनुजज्ञे तथा [3]चेदं नृपसद्भावसंयुता ।
उद्वाहयामास तदा स्नेहयुक्तामलंकृताम् ॥ ७८ ॥

आजगामाथ विप्रेन्द्रस्स्वगृहं [4]मे महोदयम् ।

---

[3] यद्यपि मातृकासु 'कृतः हृत' इति वा दृश्यते तथापि वृतः इति पदमेवात्र युक्ततममिति भाति ।

---

[1] नुताम् (ग) [2] हृतः (घ) [4] चेयं (क ख घ) [5] सुमहो (ग)

## भार्याद्वयसहितस्य स्वपत्युः पुनर्दर्शने सखीकृतनिषेधः

तमागतमहं दृष्ट्वा भार्याद्वयसमन्वितम् ॥ ७९ ॥
दुःखेन महताऽऽविष्टा चिन्तयामि स्वचेष्टितैः ।
ततोऽहं बन्धुवर्गेण सखीवृन्देन निन्दिता ॥ ८० ॥
कथं द्रक्ष्यसि भर्तारं धनलुब्धे [1]प्रियान्वितम् ।
यस्त्वया भर्त्सितः पूर्वं [2]यावद्वित्तं सुदीनवत्
अवज्ञाय च तं दुष्टे परित्यज्य इहागता । ॥ ८१ ॥
चञ्चलानीह वित्तानि पैतृकाणीह योषिताम्
कान्तेनोपार्जितानीह स्थिराणि च भवन्ति हि । ॥ ८२ ॥
कथं यास्यसि दुर्मेधे पुनस्तद्भर्तुरन्तिकम्
दाक्षिण्याल्लोक[3]वाक्याच्च यदि हि त्वां भजिष्यति । ॥ ८३ ॥
स्नेहेन रहितः कान्तः तदा किं सुखमेधते ।
[4]निःस्नेहस्सङ्गमो लोके पशूनामिव किं सुखम् ॥ ८४ ॥
आहूता यातु वै भर्त्रा स्त्री न याति त्वरान्विता ।
सा ध्वांक्षी जायते पुत्रि दशवर्षाणि पञ्च च ॥ ८५ ॥
[5]एवं बहुविधा वाचः श्रुत्वा बहुजनेरिताः ।

---

[2] परित्यक्त इति यावद्वित्तस्थले नारदपुराणपाठः युक्ततर इति भाति ।

---

[1] सिया (ग) [3] वादाच्च (ग) [4] स्नेहेन (ग) [5] 'नैषा निशा स्त्री भवति श्लाघनीयेन धीमता (म) । उभयोर्लोकयोः पुत्रि पत्न्या यद्यत्प्रसाद्यते' । अयं श्लोकः 'क ग घ' मातृकासु दृश्यते परन्तु स्फुटोऽर्थो न भवति ।

## सुप्रियायाः खेदः

अधोमुखाऽश्रुपूर्णाक्षी पृथिवीमवलोकयम्[1] ॥ ८६ ॥
न दत्तं वलयन्त्वेकं येन तुष्टिं व्रजेत्पतिः ।
धनजीवनयोः स्वामी भर्ता लोकेषु गीयते ॥ ८७ ॥
[2]अपह्नुतिं कृतवती का मेऽवस्था भविष्यति ।
कथं यास्यामि तत्पार्श्वं किं वदिष्यामि तत्पतिम् ॥ ८८ ॥
एवं विचिन्तयन्तीह स्थिताहं व रवर्णिनि ।
एतस्मिन्नन्तरे भर्त्रा प्रेषिता शिबिकाऽऽगता ॥ ८९ ॥
तामारुह्य गता तत्र, यत्र तिष्ठति मे पतिः ।
स्नाता सुभुक्ता मुदिता [3]भर्त्रा स्नेहेन वीक्षिता ॥ ९० ॥
ततश्चास्तमिते भर्ता मामाहूयेदमब्रवीत् ।
परिसान्त्वयंस्तदा भीरु भर्ता मे [4]प्रियदर्शनः ॥ ९१ ॥
[5]विभावरीचरीं प्राह तां च राजेन्द्रकन्यकाम् ।

### भर्तृकृतसान्त्वनेन लज्जितायाः सुप्रियायाः बहुजन्मान्तरं, काष्ठीलाजन्मप्राप्तिश्च

इयं हि स्वामिनी प्राप्ता वित्तस्य मम चैव हि ॥ ९२ ॥
पादसंवाहनं तस्याः कर्तव्यं सर्वदैव हि ।
ततस्ताभ्यामहं प्रेम्णा [6]यथावदभिपूजिता ॥ ९३ ॥

---

[1] अवालोकयमिति शुद्धरूपम् । [3] भर्तुरिति मातृकासु दृश्यमानमयुक्तमिति भाति । [5] विभावरी रात्रिः तस्यां चरतीति राक्षसी ।

---

[2] अपह्नवं (ग) [4] शुभ (ग) [6] यथार्हमपि (ग)

रत्नैर्वस्त्रैश्च सम्पूज्य सान्त्वयामास मां पुनः ।
तदद्भुतमहं दृष्ट्वा व्याकुलाहं तदाऽभवम् ॥ ९४ ॥

तेनातिदानेन गता मम प्राणाश्च शोभने
ततोऽहं तेन पापेन प्राप्ता नरकयातनाम् ।
तामतीत्य सुदुःखार्ता काष्ठीला[1] ह्यभवं शुभे ॥ ९५ ॥

यास्यामि पुनरेवाहं [2]तिर्यग्योनिं सहस्रशः ।
इमामवस्थामापन्ना भर्तार[3]मवमान्य हि ॥ ९६ ॥

## सन्ध्यावलीकृतद्वादशीपुण्यदानेन काष्ठीलायाः मुक्तिप्रापणम्

सन्ध्यावली —

जातो मे विस्मयोऽत्यर्थं काष्ठीले वचनात्तव ।
कर्मणा केन शुद्धिस्ते भवेत्तद्वद मा चिरम् ॥ ९७ ॥

[4]दया मे वर्ततेऽत्यर्थं त्वां दृष्ट्वा दुःखितां मम ।

काष्ठीला —

तत्कर्मणो विशुध्यर्थं देहि द्वादशिसम्भवम् ।
पुण्यं पुण्यवतां श्रेष्ठे यद्यस्ति मयि ते [5]दया ॥ ९८ ॥

तस्यास्तद्वचनं श्रुत्वा कृपणायाः पुनः पुनः ।
कृपामुवाह सुभगा तामवोचदिदं वचः ।

सन्ध्यावली —

दत्तं मया ते सुकृतं द्वादश्युत्थमनन्तकम् ॥ ९९ ॥

---

[2] तिर्यग्योनिः पशुपक्ष्यादिजन्म ।

---

[1] द्रु वनं (ग) [3] मवमानय (क ख) या (घ) [4] दया मे तिष्ठते दृष्ट्वा दुःखितास्मीति काष्ठिला (ग) [5] कृपा (ग)

एवमुक्ते तु वचने शतह्रदसमप्रभा ।
गगनस्था ततो [1]दृष्टा गच्छन्ती वैष्णवं पदम् ॥ १०० ॥

सूतः —

पतिर्हि दैवतं लोके स्त्रीणां तु मुनिसत्तमाः ।
तस्यार्थं [2]वा त्यजेद्वित्तं जीवितं वा विशेषतः ॥ १०१ ॥

जीवितेनाथ वित्तेन भर्तारं वञ्चये[3]त्तदा ।
क्रिमियोनिशतं गत्वा [4]पुल्कसी जायते ततः ।
तस्माद्भर्तुः प्रियं कार्यं प्राणैरपि धनैरपि ॥ १०२ ॥

इति श्रीमत्पुराणसारे भर्तुरवज्ञादोषो नाम
चतुःपञ्चाशोऽध्यायः

---

1 'दृष्ट्वा' इति सर्वमातृकासु । [2] सन्त्यजे (ग) [3] तया (ग) [4] पुंश्चली (ग)

## पञ्चपञ्चाशोऽध्यायः

[ स्त्रीधर्मप्रकरणे स्त्रीणामग्निप्रवेशविचारनिरूपणम् ]

### सर्वदेवमयस्यापि शरीरस्य अग्निप्रवेशने पापाभावकथनम्

ऋषयः —

अग्निप्रवेशनं स्त्रीणां धर्मो निगदितस्त्वया ।
तत्रैकस्संशयोऽस्माकं वर्तते रोमहर्षण ॥ १ ॥

[1]पञ्चभूतात्मके देहे स्थूले षाट्कौशिके[2] तथा ।
पृथिव्यादिक्रमेणैव वर्तन्ते [3]पञ्च देवताः ॥ २ ॥

काये ब्रह्मा महीभागे तथा विष्णुर्जलांशके ।
तथा रुद्रोऽग्निभागे च वाय्वंशे चेश्वरः परः ॥ ३ ॥

आकाशांशे शरीरस्य स्थितस्साक्षात्सदाशिवः ।
शरीरस्य बहिर्भागे विराडात्मा सदाशिवः ॥ ४ ॥

अन्तर्भागे स्वराडात्मा सम्राड् देहस्य मध्यमे ।
सर्वेषां कारणं यत्तद् ब्रह्म सत्यादिलक्षणम् ॥ ५ ॥

यथा जातजनानान्तु शरीरे सर्वदेवताः ।
तिरोभूततया नित्यं वर्तन्ते वदतां वर ॥ ६ ॥

अतश्च भोगमोक्षार्थी शरीरं देवतामयम् ।
स्वकीयं परकीयञ्च पूजयेच्च विशेषतः ॥ ७ ॥

---

[1] पृथिवी-अप्-तेजो-वायु-आकाशरूपाणि पञ्चभूतानि ।

[2] त्वक्-रुधिर-मांस-मज्जा-अस्थि-मेदस् इति स्थूलदेहस्य षट्कोशाः ।

---

[3] यद्वि (ग)

नावमानं सदा कुर्यान्मोहतो वापि मानवः ।
न क्षतं विग्रहे कुर्यादस्त्रशस्त्रनखादिभिः ॥ ८ ॥

तथा न लोहितं कुर्याद्यदि कुर्यात्पतत्यधः ।
[1]असुर्या नाम ये लोका अन्धेन तमसाऽऽवृताः ॥ ९ ॥

तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ।
श्रुतिर्हि चोदयत्येव[2]मात्मनः परिरक्षणम् ।
अग्निप्रवेशनं स्त्रीणां कथं नाम प्रशस्यते ॥ १० ॥

सूतः —

रहस्यं सम्प्रवक्ष्यामि समासेन समाहिताः ।
अग्निप्रवेशमाहात्म्यं शृणुध्वं मुनिपुङ्गवाः ॥ ११ ॥

## स्त्रीणामग्निप्रवेशसमर्थने ब्राह्मणीकथा

मिथिलायां पुरा कश्चिदासीद्ब्राह्मण[3]पुङ्गवः ।
पूर्वे वयसि वेदाढ्यः शास्त्राढ्यश्च सुबुद्धिमान् ॥ १२ ॥

स स्नातुं जाह्नवीं गत्वा स्नानं कृत्वा पितॄनपि ।
देवानृषीन्समभ्यर्च्य ययौ पुत्तलिकापुरम् ॥ १३ ॥

[4]प्रतिश्रयमथो चक्रे ब्राह्मणस्य निवेशने ।

## ब्राह्मणस्य क्षत्रियविधवायामासक्तिः

तत्रैका क्षत्रियसुता यौवनस्था हतप्रिया ॥ १४ ॥

---

[1] असुर्याः सूर्यरहिताः । छान्दसं ह्रस्वम् । [4] प्रतिश्रयः निवासः ।

---

[2] मात्मभिः (ग) [3] सत्तमः (ग) [4] प्रतिश्रव (ग)

भुक्त्वा [1]चाऽऽवसितं विप्रं सर्वावयवसुन्दरम् ।
रात्र्यां चन्द्रोदये शुद्धे ज्योत्स्नोद्भासितदिङ्मुखे ॥ १५ ॥

[2]ब्राह्मणाभ्याशमागम्य तमुद्वीक्ष्येदमब्रवीत्
कुतस्त्वयागतं विप्र कं वा देशं गमिष्यसि ॥ १६ ॥

ब्राह्मणः —

अकालचर्या सर्वेषां शङ्कामुत्पादयेद् ध्रुवम् ।
वयस्थयोर्मिथो वादो रहसीह न शस्यते ॥ १७ ॥

क्षत्रियसुता —

[3]कथाप्रसङ्गे [4]गङ्गायां [5]तीर्थे देशादिविप्लवे ।
राजद्वारे श्मशाने च रहोवादो न दूषितः ॥ १८ ॥

[6]अथ कामस्समायातो [7]रहस्यस्थितितस्थुषोः ।
तयोरथ समायोगे वर्षाणां शतमत्यगात् ॥ १९ ॥

गते वर्षशते पश्चादेकस्मिन्दिवसे द्विजः
बहुकालं कुमार्गपतितस्य ब्राह्मणस्य दुःखम्
धिग्मां क्लिष्टामितीवेत्थं निनिन्द भृशदुःखितः ॥ २० ॥

---

[1] आवसितं वासस्थानं, प्रकरणादत्र कृतावासमिति । [2] अभ्याशः सामीप्यम्
[3] कथाप्रसङ्गः 'बहूनां सङ्घाते श्राव्यमाणकथा । तत्र खलु बहुजनगोष्ठ्यां मिथः सम्भाषो भविता । [5] स्नानमेव तत्र परं कृत्यम् । तत्रापि कदाचन रहोवादप्रसङ्गासक्तिः । अत्र परं जाह्नवीस्नानमेव कारणमेतयोः रहोवादस्यादूषणे इति क्षत्रियाया युक्तिः ।

---

[4] गङ्गायास्तीर्थे (ग) [6] अर्थकाम (क) [7] तयोरेवंस्तु तस्थुषोः (ग)

व्रतानि वेदविद्यादिकरणान्यखिलानि च ।
नरकग्राम[1]मार्गेण सङ्गेनापहृतानि मे ॥ २१ ॥

विनिन्द्येत्थं स धर्मात्मा स्वयमात्मानमात्मना ।
विहाय क्षत्रियां विप्रो जगामेष्टां भुव ततः
कालेन मृत्युपापन्नं यमः प्राह पुरः स्थितम् । ॥ २२ ॥

## मृतस्य ब्राह्मणस्य पापबाहुल्यान्नरकादि-यातनाप्राप्तिः

यमः —

त्वया कृतानां पापानां संख्या कर्तुं न शक्यते ।
नरके च स्थितिर्विप्र शतवर्षं [2]सुभीषणे ॥ २३ ॥

वर्षाणां दशकं चैव क्रिमिभुक्तिः परं दश ।
श्लेष्ममध्ये पुरीषाश्रुमूत्ररेतोह्रदेषु च ॥ २४ ॥

उन्मज्य च निमज्याथ[3]श्लेष्मभुङ्मलभोजनः ।
ततो नरकशेषेण[4]श्वजन्मानि शतं परम् ।
यमवाक्यमिति श्रुत्वा ब्राह्मणो निपपात ह ॥ २५ ॥

## भर्त्रर्थं ब्राह्मण्या दुःखम् । नारदेन तस्यै अग्निप्रवेशात् मुक्तिप्राप्तिकथनम् ।

[5]तदैव तस्य भार्यापि पतिचिन्तापराऽभवत् ।
एतस्मिन्नन्तरे तस्याः समीपं नारदोऽभ्यगात् ॥ २६ ॥

---

[5] तस्य भार्यया यमवाक्यं न श्रुतम् । सा तु पतिमरणेनैवातिदुःखिताऽऽसीत् ।

---

[1] मात्रेग (क) [2] सुभीषगम् (क ख घ) [3] श्लेष्माश्लेष्माद्रि (ग) [4] श्वयोनीनां (ग)

नारदस्य पापातोऽसौ पादयोरतिदुःखिता ।
तामुत्थाप्य [1]मुनिश्शुद्धां यथावृत्तमभाषत ॥ २७ ॥
अयि मुग्धे विशालाक्षि भर्तारं गन्तुमर्हसि ।
भर्ता [2]ते हि[3] विशालायां मृतो बन्धुविवर्जितः । ॥ २८ ॥
[4]अपि कोटिधना नारी बहुपुत्रापि मानिनी
शोच्या भवति नारीणां पतिहीना तपस्विनी । ॥ २९ ॥
वैधव्यसदृशं दुःखं स्त्रीणामन्यन्न विद्यते
धन्यास्ताः योषितो यास्तु म्रियन्ते भर्तुरग्रतः ।
न रोदितव्यं ते भद्रे ज्वलनं प्रविशाव्यये[5] ॥ ३० ॥

**दृष्टान्तैः मृतभर्तृकाया अग्निप्रवेशनसमर्थनम्**

श्रूयते [6]हि [7]धुराख्यातो राजा शतधनुर्भुवि ।
तस्य पत्नी च [8]शैब्याभूदतिधर्मपरायणा[9] ॥ ३१ ॥
पतिव्रता महाभागा सत्यशौचदयान्विता ।
सर्वलक्षणसम्पन्ना सम्पन्ना विनयेन च ॥ ३२ ॥
स तु राजा तया सार्धं बुभुजे विषयान् बहून् ।
राज्यं भुक्त्वा यथान्याय्यं पालयित्वा वसुन्धराम् ॥ ३३ ॥

---

[3] पुत्तलिकापुरं भवेत् । [5] अव्ययेति ब्राह्मणीनामधेयं संबोधनं वा ।
[9] महाभारते शैब्येति श्रीकृष्णस्य पत्नीष्वन्यतमा । सा च कृष्णावतारान्ते ज्वलनं प्रविष्टेति । (म.भा. मौसलपर्व ७–७३) इयं त्वन्यापि भवेत् ।

---

[1] मुनिर्ब्रह्म (क) मुनिर्ब्रह्मा (ख ग) [2] तव विशालाक्षि यातो (ग) [4] तथा (क) अथ (ख घ) [6] च (ख घ) [7] पुराख्यातः (ग) [8] शैव्या भूदत्रि (ग)

तत्याज स प्रियान्प्राणान् संग्रामे धर्मतो नृपः ।
अन्वारुरोह तं देवी चितिस्थं भूपतिं पतिम् ॥ ३४ ॥

ततो[1] (धुर)स्तया सार्धं राजपुत्र्या स पार्थिवः ।
ऐन्द्रानतीत्य वै लोकान् लोकान् कामदुहोऽक्षयान् ।
स्वर्गाक्षयत्वमतुलं दाम्पत्यमतिदुर्लभम् । ॥ ३५ ॥

[2]वने पुत्रान् पृथां चैव विसृज्य च नृपात्मजा
नमस्कृत्य चिताग्निस्थं पाण्डुं कुरुकुलोद्भवम् ।
मद्राराजात्मजा तूर्णमन्वारोहद्यशस्विनी ॥ ३६ ॥

उपगूह्य हरेर्देहं रुक्मिणीप्रमुखाः स्त्रियः ।
[3]अष्टौ महिष्यः [4]कथिताः विविशुस्ता हुताशनम् ॥ ३७ ॥

रेवती चैव [5]रामस्य [6]देहमाश्लिष्य भूसुराः ।
विवेश ज्वलनं [7]वह्निं तत्सङ्गाह्लादशीतलम् ॥ ३८ ॥

---

[2] कुन्तीपुत्रानपि माद्रीपुत्राविव सम्भाव्य बहुवचनम् ।

[3] अष्टौ महिष्यः कृष्णस्य रुक्मिणी, सत्यभामा (सत्राजितः कन्या), जाम्बवती, कालिन्दी (पूर्वस्मिन् जन्मनि सूर्यस्य पुत्री) मित्रविन्दा, (अस्याः पैतृकं नाम शैब्येति) सत्या, (इयमेव कोसला) भद्रा (केकयाधिपतेः धृष्टकेतोः कन्या), लक्ष्मणा (मद्राधीशस्य कन्या, इमां लक्षणेत्यपि कथयन्ति) ।

[4] कथिताः प्रसिद्धा इत्यर्थः । [5] रामोयं बलरामः ।

---

[1] चाप इति सवमातृकासु । तया सार्धमत्रापेन्द्रान् लोकान् कामदुहोऽक्षयान् । पङ्क्तिद्वय-स्थले (ग) [6] देहमाश्रित्य सुन्दरी (ग) [8] तूर्णं (ग)

[1]कपोतोऽप्यनु[2]यातां तां कपोतीमित्यभाषत[3] ।
अहो मामनुगच्छन्त्या कृतं साधु शुभे त्वया ॥ ३९ ॥
क्षणमात्रेण दुःखेन सुखमानन्त्यमार्जितम् ।
एवमुक्त्वा स धर्मात्मा कपोतो भार्यया सह ॥ ४० ॥

---

[1] कश्चन व्याधः महान् धूर्तः । तेन समस्तोऽपि कालः मृगहत्यया नीतः । कदाचिद्वनगतेन तेन महती वृष्टिबाधा अवापि । जलमये स्थले स्थातु-मशक्तस्य तस्य तत्रैव रात्रिः समजनि । वृष्टिः शान्ताऽभवत् । तदैव कापि कपोती तेन पञ्जरे बद्धा । स च कपोतपञ्जरेण साकं तस्यैव तरोः अधस्तात् रात्रिर्नेतव्येति मनो दधौ । तस्मिन् वृक्षे तस्याः कपोत्याः पतिः प्रातरेव आहारसञ्चयनार्थं गतां कपोतीं स्मरन् गुणांश्च तस्याः गायन्नासीत् ।

स्वं भर्तारं वृक्षस्थितं मत्वा व्याधं च शीतार्तं ज्ञात्वा कपोती स्वभर्तारं अस्मै कमप्युपकारं सत्कारं च कर्तुं प्रार्थयामास । यतः स वृक्षः कपोतकुटुम्बस्य वासस्थानम् । अत एव अयं व्याधः तेषामतिथिर्बभूव । कपोतश्च व्याधेच्छया तस्मै शीतबाधापनोदनार्थं अग्निं प्रज्ज्वालयामास । शैत्यं अपहाय स पुनरपि स्वस्य क्षुधाशान्त्यर्थं तमयाचत । कपोतस्तदा स्वमेव तस्मिन्नग्नौ पातयित्वा तस्मै भोजनमदात् । कपोती च विरहा-मसहमाना स्वयमपि भर्त्रनुगमनं चकार । तेन च पुण्यान् लोकान् भर्त्रा-साकं सम्पादयामास । (म.भा. शान्तिपर्वणि आपद्धर्मपर्व अ. १४९)

[3] इति वक्ष्यमाणरीत्येत्यर्थः ।

---

[2] यातवत्या (ग)

दिव्यं विमानमारुह्य मुमुदे देववच्चिरम् ।
एवं बहुविधा नार्यः पतीनन्वगमन् पुरा ॥ ४२ ॥

## मृतभर्तृकाया सहगमनेन भर्तुः पुण्यातिशयकथनम्

नान्यत्पश्यामि नारीणां सर्वपापोपशान्तये ।
अग्निप्रवेशनं मुक्त्वा प्रायश्चित्तं जगत्त्रये ॥ ४३ ॥

नीयमानं श्मशानोर्वीं याऽनुयाति मृतं पतिम् ।
[1]अश्वमेधफलं पुण्यं तस्याः प्रतिपदं भवेत् ॥ ४४ ॥

[2]प्रेते पत्यौ समं तेन प्रविशेद्या हुताशनम् ।
अरुन्धती यथा स्वर्गे स्तूयतेऽप्सरसां गणैः ॥ ४५ ॥

न केवलं स्वयं स्वर्गं [6]याति [4]पत्यङ्कगामिनी ।
अपि पापकृतामग्र्यं भर्तारमपि सा नयेत् ॥ ४६ ॥

[5]ब्रह्महा वा सुरापो वा स्वामिद्रोहकरो[6]ऽथवा ।
सुवर्णस्तेयकारी वा यदि वा गुरुतल्पगः ॥ ४७ ॥

शरणागतघाती वा मित्रध्रुक् [7]भ्रूणहापि वा
गोहत्यादोषदुष्टो वा स्त्रीहत्यादूषितोऽपि वा

---

[1] अश्वः मेध्यते हिंस्यते यत्रेति । मेध हिंसने । लक्षणविशेषात्मकं अश्वं सम्प्रोक्ष्य कपाले जयपत्रं बद्ध्वा त्यजेत् । तद्रक्षार्थं पुरुषविशेषं नियोजयेत् । संवत्सरान्ते अश्वे आगते सति अथवा केनापि बद्धे सति युद्धं कृत्वा तमानीय यथाविधि वधं कृत्वा तद्वपया होमः कार्यः । इति सामान्यपरिचयः । [2] प्रेतः मृतः । [5] अत्र ब्रह्महत्या, सुरापानं, स्तेयं गुर्वङ्गनागमश्च महापातकानि । शरणागतहननं, मित्रद्रोहादि उपपातकम् ।

---

[2] मृते (ग) [3] यदि (ग) [4] पत्न्यङ्क (क ख घ) [6] यथा (ग) [7] प्राण (क ख घ)

नरकादुद्धरेन्नारी [1]तमप्यनुगता सती । ॥ ४८ ॥

व्यालग्राही यथा सर्पं बलादुद्धरते बिलात्
[2]तद्वद्भर्तारमादाय नाकपृष्ठे विराजते । ॥ ४९ ॥

नित्यानन्दमये स्वर्गे यावदिन्द्राश्चतुर्दश
कुलं [3]पित्रोश्च भर्तुश्च पवित्रयति सा सती ।
विना वह्निप्रवेशेन सा न स्त्रीत्वाद्विमुच्यते ॥ ५० ॥

## पत्यौ देशान्तरमृते अग्निप्रवेशविधिः

[4]क्षत्रियाश्च तथा नार्यः पत्यौ देशान्तरे मृते ।
पृथक् चितिं विशन्त्योऽपि न दुष्यन्ति कदाचन ॥ ५१ ॥

देशान्तरे मृते तस्मिन् साध्वी तत्पादुकाद्वयम् ।
निधायोरसि सश्रद्धा प्रविशेज्जातवेदसम् ॥ ५२ ॥

## अग्निप्रवेशनिषेधः

गर्भिण्यो बालपुत्राश्च स्त्रियो याश्च रजस्वलाः ।
न विशेयुश्च ता वह्निं याते भर्तरि पञ्चताम् ॥ ५३ ॥

## ब्राह्मण्याः सन्देहपरिहारः

[5]ब्राह्मणी —

पृथक्[6]चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अशक्यं यदि वा शक्यं मया गन्तुं मुने वद

---

[2] भुवः भर्तारमुद्धरत इत्यर्थः ।

---

[1] तप्यमानं (ग) [3] पित्रोः स्व (ग) [4] क्षत्रियायाश्च नारीणां (क ख घ)
[5] अव्यया (ग) [6] चितां (ग)

अग्निप्रवेशकालोऽयं व्यतीतो न भवेद्यथा । ॥ ५४ ॥

नारदः —

योजनानां शतं [1]त्वेकमितः स्थानात्पुरं हि तत् ।
[2]श्वो दाहकालो विप्रस्य भविता गन्तुमर्हसि ॥ ५५ ॥

[3]ब्राह्मणी —

दूरस्थितं कथं नाथं गन्तुमर्हामि [4]हे मुने ।
तद्वदस्व समाकर्ण्य [5]नारदस्तामथाब्रवीत्
[6]विपञ्चीनालसंस्था [7]त्वं भव गच्छाम्यहं क्षणात् । ॥ ५६ ॥

### अग्निप्रवेशात्पूर्वं मङ्गलद्रव्यदानविधिः

इत्युदीर्य तथा कृत्वा तामुवाचाव्ययां मुनिः
रोदनं नेह कर्तव्यं यदि तत्राग्निमेष्यति । ॥ ५७ ॥

पापं यदि कृतं भद्रे परपूरुषसेवनम्
एतद्विशुद्धये पुत्रि प्रायश्चित्तं समाचर । ॥ ५८ ॥

ततोऽन्यपातकव्रातनाशो वह्निप्रवेशनात्
[7]व्यभिचारकृते पापे तत्पापस्योपशान्तये ।
अतीतं पातकं [7]दृष्ट्वा प्रायश्चित्तं तदीरितम् ॥ ५९ ॥

---

[6] विपञ्ची नारदेन वाद्यमाना वीणा महतीनाम्नी । तस्याः नालः तन्त्र्याधारभूतो दण्डः ।

---

[1] श्चैकं (ग) [2] स्वर्दाह (क) [3] अव्यया (ग) [4] भो (ग) [5] नारदस्त्वा (ग)
[6] विपञ्चीनालसम्प्यत्वं भगवच्छान्यहं (क) [7] व्यभिचारे (ग) [6] वृष्ट्वा (ग)

[1]कुर्यात्ततो वा स्वां भूषां विप्राय प्रतिपादयेत् ।
भूषाभावे [2]स्वकीयेन प्रायश्चित्तं तु कारयेत् ॥ ६१ ॥

सूतः —

अथ नारदवाक्येन चोदिताऽऽहाव्यया द्विजम् ।
अग्निप्रवेशे नारीणां किं कर्तव्यं [3]महामुने ॥ ६२ ॥

नारदः —

स्नानमङ्गलसंस्कारभूषणाञ्जनधारणम् ।
गन्धपुष्पं तथा धूपं हरिद्राऽक्षतधारणम् ॥ ६३ ॥
[4]मङ्गलं च तथा सूत्रं पादालक्तकमेव च ।
शक्त्या दानं प्रयोक्तिश्च प्रसन्नास्यत्वमेव च ॥ ६४ ॥
नाना मङ्गलवाक्यानां श्रवणं गीतकस्य च ।
एवमादीनि कर्माणि कुर्यादग्निप्रवेशने ॥ ६५ ॥
[5]सर्वमेतत्करिष्यामि हरिद्रा मे न विद्यते ।
नेहास्ति किञ्चित्सौभाग्यं द्रव्यमन्यत्त्वयेरितम् ॥ ६६ ॥
भूषणं [6]किमुत ब्रह्मन् सर्वमेतत्प्रदीयताम् ।

**मङ्गलद्रव्यानयनार्थं नारदस्य पार्वतीसन्दर्शनम्**

अथ क्षणेनाभ्यगमत्कैलासं नारदो मुनिः ॥ ६७ ॥
गिरिजामथ दृष्ट्वाऽसौ प्रणिपत्येदमब्रवीत् ।
अव्यया निजभर्तारं गतासुमनुगच्छति । ॥ ६८ ॥

---

[1] कुर्याद्रयोवेत्ति क्वचित्पाठः दृश्यते । स तु 'कुर्याद्रहो वा' इति स्यात् ।
[4] मङ्गलं सूत्रं विवाहोत्सरे सौमङ्गल्यलक्षकं तन्तुबन्धनम् ।

---

[1] कुर्याद्रथो (क ख घ) [2] सखी (ग) [3] मुने बद (ग) [4] अव्यया (ग)
[5] 'अव्यय' (ग) [6] किमु तत् ( )

हरिद्रा दीयतां तस्यै भूषणानि च सूत्रकम्[1] ।

पार्वती —

विधवायै मया किञ्चिद्भूषणादि न दीयते ॥ ६९ ॥

विधवानामयं धर्मः कीर्तितो मुनिपुङ्गव ।

व्रतं दानं तपः शौचं भूशय्या नक्तभोजनम्[2] ॥ ७० ॥

ब्रह्मचर्यं सदा स्नानं भस्मना सलिलेन वा ।

शान्तिर्मौनं क्षमा[3]नित्यं [4]संविभागो यथाविधि ॥ ७१ ॥

अष्टम्यां च चतुर्दश्यां पौर्णमास्यां विशेषतः ।

एकादश्यां च विधिना कुर्यान्नित्य[5]मुपोषणम् ॥ ७२ ॥

लोकान्तरस्थं भर्तारं [6]आत्मानं च द्विजोत्तम ।

[7]तारयत्युभयं नारी चेत्थं धर्मपरायणा ॥ ७३ ॥

अपुत्रा वा [8]सुपुत्रा वा सर्वभोगविवर्जिता ।

[9]अनिन्दिताऽपि विधवा प्राप्नोति परमां गतिम् ॥ ७४ ॥

[10]गन्धमाल्यैस्तथा [11]पुष्पैर्विविधैर्भूषणैरपि ।

वासोभिः शयनैश्चैव विधवा किं करिष्यति ॥ ७५ ॥

---

[1] सूत्रकमत्र माङ्गल्यतन्तुः स्यात् । [2] एकवारं सदा भुक्तिः उपवासव्रतानि चेति धर्मसिन्धुवाक्यम् । नक्तभोजनशब्दः एकवारभोजनतात्पर्यवान् स्यात् । [4] संविभागः देयस्य यथाक्रमं यथाशास्त्रं च वितरणम् । [8] अत्र 'सपुत्रा' इति विशेषणं युक्तमासीत् । [9] अनिन्दिता विधवा अपि इति अन्वयः ।

---

[3] शान्तम् (ग) [5] मुपोषितम् (घ) [6] अत्मानं (घ) [7] कार (ग)
[10] गन्धैः (ग) [11] धूपैः (ग)

नारदः —

भद्रे न विधवा ताव[1]द्धवाङ्गं यावदस्ति वै ।
आदाहात्सूतकं नास्ति तिष्ठेत्सौभाग्यमुत्तमम् ।
एवमुक्त्वा तु स मुनिः [2]तया दत्तमथाहरत् ॥ ७६ ॥

स्नायन्त्या अव्ययायास्तु हरिद्रां दत्तवान्मुनिः ।
ततस्तु सूक्ष्मवस्त्रं च भूषणानि ददौ [3]मुनिः ॥ ७७ ॥

[4]अथ तं ब्राह्मणं दग्ध्वा नारदस्तमथाब्रवीत् ।
अव्यये गच्छ दहनं प्रविश त्वं यदीच्छसि ॥ ७८ ॥

अथ सा भूषिता साध्वी त्रिः प्रदक्षिणपूर्वकम् ।
प्रविष्टा ज्वलनं दीप्त[5]मथागात्तु विमानकम् ॥ ७९ ॥

सूर्येण सममुत्सृष्टमप्सरो[6]गानशोभितम् ।
अरुरोह विमानं सा भर्त्रा साकं दिवं ययौ ॥ ८० ॥

एवं हि नरके घोरे पतन्तं पतिमात्मनः ।
उज्जहाराव्यया सद्यः कृत्वा वह्निप्रवेशनम् ॥ ८१ ॥

तस्मात्स्त्रीणां परो धर्मः पत्यौ पञ्चत्वमीयुषि[7] ।
अग्निप्रवेशनं [8]कार्यं सर्वपापप्रणाशनम् ॥ ८२ ॥

इति श्रीमत्पुराणसारे अग्निप्रवेश[9]धर्मकथनं नाम
पञ्चपञ्चाशोऽध्यायः

---

[7] पञ्चत्वं एयुषि मृते सति इति । पञ्चभूतात्मकस्य देहस्य पञ्चत्वाप्तिर्नाम पुनस्तेष्वेव भूतेषु लयः। इण गतौ इत्यस्य धातोः ईयिवामिति शतृजन्तस्य सप्तमी ।

---

[1] द्दताङ्गं (ख ग) [2] तथा (ख घ) [3] मुने (ख घ) [4] अतस्तं (ग)
[5] मथ गात्तु (ख घ) [6] गीत (ग) [8] नाम (ग) [9] धर्म इति 'ग' प्रतौ नास्ति ।

## षट्पञ्चाशोऽध्यायः

[ भुवनकोशनिरूपणम् ]

ऋषयः —

यस्मिंस्तु विहितैर्धर्मैर्निःश्रेयसमवाप्यते ।
तत्त्वतः श्रोतुमिच्छामः तदेतन्मण्डलं भुवः ॥ १ ॥

यावन्तस्सागरा द्वीपास्तथा वर्षाणि पर्वताः ।
वनानि सरित[1]स्सूर्या[2] ग्रहाणां स्थितिरेव च ॥ २ ॥

यदाधारमिदं कृत्स्नं यथा पृथ्वी पुरा त्वियम् ।
सर्वमेतत्समासेन सूत त्वं वक्तुमर्हसि ॥ ३ ॥

सूतः —

[3]विप्रेन्द्राः श्रूयतामेतत्संक्षेपाद्वदतो मम ।
शतार्धकोटिविस्तारा पृथिवी कृत्स्नशो द्विजाः ।
तस्यास्संस्थानमखिलं शृणुध्वं कथयामि वः ॥ ४ ॥

### सप्तद्वीपानां सप्तसमुद्राणां च निरूपणम्

[4]द्वीपात्तु द्विगुणो [5]द्वीपो जम्बूःप्लक्षोऽथ [6]शाल्मलः ।
कुशः क्रौञ्चस्तथा शाकः पुष्करद्वीप एव च ॥ ५ ॥

लवणेक्षुसुरासर्पिर्दधिक्षीरजलाब्धिभिः ।
द्विगुणैर्द्विगुणैर्वृद्धया[7] सर्वे ते परिवेष्टिताः ॥ ६ ॥

---

[2] सूर्य इति मातृकासु । परन्तु सूर्या इति बहुवचनं युक्तं भाति इति परिवर्तितः पाठः ।

[3] अस्याध्यायस्य विषयसंग्रहः प्रायः कूर्मपुराणात् कृतः । कू.पु. अ.४९

[4] अत्र मार्कण्डेयपुराणे 'द्वीपात्तु द्विगुणो द्वीपो' इति पाठः । एकैकस्मादपि द्वीपादन्यो द्वीपः द्विवारं महान् । मातृकागतबीजशब्दार्थः स्फुटो न भवति । [7] वृद्ध्येति मार्कण्डेयपुराणम् ।

---

[1] सूर्यग्रात्याणां स्थिरे दिव (क) [5] बीजं (क ख ग घ) [6] शाल्मलिः (ग)

## प्लक्षद्वीपवर्णनम्

जम्बूद्वीपस्य विस्ताराद्द्विगुणेन समन्ततः ।
[1]आवेष्टयित्वा क्षीरोदं प्लक्षद्वीपो व्यवस्थितः ॥ ७ ॥

प्लक्षद्वीपेऽथ विप्रेन्द्रा सप्तासन्कुलपर्वताः ।
[2]गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा ॥ ८ ॥

सोमकस्सुमनाश्शैलो [3]वैभ्राजश्चैव सप्तमः ।
तेषां मध्ये च तत्रैव वर्षाणां तु समुद्रगाः ॥ ९ ॥

अनुतप्ता [4]शिखी विप्रा विपापा त्रिदिवा क्रमात् ।
अमृता सुकृता चैव तत्रैतास्सप्त निम्नगाः ॥ १० ॥

[5]आर्थकाः [6]कुरराश्चैव [7]विदंशा[8] भाविनस्तथा ।
ब्रह्मक्षत्रियविट् शूद्राः [9]प्लक्षद्वीपे प्रकीर्तिताः
इज्यते भगवान् [10]सोमो वर्णैस्तत्र निवासिभिः । ॥ ११ ॥

तेषां तु सोमसायुज्यं सारूप्यं [11]मुनिपुङ्गवाः
सर्वे धर्मपरा नित्यं सर्वे मुदितमानसाः । ॥ १२ ॥

## शाल्मलद्वीपवर्णनम्

प्लक्षद्वीप[12]प्रमाणात्तु द्विगुणेन समन्ततः
संवेष्ट्येक्षुरसाम्भोधिं शाल्मलस्तं व्यवस्थितः ।
सप्तवर्षाणि तत्रैव सप्तशैलाश्च निम्नगाः ॥ १३ ॥

---

[2] गोमेदमिति मातृकापाठः । परन्त्वत्र पुलिङ्गनिर्देश एव साधुः ।
[8] विदेहा इति कूर्मपुराणम् । [10] 'ईश' इति कौर्मे ।

---

[1] संवेष्ट (ग) [3] पैश्राम (ग) [4] सखी विप्र (क) [5] अर्धगाः (क ख घ) [6] कुरदा (क ग)
[7] इदं शाभानिस्तथा (क घ) [9] तस्मिन् द्वीपे (ग) [10] मुनीश्वराः(ग) [11] प्रमाणं च (ग)

कुमुद[1]श्चोन्नतश्चैव तृतीयश्च बलाहकः ।
द्रोणः [2]कङ्कस्तु महिषः [3]कुमुद्वान्त्वर्षपर्वताः ॥ १४ ॥

योनी तोया नितृष्णा च चन्द्रा शुक्ला विमोचनी[4] ।
निवृत्तिश्चेति ता नद्यः स्मृताः पापहरा नृणाम् ॥ १५ ॥

कपिला ब्राह्मणाः प्रोक्ता [5]राजानस्सारुणास्तथा ।
पीता वैश्याः स्मृताः कृष्णा द्वीपेऽस्मिन्वृपला द्विजाः
यजन्ति सततं तत्र वर्णा वायुं सनातनम् ॥ १६ ॥

## कुशद्वीपवर्णनम्

शाल्मलस्य तु विस्तारादृद्विगुणेन समन्ततः ।
संवेष्ट्य तु सुरोदाब्धिं कुशद्वीपो व्यवस्थितः ॥ १७ ॥

विद्रुमश्चैव हैमश्च द्युतिमान्पुष्पवांस्तथा ।
कुशेशयो हरिश्चाथ मन्दरस्सप्त पर्वताः ॥ १८ ॥

[6]धूतपापा शिवा चैव पवित्रा [7]सङ्करा तथा ।
विद्युदम्भा मही चेति नद्यस्तत्र जलावहाः ॥ १९ ॥

---

[1] श्चान्नद इति कूर्मपुराणम् । [2] कंसस्तु इति कौर्मे । [3] ककुद्मानिति कौर्मे । [4] विमोचिनीति कूर्मपुराणम् । [5] राजानश्चारुणा इति कूर्मपुराणम् ।

[6] अस्मिन् श्लोके उद्दिष्टाः सप्त नद्यो नाङ्किताः । परन्तु वराहपुराणे एतासां सप्त नदीनां नामानि नामान्तरेण साकं दृश्यन्ते यथा — तत्र द्विनाम्न्यो नद्यः प्रतोया प्रवेशा सैवोच्यते । द्वितीया शिवा यशोदा सा च भवति । तृतीया चित्रा नाम सैव कृष्णा भण्यते । चतुर्थी ह्लादिनी, नाम सैव चन्द्रा निगद्यते । विद्युल्ला पञ्चमी शुक्ला सैव वर्णा । षष्ठी सैव विभावरी

---

[1] सुकरा (ग)

ब्राह्मणा [1]द्रविणः प्रोक्ता क्षत्रियाः शुष्मिणस्तथा ।
[2]वैश्याः स्नेहास्तु वैदेहाः शूद्रास्तत्र प्रकीर्तिताः
यजन्ति विविधैर्यज्ञैर्ब्रह्माणं परमेष्ठिनम् । ॥ २० ॥

## क्रौञ्चद्वीपवर्णनम्

कुशद्वीपस्य विस्ताराद्द्विगुणेन समन्ततः
क्रौञ्चद्वीपस्ततो विप्रा वेष्टयित्वा [3]घृतोदधिम् । ॥ २१ ॥

क्रौञ्चोऽथ वामनश्चैव तृतीयश्चन्धकामिकः
[4]दिवावृतश्च विविदः पुण्डरीकश्च दुन्दुभिः । ॥ २२ ॥

गौरी कुमुद्वती चैव सन्ध्यारागा मनोजवा
ख्यातिश्च पुण्डरीका च नद्यः प्राधान्यतः स्मृताः ।
पुष्कराः [5]पुष्कलाधान्याः तिष्यास्तत्र क्रमेण वै ॥ २३ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव द्विजोत्तमाः ।
अर्चयन्ति महादेवं यज्ञदान[6]समाधिभिः ॥ २४ ॥

## शाकद्वीपवर्णनम्

क्रौञ्चद्वीपस्य विस्ताराद्द्विगुणेन समन्ततः ।
शाकद्वीपस्ततो विप्रा आवेष्ट्य दधिसागरम् ॥ २५ ॥

---

महती । सप्तमी सेत्र घृतिः इति स्यात् । विद्युल्लतानामान्तरं वा स्यात् । पौराणिकभूगोलचित्रे विद्युत्, अम्भा इति व्यस्ततया नदीद्वयम् ।

[1] द्रविणः सद्रवा इति स्यात् । दयालवो वा । [2] वैश्यस्तोभास्तु मन्देहा इति कूर्मपुराणम् । [5] पुष्कलाधन्या इति कूर्मपुराणे ।

[6] शमादिभिः इति कौर्मे

---

[1] द्रविडः इति सर्वमातृकासु दृश्यते स तु अपपाठः स्यात् अत्र गृहीतः कूर्मपुराणपाठः ।
[2] वैश्यानेवास्तुवन्देहा (ग) [3] कृतोदधिम् (क ख घ) [4] दिवावृच्चपविद्धश्च (ग)

उदयो रैवतश्चैव श्यामाकोऽस्तगिरिस्तथा ।
[1]आविकेयस्तथामात्यः[2] केसरी चेति पर्वताः ॥ २६ ॥

सुकुमारी कुमारी च नलिनी वेणुका तथा ।
इक्षुका धेनुका चैव गभस्तिश्चेति निम्नगाः ॥ २७ ॥

[3]मागाश्च मगधाश्चैव मानवा मञ्चकास्तथा ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमेण तु ॥ २८ ॥

यजन्ति सततं देवं सर्वलोकैकसाक्षिणम् ।
[4]व्रतोपवासनियमैर्देवदेवं[5] कविं रविम् ॥ २९ ॥

## द्वीपानां विशेषविषयाः । वैष्णवस्थाननिरूपणं च

प्लक्षदीपादि[6]केष्वेषु शाकद्वीपान्तिकेषु च ।
पञ्चवर्षसहस्राणि जना जीवन्त्यनामयाः ॥ ३० ॥

क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सहस्रशः ।
शाकद्वीपं समावृत्य क्षीरोदसागरः स्मृतः ॥ ३१ ॥

[7]श्वेतद्वीपश्च तन्मध्ये नारायणपरायणाः ।
तत्र पूज्या जनपदाः नानाश्चर्यसमन्विताः ॥ ३२ ॥

श्वेतास्तत्र नरा नित्यं जायन्ते विष्णुतत्पराः ।
तस्य मध्येऽतितेजस्कमुच्चप्राकारतोरणम् ॥ ३३ ॥

तन्मध्ये भगवानेकः पुण्डरीकसमद्युतिः ।
शेतेऽशेषजगत्सूतिः [8]शेषाहिशयने हरिः ॥ ३४ ॥

---

[2] आविकेयस्तथा रम्यः इति कूर्मपुराणम् । [3] मृगाश्च .... ... मानसा मन्दगास्तथा इति कूर्मपुराणम् । [5] दिवाकरम् इति कूर्मपुराणम् ।

---

[1] जाविकेय (क) [4] व्रतोपवासैर्विविधै (ग) [6] कोणेषु (क) [7] श्वेतद्वीपस्य मध्येतु (ग)
[8] शेषाहिशयनो (ग)

[1]क्षीरोदकन्यया नित्यं गृहीतचरणद्वयः ।
वैकुण्ठं नाम तत्स्थानं त्रिदशैरपि [2]वन्दितम् ॥ ३५ ॥

### [3]पुष्करद्वीपवर्णनम्

शाकद्वीपस्य विस्ताराद्द्विगुणेन व्यवस्थितः ।
क्षीरार्णवं समावृत्य द्वीपः पुष्करसंज्ञितः ॥ ३६ ॥

एकश्चात्र महाभागाः प्रख्यातो वर्षपर्वतः ।
मानसोत्तरसंज्ञो वै मध्यतो वलयाकृतिः ॥ ३७ ॥

योजनानां सहस्राणि चोर्ध्वं पञ्चाशदुच्छ्रितम् ।
तावदेव च [4]विस्तीर्णं सर्वतः परिमण्डलम् ॥ ३८ ॥

पुष्करद्वीपवलयः मध्येन विभजन्निव ।
स्थितोऽसौ तेन विच्छिन्नं जातं तद्वर्षकद्वयम् ॥ ३९ ॥

[5]महावीतं बहिर्वर्षं [6]धातकीखण्डमन्ततः ।
स्वादूदकेनोदधिना पुष्करः परिवारितः ॥ ४० ॥

तुल्यरूपास्तु मनुजा देवास्तत्रैकरूपिणः ।
दशवर्षसहस्राणि यत्र जीवन्ति मानवाः ॥ ४१ ॥

निरामया विशोकाश्च रागद्वेषविवर्जिताः ।
न वर्णाश्रमधर्माश्च न नद्यो न च पर्वताः ॥ ४२ ॥

तस्मिन्निवसति ब्रह्मा हरोऽथ हरिरव्ययः ।

---

[1] क्षीरोदकन्या लक्ष्मीः । [3] पुष्करद्वीपवर्णनभागः प्रायः विष्णुपुराणात्कूर्मपुराणाच्च संगृहीतः स्यात् । वि.पु. अं.२ अ.४, कू.पु. अ-५०

[5] महावीतं स्मृतं वर्षं धातकीखण्डमेव च । कूर्मपुराणम्

---

[2] वन्दितम् (ग) [4] विस्तीर्णः सर्वतः पारिमण्डलः (ग) [6] धातकीखण्डकं रतः (ग)

सम्पूज्यमाना ब्रह्माद्यैः कुमाराद्यैश्च योगिभिः ।
वर्षद्वयं द्विजश्रेष्ठा भौमस्स्वर्गोऽयमुत्तमः ॥ ४३ ॥

## लोकपालपुरीनिरूपणम्

मानसोत्तरशैले तु पूर्वतो वासवी पुरी ।
दक्षिणेन यमस्यान्या प्रतीच्यां वरुणस्य च ॥ ४४ ॥

उत्तरेण च सोमस्य तासां नामानि बोधत ।
वस्वौकसारा शक्रस्य याम्या 'संयमनी पुरी'[2] ।
पुरी सुखा [3]जलेशस्य सोमस्य च विभावरी ॥ ४५ ॥

## लोकालोकमहागिरिस्थाननिरूपणम्

पुरेण पुष्करस्याथ समावृत्य स्थितो महान् ।
स्वादूदकसमुद्रस्तु समन्ताद् द्विजसत्तमाः ॥ ४६ ॥

पुरेण तस्य महती दृश्यते लोकसंस्थितिः ।
काञ्चनी द्विगुणा भूमिः सर्वा चैकशिलोपमा ॥ ४७ ॥

तस्याः परेण शैलस्तु मर्यादापरिमण्डलः ।
योजनानां सहस्राणि दश तस्योच्छ्रयस्ततः ॥ ४८ ॥

तावानेव च विस्तारो लोकालोकमहागिरेः ।
[4]अर्वाचीने तु तस्यार्धे चरन्त्यादित्यरश्मयः ॥ ४९ ॥

---

[2] याम्या यमसंबन्धिनी संयमनीत्याख्या । [3] जलेशो वरुणः ।
[4] लोकालोक इति नाम्नो हेतुरयमेव यत्तस्य अर्वाचीनभागे सूर्यश्चरति । पूर्वार्धे तु नित्यं तम एव । अतः लोकः अलोकः इति प्रकाशश्चाप्रकाशश्च सः ।

---

[1] संयामिनी तथा (ग)

[1]पूर्वार्धे तु तमो नित्यं लोकालोकस्ततः स्मृतः ।
समावृत्य [2]तु तं शैलं सर्वतो वै तमःस्थितम् ॥ ५० ॥

तमश्चाण्डकटाहेन समन्तात्परिवारितम् ।
पञ्चाशत्कोटिविस्तारा [3]सेयमुर्वी द्विजोत्तमाः ॥ ५१ ॥

## जम्बूद्वीपवर्णनम्

[4]जम्बूद्वीपस्समस्तानामेतेषां मध्यतः स्थितः ।
लक्षमेकं योजनानां कृतो विस्तारदैर्ध्यतः ॥ ५२ ॥

तस्यापि मेरुर्विप्रेन्द्रा मध्ये कनकपर्वतः ।
चातुराशीतिसाहस्रैर्योजनैरस्य चोच्छ्रयः ॥ ५३ ॥

प्रविष्टः षोडशोऽधस्ताद् द्वात्रिंशन्मूर्ध्नि विस्तृतः ।
मूले षोडशसाहस्रो[5]विस्तारश्च स पर्वतः
भूपद्मस्यास्य शैलोऽसौ कर्णिकार[6]समुस्थितः । ॥ ५४ ॥

हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे
नीलः श्वेतश्च शृङ्गी च उत्तरे [7]वर्षपर्वताः । ॥ ५५ ॥

लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे
सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ।
[8]आनीलनिषधायातौ माल्यवान् गन्धमादनौ[9] ॥ ५६ ॥

---

[4] अयं भागः कूर्मपुराणाद्विष्णुपुराणाच्च संगृहीतः । कू.पु. अ.४, वि.पु. अं.२ अ.२ । [8] आनीलो निषधायामौ इति साधुः । [9] माल्यवद्गन्धमादनौ इति साधुः ।

---

[1] परार्धे (ग) [2] च (ग) [3] श्रेयमुक्ता (क) [5] विस्तारस्तस्य भूभृतः (ग)
[6] मसंस्थितः (क ख घ) [7] विभु (ग)

जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ ।
आनीलनिषधौ प्राप्तौ निरन्तरपरस्परौ ॥ ५७ ॥

गन्धमादनकैलासौ दक्षिणेन महाबलौ ।
अशीतियोजनायाममार्णवान्तर्व्यवस्थितौ ॥ ५८ ॥

निषधः पारियात्रस्तु मेरोः पार्श्वे तु पश्चिमे ।
यथा पूर्वौ तथैवेमावानीलनिषधायतौ ॥ ५९ ॥

शृङ्गवा[1]न्मरुधिश्चैव [2]तथैवोदयपर्वतौ ।
यथैव दक्षिणौ तद्वदर्णवान्तर्व्यवस्थितौ ॥ ६० ॥

भारतादिवर्षाणां स्थाननिरूपणम्

प्रथमं भारतं वर्षमतः किंपुरुषं स्मृतम् ।
हरिवर्षं तथैवान्यं मेरोर्दक्षिणतो द्विजाः ॥ ६१ ॥

रम्यकं चोत्तरं वर्षं तथैवानु हिरण्मयम् ।
उत्तराः कुरवश्चैव यथा वै [3]भारतं तथा ॥ ६२ ॥

नवसाहस्रमेकैकमेतेषां द्विजसत्तमाः ।
भद्राश्वः पूर्वतो मेरुः केतुमालश्च पश्चिमे ॥ ६३ ॥

[4]वर्षद्वयं मुनिश्रेष्ठास्तयोर्मध्यमिलावृतम् ।
[5]मेरोरुपरि विप्रेन्द्राः ब्रह्मणः [6]प्रथिता पुरी
चतुर्दशसहस्राणि योजनानां महापुरी ॥ ६४ ॥

---

[5] अयं भागः कूर्मपुराणविष्णुपुराणाभ्यां संगृहीत इति दृश्यते ।
कू.पु. अ.४६ वि. पु. अंशः २ अ.२

---

[1] न्मारुधिः (ग) [2] तथैवोत्तर (ग) [3] भारतस्तथा (क ख घ) [4] वर्षे द्वन्द्व (ग)
[6] प्रस्थिता (क ख घ)

## लोकपालावस्थाननिरूपणम्

तस्यास्समन्ततश्चाष्टौ दिशासु विदिशासु च ।
इन्द्रादिलोकपालानां प्रख्याताः [1]प्रवराः पुरः[2] ॥ ६५ ॥

अमरावती [3]पूर्वभागे देवेन्द्रस्य पुरी शुभा ।
[4]तेजस्विनी नाम पुरी आग्नेय्यां पावकस्य तु ॥ ६६ ॥

दक्षिणे तु यमस्यापि नाम्ना संयमनी पुरी ।
[5]रक्षोवती नाम पुरी नैर्ऋत्यां निर्ऋतेस्तथा ॥ ६७ ॥

पश्चिमे वरुणस्यापि [6]नाम्ना शुद्धवती पुरी ।
वायोरपि पुरी रम्या नाम्ना गन्धवती स्मृता ॥ ६८ ॥

सोमस्योत्तरदिग्भागे शुभा [7]कीर्तिमती पुरी ।
शङ्करस्य पुरी रम्या ऐशान्यां तु यशोवती ॥ ६९ ॥

## स्वर्गङ्गायाः तच्छाखानदीनां च स्थाननिरूपणम्

विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् ।
समन्ताद्ब्रह्मणः पुर्यां गङ्गा पतति वै दिवः । ॥ ७० ॥

सा तत्र पतिता दिक्षु चतुर्धा प्रतिपद्यते
सीता चालकनन्दा चक्षुर्भद्रा च वै क्रमात् । ॥ ७१ ॥

पूर्वेण [8]शैलाच्छैलाच्च सीता यात्यन्तरिक्षगा
ततश्च पूर्ववर्षेण भद्राश्वेनेति सागरम् । ॥ ७२ ॥

तथैवालकनन्दापि दक्षिणेनेत्य भारतम्

---

[2] पूरिति स्त्रीलिङ्गशब्दः । [7] कान्तिमतीति कूर्मपुराणम् ।
[8] शैलाच्छैलमिति कूर्मपुराणम् ।

---

[1] परमाः (ग) [3] च सा पूर्वे (ग) [4] धैजस्विनी (क ख घ) [5] रजोवती (क ख घ)
[6] पुरीशुद्धवती तथा (ग) [8] शैलाच्छैलौ च (ग)

प्रयाति सागरं भित्वा सप्तभेदा मुनीश्वराः । ॥ ७३ ॥

[1]सुचक्षुः पश्चिमगिरीनतीत्य सकलांस्ततः
पश्चिमं केतुमालाख्यं वर्षं गत्वेति चार्णवम् । ॥ ७४ ॥

भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून्
अतीत्योत्तरमम्बोधिं समभ्येति द्विजोत्तमाः । ॥ ७५ ॥

## मेरोश्चतुर्दिक्षु स्थितानां पर्वतानां तत्रस्थ-वृक्षाणां च निरूपणम्

[2]अत्युच्छ्रायस्तु तस्याथ तथा विष्कम्भपर्वतः[3] ।
पूर्वेण मन्दरो नाम दक्षिणो गन्धमादनः ॥ ७६ ॥

विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ।
कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च ।
एकादशशतायामाः पादपा गिरिकेतवः ॥ ७७ ॥

## जम्बूद्वीपनामहेतुकथनम्

जम्बूदीपस्य सा जम्बूर्नामहेतुर्मुनीश्वराः ।
महागजप्रमाणानि जम्ब्वास्तस्याः फलानि वै ॥ ७८ ॥

पतन्ति भूभृतः पृष्ठे शीर्यमाणानि सर्वतः ।
रसेन तेषां प्रख्याता तत्र जाम्बूनदीति वै
सरित्प्रवर्तते सापि पीयते तन्निवासिभिः । ॥ ७९ ॥

---

[1] सुचक्षुरेव चक्षुः । [2] अत्र किञ्चिद्विपरिवर्त्य पाठस्संयोजितः । एतस्मादनन्तरस्थः पाठः कूर्मपुराणस्य ४५,४६,४७ तमाध्यायेभ्यः संगृहीतः स्यात् ।

[3] अयुतो ननु शाश्वस्तु (क ख घ) अत्युच्छ्.य.न्तु तस्याथ (ग)

### मेरोश्चतुर्दिक्षु स्थितानां वनानां सरितां च निरूपणम्

वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनम् ।
[1]वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम् ॥ ८० ॥

अरुणोदं महाभद्रमसितोदं समानसम् ।
सरांस्येतानि चत्वारि देवयोग्यानि सर्वदा ॥ ८१ ॥

### इलावृतवर्षस्थनराणां आयुरादिनिरूपणम्

इलावृत्ते पद्मवर्णा जम्बूफलरसाशिनः ।
त्रयोदशसहस्राणि वर्षाणां वै [2]स्थिरायुषः ॥ ८२ ॥

### केतुमालवर्षस्थनराणामायुरादिनिरूपणम्

केतुमाले नराः कालाः सर्वे पनसभोजनाः ।
स्त्रियश्चोत्पलपत्राभा जीवन्ति वर्षायुतम् ॥ ८३ ॥

### रम्यकवर्षस्य नराणामायुरादिनिरूपणम्

रम्यके पुरुषा नार्यो रमन्ते रजतप्रभाः ।
दशवर्षसहस्राणि शतानि दश पञ्च च ।
जीवन्ति चैव सत्वस्थाः न्यग्रोधपरिभोजनाः ॥ ८४ ॥

### हिरण्मयवर्षस्य नराणामायुरादिनिरूपणम्

हिरण्मये हिरण्याभाः सर्वे[3] च लिकुचाशनाः[4] ।
एकादश सहस्राणि [5]दशानि शतपञ्च च ॥ ८५ ॥

### कुरुवर्षस्य नराणामायुरादिनिरूपणम्

जीवन्ति कुरुवर्षे तु श्यामाङ्गाः क्षीरभोजनाः ॥ ८६ ॥

---

[3] सर्वे श्रीफलभोजना इति कूर्मपुराणम् । [3] वृत्तभङ्गोऽस्ति

---

[1] वैराजं (क ख घ) [2] त्रयोदश (क ख) त्रयोदशं (घ) [4] लिकुचानाः (ग)
[5] शतानि दश पञ्च च (न)

## भद्राश्ववर्षस्य नराणानामायुरादिनिरूपणम्

भद्राश्वे पुरुषाः शुक्लाः स्त्रियश्चन्द्रांशुसन्निभाः ।
दशवर्षसहस्राणि [1]जीवन्ति प्लक्षभोजनाः ॥ ८७ ॥

## किम्पुरुषवर्षस्य नराणामायुरादिनिरूपणम्

तथा किंपुरुषे विप्रा मानवा हेमसन्निभाः ।
दशवर्षसहस्राणि जीवन्ति प्लक्षभोजनाः ॥ ८८ ॥

## हरिवर्षस्य नराणामायुरादिनिरूपणम्

तथापि हरिवर्षेऽपि महाराजतसन्निभाः ।
दशवर्षसहस्राणि जीवन्तीक्षु[2]रसाशनाः ॥ ८९ ॥

## भारतवर्षविवरणम्

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥ ९० ॥

*भारते —

कोटिद्वयं द्विपञ्चाशल्लक्षाण्येव तु फाल्गुन ।
पञ्चाशच्च सहस्राणि सप्तद्वीपाः ससागराः । ॥ ९१ ॥
दशकोटिः स्वर्णभूमिः लोकालोकयुतो मतः
पञ्चत्रिंशत्स्मृता कोट्यो लक्षाण्येकोनविंशतिः । ॥ ९२ ॥
चत्वारिंशत्सहस्राणि तमो भूमिः प्रकीर्तिता
सप्तविंशतिलक्षानि कोटिर्गर्भोदकः स्मृतः !
मण्डस्य संख्या कोटिस्तु भूगोले तु प्रकीर्तितः ॥ ९३ ॥

---

* महाभारतस्योक्तिः मातृकायां गृहीता । आवरोऽपि तत्रैव प्रदत्तः ।

---

[1] जीवन्त्यमृतभोजनाः (ग घ) [2] रसायनाः (क ख घ)

## कुलपर्वतनिरूपणम्

महेन्द्रो [1]मगधः सह्यः शुक्तिमानृक्षपर्वतः ।
विंध्यश्च पारियात्रश्च [2]सप्तात्रकुलपर्वताः ॥ ९४ ॥

## कुलाचलनिर्गतानां नदीनां नामानि

शतद्रुचन्द्रभागाद्याः हिमवत्पादनिःसृताः ।
वेदस्मृतिमुखाश्चान्याः पारियात्रोद्भवास्तथा ॥ ९५ ॥

नर्मदासुरसाद्याश्च नद्यो विन्ध्यविनिर्गताः
तापी पयोष्णी निर्विन्ध्याप्रमुखा ऋक्षसम्भवाः ॥ ९६ ॥

गोदावरी भीमरथी कृष्णवेण्यादिकास्तथा ।
सह्यपादोद्भवा नद्यः स्मृताः तापहरा नृणाम् ॥ ९७ ॥

कृतमाला ताम्रपर्णीप्रमुखा मलयोद्भवाः
[3]त्रिसामा ऋषिकुल्याख्या महेन्द्रान्निर्गतास्तथा ॥ ९८ ॥

ऋषिकुल्या कुमाराद्या शुक्तिमत्पादसम्भवाः ।
आसां नद्युपनद्यस्तु सन्त्यन्याश्च सहस्रशः ॥ ९९ ॥

अन्येष्वपि च वर्षेषु [4]बहवः परिकीर्तिताः ।
महानद्यश्च नद्यश्च क्षुद्रनद्यस्तथैव च ॥ १०० ॥

## भारतवर्षवर्णनम्

भारतस्यास्य वर्षस्य नव भेदान् ब्रवीमि वः ।
इन्द्रद्वीपःकशेरुश्च ताम्रपर्णो गभस्तिमान् ॥ १०१ ॥

---

[3] त्रिसामावृषिकुल्या इति सर्वासु मातृकासु । अत एवं विपरिवर्तितम् । त्रिसामाचार्य इति विष्णुपुराणम् । [4] बहव इति नदीविशेषणे पुल्लिङ्गं चिन्त्यम् ।

---

[1] मलयः (ग) [2] सप्त तत्कुल (ग)

नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ।
अयं तु [1]नवमस्त्वेषां द्वीपस्सागरसंवृतः ।
योजनानां सहस्रे तु द्वीपोऽयं दक्षिणोत्तरात् ॥ १०२ ॥

भारते तु स्त्रियः पुंसो नानावर्णाः प्रकीर्तिताः ।
[2]नानाजनपदे भुक्त्वा नाना कर्माणि कुर्वते ॥ १०३ ॥

ब्राह्मणाः क्षत्रिया वैश्याः मध्ये शूद्राश्च भागशः ।
इज्यायुधवणिज्याद्यैर्वर्तयन्तो [3]व्यवस्थिताः ॥ १०४ ॥

परमायुः श्रुतं तेषां शतं वर्षाणि सुव्रताः ।
नानाहाराश्च जीवन्ति पुण्यपापनिमित्ततः ॥ १०५ ॥

## युगनिरूपणम्

चत्वारि भारते वर्षे युगान्यत्र मुनीश्वराः ।
कृतं त्रेता द्वापरश्च कलिश्चान्यत्र [4]न क्वचित् ॥ १०६ ॥

कर्मभूमिरियं विप्रा[5] अतोऽन्या [6]भोगभूमयः ।
तपस्तप्यन्ति यतयो जुह्वते चात्र यज्वनः ॥ १०७ ॥

दानानि चात्र दीयन्ते परलोकार्थमादरात् ।
ब्रह्मत्वममरेशत्वं देवत्वं मारुतं तथा ॥ १०८ ॥

तिर्यक्त्वमथवाप्यन्यदितः प्राप्नोति मानवः ।
अत्र जन्मसहस्राणां सहस्रैरपि सत्तमाः
कदाचिल्लभते जन्तुः मानुष्यं पुण्यसञ्चयात् । ॥ १०९ ॥

---

[2] नानादेवार्चने युक्ताः इति कूर्मपुराणम् ।

---

[1] नवमस्त्वेष (क ख घ) [2] नानावर्णार्चनायुक्ताः (ग) [3] भुवि (ग)
[4] कर्हिचित् (क ख घ) [5] हन्तान्या (ग) [6] भोगभूमिभिः (ग)

गायन्ति देवाः किल [1]गीतकानि
धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥ ११० ॥

जानीम नैतद् क वयं[3] विलीने
स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्याः
ये भारते नेन्द्रिय[3]विप्रहीनाः ॥ १११ ॥

इति श्रीमत्पुराणसारे भुवनकोशो नाम
षट्पञ्चाशोऽध्यायः

---

[1] गायकानि (ग) [2] विलीनाः (क) [3] विप्रणीताः (ग)

## सप्तपञ्चाशोऽध्यायः

[ आयुर्हानिवृद्धिनिरूपणम् ]

मुनयः —

[1]शतायुरुक्तः पुरुषः वर्षे वै भारते त्वया ।
कस्मान्म्रियन्ते पुरुषा बाला एव महामते ।
आयुष्मन्केन भवति स्वल्पायुरपि मानवः ॥ १ ॥

### आचारादायुषो वृद्धिः

सूतः —

आचाराल्लभते ह्यायुः आचाराल्लभते श्रियम् ।
दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ॥ २ ॥

वसन्ति चास्य भूतानि तथा परिभवन्ति च ।
तस्मात्कुर्यादिहाचारं यदीच्छेदायुरात्मनः ॥ ३ ॥

### आयुर्हानिवृद्धिमतां लक्षणम्

ये नास्तिका निष्क्रियाश्च[2] गुरुशास्त्रविलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥ ४ ॥

दुःशीला हीनमर्यादा नित्यं सङ्कीर्णमैथुनाः[3] ।
अल्पायुषो भवन्तीह नरा [4]निरयगामिनः ॥ ५ ॥

सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ ६ ॥

---

[1] अस्याध्यायस्य विषयः महाभारतात्सङ्गृहीतः । केषाञ्चन पदानां व्यत्यासो दृश्यते । महाभारतम् अनुशासनपर्व अ. १०७

[3] धर्मशास्त्रविरुद्धं नानाविधयौनसंबन्धवत्त्वम् । [4] निरयः नरकः ।

---

[2] गुरुशास्त्रविलङ्घनाः (क ख घ)

अक्रोधनः सत्यवादी [1]भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ ७ ॥

लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः ।
नित्योच्छिष्टः [2]सूतकी च नेहायुर्विन्दते महत् ॥ ८ ॥

[3]चिरं सन्ध्यामुपासीनो दीर्घमायुश्च विन्दति ।
ऋषयो दीर्घसंध्यात्वाद्दीर्घमायुरवाप्नुयुः ॥ ९ ॥

न हीदृशमानानुष्यं लोके किञ्चन विद्यते ।
यादृशं पुरुषस्येह परदारोपसेवनम् ॥ १० ॥

पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत्कदाचन ।
नाधितिष्ठेत्तुषान् जातु केशभस्मकपालकान् ॥ ११ ॥

[4]निषण्णश्चापि खादेत[5] न तु गच्छन्कदाचन ।
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ।
आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् ॥ १२ ॥

त्रीणि तेजांसि नोच्छिष्ट उदीक्षेत कथञ्चन ।
सूर्याचन्द्रमसौ चैव नक्षत्राणि कदाचन ॥ १३ ॥

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यून स्थविर [6]आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ १४ ॥

---

[2] सूचकश्चेति महाभारतपाठ एव साधुः । यतः सूतकादीनां अपरिहार्यत्वात् ।
[3] चिरमिति मरणपर्यन्तमिति ज्ञेयम् । न तु एकस्मिन्नेव दिवसे चिरकालपर्यन्तमिति । [5] आर्षमात्मनेपदम् । खादेन्नेति साधु ।

---

[1] भूतानामप्यहिंसकः (ग) [2] सुतकी (घ) [4] निषण्णश्चाततो देव (क ख घ)
[6] आयाते ([illegible])

[1]स्वपेदेव न नग्नेन न चोच्छिष्टोऽपि संविशेत् ।
उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥ १५ ॥

न पाणिभ्यामुभाभ्यां तु कण्डूयेज्जातु वै शिरः ।
शिरोऽभ्यक्तेन तैलेन नाङ्गं किञ्चिदुपस्पृशेत् ॥ १६ ॥

तिलपिष्टं न चाश्नीयात्सर्वं गतरसं तथा ।
नाध्यापयेत्ततोच्छिष्टो नाधीयीत कथञ्चन ॥ १७ ॥

अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ।
आयुरस्य निकृन्तामि प्रजामस्याददे तथा ॥ १८ ॥

यदुच्छिष्टः प्रवदति स्वाध्यायञ्चाधिगच्छति ।
यश्चानध्यायकालेऽपि वेदानभ्यस्यति द्विजः ॥ १९ ॥

प्रत्यादित्यं प्रत्यनिलं प्रतिगाञ्च प्रतिद्विजान् ।
ये[2] मेहयन्ति पथि च ते भवन्ति गतायुषः ॥ २० ॥

त्रीन् सदा नावजानीयाद् दीर्घमायुर्जिजीविषुः ।
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ॥ २१ ॥

दहत्याशीविषः क्रुद्धो यावत्पश्यति चक्षुषा ।
क्षत्रियोऽपि दहेत्क्रुद्धो यावत स्पृशति तेजसा ॥ २२ ॥

ब्राह्मणस्तु कुलं हन्याद्ध्यानेनैवेक्षितेन च ।
तस्मादेतत्त्रयं नित्यं नावमन्येत पण्डितः ॥ २३ ॥

गुरुणा वैरनिर्बन्धो न कर्तव्यः कथञ्चन ।

---

[1] स्वपदेन च नग्नेन इति 'ग' पाठः एवं विपरिवर्तितः । महाभारते तु 'स्वप्तव्यं न च नग्नेन' इति साधुपाठः दृश्यते । [2] मेहनकरणकं मूत्रम् ।

---

[1] स्वप्रवन्न च नग्नेन (क घ) स्वपदेन न नग्ने न (ग)

सम्यङ्मिथ्याप्रवृत्तेऽपि वर्तितव्यं गुराविह ।
गुरुनिन्दा हरत्यायुः मनुष्याणां न संशयः ॥ २४ ॥
[1]हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान्वयोऽधिकान् ।
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥ २५ ॥
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्[2] ।
द्वेषदम्भादिमानांश्च "तैक्ष्ण्यं च[3] परिवर्जयेत् ॥ २६ ॥
न ब्राह्मणान् परिवदे तस्य चार्युन रिष्यते[4] ।
सन्ध्यायां न स्वपेन्नित्यं स्नायाच्छूद्रः सदा भवेत् ॥ २७ ॥
प्रातः पितरमुत्थाय पूर्वमेवाभिवादयेत् ।
आचार्यमथ विप्रांश्च तथायुर्विन्दते महत् ॥ २८ ॥
न निशायां नरः स्नायादापद्यग्निद्विजान्तिके[5] ।
रक्तमाल्यं न धार्यञ्च शुक्लं धार्यं च पण्डितैः ॥ २९ ॥
[6]पतितैश्च कथां नेच्छेद्दर्शनं चापि वर्जयेत् ।
संसर्गं च न गच्छेत तथायुर्विन्दते महत् ॥ ३० ॥
प्राङ्मुखः श्मश्रुकर्माणि कारयेत समाहितः ।
उदङ्मुखो वा विप्रेन्द्रास्तथायुर्विन्दते महत् ॥ ३१ ॥
न चेर्ष्या स्त्रीषु कर्तव्या दारा रक्ष्याश्च सर्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् ।

---

[1] काणोऽसि, पङ्गुरसीत्येवमादिकम् । [2] कुत्सनम् निन्दनम् ।
[3] तैक्ष्ण्यञ्चेति महाभारतपाठः स्वीकृतः । [4] वर्धत इत्यर्थः ।
[5] आपदि कदाचित्स्नायादिति ।
[6] पतिताः महापातकादिभिः अन्यैश्च पतनकारकैः कर्मभिः गुरुद्रोहादिभिः ।

---

[2] सैक्ष्यश्च (क) भैक्षांश्च (ख घ) [7] च वर्जयेत् (ग)

अनायुष्यो दिवास्वप्नस्तथाभ्युदयशायिता[1] । ॥ ३२ ॥

[2]अमन्त्रितो न गच्छेत्तु युक्तं गच्छेत्तु दर्शकः

अमन्त्रितस्य नायुष्यं गमनं तत्र भूसुराः । ॥ ३३ ॥

आचारो भूतिजननं आचारः कीर्तिवर्धनः

आचाराद्वर्धते ह्यायुः आचारो हन्त्यलक्षणम् ।

आचारप्रभवो धर्मो धर्मादायुर्विवर्धते ॥ ३४ ॥

एष वो [3]लक्षणोद्देशो मनुष्याणां प्रकीर्तितः ।

शेषस्त्रैविद्य[4]वृद्धेभ्यः [5]प्रत्याहार्यो मुनीश्वराः ॥ ३५ ॥

दुर्लभं भारते वर्षे जन्म सम्प्राप्य मानवः ।

[6]आयुष्करं सदाचारं न त्यजेत्पण्डितो द्विजाः ॥ ३६ ॥

इति श्रीमत्पुराणसारे आयुर्हानिवृद्धिकारणनिरूपणं नाम सप्तपञ्चाशोऽध्यायः

---

[1] सूर्योदयकालशायिता । [2] अमन्त्रितो न गच्छेदातिथ्यार्थम् । केवलचाक्षुषप्रीतये कदापि गच्छेत् । त्रैविद्यवृद्धाः ऋग्यजुस्सामवेदपारगाः । तैः शिष्टः आचारः श्रेयः । तथा चाहापस्तम्बः ‘ तद्विदां च स्मृतिशीले’ तद्विदां वेदविदां मन्वादीनां स्मृतिः शीलं च आचारप्रमाणम् ।

---

[3] लक्षणोद्देशमायुष्याणां (क ख घ) [4] विद्येभ्यः (क ख ग घ) [5] प्रत्याहारो (ग)
[6] आयुष्मकं (ग)

# [1]अष्टपञ्चाशोऽध्यायः

[पातालनिरूपणम्]

सूतः —

विस्तार एष कथितः पृथिव्या भवतां[2] मया ।
सप्ततिस्तु सहस्राणि[3] द्विजोच्छ्रायोऽपि कथ्यते ।
पातालानि ततस्सप्त तदुच्छ्रायोऽपि कथ्यते ॥ १ ॥

## पातालविवरणम्, तत्रासुराणां नागानाञ्च निवासस्थाननिरूपणम्

अतलं वितलञ्चैव नितलञ्च तलातलम् ।
महातलञ्च सुतलं पातालञ्चैव सप्तमम् ॥ २ ॥

शुक्लकृष्णा[4]रुणाः पीता [5]शर्करा शैलकाञ्चनाः ।
भूमयो यत्र विपेन्द्र वरप्रासादशोभिताः ।
दशसाहस्रमेकैकं पातालं [6]मुनिसत्तमाः ॥ ३ ॥

तेषु दानवदैतेयजातयश्शतसङ्घशः ।
निवसन्ति महानागजातयश्च द्विजोत्तमाः ॥ ४ ॥

दिवार्करश्मयो यत्र प्रभां तन्वन्ति नातपम् ।
शशिनश्च न शीताय निशि द्योताय केवलम् ॥ ५ ॥

भक्ष्यभोज्यमहापानमुदितैरतिभोगिभिः ।
यत्र न ज्ञायते कालो गतोऽपि दनुजादिभिः ॥ ६ ॥

---

[1] प्रायः अस्याध्यायस्य विषयसंग्रहः विष्णुपुराणाद्ब्रह्मपुराणाच्च कृतः । वि.पु. अं.२ अ.५ ब्र.पु. अ.१९ [2] चतुर्थ्यर्थे षष्ठी । भवद्भ्य इत्यर्थः । [3] द्विजाः उच्छ्राय इति । संधिरार्षः । ब्रह्मपुराणे तदुच्छ्राय इति पाठः समीचीनः [5] शर्कराः क्षुद्रपाषाणाः ।

---

[4] कृष्णसिताः (ग) [6] मुनिपुङ्गवाः (ग)

दैत्यैर्भोगाश्च भुज्यन्ते[1] पातालान्तरवासिभिः ।
भूषणान्यपि शुभ्राणि गन्धाढ्यं चारुलेपनम् ॥ ७ ॥

पातालानामधश्चास्ते विष्णोर्या तामसी तनुः ।
शेषाख्या तद्गुणान् वक्तुं न शक्ता देवदानवाः ॥ ८ ॥

सोऽनन्तः पठ्यते देवो नागरूपी जनार्दनः ।
तदाधारमिदं सर्वं स कालाग्निमुपाश्रितः ॥ ९ ॥

कल्पान्ते तस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः ।
सङ्कर्षणात्मको रुद्रो निष्क्रम्यात्ति जगत्त्रयम् ॥ १० ॥

तस्य वीर्यं प्रभावश्च स्वरूपं रुपमेव च ।
न हि वर्णयितुं शक्यं ज्ञातुं वा त्रिदशैरपि ॥ ११ ॥

यस्यैषा सकला पृथ्वी फणामणिशिखारुणा ।
आस्ते कुसुममालेव कस्तद्वीर्यं वदिष्यति ॥ १२ ॥

यदा विजृम्भतेऽनन्तो मदाघूर्णितलोचनः ।
तदा [2]चलति भूरेषा साद्रितोया सकानना ॥ १३ ॥

तेषामधस्तान्नरका [3]मया तु परिकीर्तिताः ।[4]
पापिनस्तेषु पच्यन्ते न ते वर्णयितुं क्षमाः ॥ १४ ॥

---

[1] भोगांश्च भुञ्जन्ते इति मातृकापाठः असाधुः । दैत्योरगैश्च इति वि.पु.पाठः ब्र.पु. पाठश्च । स एव साधुः अयं विपरिवर्तितः पाठः ।

[4] मायाद्याः परिकीर्तिता इति पाठे माय इति कश्चन नरकः स्यादिति कल्प्य भवति । मातृकासु शुद्धः पाठः न दृश्यते । 'मया तु' इति पदं सर्वान् पाठान् विविच्य प्रदत्तम् । यतः नरकभेदेषु मायानामको नरकः नास्ति ।

---

[2] चलसि (घ) [3] मयास्तुभ (क ख) मयास्तु (घ)

नरकाणामधिपति[1]रुर्ध्वे कूष्माण्डकः स्मृतः ।
एष पातालविस्तारः संक्षेपेण प्रकीर्तितः ॥ १५ ॥

पादगम्यं तु यत्किञ्चिद्वस्त्वस्तु पृथिवीमयम् ।
स भूर्लोकः समाख्यातो विस्तारोऽस्य मयोदितः ॥ १६ ॥

इति श्रीमत्पुराणसारे पातालकथनं नाम
अष्टपञ्चाशोऽध्यायः

---

1 रुध्व (ग)

## एकोनषष्टितमोऽध्यायः

[ ज्योतिश्चक्रनिरूपणम् ]

### भुवर्लोकस्थितिनिरूपणम्

सूतः —

[1]भूमिसूर्यान्तरं [2]यत्तु [3]सिद्धादिमुनिसेवितम् ।
[4]भुवर्लोकस्तु [5]सोऽप्युक्तो द्वितीयो मुनि[6]पुङ्गवाः ॥ १ ॥

[7]भूमेर्योजनलक्षे[8]तु भानु[9]रूर्ध्वं व्यवस्थितः ।
तस्योपरि शशाङ्कस्तु [10]तावता वै क्षयर्द्धिमान् ॥ २ ॥

तुल्यस्तयोस्तु [11]स्वर्भानुर्भूत्वाऽधस्तात्प्रसर्पति ।
उद्धृत्य पृथिवीच्छायां निर्मितो मण्डलाकृतिः ॥ ३ ॥

[12]चक्रेण भास्वता सूर्यः स्यन्दनेन प्रसर्पति ।
दशयोजनसाहस्रो [13]विस्तारायामतश्च सः
द्विगुणश्च रथोपस्थादीषादण्डः[14] प्रमाणतः । ॥ ४ ॥

---

[1] अस्याध्यायस्यार्थविवरणे विष्णुपुराणस्य विष्णुचित्त्यात्मप्रकाशाख्य श्रीधरीयव्याख्याद्वयं स्वीकृतमस्ति । विष्णुपुराणम् अं. २ अ. ८ मुनिरिति युक्तः पाठः ब्रह्मपुराणेऽपि तथा । ब्र.पु. अ.२१ श्लो.१७

[4] अयं लोको जम्बूद्वीपस्य भूर्लोकादूर्ध्वं व्यवस्थितः । [7] योजनं च स्थूलमानेन अष्टौ वा नव 'मैल्' परिमितदूरम् । क्रोशचतुष्टयात्मकम् ।

[11] स्वर्भानुः राहुः । [12] चक्रेणैकेन भास्वता रथेनेति । सूर्यस्य विस्तारः दशसहस्रयोजनात्मकः आयामः द्विगुण इति । [14] रथे योजितो दण्डः । तस्य प्रमाणं मध्यभागात् विस्तारप्रमाणार्धम् ।

---

[2] यस्तु (घ) [3] सिद्धादिमुनिपुङ्गवाः (ग) [5] साभ्युक्तो (ग) [6] सत्तमाः (ग)
[8] ण (घ) [9] रूर्द्ध्वं (म) [10] तावदेव (ग) [13] विस्तारो (ग)

सार्धकोटिस्तथा सप्त नियुतान्यधिकानि तु
योजनानान्तु [1]तस्याक्ष स्तत्र[2] चक्रं प्रतिष्ठितम् ॥ ५ ॥

हिरण्मयं तु तच्चक्रं संस्थितं मानसाचले ।
[3]त्रिनाभिमति [4]पञ्चारे [5]षण्णेमित्वेऽ[6]क्षरात्मके ॥ ६ ॥

संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितम् ।
[7]अक्षस्त्रिनाभिः सूर्यस्य एकचक्रस्य वै स्मृतः ॥ ७ ॥

अराः संवत्सराः[8] पञ्च[9]नेम्यः षडृतवस्तथा
रात्रिर्वरूथो धर्मश्च ऊर्ज ऊर्ध्वं समुच्छ्रितः ॥ ८ ॥

चत्वारिंशत्सहस्राणि द्वितीयोऽक्षो विवस्वतः
पञ्चान्यानि तु सार्धानि स्यन्दनस्य द्विजोत्तमाः ॥ ९ ॥

---

[3] त्रिनाभिचक्रं ऋतुः संवत्सरो ग्रीष्मो वर्षा हेमन्तः । इति यास्कः । संवत्सरं सर्वमत्राभिस्तौति पञ्चारे चक्र इति पञ्चर्तुतया पञ्चर्तवः संवत्सरस्य इति ब्राह्मणम् । नाभिः स्तम्भः, यत्राक्षः प्रोक्तः स च त्रिमेखलः । मेखलारूपाः तिस्रो नाभयः पूर्वाह्णमध्याह्नापराह्णाः, तद्युक्ते ।

[4] पञ्चारे पञ्चसंवत्सरमये । संवत्सर-परिवत्सर-इड्वत्सर-इडावत्सर–अनुवत्सराः पञ्चसंवत्सराः । [5] षड्ऋतव एव नेमयः ।

[6] अक्षरात्मके, अक्षय्यात्मक इति । एतन्नित्यप्रवहणशीलं चक्रम् । कालचक्रं नाम कालोपलक्षणभूतं कृत्स्नं ज्योतिश्चक्रम् । रथप्रक्रिया चैवम् । भूमेर्योजनलक्षे सूर्यः । पञ्चदशलक्षे ध्रुवः । चतुरशीतियोजनोच्छ्रायो मेरुः । अर्धलक्षोच्छ्राये मेरोश्चोपरिभागे षोडशसहस्रोच्छ्राये वायुस्कन्धे सप्तलक्षोत्तरसार्धकोटिप्रमाणः रवे रथस्य अक्षः ।

---

[1] तस्याह (घ) [2] स्य (ग) [3] त्रिनाभिं प्रति (ग) [7] अहं (ग) [8] रः (ग)
[9] नत्य (ग) [10] स्यन्दतानि (घ)

[1]अह: प्रमाणमुभयो: प्रमाणं तद्युगार्धयो: ।
[2]वाजिनस्तस्य वै सप्त छन्दोभिर्निर्मितास्तु[3] वै । ॥ १० ॥

[4]युगाक्षकोटिसम्बद्धौ द्वौ रश्मी स्यन्दनस्य तु ।
ध्रुवेण [5]प्रगृहीतौ तौ रथीयौ नयते रविम् । ॥ ११ ॥

स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिस्तथा ।
गन्धर्वैरप्सरोभिश्च [6]ग्रामणीसर्पराक्षसैः । ॥ १२ ॥

[7]एते सहैव सूर्येण भ्रमन्ते वायुरश्मिभिः ।
[8]कुलालचक्रपर्यन्तो यथा शीघ्रं निवर्तते । ॥ १३ ॥

दक्षिणे प्रक्रमे शीघ्रं तथा देवो निवर्तते ।
[9]तस्मा[10]त्प्रकृष्टां भूमिं तु कालेनाल्पेन गच्छति । ॥ १४ ॥

सूर्यो द्वादशभिः शैर्ध्यान्मुहूर्तै दक्षिणायने ।
[11]त्रयोदशार्धमृक्षाणामह्नान्तु चरते रविः ॥ १५ ॥

---

[2] गायत्री च बृहत्युष्णिग्जगती त्रिष्टुभेव च। अनुष्टुप्पङ्क्तिरित्युक्ता छन्दांसि हरयो रवेः । वि.पु. अं.२ अ.८ श्लो-५

[4] युगार्धकोटिरिति साधुपाठः वि.पु. श्लो. ७ [8] कुलालचक्रप्रान्तस्थ जन्तुरिव ज्योतिश्चक्रपर्यन्तस्थोऽर्को मेदिनीं मानसाद्रिपरिमितां दक्षिणदिगात्मिकां विमुञ्चन् निवर्तते । दक्षिणे प्रक्रमे दक्षिणदिग्गमने इति ।

[9] प्रकृष्टां भूमिं महावृत्तरूपाम् । [11] सार्धत्रयोदशनक्षत्रोपलक्षितं ज्योतिश्चक्रार्धमित्यर्थः ।

---

[1] अक्ष (ग) [3] नि तु (ग) [5] च प्रगृह्यन्ते (ख घ) [6] ग्रामिणी (ब)
[7] एतैः सदैव (घ) [10] त्प्रकृष्टो (घ)

मुहूर्तैस्तावदृक्षाणि [1]नक्तमष्टादशैश्चरन् ।
कुलालचक्रमध्यस्थो यथा [2]मन्दः प्रसर्पति ॥ १६ ॥

तथोदगयनं सूर्यः सर्पते मन्दविक्रमः ।
तस्माद्दीर्घेण कालेन भूमिमल्पां तु गच्छति ॥ १७ ॥

अष्टादशमुहूर्तन्तु उत्तरायणसंज्ञके ।
[3]अहो भवति तच्चापि चरते मन्दविक्रमः ॥ १८ ॥

त्रयोदशार्ध[4]मृक्षाणामह्नश्च चरते रविः ।
मुहूर्तैस्तावदृक्षाणि रात्रौ द्वादशभिश्चरन् ॥ १९ ॥

[5]राशिप्रमाणजनिता दीर्घह्रस्वात्मता दिने ।
तथा निशाया राशीनां प्रमाणैर्लघुदीर्घता ॥ २० ॥

अहोरात्रेण यो भुङ्क्ते समस्ता राशयो द्विजाः ।
यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः ॥ २१ ॥

तिरोभावं च यत्रैति तत्रैवास्तमनं रवेः ।
उदयास्तमयाभ्यां तु स्मृते पूर्वापरे दिशौ ।
नैवास्तमनमर्कस्य नोदयश्च सदा [6]सतः ॥ २२ ॥

दिवसस्य रविर्मध्ये सर्व[7]कालं व्यवस्थितः ।
सर्वद्वीपेषु विप्रेन्द्राः दिङ्मुखस्य च सम्मुखः ॥ २३ ॥

---

[1] नक्तमष्टादशैरिति । अष्टादशभिः द्वादशाष्टादशमूहूर्ताः अहोरात्रयोर्देशविशेषापेक्षया न सर्वत्र । [2] मन्दं यथा तथेति । [3] अहर्भवतीति ज्ञेयम् ।
[5] रात्रिप्रमाण इति ह्रस्वात्मका इति इति च मातृकापाठः न सङ्गच्छते । अयं विष्णुपुराणपाठः :

---

[4] मह्नैव रुद्राणां (ख घ) [5] रात्रि (ख ग घ) [6] स्वतः (ख घ) [7] काले (ख ग)

उषा रात्रिस्समाख्याता व्युष्टिश्चाप्युच्यते दिनम् ।
प्रोच्यते च तयोस्सन्ध्या उषाव्युष्ट्योर्यदन्तरम् ॥ २४ ॥

उत्तरं यदगस्त्यस्य [1]अजवीथ्याश्च दक्षिणम् ।
पितृयाणः स वै पन्थाः वैश्वानरपथाद्बहिः ।
तत्रासते महात्मान ऋषयो येऽग्निहोत्रिणः ॥ २५ ॥

नाग[3]वीथ्युत्तरं यस्तु सप्तर्षि[4]भ्यस्तु दक्षिणम् ।
उत्तरः सवितुः पन्थाः [5]देवयानस्तु स स्मृतः ॥ २६ ॥

वसन्ति ऋषय[6]स्सिद्धा विमला ब्रह्मचारिणः ।
सर्वे [7]ध्रुवे महाभागाः [8]संबद्धा वायुरश्मिभिः ॥ २७ ॥

गृहर्क्ष[9]ताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः ।
[10]यावत्यश्चैव तारास्ता तावत्यो वातरश्मयः ॥ २८ ॥

---

[1] अजवीथी नाम अश्विन्यादित्रित्रिनक्षत्रलक्षितनववीथ्यः । तत्र याम्यवीथीत्रये प्रथमा मूलादिनक्षत्राश्रिता मूलापूर्वाषाढोत्तराषाढात्मिका । लोकालोकोत्तरशृङ्गादगस्त्यस्थानात्पितृयानादिकं द्रष्टव्यम् । ' लोकपालाः स्थिता ह्येते लोकालोकश्चतुर्दिशम् । उत्तरं यदगस्त्यस्य शृङ्गं देवर्षिपूजितम् । वीथयश्च नव । नागगजैरावत वृषभगोजरद्गवाजमृगपावकाख्याः । अश्विन्याद्यैः कैश्चित्त्रिभक्रमाद्वीथयः कथिताः इति । पितृयाणपन्थाश्च अगस्त्याजवीथ्योः मध्यदेशः । उत्तरमार्गे मध्यमार्गे दक्षिणमार्गे पेतति । तथापि पितयाणे स नान्तर्गत इति तात्पर्यम् ।

[5] उत्तरमार्गस्योत्तरा वीथिः । तस्या उत्तरं सप्तर्षिपर्यन्तं देवयानः पन्थाः ।

---

[2] स्या (ख ग) [3] वीथ्यो (ख) [4] भिस्तु (ख) [6] स्साध (ग) [7] ध्रुवा (ग)
[8] प्रवृद्धा (ग) [9] तारकादीनि (ग) [10] यावन्त्य (ख ग)

अलातचक्रवद्यान्ति वातचक्रेरितास्तु ताः ।
भ्रमन्त्युचित[1]चारेण विप्रेन्द्रा वायुरश्मिभिः ॥ २९ ॥

एवमेतत्पदं विष्णोस्तृतीयं चामलात्मकम् ।
आधारभूतं लोकानां त्रयाणां वृष्टिकारणम्[2] ।
स्थानं तद्विदुरादित्यं वेदज्ञा वेदविग्रहम् ॥ ३० ॥

रथस्त्रिचक्रस्सोमस्य कुन्दाभास्तस्य वाजिनः ।
[3]वामदक्षिणतो युक्ता दश तेन चरत्यसौ ॥ ३१ ॥

देवैः परिवृतस्सोमः पितृभिश्चैव गच्छति ।
पिबन्त्यम्बुमयं देवा मधु [4]सौम्यं सुधामयम् ॥ ३२ ॥

पीतं पञ्चदशाहस्तु रश्मिनैकेन भास्करः ।
आपूरयति वै देवो भागं भागमहःक्रतुः ॥ ३३ ॥

[5]इत्येवं सूर्यवीर्येण चन्द्रस्याप्यायिता तनुः ।
पौर्णमास्यां स दृश्येत चन्द्रस्सम्पूर्णमण्डलः ॥ ३४ ॥

एवं सूर्यनिमि[6]त्ते तु क्षयवृद्धी निशाकरे ।
नक्षत्रमण्डलञ्चापि सोमादूर्द्ध्वं [7]प्रसर्पति ॥ ३५ ॥

---

[2] यस्मिन्प्रतिष्ठितो भास्वान् मेढीभूतः स्वयं ध्रुवः । ध्रुवे च सर्वज्योतींषि ज्योतिष्ष्वम्भोमुचो द्विज । मेघेषु सङ्गता वृष्टिः वृष्टेः सृष्टेश्च पोषणम् । आप्यायनं च सर्वेषां देवादीनां महामुने । ततश्चाज्याहुतिद्वारा पोषितास्ते हविर्भुजः वृष्टेः कारणतां यान्ति भूतानां स्थितये पुनः । वि.पु. अं. २ अ. ८ । गङ्गाया अपि अत्रैवोत्पत्तिः । [3] वामदक्षिणतः दशाश्वाः चन्द्ररथस्य । [4] साम्यम् इति मातृकासु अपपाठः । यतस्सोमसम्बन्धि सौम्यम् ।

---

[1] तारेण (घ) [5] एत्येवं [ग] [6] त्तेन [ग] [7] प्रगच्छति [ख ग]

द्वैलक्षे चोत्तरे [1]ब्रह्मन् बुधो नक्षत्रमण्डलात् ।
तावत्प्रमाणभागे तु बुधस्याप्युशनाः स्थितः ॥ ३६ ॥

अङ्गारकोऽपि शुक्रस्य तत्प्रमाणे[2] व्यवस्थितः ।
लक्ष[3]द्वयेन सोमस्य स्थितो देवपुरोहितः ॥ ३७ ॥

सौरिर्बृहस्पते[4]श्चोर्ध्वं द्विलक्षे समवस्थितः ।
सप्तर्षिमण्डलं तस्माल्लक्षमेकं द्विजोत्तमाः ॥ ३८ ॥

ऋषिभ्यस्तु सहस्राणां [5]अत ऊर्ध्वं व्यवस्थितः ।
मेढीभूतस्समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः ॥ ३९ ॥

वर्षं [6]घर्मं हिमं रात्रिसन्ध्ये चैव तथा [7]दिनम् ।
शुभाशुभ[8]फलं चैव ध्रुवात्सर्वं प्रवर्तते ॥ ४० ॥

तारामयं भगवतः [9]शिशुमाराकृति प्रभोः ।
[10]दिवि रूपं हरेर्यत्तु तस्य पुच्छे स्थितो ध्रुवः ॥ ४१ ॥

एष भ्रमन् भ्रामयति चन्द्रादित्यादिकान् ग्रहान् ।
[11]भ्रमन्तमनु तं यान्ति नक्षत्राणि च [12]चक्रवत् ॥ ४२ ॥

## स्वर्लोकनिरूपणम्

आदित्यमण्डलादूर्ध्वं स्थितः स्वर्लोक आध्रुवात् ।
विमानकोटयस्तस्मिन्नष्टाविंशति[13]रासते ॥ ४३ ॥

इज्याफलस्य भूरेषा इज्या चात्र [14]प्रतिष्ठिता ।
नन्दनादीनि रम्याणि तत्रोद्यानानि भूसुराः ॥ ४४ ॥

---

[1] ब्रह्म (ख घ) [2] णैं (ग) [3] द्वयस्य सौम (ग) [4] सोद्ध्वं (ग) [5] गता (ग)
[6] कर्मा (ग) [7] विधः (ग) [8] विधिं (ख घ) [9] शिंशु .... ति (ग)
[10] दिव्य (ग) [11] (भूम्यन्तमनु तं (ख घ) [12] क्रमवित् (ख) [13] राशते (ख ग)
[14] प्रकीर्तिता (ग)

सर्वकामफलैर्वृक्षैः शोभितातिं समन्ततः ।
विमानानि च दिव्यानि [1]सेवितान्यप्सरोगणैः ॥ ४५ ॥

सर्वरत्नविचित्राणि कामगानि स्थिराणि च ।
तरुणादित्यवर्णानि मुक्ताजालान्तराणि च ॥ ४६ ॥

[2]चन्द्रमण्डलशुभ्राणि हेमशय्यासनानि च ।
सर्वकामसमृद्धा[3]र्थाः सर्वदुःखविवर्जिताः ।
नरास्सुकृतिनस्तेषु [4]विहरन्ति यथासुखम् ॥ ४७ ॥

न तत्र नास्तिका यान्ति न स्तेना [5]नाजितेन्द्रियाः ।
न नृशंसा न पिशुना न कृतघ्ना न [6]मानिनः ॥ ४८ ॥

सत्यास्तपस्विनश्शूरा दयावन्तः क्षमापराः ।
यज्वानो दानशीलाश्च तत्र [7]गच्छन्ति भूसुराः ॥ ४९ ॥

न रागो न जरा मृत्युर्न शोको न हिमातपौ ।
न क्षुत्पिपासे न ग्लानिर्विद्यते तत्र कस्यचित् ॥ ५० ॥

एते चान्ये च बहवो गुणाः स्वर्गस्य भूसुराः ।
स्वर्गानन्दं विना नान्यत्सुखमस्तीह शाश्वतम् ॥ ५१ ॥

शतक्रतो[8]स्सभा दिव्या भास्वरा तत्र निर्मिता ।
स्वयं शक्रेण विप्रेन्द्रा निर्मलार्कसमप्रभा ॥ ५२ ॥

[9]तस्यां देवेश्वरो विप्रास्सभायां परमासने ।
आस्ते शच्या [10]सहेन्द्रो वै श्रिया लक्ष्म्या[11] च भूसुराः ॥५३॥

---

[1] सह (ग) [2] सर्व (ग) [3]·र्थैः (ख) [4] विच (ग) [5] ह्य (ख ग)
[6] मानितः (ख ग) [7] तिष्ठन्ति (ग) [8] साभि (ग) [9] स्थानं (ग)
[10] सहेन्द्राण्या (ग) [11] त्र (ग)

[1]तस्यां तूपासते नित्यं महात्मानं शतक्रतुम् ।
मरुतस्सर्वतो विप्रास्सर्वे च गृहमेधिनः ॥ ५४ ॥

अमला धूतपाप्मानो दीप्यमाना इवाग्नयः ।
तेजस्विनस्सोमपाश्च विपापा विगतक्लमाः ॥ ५५ ॥

ब्रह्मराजर्षयस्सर्वे तथा देवर्षयोऽप्यथ ।
दिव्या [2]आपस्तथौषध्य[3]श्श्रद्धा मेधा सरस्वती ॥ ५६ ॥

अर्थो धर्मश्च कामश्च विद्युतश्चापि भूसुराः ।
यज्ञाश्च दक्षिणाश्चैव [4]ग्रहास्सोमाश्च सर्वशः ।
यज्ञवादाश्च ये मन्त्रा सर्वे तस्यामुपासते ॥ ५७ ॥

तथैवाप्सरसो विप्रा रम्भोर्वश्यौ च मेनका ।
घृताची पञ्चचूला च विप्रचित्तिपुरोगमाः ॥ ५८ ॥

विश्वावसुश्चित्रसेनः पर्वतस्तुम्बुरुस्तथा ।
विद्याधराश्च विप्रेन्द्रा गन्धर्वाश्च मनोरमाः ॥ ५९ ॥

नृत्तवादित्रगीतैश्च भावैश्च विविधैरपि ।
रमयन्ति महात्मानं देवराजं शतक्रतुम् ॥ ६० ॥

जलवाहाश्च मेघा[5] ये वायवःस्तनयित्नवः ।
बृहस्पतिश्च शुक्रश्च देवासुरपुरोहितौ ॥ ६१ ॥

एते चान्ये च बहवश्शतक्रतुमुपासते ।
[6]त्रैलोक्यमेतत्कृतकं विप्रेन्द्रा परिपठ्यते ॥ ६२ ॥

---

[6] सप्तलोकेषु पूर्वं त्रयो लोकाः कृतकाः उत्तरत्र त्रयो लोका अकृतकाः । मध्ये भवः महर्लोकः ।

---

[1] तस्यां ते पासते (ग) [2] मा (घ) [3] स्तथा (ख घ) [4] ग्रहास्तोया (ग) [5] श्च (ग)

## महर्लोकनिरूपणम्

योजनानां ध्रुवात्कोटिर्महर्लोकः समुच्छ्रितः ।
विनिवृत्ताधिकाराणामधिवासो महात्मनाम् ॥ ६३ ॥

कृतकाकृतयोर्मध्ये महर्लोक इति स्मृतः ।
शून्यो भवति कल्पान्ते योऽत्यन्तं न विनश्यति ॥ ६४ ॥

## जनलोकनिरूपणम्

कोटिद्वये महर्लोकाज्जनलोको विराजते ।
साध्या नाम सुरास्तस्मिन्निवसन्ति गतामयाः ।
[1]सनन्दनादयस्तत्र संस्थिता ब्रह्मणस्सुताः ॥ ६५ ॥

## तपोलोकनिरूपणम्

तदूर्ध्वं हि तपोलोकश्चतुर्भिः कोटिभिस्स्थितः ।
[2]वैराजा यत्र वै देवाः स्थिता देहविवर्जिताः ॥ ६६ ॥

## सत्यलोकनिरूपणम्

[3]प्राजापत्यस्सत्यलोकः कोटिभिष्षड्भिरीरितः ।
अपुनर्मारकास्तत्र ब्रह्मलोकस्तु स स्मृतः ॥ ६७ ॥

तत्र लोकगुरुर्ब्रह्मा विश्वात्मा विश्वतोमुखः ।
आस्ते च योगिभिर्नित्यं पीत्वा योगामृतं महत् ॥ ६८ ॥

[4]विविशुर्यतयश्शान्ता नैष्ठिका ब्रह्मचारिणः ।

---

[1] सनत्कुमार-सनक-सनन्दन-सनातनाख्याः चत्वारो ब्रह्मणो मानसपुत्राः ।

[2] वैराजा देवाः किञ्चिन्न्यूनस्थानापन्नाः । वैराजा इति लोका अपि सन्ति ।

[3] सत्यस्तु सप्तमो लोको ह्यपुनर्भववासिनाम् ।
ब्रह्मलोकस्समाख्यातो ह्यप्रतीघातलक्षणः । इति देवीपुराणम् श.क.द्रुमः

[4] अयं वैकुण्ठाख्यः नारायणस्य लोकः । विष्णुलोक इति ख्यातः ।

## वैकुण्ठनिरूपणम्

तत्र नारायणस्यापि भवनं ब्रह्मणः पुरे ॥ ६९ ॥

आस्ते तत्र हरिः श्रीमान् मायी मायामयः परः ।
स विष्णुलोकः कथितः पुनरावृत्तिवर्जितः[1] ॥ ७० ॥
यान्ति तत्र महात्मानो ये प्रपन्ना जनार्दनम् ।

## शिवलोकनिरूपणम्

ऊर्ध्वं तद्ब्रह्मसदनात्पुरं ज्योतिर्मयं शुभम् ॥ ७१ ॥

वह्निना च परिक्षिप्तं तत्रास्ते भगवान्भवः ।
देव्या सह महादेवश्चिन्त्यमानो मनीषिभिः ॥ ७२ ॥
निर्ममा निरहङ्काराः कामक्रोधविवर्जिताः ।
द्रक्षन्ति ब्राह्मणा युक्ता रुद्रलोकस्स वै स्मृतः[2] ॥ ७३ ॥
जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् ।
इति सप्त महालोका ऋषयः कथिता मया ।
पातालानि च सप्तैव ब्रह्माण्डस्यैष विस्तरः ॥ ७४ ॥
एतदण्डकटाहेन तिरश्चोदूर्ध्वमधस्तथा ।
कपित्थस्य यथा बीजं सर्वतो वै समावृतम् ॥ ७५ ॥
ततो वह्न्यनिलाकाशैर्वृतं भूतादिना बहिः ।
क्रमाद्दशगुणैश्चाण्डं भूतादिमहतावृतम् ॥ ७६ ॥

---

[1] मुक्ता एव वैकुण्ठभाज इति तेषां तत्र मुक्तेश्चतुर्षु अन्यतमं स्थानमत एव तस्मात्पुनः प्रतिनिवर्तनस्याभावापपुनरावृत्तं तत्स्थानम् ।

[2] वैकुण्ठादुत्तरे शैवोलोकः षोडश कोटयः ।
तिर्यगेव महाराज कलासाख्यस्तु पर्वतः ।
पार्वत्या सहितश्शम्भुः यत्रास्ते स्वगुणैर्वृतः ॥ पद्म.पु. स्वर्गखण्डः अ ६

अव्यक्तेनावृतोऽन्तस्थस्तैस्सर्वैस्सहितो महान् ।
अनन्तेनाप्रमेयेन नालिकेर इव त्वचा ॥ ७७ ॥

ब्रह्माण्डस्यैष विस्तारस्संक्षेपेण मयोदितः ।
अण्डानामीदृशानाञ्च कोट्यो ज्ञेयास्सहस्रशः ॥ ७८ ॥

तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः ।
सृष्टाः प्रधानेन तदा लब्ध्वा शम्भोस्तु सन्निधिम् ॥ ७९ ॥

सर्गस्य प्रतिसर्गस्य स्थितेः कर्ता महेश्वरः ।
सदाशिवो महाविष्णुः ब्रह्मा सर्वात्मको यतः ॥ ८० ॥

इति श्रीमत्पुराणसारे ज्योतिश्चक्रकथनं नाम
एकोनषष्टितमोऽध्यायः

## षष्टितमोऽध्यायः

[ पिण्डोत्पत्तिप्रकरणम् ]

### देहोत्पत्तिविषये ऋषीणां जिज्ञासा

ऋषयः —

[1]सूत त्वं सर्वधर्मज्ञस्सर्ववेदार्थपारगः ।
व्यासविज्ञानदीपस्य वह्निभूत महामते ॥ १ ॥

पुराणमुक्तामालायाः सूत्रभूत गुणाकर ।
कृपासागर सर्वेषां हितप्रद तपोनिधे ॥ २ ॥

भवता कथितस्सम्यक् सर्गः स्वायम्भुवः शुभः ।
ब्रह्माण्डस्य च विस्तारो भक्तियोगस्तथैव च ॥ ३ ॥

तथापि नो मनस्येकं प्रष्टव्यं वर्तते महत् ।
तव वाक्यामृते भूयः तृष्णाऽस्माकं हि जायते ॥ ४ ॥

कथं सञ्जायते जन्तुः कथं वा संविवर्धते ।
कथं [2]वोदरमध्यस्थः [3]तिष्ठत्यङ्गनिपीडितः[4] ॥ ५ ॥

[5]निष्क्रान्तिमुदारात्प्राप्य कथं वा वृद्धिमिच्छति ।
उत्क्रान्तिकाले च कथं [6]चिद्भावेन वियुज्यते ॥ ६ ॥

---

[1] अस्याध्यस्य विषयसंग्रहः प्रायेण मार्कण्डेयपुराणात् कृतः । मा.पु. अ.१० कश्चन भागः पद्मपुराणादपि संगृहीतो दृश्यते । प.पु. भूमिखण्डः अ.६६

[4] अङ्गनिपीडनं मातुरङ्गेषु अथवा स्वस्यैवाङ्गेषु निपीडनम् । निपीडनं च पिण्डीभावः । [5] उत्क्रान्तिकालः मरणकालः । तदा खलु देहाज्जीवो निष्क्रमणेच्छुर्भवति । [6] चिद्भावश्चैतन्यभावः ।

---

[2] चोदर (ग) [3] तिष्ठत्यङ्गवः (ग)

कस्थो मृतस्तथाश्नाति उभे सुकृतदुष्कृते[1] ।
स्त्रोकोष्ठे यत्र [2]जीर्यन्ते [3]भुक्तानि सुगुरूण्यपि ॥ ७ ॥
भक्ष्याणि तत्र नो जन्तुर्जीवते[4] कथ[5]मल्पकः ।
एतन्नो ब्रूहि सकलं सन्देहोक्तिविवर्जितम् ॥ ८ ॥
तदेतत्परमं गुह्यं यत्र मुह्यन्ति जन्तवः ।

सूतः —

## गर्भोत्पत्तिविचारे प्रसङ्गाद्ब्राह्मणकथा

[ पुत्राय गार्हस्थ्यमनुभवितुं पितृकृत उपदेशः ]

[6]अत्र वः कथयिष्यामि इतिहासं पुरातनम् ॥ ९ ॥
ब्राह्मणो भार्गवः कश्चित्सुतमाह महामुनिः[7] ।
कृतोपनयनं शान्तं सुमतिं जडरूपिणम्[8] ॥ १० ॥
वेदानधीष्व सुमते यथानुक्रममादितः ।
गुरुशुश्रूषणव्यग्रो भैक्ष्यान्नकृतभोजनः ॥ ११ ॥
ततो गार्हस्थ्यमास्थाय इष्ट्वा यज्ञाननुक्रमात् ।[9]
इष्टमुत्पादयापत्यमाश्रयेथा वनं ततः ॥ १२ ॥
वनस्थश्च ततो [10]विप्रः परिव्राड्निष्परिग्रहः ।
एवं प्राप्स्यसि तद्ब्रह्म यत्र गत्वा न [11]शोचति ॥ १३ ॥

---

[3] जीयन्ते इति मार्कण्डेयपुराणपाठः । [6] इयं कथा मार्कण्डेयपुराणे दृश्यते । [7] महामतिरिति मार्कण्डेयपुराणम् । [8] जडरूपता च वेदादिपठने अनिच्छारूपा । [9] अनुत्तमानिति मार्कण्डेयपुराणम् ।

---

[1] सुकृतमश्नुते (क ख घ) [2] जीवन्ति (क ख ग घ) [4] जीयते (क ख ग घ)
[5] अर्भकः (ग) [9] विप्राः (ग) [10] शोचसि (ग)

इति पित्रा सुतस्नेहात्प्रलोभमधुराक्षरम् ।
प्रचोद्यमानो बहुशः प्रहस्येदमथाब्रवीत् ॥ १४ ॥

## पुत्रेणात्मनो वैराग्यकारणनिरूपणम्

तातैतद्बहुशोऽभ्यस्तं यत्त्वया चोपदिश्यते ।
तथैवान्यानि शास्त्राणि शिल्पानि विविधानि च ॥ १५ ॥

जन्मनामयुतं साग्रं मम स्मृतिपथं गतम् ।
[1]निर्वेदाः परितोषाश्च ये च वृद्ध्यादयोऽपराः[2] ॥ १६ ॥

[3]पुत्रमित्रकलत्राणां वियोगाः सङ्गमास्तथा ।
मातरो विविधा दृष्टा पिता नानाविधस्तथा ॥ १७ ॥

विण्मूत्रपिच्छिले[4] स्त्रीणां तथा कोष्ठे मयोषितम् ।
गर्भदुःखान्यनेकानि बाल्यत्वे यौवने तथा ।
वृद्धतायां तथाऽऽप्तानि तानि सर्वाणि संस्मरन् ॥ १८ ॥

ब्राह्मणक्षत्रियविशां शूद्रादीनां च योनिषु ।
पुनश्च पशुकीटानां मृगाणामपि पक्षिणाम् ॥ १९ ॥

तथैव राजभृत्यानां राज्ञां [6]चाहवशालिनाम् ।
समुत्पन्नोऽस्मि गर्भेषु यथेह तव वेश्मनि ॥ २० ॥

भृत्यतां दासतां चैव गतोऽस्मि बहुषो नृणाम् ।
स्वामित्वमीश्वरत्वं च [7]दरिद्रत्वमथागतम् ॥ २१ ॥

---

[2] क्षयवृद्ध्युदये रताः मार्कण्डेयपुराणम् । [4] पितरो विविधास्तथा इति मार्कण्डेय-पुराणपाठः साधुः । [5] पिच्छिलं पङ्किलम् । [6] आहवो युद्धम् ।

---

[1] निर्वेशपरितोषाय ये च वृद्ध्यादयो पदाः (क ख घ) [3] शत्रुमित्र (ग)
[7] दरिद्रत्वं तथा (ग)

हतं मया हतश्चान्यैः हृतं मेऽपहृतं मया ।
दत्तं ममान्यैरन्येभ्यो मया दत्तमनेकशः ॥ २२ ॥

पितृमातृसुहृद्भ्रातृकलत्रादि[1]सुखेन च ।
तुष्टोऽसकृत्तथा दैन्यमश्रुधौताननो[2] गतः ॥ २३ ॥

अनुभूतानि सौख्यानि [3]दुःखानीव सहस्रशः ।
एवं संसारचक्रेऽस्मिन् भ्रमता चातिसङ्कटे ॥ २४ ॥

ज्ञानमेतन्मया प्राप्तं मोक्षसम्प्राप्तिकारणम् ।
[4]सोऽहं वदामि ते सर्वं तवैवानुज्ञया पितः[5] ॥ २५ ॥

शुभैर्देवत्वमाप्नोति मिश्रैर्मानुषतां व्रजेत् ।
[6]अशुभैः कर्मभिर्जन्तुः तिर्यग्योनौ प्रजायते ॥ २६ ॥

## गर्भे नारकिणामुत्पत्तिवर्णनम्

प्रमाणं श्रुतिरेवात्र धर्माधर्मविनिश्चये ।
[7]शृणु नारकिणां पुंसामधर्मादेव केवलात् ।
[8]क्षणमात्रेण भूतेभ्यः शरीरमुपपद्यते ॥ २७ ॥

तत्तद्धर्मेण चैकेन देवानामौपपादिकम् ।
सद्यः प्रजायते दिव्यं शरीरं भूतसारतः ॥ २८ ॥

---

[2] दुःखमेव अश्रुकारणम् । तद्बाहुल्यं द्योतयतीदं विशेषणम् ।
[3] दुःखानि च इति सूक्तमासीत् । अथवा सुखान्येव दुःखानीवानुभूतानीति ज्ञेयम् । [7] एतदनन्तरं बहवः श्लोकाः एतत्सम्बन्धिनः पद्मपुराणे दृश्यन्ते । प.पु. भूमिखण्डः अ.६६

---

[1] कृतेन (ग) [4] मोक्षं (क ख घ) [5] पितुः (क ख) [6] अशुभ्रैः (क ग)
[8] क्षन्न (ख ग घ)

[1]कर्मणा व्यतिमिश्रेण यच्छरीरं महात्मनः ।
[2]तद्रूपपरिणामेन विज्ञेयं हि चतुर्विधम् ॥ २९ ॥

## उद्भिज्जादिशरीरभेदकथनम्

उद्भिज्जं स्वेदजं चैव जरायुजमथाण्डजम् ।
उद्भिदः स्थावरा ज्ञेयाः तृणगुल्मादि[3]रूपिणः ॥ ३० ॥

क्रिमिकीटपतङ्गाद्याः स्वेदजा नाम देहिनः ।
अण्डजाः पक्षिणः सर्पा नक्रमत्स्यादि[4]कच्छपाः
जरायुजाश्च विज्ञेया मानुषास्सचतुष्पदाः ॥ ३१ ॥

## नरकात्स्वर्गादपि निर्गतस्य जीवस्यावस्थाभेदेन वृद्धिः

विमुक्तमात्रो नरकात्स्वर्गादपि द्विजोत्तम ।
क्षेत्रज्ञः स्थित आकाशे आकाशाद्वायुनागतः ।[5]
वायोर्धूमं ततश्चाभ्रं अभ्रान्मेघेऽवतिष्ठते ॥ ३२ ॥

[6]यदा वर्षति वर्षाणि जीवस्तदहसम्भवः ।[7]
[8]वनस्पत्यौषधीजातं [9]सङ्क्रामत्यविलक्षितः ॥ ३३ ॥

तत्र सिक्ता जलैर्भूमिरन्तरूष्मप्रपाचिता ।

---

[4] आदिपदं तत्सदृशवाचि । [6] वायुतामापन्न इत्यर्थः ।

[8] 'ग' मातृकां विना सर्वास्वपि 'यदा वर्षति वर्षाणि जीवस्तदहसम्भवः इति पाठो दृश्यते । तस्यार्थः स्फुटो न भवति । [10] वनस्पत्यौषधिर्जातमि 'ग' मातृकां विहायान्यासु अस्पष्टः पाठः ।

---

[1] कर्मणान्यत्र (क) [2] तद्भूत (क ख घ) [3] भेदतः (ग) [5] द्वायुरागतः (ग)
[7] यदा वर्षति वर्षेण सह जीवस्तथा भुवि (ग) [9] वनस्पत्योषधिर्जाता (ग)

## जीवस्य बीजरूपतापादनम्

वायुना पूर्यमाणा भूर्बीजत्वमुपपद्यते ॥ ३४ ॥

[1]यत्रात्र शालिबीजानि संसिक्तान्यम्भसा पुनः ।
[2]उच्छूनत्वं मृदुत्वं च मूलभावं व्रजन्ति च[3] ॥ ३५ ॥

तन्मूलादङ्कुरोत्पत्तिरङ्कुरात्पर्णसम्भवः ।
पर्णान्नालं ततः काण्डं काण्डाच्च प्रसवं पुनः ॥ ३६ ॥

प्रसवाच्च तुषं क्षीरं क्षीरात्तण्डुलसम्भवः ।
तण्डुलाश्च यदा पक्वा म्रियन्त्योपधयस्तथा ॥ ३७ ॥

यवाद्या शालिपर्यन्ताः श्रेष्ठाः सप्तदश स्मृताः ।
ओषध्यः फलपाकान्ता शेषाः क्षुद्राः प्रकीर्तिताः ॥ ३८ ॥

एता लूना मर्दिताश्च शनैरुत्पूय संस्कृताः ।
शूर्पोलूखलयन्त्राद्यैः स्थाल्यामुदकवह्निभिः ॥ ३९ ॥

षड्विधाऽऽहारभेदेन परिणामं व्रजन्ति ताः ।
अन्योन्यरससंयोगादनेकस्वादुतां पुनः ॥ ४० ॥

भक्ष्यं भोज्यं च पेयं च लेह्यं चोष्यं च पिच्छिलम् ।
इति भेदाः षडन्नस्य मधुराद्याश्च षड्साः ॥ ४१ ॥

## अन्नवैशिष्ट्यप्रतिपादनम्

अन्नेन वर्तते नित्यं जीवजातं चतुर्विधम् ।
[4]यद्विना म्रियते जन्तुः क्षुधया परिपीडितः ॥ ४२ ॥

---

1 यथात्रेति योग्यं भवेत् । 2 उच्छूनता ।

---

2 उच्छूनां च मृदुत्वं च [ग] 3 हि [ग] 4 यदन्नात्म्रियते [ख घ]

हव्यकव्यस्वरूपेण पितरो देवतास्तथा[1] ।
जीवन्ति निर्वृताः पुष्टाः ये चन्ये जीवसंज्ञिताः ॥ ४३ ॥

कर्मभिः कर्मनिष्पत्तौ समन्त्रा याऽऽहुतिर्द्विज ।
हूयतेऽग्नौ तथा विश्वं पुष्टः पुष्णाति भास्करः ॥ ४४ ॥

सृज्यतेऽम्भसि सूर्येण [2]रसाधाराणि भूतले ।
ओषधीस्तानि पुष्णन्ति प्राणिनश्चाप्यशेषतः ॥ ४५ ॥

ब्रह्मादितृणपर्यन्तं यदेतदखिलं जगत् ।
[3]अन्नेन वर्धते चास्य तदेव परमा गतिः ॥ ४६ ॥

## भुक्तस्यान्नस्य पाकक्रमनिरूपणम्

तदन्नं पिण्डकवलैर्ग्रासैर्भुक्तं च देहिनः ।
[4]अन्तस्त्वामाशये पूर्वं प्राणाः स्थापयते क्रमात् ॥ ४७ ॥

[5]आविश्य भुक्तमाहारं स वायुः कुरुते द्विधा ।
सम्प्रविश्यान्नमध्ये तु पृथगन्नं पृथग्जलम् । ॥ ४८ ॥

अग्नेरूर्ध्वं जलं स्थाप्य तदन्नं च जलोपरि ।
जलस्याधस्त्वयं प्राणः स्थित्वाग्निं धमते शनैः ॥ ४९ ॥

वायुना धाम्यमानोऽग्निरत्युष्णं कुरुते जलम् ।
तदन्नमुष्णतोयेन समन्तात्पच्यते पुनः ॥ ५० ॥

---

[1] अत्र न यथासंख्यम् । पितरः कव्येन देवताः हव्येनेति ज्ञेयम् ।

[2] रसाधाराणीति नपुंसकलिङ्गमार्षम् । [5] अपक्वमिति पद्मपुराणपाठः साधुरिति भाति ।

---

[3] अन्नेनोच्छ्रीयते [ग] [4] अन्तस्ताग्रासये [क] अन्तस्थामाश्रये .... प्राणाः [ख घ]

द्विधा भवति तत्पक्कं पृथक्किट्टं [1]पृथग्जलम् ।
मलैर्द्वादशभिः किट्टं भिन्नं देहाद्बहिर्व्रजेत् ॥ ५१ ॥

कर्णाक्षिनासिकाजिह्वा दन्ताश्शिश्नगुदं नखाः ।
मलाश्रयाः कफस्वेदौ विण्मूत्रे द्वादश स्मृताः ॥ ५२ ॥

## मलाच्छुक्लतापत्तिक्रमविवरणम्

हृत्पद्मे प्रतिबद्धाश्च सर्वा नाड्यस्समन्ततः ।
तासां मुखे तु तं सूक्ष्मं प्राणः स्थापयते रसम् ॥ ५३ ॥

रसेन तेन ता नाडीः प्राणः पूरयते पुनः ।
प्रतर्पयन्ति सम्पूर्णास्ताश्च देहं समन्ततः ॥ ५४ ॥

ततस्स नाडीमध्यस्थः शारीरेणोष्मणा रसः ।
पच्यते पच्यमानस्य भवेत्पाकद्वयं पुनः ॥ ५५ ॥

चर्मावेष्ट्य समन्ताच्च रुधिरं च प्रजायते ।
रक्ताल्लोमानि मांसं च केशाः स्नायुश्च मांसतः ॥ ५६ ॥

स्नायोश्शिरास्तथास्थीनि नखा मज्जास्थिसम्भवा ।
मज्जा करणवैकल्याच्छुक्लं च प्रसवात्मकम् ॥ ५७ ॥

इति द्वादशधान्नस्य परिणामाः प्रकीर्तिताः ।
शुक्लमन्नातत्तः शुक्लादस्य देहस्य सम्भवः ॥ ५८ ॥

## गर्भे शुक्लेन साकं जीवप्रवेशः

ऋतुकाले यदा शुक्लं निर्दोषं योनिसंस्थितम् ।
तथा च वायुना स्पृष्टं स्त्रीरक्तेनैकतां व्रजेत् ॥ ५९ ॥

---

१ पृथग्रसम् (ग)

विसर्गकाले शुक्रस्य जीवः करणसंयुतः ।
[1]वृत्या स प्रविशेद्योनिं कर्मभिः स्वैर्नियोजितः ॥ ६० ॥

## गर्भे लिङ्गव्यत्ययादिकारणनिरूपणम्

अधिकेऽसृजि शुक्रे वा तत्समे वा विभेर्बलात् ।
भविष्यन्ति द्विजश्रेष्ठाः क्रमात्स्त्रीपुन्नपुंसकाः ॥ ६१ ॥

वायुना बहुशो भग्ने[2] यथास्वं बह्वपत्यता ।
वियोनिविकृताकारा जायन्ते वैकृतैर्मलैः ॥ ६२ ॥

## नैसर्गिकभावनिरूपणम्

प्राणेन्द्रियज्ञानदयासुखायुर्धृतिधारणाः ।
प्रज्ञाः प्रयत्नदुःखेच्छाऽहङ्कृतिप्रेरणास्तथा ॥ ६३ ॥

वर्णाकृति [3]स्वरद्वेषप्रतिहर्ष[4]भवादयः ।
देहं जिघृक्षमाणस्य [5]जीवस्या[6]दौ विशेषतः
इह नैसर्गिका एते भावाः प्राक्तनपूर्वजाः ॥ ६४ ॥

## गर्भे पिण्डादिरूपेण जन्तोः वृद्धिक्रमः

### ( प्रथमे मासि )

[7]त्रसरेणुद्वयं जन्तुः क्षणमात्रेण वर्धते ।
नाडिकामात्रतो [8]यूकयुगलं च मुहूर्ततः ॥ ६५ ॥

---

[1] 'नित्यं प्रविशते योनिं' इति पद्मपुराणम् । [4] भयादय इति युक्तं भवेत्
[8] यूकेति अल्पपरिमाणवाचकम् ।

---

[3] भिन्ने (ख ग घ) [2] स्वरादेश्च (ग) [5] देह (क ख घ) [6] द्रायदोषतः (ग)
[7] अथरेणु (क ख घ)

[1]यूकानां वेदसंख्य च दिनमात्राद्यवद्वयम् ।
तच्छुक्लरक्तमेकस्थमेकाहात्कललं भवेत्[2] ॥ ६६ ॥

पञ्चरात्रेण कललं बुद्बुदाकारतां व्रजेत् ।
बुद्बुदं सप्तरात्रेण मांसपेशी भवेत्ततः ॥ ६७ ॥

द्विसप्ताहाद्भवेत्पेशी रक्त[3]मांसाश्रिता दृढा ।
[4]सम्भवन्त्यङ्कुराः पेश्या पञ्चविंशतिरात्रितः ॥ ६८ ॥

पृथिव्यादिषु भूतेषु संस्थितो धातुरन्तिमः ।
सन्तिष्ठति [5]द्रवीभूतः प्रथमे मासि गर्भगः ॥ ६९ ॥

## द्वितीयेमासे गर्भस्थपिण्डवृद्धिक्रमः

तत्कोष्ठपवनाग्निभ्यां शुष्यमाणो दिने दिने ।
काठिण्यमेतिमासेन पञ्चभूतात्मको हि सः ॥ ७० ॥

[6]शिरःस्कन्धश्च पृष्ठश्च पृष्ठवंशस्तथोदरम् ।
पाणिपादं तथा पार्श्वं कटीगात्रं तथैव च ॥ ७१ ॥

मासद्वयेन पर्वाणि क्रमशः सम्भवन्ति च ।

## तृतीये मासि गर्भस्थपिण्डवृद्धिक्रमः

त्रिभिर्मासैः प्रजायन्ते सर्वाङ्गाङ्कुरसन्धयः ॥ ७२ ॥

स्वधर्मगुणसंयुक्तभूतपञ्चाङ्गयुक्तितः ।
प्राप्नोति [7]स्पन्दमनसौ तृतीये मासि गर्भगः ॥ ७३ ॥

---

[4] द्रवीभूतं इति मातृकासु । [7]स्पन्दमनसी इति साधुः ।

---

[1] भूतानां (ग) [2] भजेत् (क ख घ) [3] मांसान्विता [ग] [4] सम्भवन्ताङ्कुराः पेश्या [क ख घ] .... पेशी [ग] [5] ग्रीवाशिरः स्कन्धयुतश्च [ग]

शब्दश्रोत्रे बलं दार्ढ्यं सूक्ष्मावेक्षणमेव च ।
विविक्तता लाघवं च सुषिरत्वं कलेवरे ।
नभसो हि गुणा एते संश्रयन्ति [1]शरीरिणम् ॥ ७४ ॥

त्वगिन्द्रियं च गमनागमनेऽङ्गप्रसारणम् ।
कर्कशत्वं च देहेऽस्मिन् गुणा वायोरिमे मताः ॥ ७५ ॥

[2]चक्षुर्विविक्तिरङ्गौष्ण्यं वर्णशौर्याङ्गसौष्ठवम् ।
सन्तापरूपहर्षाद्याः द्विजैते तेजसो गुणाः ॥ ७६ ॥

रसनेन्द्रियमङ्गानामार्द्रवं[3] [4]शैत्यमेव च ।
स्निग्धता सहनत्वं च क्लिन्नता चाम्भसो गुणाः ॥ ७७ ॥

गन्धघ्राणमृजामूर्तिर्गरिमाद्या [5]गुणा भुवः ।
गुणानेतानशेषेण भूतपञ्चाङ्गसंश्रयात् ॥ ७८ ॥

तृतीये मास्यसौ जीवो गर्भगः सम्प्रपद्यते ।

## चतुर्थे मासि गर्भस्थपिण्डवृद्धिक्रमः

चतुर्थे [6]व्यक्तता तेषां भावानामपि जायते ॥ ७९ ॥

पुंसां शौर्यादयो भावा भीरुत्वाद्याश्च योषिताम् ।
[7]नपुंसकानां सङ्कीर्णा भवन्तीति प्रचक्षते ॥ ८० ॥

मासैश्चतुर्भिरङ्गुल्यः प्रजायन्ते यथाक्रमम् ।

---

[2] अङ्गोष्ठ्यमिति क ख-मातृकयोः 'अङ्गोष्णो' इति ग-मातृकायां अङ्गोष्ण्यमिति घ-मातृकायां च दृश्यते । अयं लेखकप्रमादः स्यादिति भावयामि ।

[3] मार्दवं इति युक्तं स्यात् ।

---

[1] कलेवरे (क ख घ) [4] सेव्य (क ख घ) [5] यथा (क ख घ) [6] व्यावृता तेषां [ग]

[7] स्त्रीपुंनपुंकापुर्णा [ग]

### दौहृदवैविध्येन गर्भस्थशिशौ परिणामक्रमनिरूपणम्

बहून् मनोरथान् काले गर्भिणी कुरुते सदा ॥ ८१ ॥
[1]अदानाद्दौहृदानां स्युः गर्भस्य व्यङ्गतादयः ।
मातुर्यद्विषये लिप्सा तदात्वे जायते सुतः ॥ ८२ ॥
गर्भः स्यादर्थवान्, भोगी दौहृदाद्राजदर्शने ।
अलङ्कारेषु ललितः धर्मिष्ठस्तापसाश्रमे ॥ ८३ ॥
देवतादर्शने भक्तो हिंस्रो भुजगदर्शने ।
गोधाशने तु निद्रालुर्बली गोमांसभक्षणे ।
माहिषे शूररक्ताक्षं रोमशं सूयते सुतम् ॥ ८४ ॥

### पञ्चमे मासि गर्भस्थपिण्डवृद्धिक्रमः

[2]मुखं नासा च कर्णौ च मासैर्जायन्ति[3] पञ्चभिः ।
दन्तपङ्क्तिस्तथा गुह्यं जायन्ते च नखाः पुनः ॥ ८५ ॥
[4]अस्थ्नां तु पञ्चमे मासि रुधिरस्य च[5] सम्भवः ।
कालक्रमेण स्थैर्यं च सर्वाङ्गे सम्प्रजायते ॥ ८६ ॥

### षष्ठे मासि गर्भस्थपिण्डवृद्धिक्रमः

षष्ठे मास्यङ्गुलीनान्तु केशलोम्नां च सम्भवः ।
कर्णयोर्भवतश्छिद्रे [6]षण्मासाभ्यन्तरेण तु ॥ ८७ ॥

---

[1] प्रदानाद् .... .... गर्भस्य भ्यङ्गतादय इति क ख घ प्रतिषु । आदाने दौहृदानाः स्यु गर्भस्य यैङ्गदादयः इति 'ग' । परन्तु सर्वोऽपि पाठः युक्तो न भाति । लेखकस्स्त्रालित्यं स्यात् । अतः समुचितइति चिन्तितः पाठः ऊर्ध्वं प्रदत्तोऽस्ति । [3] आर्षं परस्मैपदम् ।

---

[2] सुखनासे च वर्णे च [ग] [4] अश्वस्थां [ग] अङ्गानां [ग] [5] तु [क ख घ]
[6] षण्मासस्याभ्यन्तरेण [ग]

पायुर्मेढ्रमुपस्थं च नाभिश्चाप्युपजायते ।[1]

## सप्तमे मासि गर्भस्थपिण्डवृद्धिक्रमः

सन्धयो ये च गात्रेषु मासैर्जायन्ति[2] सप्तभिः ॥ ८८ ॥

चैतन्यमनसी सम्यग्विकासं समुपेष्यतः ।
सप्तमे मास्यसौ गर्भे जीवः कर्मनियन्त्रितः ॥ ८९ ॥

पञ्चभूतमयं देहं नाडीस्नायुशिरा द्विजाः
[3]चर्मणा चाभिसन्नह्य [4]तिष्ठत्यन्तं समन्ततः ॥ ९० ॥

त्वचावेष्टितसर्वाङ्गो मांसैरन्तस्समावृतः ।
संक्लिश्यमानः कर्मौघैरास्ते गर्भेऽतिदुःखितः ॥ ९१ ॥

## अष्टमे मासि गर्भे शिशुक्रियानिरूपणम्

विभक्तावयवः स्पष्टः पुनर्मासाष्टकेन तु ।
पञ्चात्मकसमायुक्तः [5]परिपक्वः स तिष्ठति ॥ ९२ ॥

नालिकेरफलं यद्वत्सकोशं वृद्धिमिच्छति ।
[6]तद्वत्प्रयात्यसौ वृद्धिं [7]सकोशो[8]ऽधोमुखः स्थितः ॥ ९३ ॥

अन्यसत्वोदरीजन्तोः यथारूपं तथा स्थितम् ।
काठिन्यमग्निनायाति भुक्तपीतेन जीवति ॥ ९४ ॥

पुण्यापुण्याशयमये स्थितिर्जन्तोस्तथोदरे ।

---

[1] शिश्नश्चाप्युपजायत इति पद्मपुराणपाठः । [2] आर्षं परस्मैपदम् ।
[3] 'चर्मणी' इति 'क ख घ' प्रतिषु चर्माणि इति ग प्रत्यौ च दृश्यते । अत्र चर्मणा इत्येव साधुपाठः स्यात् । [4] तिष्ठत्यन्तः इति साधुः ।

---

[5] परिपृच्छसि [क ख घ] [6] तद्वत्प्रयात्यसौ वृद्धिं सकोशो मुखतस्थितः इति 'घ' पाठः ।
[7] सक्लेशो [क ख घ] [8] मुखतः [ग]

मातुराहारवीर्येण षड्विधेन रसेन च ।
नाभिसूत्रनिबन्धेन वर्धते स दिने दिने ॥ ९५ ॥

ओजो नाम गुणः कश्चिदष्टमे मासि देहिनाम् ।
सम्प्राप्नोत्यसकृत्तात गर्भं मातरमेव च ॥ ९६ ॥

[1]मासि जातो महाभाग ध्रुवं प्राणैर्वियुज्यते ।

## गर्भदुःखविवरणम्

ततः स्मृतिं लभेत्तत्र जीवः प्राक्तनसंश्रयात् ॥ ९७ ॥

कर्मसङ्गवशाद्वेत्ति संसारित्वं तथात्मनः ।
सुखं दुःखं विजानाति निद्रां स्वप्नं पुराकृतम् ॥ ९८ ॥

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
नानायोनिसहस्राणि पुनर्दृष्टानि जायता[2] ॥ ९९ ॥

अधुना जातमात्रोऽहं प्राप्य संस्कारमेव वा ।[3]
तस्माच्छ्रेयः करिष्यामि येन गर्भे न सम्भवे[4] ॥ १०० ॥

गर्भस्थश्चिन्तयन्नेवमहं गर्भाद्विनिर्गतः ।
अध्येष्यामि[5] शिवज्ञानं संसार[6]विनिवर्तकम् ॥ १०१ ॥

एवं स गर्भदुःखेन महता [7]परिमोहितः ।
जीवः कर्मवशादास्ते मोक्षोपायं विचिन्तयन् ॥ १०२ ॥

---

[1] अष्टमे मासि जातस्य ओजोगुणवियोगेन मरणं निश्चितमिति भावः ।
[2] शतृजन्तमार्षम् । [3] 'प्राप्तसंस्कार एव वा' इति पद्मपुराण पाठः ।
[4] सम्भवेयमित्यर्थः । [5] परं ज्ञानमिति पद्मपुराणम् ।

---

[6] विनिवर्तितम् (ख) [7] परिपीडितः (ग)

यथा गिरिवराक्रान्तः कश्चिद्दुःखेन तिष्ठति ।
तथा जरायुणा देहो दुःखं तिष्ठति वेष्टितः ॥ १०३ ॥

पतितः सागरे यद्वद्दुःखशोकसमन्वितः ।
[1]गर्भोदकेन सिक्ताङ्गः तथा व्याकुलितः पुमान् ॥ १०४ ॥

लोहकुम्भे यथा न्यस्तः पच्यते कश्चिदग्निना ।
गर्भाशये तथा क्षिप्तः पच्यते जठराग्निना ॥ १०५ ॥

सूचीभिरग्निवर्णाभिर्विचितस्य निरन्तरम् ।
यद्दुःखमुपजायेत तद्गर्भेऽष्टगुणं भवेत् ॥ १०६ ॥

गर्भवासात्परो वासः कष्टो नैवास्ति कुत्रचित्[2] ।
देहिनां दुःखमतुलं सुघोरमतिसङ्कुलम् ॥ १०७ ॥

[3]इत्येवं गर्भदुःखं हि प्राणिनां परिकीर्तितम् ।
चरस्थिराणां सर्वेषां आत्मगर्भानुरूपतः ॥ १०८ ॥

जरायुच्छन्नगात्रस्तु [4]नुद्यमानः [5]स कर्मभिः ।
कृताञ्जलिललाटोऽसौ मातृपृष्ठमभि स्थितः ॥ १०९ ॥

अध्यास्ते सङ्कुचद्गात्रे गर्भे दक्षिणपार्श्वगः ।
वामपार्श्वे स्थिता नारी क्लीबं मध्याश्रितं मतम् ॥ ११० ॥

नवमे दशमे वापि मासे कर्मबलात्कृतः ।
प्रबलैः सूतिपवनैः क्रियतेऽसावधोमुखः ॥ १११ ॥

[6]गर्भवस्तव्यताकर्मक्षये प्रसवमारुतैः ।
निस्सार्यमाणस्तैस्साधं लभते योनिसङ्कटे[7] ॥ ११२ ॥

---

[5] स्वकर्मभिरिति युक्तं भवेत् । [6] गर्भवासः । [7] सङ्कटमिति युक्तम् ।

---

[1] गर्भोदितेन (क ग घ) [2] किञ्चन (क ख ग) [3] इत्येते (क ख घ) [4] उद्यमान (क ख घ)

तदा प्राक्तनभोक्तव्यकर्मबाहुल्यगौरवात् ।
निष्क्राम्यमाणो वातेन प्राजापत्येन पीड्यते ॥ ११३ ॥

[1]निस्सारेक्षुतिलाकारो वासनो[2]च्छ्वासमात्रकः ।
कथञ्चिदेव निष्क्राति कुक्षौ दुःखेन सज्वरः ॥ ११४ ॥

प्राप्नोति मातुस्सहसा देही यन्त्राद्यथा[3]शरः ।
निष्क्रान्तश्चोदरान्मूर्च्छामसह्यां प्रतिपद्यते ।
प्राप्नोति चेतनां चासौ वायुस्पर्शसमन्वितः ॥ ११५ ॥

ततस्तं वैष्णवी माया समाक्रामति मोहिनी ।
तया विमोहितात्मासौ ज्ञानभ्रंशमवाप्यते ॥ ११६ ॥

भ्रष्टज्ञानस्य तस्यैव पूर्वकर्मवशेन च ।
रतिस्सञ्जायते तूर्णं जन्तोस्तत्रैव जन्मनि ॥ ११७ ॥

[4]इति श्रीमत्पुराणसारे शरीरे पिण्डोत्पत्तिर्नाम
षष्टितमोऽध्यायः

---

[4] गरुडकूर्मपुराणयोरपेक्षया अत्र वर्णनमतीव विशदम् । गर्भिण्याः दौर्हृद-लक्षणादि गरुडे न दृश्यते ।

---

[1] निस्सारेषु [ग]  [2] त्स्वासमात्रकः [ग घ] ....मातकः [क]  [3] शिवः [क]

## एकषष्टितमोऽध्यायः

*[ विष्णुमायाविवरणम् ]

पिता —

कीदृशी पुत्र सा माया विष्णोरमिततेजसः ।
यया व्यानुद्यते सर्वं जगदेतच्चराचरम् ॥ १ ॥

### मायाजिज्ञासोः नारदस्य विष्णुं प्रति प्रश्नः

सुमतिः —

अत्र ते कथयिष्यामि मायारूपमनुत्तमम् ।
श्वेतद्वीपे महाविष्णुरास्ते तत्र गदाधरः ।
वासुदेवस्सगरुडश्चतुर्बाहुः स्त्रिया सह ॥ २ ॥

तं च द्रष्टुमथाभ्यागान्नारदो मुनिसत्तमः ।
प्रणम्य स्तुतिभिर्देवं प्राहेदं विनयान्वितः ॥ ३ ॥

संशयं परिपृच्छामि भवान्मे वक्तुमर्हति ।
का माया कीदृशी माया किंरूपा कुत्र संस्थिता ॥ ४ ॥

तस्या दर्शय मे रूपं मायाया पुरुषोत्तम ।
मायया मोहसे सर्वं जगदेतच्चराचरम् ॥ ५ ॥

एवमुक्तस्तु मुनिना देवदेवो जनार्दनः ।
प्रहस्योवाच देवर्षे न कार्यं मायया तव ॥ ६ ॥

---

* देवीभागवते नारदमायादर्शनविभागो दृश्यते । प्रायः तमेव भागमनुसरति अत्रत्याध्यायांशः । तत्र तत्र व्यत्यासोऽपि दृश्यते । तत्र तु नारदः स्त्रीभावं सम्प्राप्य तालध्वजाख्यं वृणुते । पद्मपुराणेऽपि एतत्सदृशः कथाभागः दृश्यते । देवीभागवतम् । स्कं.६ अध्यायाः २६, २७, २८, २९ प.पु. पातालखण्डः अध्यायः ७५

न पृष्टया न स्थितया न रूपेण न दृष्टया ।
भूयो [1]निवारयामास (सोऽसद्ग्राहेण) सादरम् ॥ ७ ॥

नारदोऽपि च देवर्षिः प्रोवाचेदं पुनः पुनः ।
मायां दर्शय मे देव नास्ति मेऽन्यत्प्रयोजनम् ॥ ८ ॥

## मायादर्शनेच्छया विष्णुना द्विजरूपग्रहणम्

[2]अथासौ विष्णुरुत्थाय श्वेतद्वीपाद्विनिर्ययौ ।
अङ्गुल्यग्रेण सङ्गृह्य नारदं मुनिपुङ्गवम् ॥ ९ ॥

ततो मार्गं गतश्चक्रे आत्मानं द्विजरूपिणम् ।
यज्ञशर्मेति संज्ञं च चक्रे[3]ऽसावात्मनः प्रभुः ॥ १० ॥

आययौ स महीपृष्ठं जम्बूद्वीपे चराचरे ।
वैदेशं नाम नगरं [4]वेत्रवत्यास्तटे शुभम् ॥ ११ ॥

तस्मिन् सदोद्यमपरो धनधान्यसमृद्धिमान् ।

## अनादरं कृतवते सीरभद्राय विष्णुकृतं वरदानम्

हलकर्ता [5]वृथासक्तो वैश्यजातिरतन्द्रितः ॥ १२ ॥

गृहकर्मणि [6]तन्निष्ठः सीरभद्र इति स्मृतः ।
तस्यान्तिके हरिः साक्षान्नारदेन समागतः ॥ १३ ॥

---

[2] सुतपर्यये प्रसन्नो विष्णुः तदपेक्षया मायामतिगहनामपि प्रदर्शयामास । नारदश्च पूर्वं मायाः द्रष्टुमनाः तदर्थमयततेति ब्रह्मपुराणकथायाः विवरणं स्यादियं कथा । ब्र.पु. अ.१२१ [3] असावात्मनः नाम चक्रे इत्यर्थः ।

[5] वृथासक्त इति पदस्यार्थः स्फुटं न भाति ।

[6] तन्निष्ठ इति तदेकचित्ततया सक्तः अथवा निष्ठश्चेति पदं निवेशितव्यम् ।

---

[1] विचारयामास सा स[illegible]गेति मातृकासु पाठः अस्पष्टः । [4] वेत्रवत्याः (क)

[1]तेनाप्यासनसन्मानैः [2]समयेन कृतादरौ ।
[3]प्रोक्तौ भोज्यं युवाभ्यां [4]किं साध्यतेऽन्नं न साध्यते ॥ १४ ॥

न चास्मदीयं युष्माकं रोचतेऽन्नं ततो हरिः ।
[5]प्रसह्य प्रददौ तस्मै वरं द्विजवराग्र्यवाक्[6] ॥ १५ ॥

[7]सन्ततौ बहवः [8]पुत्राः क्षेत्रव्यापारबुद्धयः ।
पशुपाशग्रहासक्ताः [9]शतार्धहलवाहकाः ॥ १६ ॥

तेषां पुत्राश्च पौत्राश्च यथावृत्तिप्रवर्तकाः ।
इत्युक्त्वा स जगामाशु वासुदेवः सनारदः ॥ १७ ॥

## आदरं कृतवते विप्राय शापरूपवरदानम्

क्षेत्रे गोस्वामिनामानं द्विजं ददृशतुश्च तौ ।
दरिद्रं हलकर्माणं गोक्षीरोपस्कारान्वितम् ॥ १८ ॥

ताभ्यां सम्प्रार्थितो विप्रो भोज्यं नो यच्छ वाञ्छितम् ।
इत्युक्तोऽसौ द्विजश्रेष्ठो हलकर्म विहाय [10]तत् ॥ १९ ॥

आजगाम गृहं तूर्णं ताभ्यां सह ससंभ्रमः ।
सहभक्त्या सतनयो भोज्ययुक्तं चकार सः ॥ २० ॥

[11]प्रस्थितौ ददतुः श्रेष्ठं वरं तस्मै द्विजातये ।
मा ते भवतु गोस्वामिन् कदाचिदपि [12]कर्षणम् ॥ २१ ॥

---

[5] प्रहस्येति स्यात् । [6] द्विजवराग्र्यवाक् भगवानेव । विप्रवाक्यो जनार्दन इति श्रुतेः । [7] भवन्त्विति वाक्यशेषः । [11] प्रस्थितो ह्यददात् इति युक्तम् । दानस्य हरिकर्तृकत्वात् ।

---

[1] तेनार्घासन (ग) [2] समेत्य न (क) शहये (ख घ) [3] प्रोक्तं वांभ्यां (क) प्रोक्तौ भोज्यौ (ख घ) [4] हि (क ख घ) [7] सन्तु ते (ग) [8] पुत्रान् (घ) [9] शताण्डबल (ग) [10] यत् (क ख) तम् (ग) [12] कर्मणि (क ख घ)

मा धान्यं मा च सन्तानो मत्प्रसादाद्द्विजोत्तम ।
इत्युक्त्वा जग्मतुस्तूर्णं [1]पथि पप्रच्छ नारदः ॥ २२ ॥

### विष्णुना वरदानवैचित्र्यविवरणम्

किमिदं वद देवेश शापरूपो वरस्त्वया ।
रौद्रो गोस्वामिने दत्तः किञ्च वैश्ये तथाविधः ॥ २३ ॥

इत्युक्तः प्राह देवेशः तस्य [2]संशयकर्तनम् ।
संवत्सरेण यत्पापं मत्स्यबन्धः समाचरेत् ।
तदह्नैकेन कुरुते लाङ्गली नात्र संशयः ॥ २४ ॥

[3]अतोऽर्धात्कृषिपापेन नरकं याति लाङ्गली ।
तदभावादपापः स्यात्ततो मोक्षो भवेद्ध्रुवम् ॥ २५ ॥

वैश्यस्तु हलकालुष्यैर्घोरं नरकमृच्छति ।
न भुक्तं न च विश्रान्तं अतोऽर्थं तद्गृहे [4]मया ॥ २६ ॥

इत्येव संवदन्तौ तौ जग्मतुर्मार्गमुत्तमम् ।
[5]कन्याकुब्जस्य सविधे सरः श्रेष्ठमपश्यताम् ॥ २७ ॥

### विष्णोरादेशात्सरः प्रविष्टस्य नारदस्य स्त्रीरूपप्राप्तिः

श्रीभगवान् —

[6]पश्य मायामहं तेऽद्य दर्शयिष्यामि मोहिनीम् ।
प्रविश्यान्तर्जलं विप्र द्रक्ष्यसे चैव नारद ॥ २८ ॥

---

[5] कान्यकुब्ज इति स्यात् । [6] अमृतसरसि स्नात्वा नारदः स्त्रीभावमवापेति-पद्मपुराणम् । प.पु.पा.खण्डः अ.७५ (वृन्दावनमाहात्म्यम्) ब्रह्मपुराणेऽपि एतत्सदृशी कथा लभ्यते । तत्र दारुमत्याः स्थानेषु शीलेति नाम लभ्यते ।

---

[1] परिपप्रच्छ (क ख घ) [2] संशयकृन्तनम् [ख घ] [3] अतोऽर्थात्कृष्युपायेन [क ख घ]
[4] यथा [क ख घ] [5] अस्यं कुब्जस्य [ग]

मायामाश्चर्यरूपां तां ज्ञानविज्ञानमोहिनीम् ।
एवमुक्तो ममज्जाशु नारदः सलिले शुभे ॥ २९ ॥
मग्नमात्रोऽभवत्कन्या काशिराजसुता शुभा ।

### स्त्रीरूपनारदस्य विवाहः पुत्रावाप्तिश्च

नाम्ना दारुमती देवी सर्वलक्षणशोभिता ॥ ३० ॥
[1]तां प्रादात्काशिराजस्तु शिबेरौशीनरस्य हि ।
रेमे प्रासादशृङ्गेषु स तया सह भूपतिः ॥ ३१ ॥
पर्वतानां नितम्बेषु निर्झरेषु [2]गुहासु च ।
प्रयागादिषु तीर्थेषु मुनीनामाश्रमेषु च ॥ ३२ ॥
उद्यानहर्म्यभूमीषु नदीनां पुलिनेषु च ।
[3]दिव्यावसथहर्म्येषु वेलाकूलेष्वथाब्धिषु ॥ ३३ ॥
यावद्द्वादशवर्षाणि एकाहमिव भूपतिः ।
ततस्त्रयोदशे वर्षे तस्या गर्भोऽभवन्महान् ॥ ३४ ॥
तस्मिन् गर्भे सुखं पूर्णे जातं दीर्घमलाबुकम् ।[4]
तद्भेदादभवत्पुत्रा दिव्यदेहा बलोत्कटाः ॥ ३५ ॥
पञ्चाशत्संख्यया तात उपसर्गादिवर्जिताः ।
आरूढयौवनास्सर्वे शूरास्सङ्ग्रामकोविदाः ॥ ३६ ॥

### युद्धे सर्वेषां पुत्राणां मरणम्

तेषां पुत्राश्च पौत्राश्च बभूवुः सुरसन्निभाः ।
अथ कालेन महता स राजा काशिपो[5] बली ॥ ३७ ॥

---

[1] विदर्भराजतनयः सुधर्मा इति ब्रह्मपुराणे । अ.१२१

[4] अलाबुः लताविशेषः । तत्फलम् । [5] काशिपः काशिराजः ।

---

[2] महासु च [ख घ] [3] दिव्या [क ख घ]

जामातुर्मण्डलं सर्वं शिबेरौशीनरस्य च ।
जिघृक्षुरागतस्तूर्णं तत्र युद्धमभून्नृप[1] ॥ ३८ ॥

शिबिरौशीनरः पुत्रैः पौत्रैस्सह नृपो हतः ।
काशीराजश्च तद्वच्च सपुत्रो मृत एव च ॥ ३९ ॥

तान्सर्वान्सा मृतान् दृष्ट्वा काशिराजसुता शुभा ।

### अनाथाया दारुमत्या विलापः

चिन्तयामास को मह्यं नाथो भवति पार्थिवः ॥ ४० ॥

भर्तर्युपरते पुत्रा नाथाः स्युः स्त्रीषु सर्वदा ।
पुत्रभ्रातृविहीनाया पिता चैव परायणम् ॥ ४१ ॥

पितापि मे मृतः संख्ये वह्निरेव परायणम् ।
इत्युक्त्वा सुविषण्णा सा रुरोद भृशदुःखिता ॥ ४२ ॥

### द्विजरूपिणा विष्णुना दारुमतीसान्त्वनम् तथा स्वमायावैचित्र्यकथनम्

एतस्मिन्नन्तरे विष्णुराययौ द्विजरूपधृक् ।
तस्याः पुरस्थितो भूत्वा चक्रे धर्मोपदेशनम् ॥ ४३ ॥

किं रोदितेन बहुना भवत्याः क्लेशकारिणा ।
श्रूयतां विष्णुमायैषा स्वप्नलब्धधनोपमा
सर्वेषामेव जन्तूनां परिणामोऽयमीदृशः ॥ ४४ ॥

पुरन्दरसहस्राणि चक्रवर्तिशतानि च ।
निर्वापितानि कालेन प्रदीपा इव वायुना ॥ ४५ ॥

येऽपि शोषयितुं शक्ताः समुद्रं ग्राहसङ्कुलम् ।
[2]कुर्युर्वै करयुग्मेन चूर्णं मेरुं महीतले ॥ ४६ ॥

---

[1] मभून्महत् [ग] [2] कुर्युर्यें [क]

[1]उद्धर्तुं धरणीं शक्ता ग्रसितुं चन्द्रभास्करौ ।
प्रविष्टास्तेऽपि कालेन कृतान्तवदनान्तरम् ॥ ४७ ॥

सङ्ग्रामे गजतुरगाकुलो गृहे वा
अग्नौ वा गिरिविवरे महोदधौ वा ।
सर्वैर्वा सह वसतामु[illegible]र्णचित्तै
नाभाव्यं भवति न भाविनोऽस्ति नाशः ॥ ४८ ॥

पातालमाविशतु यातु सुरेन्द्रलोकं
आरोहतु क्षितिधराधिपतिं सुमेरुम् ।
मन्त्रौषधिप्रहरणैश्च करोतु रक्षां
यद्भावि तद्भवति नात्र विचारहेतुः ॥ ४९ ॥

## दारुमत्याः नारदरूपावाप्तिः

इत्येवं धर्ममादिश्य विष्णुस्तां पुनरब्रवीत् ।
उत्तिष्ठ स्नाहि बन्धूनां प्रकुरुष्वौर्ध्वदैहिकम् ॥ ५० ॥

मा शुचो विष्णुमायैषा विष्णुना चोदिता स्वयम् ।
इत्युक्त्वा चारुसर्वाङ्गीं पाणौ संगृह्य शोचतीम् ।
स्नापयामास सलिले यावत्तां पुरुषोत्तमः ॥ ५१ ॥

तावत्तत्रैव सलिले सैव स्त्री नारदोऽभवत् ।
स्मरणं चाभवत्तस्य बहुजन्मसहस्रकम् ॥ ५२ ॥

ददर्श स पुनर्धीमान्पुण्डरीकाक्षमच्युतम् ।
जगाम च महीं कृत्स्नां [2]तरसा विस्मिताननः ॥ ५३ ॥

---

[2] मातृकासु 'शिरसा' इति पाठः ।

---

[1] तद्धर्तुं भरणीं [क]

[1]स्तुतिं चकार देवस्य रोमाङ्कितततनुस्तदा[2] ।
नत्वा चाधोमुखस्तस्थौ वैलक्ष्यान्नारदः पितः ॥ ५४ ॥

[3]तं विलक्ष्यमथो दृष्ट्वा जहास परमेश्वरः ।
हसतस्तस्य वक्त्रान्तस्त्रैलोक्यं सचराचरम् ॥ ५५ ॥

ददर्श[4] देवान् लोकांश्च वेदान् [5]ब्राह्मणपुङ्गवान् ।
सनकादीन्ब्रह्मसुतान् मरीच्यादींस्तथैव च ॥ ५६ ॥

दृष्ट्वा स्त्रीत्वं च सञ्चित्य ह्यात्मनो नारदस्तदा ।
स्तुतिं चकार देवस्य रोमाञ्चितमुनिस्तदा ॥ ५७ ॥

तमाह भगवान्विष्णुरप्रमेयपराक्रमः ।
मायेयमेव विप्रर्षे परमार्थविमोहिनी ॥ ५८ ॥

यया [6]युक्तो जले सर्वं दृष्टवान् द्विजसत्तम ।
त एव तां तरन्तीह यैरहं समुपासितः ॥ ५९ ॥

नान्यथा तन्निवृत्तिः स्याज्जन्मकोटिशतैरपि ।
तस्मान्नारद मामेव त्वमाराधय नित्यशः ॥ ६० ॥

ततस्त्वं मत्प्रसादेन मायामेतां तरिष्यसि ।
इत्युक्त्वा नारदं विष्णुस्तत्रैवान्तरधीयत ॥ ६१ ॥

---

[1] स्तुतिं चकार देवस्य । न ह्याधोमुखस्तस्थौ इति च विरूपपाठः घ-मतृकायाम् । स्य न ह्याथोमुख इति 'क' मातृकायाम् ।

[2] रोमाञ्चिततनुरिति स्यात् ।

---

[3] अविलोक्य [क ख घ] [4] तेषां [क] देवं [ख] [5] ब्राह्मणमेव च [क ख घ]

[6] मग्नो [क ख घ]

[5]द्विजः —

माया मयेयमधुना मधुसूदनस्य
सङ्कीर्तिता तव कलत्रसुतादिरूपा ।
ग्रस्तो यया हसति रोदिति [6]जातमात्रः
[7]कृत्स्नान् करोति पुरुषः परमार्थचेष्टः ॥ ६२ ॥

इति श्रीमत्पुराणसारे विष्णुमायाकथनं नाम
एकषष्टितमोऽध्यायः

---

[1] प्रायः ब्रह्माण्डपुराणदन्यत्र एतत्कथासदृशी कथा नोपलभ्यते । अत्रस्था वैश्यकथाब्रह्माण्डे न दृश्यते ।

---

[1] जडः [क] [2] मातृजोऽयं [क] [3] तस्याः [क] तास्ताः [ख घ]

## द्विषष्टितमोऽध्यायः

[ जीवदुःखनिरूपणम् ]

### षड्विधभावविवरणम्

[1]सुमतिः —

भावाः स्युः षड्विधास्तस्य मातृजाः पितृजास्तथा ।
[2]राजसा आत्मजास्तत्र सम्भवाः स्वात्मजास्तथा ॥ १ ॥

### मातृजभावलक्षणम्

मृदुत्वं शोणितं मेदो मज्जाप्लीहा शकृद्गुदः ।
हृन्नाभीत्येवमाद्यास्तु भावा मातृगता मताः ॥ २ ॥

### पितृजभावलक्षणम्

श्मश्रुलोमकचाः स्नायुः [3]सरा [4]धमनयो [5]नखाः ।
दशनाः शुक्रमित्यादिभावाः पितृभवा मताः ॥ ३ ॥

### राजसभावलक्षणम्

शरीरोपचयो वर्णो [6]वृद्धिस्तृप्तिर्बलं स्थितिः ।
अलोलुपत्वमुत्साह इत्यादीन् [7]राजसान्विदुः ॥ ४ ॥

### आत्मजभावलक्षणम्

इच्छाद्वेषः सुखं दुःखं धर्माधर्मौ च भावना ।
[8]अयत्नो ज्ञानमायुश्च इन्द्रियाण्यात्मजास्तथा ।[9] ॥ ५ ॥

---

[1] अत्रस्थाः विषयाः प्रायः पद्मपुराणात् भविष्यपुराणाच्च सङ्गृहीताः । प.पु. भूमिखण्डः अ.६६ [4] सराः सिराः स्युः अथवा सरन्तीति नाड्यः स्युः । [8] प्रयत्न इति वा स्यात् । [9] षड्विधा इत्युक्त्वा चतुर्णामेवात्र विवरणं दृश्यते ।

---

[2] रसजा [क ख घ] [3] नरा [क] [5] रसाः [क] [6] विधुः [क] [7] सहजा [क]
[8] प्रयुक्ता [क]

## देहस्थितानां पित्तादीनां प्रमाणकथनम्

पित्तस्य कुडुबं[1] देहे कफस्य द्विगुणो भवेत् ।
रेतसोऽप्यर्धकुडुबं मज्जा स्यात्तच्चतुर्गुणम् ॥ ६ ॥

मेदो वसा लोहितं च रसं सलिलमेव च ।
अञ्जलीनां क्रमाद्द्वित्रिचतुस्सप्तदशोच्यते ॥ ७ ॥

पञ्चषष्टिर्भवेदस्थ्नां[2] पलानामसृजः शतम् ।
पलत्रयं महारक्तं विण्मूत्रं[3] तत्प्रमाणकम्[4] ॥ ८ ॥

[5]समांसमेतन्निःशेषं पलसाहस्रमुच्यते ।
द्वात्रिंशद्दशनाः प्रोक्ताः विंशतिश्च नखाः स्मृताः ॥ ९ ॥

सार्धाभिस्तिसृभि[6]श्छन्नं[7] समन्ताद्रोमकोटिभिः ।
शरीरं स्थूलसूक्ष्माभिर्दृश्यादृश्याश्च ताः स्थिताः ॥ १० ॥

तावतीभिश्च नाडीनां कोटिभिस्तत्समन्वितम् ।
समधातोरियं कॢप्तिः पिण्डसम्बन्धिनी स्थिता ॥ ११ ॥

[8]विषमप्रकृतेः पुंसः परिमाणं न विद्यते ।
वैलक्षण्याच्छरीराणां जीवानां च विशेषतः ॥ १२ ॥

---

[1] कुण्डति परिमाति अनेन अस्मिन् वा सामान्यतो द्वात्रिंशत्तोलकमिति । अञ्जलिरिति पर्यायः [4] चाप्रमाणकमिति पद्मपुराणे । प.पु. २ खं. अ. ६६ [5] समांसमेतमिति सर्वमातृकापाठः अशुद्ध इति भाति । [7] छन्नमिति पद्मपुराणपाठः । [8] विषमप्रकृतित्वं वातपित्तकफादीनां न्यूनातिरेकजम् । शरीरेषु विलक्षणतायाः सत्वात् अङ्गोपाङ्गानां च न्यूनाधिक्ये विकृतिर्वा सिद्धैव ।

---

[2] दस्थ्न (क) [3] च प्रमाणकम् (क) [6] श्छिन्नं (क ख ग घ) [7] विषमैः (क)

इति प्रत्यङ्गसंक्षेपस्तत्त्वतः कीर्तितो मया ।
एवं स्नाय्वस्थिमांसादि[1]धृत्वारब्धस्य मारिष ॥ १३ ॥
भूरादिसमुदायस्य पिण्डस्योत्पत्तिरीरिता ।

## शरीरिणः बाल्याद्यवस्थाभेदेन भवदुःखनिरूपणम्

सुमतिः —

जन्तोरज्ञानदोषेण नानाकर्मवशेन च ॥ १४ ॥
अत्यक्तेन्द्रियवृत्तित्वाद्बाल्ये दुःखं महत्पुनः ।
इच्छन्नपि न शक्नोति वक्तुं कर्तुं च सत्क्रियाम् ॥ १५ ॥
दन्तोऽत्थाने महदु खं मौग्ध्येन व्याधिना ततः ।
बालरोगैश्च विविधैः पीडा बालग्रहैरपि ॥ १६ ॥
तृट्बुभुक्षापरीताङ्गः क्वचित्तिष्ठन्नरो रुदन् ।
विण्मूत्र[3]भक्षणादींश्च[4] मोहाद्बालः समाचरेत् ॥ १७ ॥
कौमारे कर्णवेधाच्च मातापित्रोश्च ताडनात् ।
अक्षराध्ययनाच्चैव दुःखी स्याद्गुरुताडनात् ॥ १८ ॥
प्रमत्तेन्द्रियवृत्तित्वा[5]त्कामरागप्रपीडनात् ।
[6]रागोद्रिक्तस्य सततं कुतस्सौख्यं हि यौवने ॥ १९ ॥
ईर्ष्यासु सुमहद्दुःखं [7]मोहाद्रक्तस्य [8]जायते ।
[9]नेत्रस्योत्कुपितस्यैव रागो दुःखाय केवलम् ॥ २० ॥

---

[3] भक्षणादीनीति युक्तम् । [6] रोगार्दितस्येति पद्मपुराणम् ।
[7] मोहाद्रक्तस्येति रक्तत्वं च प्रीतिः । मोहात्तत्रैव प्रीतियुत इत्यर्थः ।
[9] तत्र स्यात्कुपितस्यैवेति पद्मपुराणपाठः समीचीन इति भाति ।

---

[1] धात्वा (ख) [2] तिष्ठतिरारटन् (कि) [4] भक्षणाद्यश्च (ख घ) भक्षणाद्यश्च (घ)
[5] कामवेग (ग) [8] मोहाद्रिक्तस्य (ग)

न रात्रौ विन्दते निद्रां कामेन परिपीडितः ।

## अर्थवतामपि दुःखनिरूपणम्

दिवा वापि कुतस्सौख्यमर्थोपार्जनचिन्तया ॥ २१ ॥

कृषिवाणिज्यसेवाश्च गोरक्षादिपरिश्रमैः ।
प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया ।
तृप्ताः कामेन बध्यन्ते निद्रया निशि जन्तवः ॥ २२ ॥
अर्थस्य चार्जने दुःखमार्जितानाञ्च रक्षणे ।
नाशे दुःखं व्यये दुःखमर्थेऽप्येवं कुतस्सुखम् ॥ २३ ॥
चोरेभ्यः स्वजनादग्नेः सलिलात्पार्थिवादपि ।
भयमर्थवतां नित्यं मृत्योर्देहवतामिव ॥ २४ ॥
कार्पण्यं मत्सरो दम्भः तृष्णाधिक्यं भयं मदः ।
अकार्ये सम्प्रवृत्तिश्च दुःखानि धनिनः सदा ॥ २५ ॥
विमोहयन्ति सम्पत्सु तापयन्ति विपत्तिषु ।
खेदयन्त्यर्जनात्काले कदा ह्यर्थाः सुखावहाः ॥ २६ ॥

## संसारिणां विविधदुःखनिरूपणम्

शीतेन दुःखं हेमन्ते ग्रीष्मे तापेन दारुणम् ।
वर्षासु वातवर्षाभ्यां कालेऽप्येवं कुतस्सुखम् ॥ २७ ॥
[1]अत्याहारान्महद्दुःखमनाहारान्महद्भयम् ।
विवाहविस्तरे दुःखं तद्गर्भोद्वहने पुनः ॥ २८ ॥
प्रसवेऽपत्यदोषैश्च दुःखमित्यादिकर्मभिः ।
दन्ताक्षिरोगे पुत्रस्य हा कष्टं किं करोम्यहम् ॥ २९ ॥
गावो भग्नाः कृषिर्नष्टाः क्वाप्यश्वाः प्रपालयिताः ।
अमी [2]प्राघुणिकाः प्राप्ताः भग्नं छिद्रं च मे गृहम् ॥ ३० ॥

---

[1] अत्याहारादजीर्णत्वं, अनाहारान्मरणदुःखं वा स्यात् । [2] प्राघुणिकाः अतिथयः

बालापत्या च मे भार्या किं करिष्ये निरिन्धनम् ।[1]
प्रदानकालः कन्यायाः कीदृशश्च वरो भवेत् ॥ ३१ ॥

कुटुम्बचिन्ताकुलितस्य पुंसः श्रुतञ्च शीलञ्च गुणाश्च सर्वे ।
अपक्वकुम्भे निहिता इवापः प्रयान्ति देहेन समं विनाशम् ॥ ३२ ॥

## आशायाः बहुदुःखहेतुत्वनिरूपणम्

सर्वस्याशा सुमहती पुरुषस्योपजायते ।
तस्यां विहन्यमानायां दुःखो मृत्युरसंशयः ॥ ३३ ॥

आशां बृहत्तरां मन्ये पर्वतादपि सद्रुमात् ।
आकाशादपि वाताच्च अप्रमेयां तु वा पुनः ॥ ३४ ॥

आशायास्तपसा श्रेष्ठ तथा नान्तमहं गतः ।
आशा चैव मुनिश्रेष्ठ दुर्विचिन्त्या सुदुर्लभा ॥ ३५ ॥

आशा हि पुरुषं बालमालापयति तस्थुषी ।
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥ ३६ ॥

दरिद्रः प्रार्थयत्यर्थमर्थवान्राज्यमिच्छति ।
राजा वा पृथिवीशत्वं पृथ्वीशश्चक्रवर्तिताम् ॥ ३७ ॥

इन्द्रत्वं चक्रवर्ती तु तथास्माद्ब्रह्मणः परम् ।
तस्मादपि पुनस्तस्मात्तस्मादपि पुनः पुनः ॥ ३८ ॥

एवं नान्तं हि तृष्णायाः गतपूर्वोऽस्ति कश्चन ।
असह्यानन्तदुःखानां [2]तातैकेव हि कारणम् ॥ ३९ ॥

## राज्ये दुःखबाहुल्यकथनम्

राज्येऽपि सुमहद्दुःखं सन्धिविग्रहचिन्तया ।
पुत्रादपि भयं तत्र तत्र सौख्यं हि कीदृशम् ॥ ४० ॥

---

[1] किं करिष्यति रन्धनम् इति पद्मपुराणपाठ एव समीचीनः । रन्धनं च पाककर्म । [2] एका [illegible] ।

स्वजातीयाद्भयं प्रायः [1]सर्वेषामेव देहिनाम् ।
[2]एकद्रव्याभिलाषित्वाच्छुनामिव [3]परस्परम् ॥ ४१ ॥
[4]एकवस्तुयुगं राज्ञः प्रस्थमात्रान्नभोजनम् ।
यानं शय्यासनं चैकं शेषं दुःखाय केवलम् ॥ ४२ ॥
[5]सार्वभौमेऽपि भवने सद्ममात्रं परिग्रहः ।
प्रत्यूषतूर्यनिर्घोषः समः स्यात्पुरवासिनाम् ॥ ४३ ॥
राज्ञोऽभिमानमात्रं हि ममेदं बाध्यते गृहे ।
सर्वमाभरणं भारः सर्वमालेपनं मलम् ॥ ४४ ॥
सर्वं गीतं प्रलपितं सर्वं नृशं विचेष्टितम् ।
इत्येवं राज्यसम्भारे कुतः सौख्यं हि विन्दते ॥ ४५ ॥

## यौवनादीनामपि दुःखहेतुत्वप्रतिपादनम्

सन्मानमवमानेन वियोगेनैव सङ्गमः ।
यौवनं जरया ग्रस्तं क सौख्यमनुपद्रवम् ॥ ४६ ॥
वलीपलितखालित्यैः[6] शिथिलीकृतविग्रहः ।
सर्वक्रिया (स्वशक्तश्च)[7] जरया जर्झरीकृतः ॥ ४७ ॥

---

[2] पद्मपुराणे सर्वेऽपि सातिशयाः । रामपरशुरायहनुपत्सूर्यादयोऽपि सामान्याः । भगवानेक एव परस्थानीयः । अतः राज्ञः चतुस्सागरपर्यन्तायाः मह्याः ईशितुरपि स्वकीयं वस्तुद्वयमेवेति स्वरसोंऽशः प्रतिपादितोऽस्ति ।

[3] श्वानः एकमेव वस्तु जिघृक्षन्तः परस्परं भषन्ति, कलहं कुर्वन्ति च ।

[4] 'एकवस्त्रयुगं राज्ञः प्रस्थमात्राम्बु भोजनम्' इति पद्मपुराणपाठः समीचीनो भाति । [5] सप्तमे चापि भवने खट्वामात्रं परिग्रहः । सार्वभौमोऽपि भवति श्रद्धामात्रपरिग्रहः । प.पु. [6] स्खलन्ति केशा अस्मादिति खलतिः तस्य भावः खालित्यम् ।

---

[1] सर्वेषामपि (ख घ) [7] स्वयक्त (ख ग)

स्त्रीपुंसोर्यौवनं रूपं यच्चान्योन्यं प्रियाप्रियम् ।
तदेव जरया ग्रस्तमुभयोरपि न प्रियम् ॥ ४८ ॥

जराभिभूतः पुरुषः पत्नीपुत्रादिबान्धवैः ।
अशक्तत्वाद्दुराचारैः भृत्यैश्च परिभूयते ॥ ४९ ॥

धर्मश्चार्थश्च कामश्च मोक्षश्चैव न शक्यते ।
शक्यो साधयितुं तस्माद्युवा धर्मं समाचरेत् ॥ ५० ॥

[1]बालभावेन मोहेन वार्धके जरया तथा ।
आगुन्तकैर्भयैः पुंसो व्याधिशोकैरनेकधा ॥ ५१ ॥

[2]हीयतेऽर्धं च तत्रापि निद्रया निशि जीवितम्

## मरणदुःखनिरूपणम्

[3]जीवितान्ते च मरणं महाघोरमवाप्नुयात् । ॥ ५२ ॥

बान्धवैः [4]सम्परिष्वक्तः प्रियैश्च परिवारितः
निःश्वसन् दीर्घमुष्णं च मुखेन परिशुष्यता । ॥ ५३ ॥

चतुरन्तेन खट्वायां परिवृत्य मुहुर्मुहुः
सम्मूढः क्षिपतेऽत्यर्थं हस्तपादावितस्ततः[5] । ॥ ५४ ॥

खट्वातो वाञ्छते भूमिं भूमेः खट्वां ततो महीम्
विवस्त्रस्त्यक्तलज्जश्च मूत्रविष्ठा[6]नुलेपनः । ॥ ५५ ॥

---

[1] बालभावस्तु बाल्यम्, मोहोऽज्ञानं युक्तायुक्तविवेकराहित्यं, तच्च यौवने सम्भाव्यते । [3] भागोऽयं मार्कण्डेयपुराणात् प्रायस्समुद्धृतः । अ. १० [4] समालिङ्गित इति । [5] हस्तपादानितस्तत इति मातृकापाठापेक्षया साधुपाठः ऊर्ध्वं प्रदत्तः पद्मपुराणस्थः । [6] विष्ठा मलः ।

---



[2] जायते (क)

याचमानश्च सलिलं शुष्ककण्ठोष्ठतालुकः ।
चिन्तयानश्च वित्तानि कस्यैतानि मृते मयि ॥ ५६ ॥

ऊष्मा प्रकुपितः काये तीव्रवायुसमीरतः ।
भिनत्ति मर्मस्थानानि दीप्यमानो [1]निरिन्धनः ॥ ५७ ॥

[2]उदानो नाम पवनः ततश्चोर्ध्वं प्रवर्तते ।
भुञ्जतामम्बुभक्षाणां [3]मध्ये गतिनिरोधकृत् ॥ ५८ ॥

ततो येनाम्बुदानानि कृतान्यन्नरसास्तथा ।
दत्ताश्च तस्मादाह्लादमापदि प्रतिपद्यते ॥ ५९ ॥

अन्नानि येन दत्तानि श्रद्धापूतानि चोत्तमे ।
सोऽपि तृप्तिमवाप्नोति विनाप्यन्नेन वै तदा ॥ ६० ॥

येनानृतानि नोक्तानि [4]प्रीतिभेदः कृतो न च ।
आस्तिकः श्रद्दधानश्च ससुखं मृत्युमृच्छति ॥ ६१ ॥

यो न कामान्न संरंभान्न द्वेषाद्धर्ममुत्सृजेत् ।
[4]यथोक्तकारी सौम्यश्च ससुखं मृत्युमिच्छति ॥ ६२ ॥

---

[2] उदान इति पञ्चसु दैहिकवायुषु अन्यतमः । कण्ठदेशस्थः ।

[4] प्रीतिभेदः सुहृद्भेदः । मित्रद्रोह इति यावत् । अत एव पठ्यते 'मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातुकः । त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरम्' इति ।

[5] 'यथोक्तकारीत्यायस्तु' इति पातृकापाठ अशुद्ध इव भाति । अतः मार्कण्डेयपुराणपाठः गृहीतोऽत्र ।

---

[1] निरन्धनः [घ]   [3] अधोगति (ग)

मोहे ज्ञानप्रदातारः तमस्या[1]लोकदायिनः ।
तोयचन्दनदातारः ते नराः सुखमृत्यवः ॥ ६३ ॥

[2]कूटसाक्षी मृषावादी यश्चासदनुशास्ति वै ।
ते मोहमृत्यवस्सर्वे तथा वै वेदनिन्दकाः ॥ ६४ ॥

विभीषणाः पूतिगन्धाः [3]कूटमुद्गरपाणयः ।
आगच्छन्ति दुरात्मानो यमस्य पुरुषास्तदा ॥ ६५ ॥

प्राप्तेषु दृक्पथं तेषु जायते तस्य वेपथुः ।
पञ्चाङ्गे खन्यमानस्तु कालपाशेन धर्षितः ॥ ६६ ॥

नास्य वागस्फुटत्वात्तु एकवर्णाभिभाव्यते[4] ।
दृष्टिर्विभ्राम्यते त्रासाच्छ्वासाच्छुष्यत्यथाननम् ।
म्रियते पश्यतामेव गलो गुरुगुरायते[5] ॥ ६७ ॥

एकोत्तरं मृत्युशतमस्मिन्देहे प्रतिष्ठितम् ।
तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ॥ ६८ ॥

ये चात्रागन्तवः प्रोक्ताः ते प्रणश्यन्ति भेषजैः ।
जपहोमप्रदानैश्च, कालमृत्युर्न शाम्यति ॥ ६९ ॥

विविधा व्याधयः शस्त्रं सर्पाद्याः प्राणिनस्तथा ।
विषाणि[6] चाग्निचोराश्च मृत्योर्द्वाराणि देहिनाम् ॥ ७० ॥

---

1 आलोकः प्रकाशः । 2 कूटसाक्षी, वञ्चनार्थं साक्षिप्रमाणवादी ।

3 कूटमिति किञ्चिदायुधम् । अथवा शिखरिमुद्गरः ।

4 भयात्किमपि स्खलन् जपति, भणति वा पूर्वापरसम्बन्धरहितम् ।

6 चाभिचाराश्चेति पद्मपुराणे दृश्यते ।

---

5 घुरुघुरायते (ख-च)

पीडितं [1]रोगसर्पाद्यैरपि धन्वतरिः स्वयम् ।
स्वस्थीकर्तुं न शक्नोति कालप्राप्तं हि देहिनम्[2] ॥ ७१ ॥

नौषधिर्न तपो दानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालप्रपीडितम् ॥ ७२ ॥

स्वदारपुत्रमित्राणि राज्यैश्वर्यसुखानि च ।
आबद्धानि च वैराणि मृत्युः सर्वाणि भिन्दति ॥ ७३ ॥

इति श्रीमत्पुराणसारे[3] जीवदुःखनिरूपणं नाम
द्विषष्टितमोऽध्यायः

---

[1] सर्वरोगाद्यैरिति पद्मपुराणे पाठः ।

[2] कालमृत्युग्रस्तस्य चिकित्सायां धन्वन्तरिरपि नोपयोगायेत्यर्थः ।

---

[3] जीवेति 'ग' मातृकायां नास्ति ।

## त्रिषष्टितमोऽध्यायः

[ यमलोकपीडाविवरणम् तत्र यमपुरवर्णनम् ]

सुमतिः —

[1]ततो जीवा यमस्याशु पाशै[2]र्बद्धास्सुदारुणैः ।
दण्डप्रहारसम्भ्रान्ताः कृष्यन्ते दक्षिणां दिशम् ॥ १ ॥

ये पुनः क्रूरकर्माणः पापा दानविवर्जिताः ।
ते घोरेण पथा यान्ति दक्षिणेन यमालयम् ॥ २ ॥

षडशीतिसहस्राणि योजनानामतीत्य वै ।
वैवस्वतपुरं ज्ञेयं नानारूपमवस्थितम् ॥ ३ ॥

समीपस्थमिवाभाति नराणां शुभकर्मणाम् ।

### पापिनां यमपुरदर्शनप्रकारः

पापानामतिदूरस्थं तथा रौद्रेण गच्छताम् ॥ ४ ॥

[3]ताम्रकण्टकयुक्तेन पाषाणैर्निचितेन च ।
लोहसूचीमुखैर्दर्भैः संच्छन्नेन[4] (पथा) क्वचित् ॥ ५ ॥

[5]डाकिनीभिश्च घोराभिर्विकरालैश्च राक्षसैः ।
व्याधिभिश्च महाघोरैः पीड्यमाना व्रजन्ति च ॥ ६ ॥

निशितायुधवर्षेण चूर्ण्यमानाश्च सर्वशः ।
प्रदीप्ताङ्गारवर्षेण दह्यमाना व्रजन्ति च ॥ ७ ॥

---

[1] प्रायोऽत्र वर्णितो भागः शिवपुराणस्थः । शिवपुराणम् उमासंहिता ५ अ.९

[4] सर्वत्र मातृकासु नखो क्वचिदिति पठ्यते । अयं पथेति पाठः शिवपुराणस्थः ।

[5] डाकिनी नाम डाय भयदानाय अकति कुटिलं व्रजतीति तादृशी ।

---

[2] बद्धाश्च (क ख घ)   [3] तीव्रकण्टक (ग)

इत्थं मार्गेण रौद्रेण [1]पाथेयरहितेन च ।
निरालम्बेन दुर्गेण [2]निर्जलेनासमेन च ॥ ८ ॥

तमोरूपेण कष्टेन [3]सर्वदुःखाश्रयेण च ।
नीयन्ते देहिनः सर्वे ये मूढाः पापकारिणः ॥ ९ ॥

यमदूतैर्महाघोरैस्तदाज्ञाकारिभिर्बलात् ।
एकाकिनः पराधीनाः मित्रबन्धुविवर्जिताः ॥ १० ॥

शोचन्तः स्वानि कर्माणि रुदन्तश्च मुहुर्मुहुः ।
प्रेतभूता [3]विवस्त्राश्च शुष्ककण्ठोष्ठतालुकाः ॥ ११ ॥

छिन्नाग्रपादहस्ताश्च च्छिन्नकर्णोष्ठनासिकाः ।
सञ्छिन्नशिश्नवृषणाश्छिन्नभिन्नाङ्गसन्धयः ॥ १२ ॥

प्रभिद्यमानाः कुन्तैश्च भिद्यमानाश्च सायकैः ।
शस्त्रैश्च विविधैर्घोरैर्ज्वलिताग्निसमप्रभैः ॥ १३ ॥

इतस्ततः प्रधावन्ति हन्यमाना निराश्रयाः ।
याचमानाश्च सलिलमन्नं चापि बुभुक्षिताः ॥ १४ ॥

[5]वस्त्रं प्रार्थयमानाश्च [6]शीतार्ताश्चानलं पुनः ।
[7]नीयन्ते द्वादशाहेन धर्मराजपुरे नराः ॥ १५ ॥

---

[1] पाथेयमिति मृतकस्य कृते प्रापणीयमन्नादिकम् । यमलोकस्य पथि साधुभूतम् ।

[2] निर्जितेनेति मातृकापाठः असंबद्ध इति भाति । ऊर्ध्वं प्रदत्तः शिवपुराणपाठः । [5] छायामिति शिवपुराणपाठः । [7] अस्मादुपरितन आध्यायान्तं मार्कण्डेयपुराणस्थः पाठः खण्डः २ अ.१०

---

[3] सर्वरूपा (क ख घ) [4] विवर्णा (क ख घ) [5] शीताश्चार्तालयं (ग)

स्वेन कर्मविपाकेन देहान्तरगताश्च ते ।
[1]तत्र ये बान्धवास्तोयं प्रक्षिपन्ति तिलैस्सह ॥ १६ ॥

[2]ये च पिण्डं प्रयच्छन्ति भुञ्जतेऽन्नं पिबन्ति तत् ।
तैलाभ्यङ्गं बान्धवानामङ्गसंवाहनञ्च यत् ।
[3]तेन चाप्यायिता जीवा यच्चाश्नन्ति च बान्धवाः ॥ १७ ॥

इति श्रीमत्पुराणसारे नरकमार्गनिरूपणं नाम
एकषष्टितमोऽध्यायः

---

[1] यद्बान्धवाः, यच्च पिण्डमिति मा.पु. पाठः ।
[2] ते च पिण्डमिति मातृकापाठः न युज्यतेऽत्र ।
[3] तेन चाप्यायते जन्तुरिति मा.पु. पाठः ।

## चतुष्षष्टितमोऽध्यायः

[ पिण्डदानादिना शक्त्युपचयविषये श्रीकृष्णकथानकनिरूपणम् ]

— ० —

### सत्राजितेन स्यमन्तकावाप्तिः-मणिमहिमवर्णनञ्च

सुमतिः —

अत्र ते कथयिष्यामि इतिहासं पुरातनम् ।
सत्राजिच्च प्रसेनश्च भ्रातरौ द्वौ बभूवतुः ॥ १ ॥

आसीत्सत्राजितस्सूर्यो भक्त्यास्य परमः सखा ।
प्रीतस्तस्मै [1]वरं प्रादास्सूर्यस्तुष्टः स्यमन्तकम् ॥ २ ॥

स तं बिभ्रन्मणिं कण्ठे भ्राजमानो यथा रविः ।
सत्राजित्स्वगृहं श्रीमत्कृतकौतुकमङ्गलम् ॥ ३ ॥

प्रविश्य देवसदने मणिं [2]विप्रा न्यवेशयत् ।
दिने दिने स्वर्णभारानष्टौ स सृजति द्विजाः ॥ ४ ॥

दुर्भिक्ष[3]मार्यनिष्टानि सर्वा[4]भिव्याधयोऽशुभाः ।
न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ॥ ५ ॥

स याचितो मणिः क्वापि यदुराजाय शौरिणा ।
नैवार्थकामुकः प्रादाद्याञ्चाभङ्गमतर्कयत् ॥ ६ ॥

---

[1] विषयोऽयं कथा च भागवतात्संगृहीतः । भागवतम् स्क.१० अ.५६
मणिमिति भागवते ।

[2] विप्रैर्न्यवेशयत् इति भागवते विप्रा इत्यत्र, सम्बोधनं विप्राणाम् ।

[3] मारिर्नाम दुर्भिक्षरोगहिजननी क्षुद्रदेवता, तस्याः प्रभावो वा ।

[4] आधिर्मानसीव्यथा व्याधिर्दैहिकी व्यथा रोगादिजन्या ।

### मणिकण्ठस्य प्रसेनस्य वनगमनम्-जाम्बवता प्रसेनवधः

तमेकदा मणिं कण्ठे [1]प्रतिमुच्य महाप्रभम् ।
[2]प्रसन्नो हयमारुह्य मृगयां [7]व्यचरद्वने ॥ ७ ॥

प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी ।
गिरिं विशन् जाम्बवता निहतो मणिमिच्छता ॥ ८ ॥

सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले ।

### सत्राजितः शोकः—कृष्णस्यापवादप्राप्तिः

अपश्यन्भ्रातरं भ्राता सत्राजित्पर्यतप्यत ॥ ९ ॥

प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ।
भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽ[3]जपञ्जनाः ॥ १० ॥

भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ।
तत्प्रमार्ष्टुं प्रसेनस्य पदवीमन्वपश्यत ॥ ११ ॥

हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने ।
तं चाद्रिपृष्ठे निहतं ऋक्षेण ददृशुर्जनाः ॥ १२ ॥

ऋक्षराजबिलं भीममन्धेन तमसाऽऽवृतम् ।
एको विवेश भगवान् व्यवस्थाप्य बहिः प्रजाः ॥ १३ ॥

[4]अथ प्रविष्टश्च धात्र्याः कुमारं लालयन्त्या वाणीं शुश्राव ।
गुहायां कृष्णर्क्षयोर्युद्धम् । कृष्णं मृतं सम्भाव्य तस्मै ज्ञातिकृतं पिण्डप्रदानम् । तेन कृष्णस्य शक्तिप्राप्तिः ।

---

[5] प्रसेन इति भागवतम् । [4] अस्मादनन्तरं विष्णुपुराणभागो दृश्यते ।
वि.पु. अंशः ४ अ.१३

---

[1] प्रतिमुच्य (क) [3] व्यचरद् (क ख ग घ) [7] जपञ्जनम् (ग)

सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥ १४ ॥

इत्याकर्ण्यालब्धस्यमन्तकोऽन्तर्बिलं प्रविष्टः सुकुमारक्रीडनकीकृतं स्यमन्तकं ददर्श । तत्र स्यमन्तकाभिलाषिचक्षुषं अपूर्वपुरुषमागतमवेक्ष्य धात्री [1]त्राहि त्राहीति व्याजहार । [2]तदार्तश्रवणानन्तरममर्षपूर्णहृदयः स जाम्बवानाजगाम । तयोश्च परस्परमुद्धतामर्षयोर्युद्धमेकविंशतिदिनान्यभवत् । ते च यदुसैनिका स्तत्र सप्ताष्टदिनानि [3]तन्निष्क्रान्तिमुदीक्ष्यमाणाः तस्थुः । अनिष्क्रमेण 'मधुरिपुरसावप्यस्मिन्बिले बलिना ऋक्षेणात्यन्तनाशमाप्तो भविष्यति । अन्यथा च तस्य जीवतः कथमेतावन्ति[4] शत्रुक्षये व्याक्षेपो भविष्यति ।' इति कृताध्यवसाया द्वारकामागम्य 'हतः कृष्ण' इति कथयामासुः । अथ तद्बान्धवाः कालोचितमखिलमुपरतक्रिया[5]कलापं चक्रुः । ततश्चास्य युध्यमानस्यातिश्रद्धादत्तविशिष्टपात्रोपयुक्तान्नतोयादिना कृष्णस्य बलप्राणपुष्टिरभूत् । इतरस्यानुदिनमतिगुरु[6]पुरुषावार्यनिष्ठुरप्रहारपातपीडिताखिलावयवस्य निराहारतया बलहानिरभूत् । जितश्च भगवता जाम्बवान् प्रणिपत्य व्याजहार ।

अवश्यं [7]भगवतास्मत्स्वामिनां [8]रामेण इव सकलपरायणस्यांशेन [9]भवता भवितव्यमित्युक्तस्तस्मै भगवानवनिभारावतरणमखिलमाचचक्षे । स

---

[1] त्राहीति परस्मैपदमार्षम् । [2] आर्तरवेति विष्णुपुराणपाठः समीचीनः ।
[3] तस्य कृष्णस्येत्यर्थः । [4] दिनानीति विष्णुपुराणपाठो योज्यः ।
[5] कृशं तत्रैवास्येति आपपाठः । अतः 'कलापं चक्रुः । तताश्चास्येति विष्णुपुराणपाठो गृहीतः । [6] पुरुषाभेद्यम.नस्येति विष्णुपुराणम् ।
[8] रामेणेव सकलजगत्परा [9] भगवतेति विष्णुपुराणपाठः ।

---

[7] भगवता .... .... .... श्रीरामेण
सकललोकपरायणस्य ब्रह्मणोंऽशे भवता भवितव्य (ग)

जाम्बवान्प्रणिपत्यैनं पुनरपि प्रसाद्य जाम्बवतीं कन्यां [1]गृहागतायार्घ्यभूतां ग्राहयामास। स्यमन्तकमणिमपि प्रणिपत्य तस्मै ददौ। अच्युतो जाम्बवकन्यया द्वारकामाजगाम। यथानुभूतमशेषं यादवसमाजे यथावदाचचक्षे। स्यमन्तकं सत्राजिते दत्वा मिथ्याभिशस्तिशुद्धिमवाप।

## पिण्डदानप्रशंसनम्

[2]यस्मादाप्यायानं प्राप जलान्नाद्यैर्हरिः स्वयम्।
दातव्योऽनुदिनं पिण्डः तस्मात्प्रेताय सत्तमाः ॥ १५ ॥
दिनानि तानि चेच्छातः कर्तव्यं द्विजभोजनम्।
प्रेतस्तृप्तिं ततो याति बन्धुवर्गेण भुञ्जतः ॥ १६ ॥

इति श्रीमत्पुराणसारे अमृताप्यायनोपायकथनं नाम
चतुष्षष्टितमोऽध्यायः

---

[2] तस्मादिति मातृकापाठापेक्षया यस्मादिति साधुः।

---

[1] गृहाणार्घ्यभूतां [क ख घ]

## पञ्चषष्टितमोऽध्यायः

### यमलोकपीडानिरूपणे पापिभिः यमदर्शनप्रकारः

[1]सूतः —

द्वादशाहात्परं [2]घोरमावासं भीषणाकृतिम् ।
[3]याम्यं पश्यन्ति पापिष्ठाः कृष्यमाणा इतस्ततः[4] । ॥ १ ॥

गतमात्रोऽतिरक्ताक्षं भिन्नाञ्जनचयोपमम् ।
[5]दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ २ ॥

अष्टादशभुजं क्रुद्धं भिन्नाञ्जनचयोपमम् ।
सर्वायुधोद्यतकरं यमदण्डेन तर्जकम् । ॥ ३ ॥

महामहिषमारूढं दीप्ताग्निसमलोचनम् ।
[6]निर्भत्सयन्तं पापिष्ठान्महामेरुमिवोच्छ्रितम् ॥ ४ ॥

मृत्युकालान्तकादीनां मध्ये पश्यन्ति वै[7] यमम् ।
घोरं पश्यन्ति पापिष्ठाश्चित्रगुप्तं तथैव च ॥ ५ ॥

चित्रगुप्तादिभिः सभ्यैर्मध्यस्थैः समदर्शिभिः ।
शुभाशुभफलं तत्र देहिनां प्रविचार्यते ॥ ६ ॥

गर्भस्थैर्जायमानैश्च बालैस्तरुणमध्यमैः ।
स्त्रीपुंनपुंसकैर्वृद्धै[8]र्गन्तव्यं सर्वजन्तुभिः ॥ ७ ॥

---

[1] अस्याध्यायस्य विषयसंग्रहः प्रायः शिवपुराणमार्कण्डेयपुराणाभ्यां संगृहीत इति भाति । शिवपु. उमासंहिता अ.२, मार्कण्डेय.पु. खं.१ अ.१०

[3] पुरं ततः इति मार्कण्डेयपुराणपाठः ।

[7] गन्तव्यः सर्वजन्तुभिरितिमातृकापाठ; अस्वरसः ।

---

[2] घोरं तं वासं (क ख ग घ) [4] नान्यं (क ख ग घ) [5] दृष्ट्वा [क]

[6] बिभ्रत्स्वयं तं [क ख घ] [7] यमः [क]

न तेऽत्र प्राणिनस्सन्ति ये न यान्ति यमालयम् ।
अवश्यं सुकृतं कर्म भोक्तव्यं यद्विचारितम् ॥ ८ ॥
तन्निर्दिष्टां ततो याति गतिं जन्तुश्शुभाशुभम् ।

## नरकयातनानिरूपणम्

[1]ततः पापविशुद्ध्यर्थं क्षिप्यते नरकार्णवे ॥ ९ ॥
अष्टाविंशतिरेवाधः क्षितेर्नरककोटयः ।
सप्तमस्य [2]तलस्यान्तः घोरे तमसि संश्रिताः ॥ १० ॥
रौरवाद्यमवीच्यन्तं नरकाणां शतं स्मृतम् ।
चत्वारिंशत्समधिकं महानरकमण्डलम् ।
तेषु पापाः प्रमुच्यन्ते नराः कर्मानुरूपतः ॥ ११ ॥
कशाभिरग्निवर्णाभिर्लोहदण्डैस्सकण्टकैः ।
हन्यन्ते किङ्करैर्घोरैः समन्तात्पापकारिणः ॥ १२ ॥
छेदयन्ति च शस्त्रौघैः भेदयन्ति पुनः पुनः ।
क्षिप्त्वा क्षिप्त्वा कुठारेण क्षिपन्ति क्षारकर्दमे ॥ १३ ॥
पाशेन बद्ध्वा गात्राणि पूयविण्मूत्रकर्दमे ।
प्रक्षिपन्ति समुद्दीप्ते महाज्वालानिले तथा ॥ १४ ॥
क्वाथयन्ति च [3]मूषायां तैलान्तर्देहिनं पुनः ।
उत्क्षिप्य खड्गधारासु पातयन्ति पुनः पुनः ॥ १५ ॥

---

[1] उमासंहितायाः चतुर्थाध्यायविषयसंग्रहः । [2] पाठोऽयं शिवपुराणस्य ।
[3] मूषेति सुवर्णादिकानां शुद्धीकरणार्थं तुषाग्निमिलितो मृण्मयपात्ररूपः ।

---

[2] तलस्येते [क ख ग घ]

बद्ध्वा दास्यन्ति सिंहेभ्यो व्याघ्रेभ्यश्चातिनिर्घृणाः ।[1]
ततःस्वमांसमुत्कृत्य तिलमात्रप्रमाणतः ॥ १६ ॥
दास्यन्ति खादितुं तेषां सूच्यग्रेण तु शोणितम् ।
हस्तपादललाटेषु कीलिता लोहशङ्कुभिः ॥ १७ ॥
क्रिमिभिः प्राणिभिश्चोग्रैर्लोहतुण्डैश्च वायसैः ।
दश्यन्ते जन्तुभिः क्षुद्रैः क्षुत्पिपासातिदुःखिताः ॥ १८ ॥
इति चित्रैर्वधैर्घोरैः [2]पीड्यमानाः स्वकर्मभिः ।
म्रियन्ते नैव पापिष्ठा यावत्पापस्य संक्षयः ॥ १९ ॥
पुत्रमित्रकलत्रार्थं यदपुण्यं कृतं त्वया[3] ।
[4]एकाकी दह्यसे तेन न तु [5]पश्यसि तानिह ॥ २० ॥
आत्मनैव कृतं पापं भोक्तव्यं सर्वथाऽऽत्मना ।
तत्किमात्मोपघातार्थं मूढ पापं कृतं त्वया ॥ २१ ॥
एवं बहुविधैर्वाक्यैरुपालब्धो मदोत्कटैः ।
शोचन्तः स्वानि कर्माणि तूष्णीं तिष्ठन्ति मानवाः ॥ २२ ॥
देवद्रव्यविनाशेन गुरुद्रव्यादिकर्मभिः ।
क्रमात्सर्वेषु पच्यन्ते नरकेष्वामहीक्षयात् ॥ २३ ॥
महापातकिनश्चापि सर्वेषु नरकाग्निषु ।
आचन्द्रतारकं यावत्पीड्यन्ते विविधैर्वधैः ॥ २४ ॥

---

[3] संसारपोषणार्थमपि स्वेन कृतस्य पापचयस्य दुष्फलभोक्ता स्वयमेव । न तु बन्धवः । येषां कृते पापमाचरितमासीत् ।

---

[1] श्चेति निर्घृणा [क'ख घ] [2] यात्यमानाः [क ख घ] [4] एका च [क ख घ]
[5] पश्यति [क]

[1]तथा पातकिनस्सर्वे निरयार्णवकारिषु ।
चतुर्दशसु पच्यन्ते कल्पान्तं विविधैर्वधैः ॥ २५ ॥

उपपातकिनश्चापि तदर्धं यान्ति मानवाः ।
परस्त्रीद्रव्यहरणहिंसा[2]हाससमाश्रयैः ॥ २६ ॥

[3]अनिबद्धप्रलापाद्यैः [4]पैशुन्यपरुषानृतैः ।
शेषैः पापैस्तदर्धं च कालं चापि तथाविधम् ॥ २७ ॥

तस्मात्पापं न कुर्वीत चञ्चले जीविते सति ।
पापेन हि ध्रुवं यान्ति [5]नरकेषु स्वयं नराः ॥ २८ ॥

एवं क्लिष्टा [6]विशुद्धाश्च सावशेषेण कर्मणा ।
ततः क्षितिं समासाद्य पुनर्जायन्ति[7] देहिनः ॥ २९ ॥

तत्रानुभूय दुःखानि जायन्ते कोटियोनिषु ।
निष्क्रान्तेः कोटियोनिभ्यः क्रमाज्जायन्ति[8] देहिनः ॥ ३० ॥

स्थावरा विविधाकाराः तृणगुल्मादिभेदतः ।
तत्रानुभूय दुःखानि जायन्ते कीटयोनिषु ॥ ३१ ॥

नीताः कीटकयोनिभ्यः क्रमाज्जायन्ति पक्षिणः ।
संक्लिष्टाः पक्षिभावेन भवन्ति मृगजातिषु ॥ ३२ ॥

---

[1] मुख्यतया अयं भागः कस्मात् पुराणाद्गृहीत इति न ज्ञायते । परन्तु अत्रत्याः विषयाः प्रायः शिववराहब्रह्मगरुडमार्कण्डेयपुराणेभ्यः संगृहीताः स्युः । [4] पैशुन्यापरुषेति मातृकायां न सङ्गच्छते ।
[7] आर्षं परस्मैपदम् ।

---

[2] भार [क ख घ] [3] अनिबन्ध [क ख] [5] नरकानेकविंशतिम् [ग]
[6] विशुद्धात्मा [क ख घ] [8] पक्षिणः [क ख घ]

मृगदुःखमतिक्रम्य जायन्ते पशुयोनिषु ।
अन्यासु चैव पापासु दुःखदायिषु योनिषु । ॥ ३३ ॥

क्रमाद्द्रोयोनिमासाद्य पुनर्जायन्ति मानवाः
एवं योनिषु सर्वासु परिक्रम्य क्रमेण तु । ॥ ३४ ॥

कालान्तरवशाद्यन्ति मानुष्यमतिदुर्लभम् ।
चण्डाल[1]पुल्कसाद्यासु जायन्ते मानवाः पुनः ॥ ३५ ॥

एवं तु पापकर्माणो नरकेषु पतन्त्यधः ।
यथा पुण्यकृतो यान्ति तन्मे निगदतः शृणु ॥ ३६ ॥

इति श्रीमत्पुराणसारे नरकयातनाकथनं नाम
पञ्चषष्टितमोऽध्यायः

---

[1] जातो निषाच्छूद्रायां जात्या भवति पुक्कसः । पुक्कस एव पुल्कसः ।
मनुस्मृतिः अ. १० श्लो. १८

## षट्षष्टितमोऽध्यायः

[ यमपुरगमने सौम्यमार्गानुभवनिरूपणम् ]

सुमतिः —

[1]तत्र ये शुभकर्माणः सौम्यचित्ता दयान्विताः ।
ते नरा यान्ति सौम्येन पथा यमनिकेतनम् ॥ १ ॥

वेदाग्निगुरुविद्यानां मातापित्रोश्च पूजकाः
पूज्यमाना नरा यान्ति कामितेन [2]यथासुखम् ॥ २ ॥

आरामकर्ता च्छायासु शीतलासु सुखं व्रजेत् ।
यान्ति पुष्पकयानेषु पुष्पारामप्रदायिनः ॥ ३ ॥

देवायतनकर्तारो यतीनामाश्रमस्य च ।
आतौँषधिप्रदातारः सुखं यान्ति यमालयम् ॥ ४ ॥

अन्नपानप्रदानेन गुरुशुश्रूषणेन च ।
रौप्यानडुहयानेन दिव्ययानेन गच्छति ॥ ५ ॥

सर्वकामसमृद्धेन पथा गच्छन्ति गोप्रदाः ।
शय्याऽऽसनप्रदानेन गृहदानेन मानवः ॥ ६ ॥

हेमरत्नप्रदानेन कामितेन पथा व्रजेत् ।
इत्येवमादिभिर्दानैः सुखं यान्ति यमालयम् ॥ ७ ॥

तं चापि [3]धर्मराजानं नराः पुण्यानुरूपतः ।
पश्यन्ति सौम्यवदनं मित्रभूतमिवात्मनः ॥ ८ ॥

---

[1] अत्रत्या विषयाः प्रायः पद्मवराहपुराणाभ्यां सङ्गृहीताः दृश्यन्ते । प.पु· भूमिखण्डः अ. ६८ (ययात्युपाख्याने) व.पु. अ.२०५,२०६,२०७

[3] नान्तमार्षम् ।

---

[2] पथा [ग]

तत्र ये शुभकर्माणः तांश्च संमानयेद्यमः ।
स्वागतासनदानेन पाद्यार्घ्येण प्रियेण च ॥ ९ ॥

धन्या वयं पुण्यवतां भवतां दर्शनेन हि ।
इति संतोषसंयुक्तस्सन्तोषयति तान् यमः ॥ १० ॥

यूयमेव महात्मानः स्वात्मनो हितकारिणः ।
येन दिव्यसुखार्थाय भवद्भिः सुकृतं कृतम् ॥ ११ ॥

इदं विमानमारुह्य दिव्यस्त्रीभोगभूषिताः ।
स्वर्गं [1]गच्छध्वमतुलं सर्वकामसमन्वितम् ॥ १२ ॥

ते यमेनापि निर्दिष्टाः यान्ति पुण्यां गतिं नराः ।

### पुण्यवतां स्वर्गसुखवर्णनम्

प्रगीतगन्धर्वगणाः प्रनृत्ताप्सरसां गणाः ॥ १३ ॥

[1]हारनूपुरमाधुर्यशोभितान्यतुलानि तु ।
विमानानि च सम्प्राप्य स्वर्गलोकं व्रजन्ति ते ॥ १४ ॥

तत्र दिव्यन्महाभोगान्भुक्त्वा कल्पशतं नराः ।
तदन्ते विष्णुभवने तावत्कालं [2]वसन्ति च ॥ १५ ॥

वैष्णवैर्विविधैर्भोगैः स्त्रीसहस्रैस्तु पूजिताः ।
विष्णुलोकाद्ब्रह्मलोकं सम्प्राप्य तदनन्तरम् ॥ १६ ॥

---

[1] आत्मनेपदमार्षम् । [2] पुण्यकृतां स्वर्गवासस्तु कल्पानां द्वित्रिशतपर्यन्तः । मानवत्वं पुनश्च तेषां ब्रह्मादिलोकवासानन्तरमिति । अल्पस्यैव पुण्यकर्मणः फलं सुमहदिति वर्णितं भवति ।

---

[2] व्रजन्ति (क ख घ)

भोगान्नानाविधान् भुक्त्वा तावत्कल्पमनुत्तमम् ।
प्रजापतीन्द्रगन्धर्वयक्षलोकेष्वनुक्रमात् ॥ १७ ॥

### पुनर्जन्मप्राप्तिः स्वर्गसुखनिन्दनं च

[1]भुक्त्वा तु विपुलान्भोगाञ्जायन्ते मानवा भुवि ।
कुले महति विप्राणामन्येषां च महात्मनाम् ॥ १८ ॥

पूर्वपुण्यानुभावेन राज्यैश्वर्यगुणान्विताः ।
भोगान् सम्प्राप्नुवन्त्यग्र्यान् ततो यान्त्यूर्ध्वमुत्पथम् ॥ १९ ॥

पुनश्च जन्ममरणं प्राप्नुवन्ति च मानवाः ।
कदाचित्स्वर्गमायान्ति कदाचिन्निरयं नराः ॥ २० ॥

स्वर्गं च निरयं चैव कदाचित्प्राप्नुवन्त्यथ ।
कदाचिदत्रैव पुनर्जाता स्वं कर्म भुञ्जते ॥ २१ ॥

[2]स्वर्लोके नरके चैव दुःखं तावत्समं स्मृतम् ।
यथेह सर्पतश्चोराद्व्याघ्रादेश्च भयं नृणाम् ।
स्वर्लोके च तथा दैत्यदानवेभ्यो महद्भयम् ॥ २२ ॥

स्वर्गेऽपि दुःखमतुलं यदारोहणकालतः ।
प्रभृत्यहं पतिष्यामीत्येतन्मनसि वर्तते ॥ २३ ॥

यथास्मान्मृत्युतो मर्त्या भयं यान्ति सुदारुणम् ।
तत्रापि पतानाद्भीतिस्तथास्त्येव दिवौकसाम् ॥ २४ ॥

दुःखमुत्पद्यते पुंसामिह दृष्ट्वा परां श्रियम् ।
यथा तथैव स्वर्गेऽपि देवानां दुःखसन्ततिः ॥ २५ ॥

---

[1] मार्कण्डेयपुराणान्तर्गतगर्भस्थितिवर्णनसाम्यं दृश्यतेऽत्र । म.पु. अ. १०

[2] स्वर्गे द्विविधं दुःखम् । एकन्तु दैत्यदानवाक्रमणजन्यम् । द्वितीयं पुण्यक्षये स्वर्लोकाद्भ्रंशरूपमिति ।

छिन्नमूलस्तरुर्यद्वदवशः पतति क्षितौ ।
पुण्यमूलक्षयाच्चद्वद्गां[1] पतन्ति दिवौकसः ॥ २६ ॥

प्रायेण श्रीमदालेपान्नहुषाद्या महीभृतः ।
स्वर्गं प्राप्यापि पतिताः प्रक्षीणे पुण्यसञ्चये ॥ २७ ॥

इति श्रीमत्पुराणसारे सौम्यमार्गसुखानुभवकथनं नाम
षट्षष्टितमोऽध्यायः

---

[1] गां, भूमिम् ।

---

[a] शरीरे सौम्यमार्गनिरूपणं नाम (ख ग घ)

## सप्तषष्टितमोऽध्यायः

[ पुण्यक्षयात्स्वर्गच्युतिनिरूपणे ययात्युपाख्यानम् ]

सुमतिः —

[1]अस्मिन्नर्थे पुरावृत्तमाख्यानं कथयामि वः ।
ययाति[2]र्नाहुषः सम्राडासीत्सत्यपराक्रमः ।
स पालयामास महीमीजे च विविधैर्मखैः ॥ १ ॥

प्रीतियुक्तो नृपश्रेष्ठो बुभुजे विषयान्बहून् ।
धर्माविरुद्धं राजेन्द्रो यथा भवति वै[3] तथा ॥ २ ॥

स्वधर्मेण प्रजाः सर्वा यथावदनुरञ्जयन् ।
ययातिः पालयामास साक्षादिन्द्र इवापरः ॥ ३ ॥

ततस्स नाहुषो राजा ययातिः पूरुमात्मजम् ।
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः ॥ ४ ॥

उषित्वापि वने वासं ब्राह्मणैस्तापसैस्सह ।
फलमूलाशनो भूत्वा ततः स्वर्गं जगाम ह ॥ ५ ॥

स्वर्गतस्स तु राजेन्द्रो निवसन्देवसद्मनि ।
पूजितस्त्रिदशैस्साध्यैर्मरुद्भिर्वसुभिस्तथा ॥ ६ ॥

देवलोकाद्ब्रह्मलोकं सञ्चरन्पुण्यकृद्वशी ।
अवसत्पृथिवीपालो दीर्घकालमिति श्रुतिः ॥ ७ ॥

---

[1] एतदध्यायान्तर्गतं ययात्युपाख्यानं महाभारतस्थम् । माहाभारतम् आदिपर्व अ. ८०-८१-८२-८३

---

[2] नहुषः (क)    [3] तं (क)

स कदाचिन्नृपश्रेष्ठो ययातिश्शक्रमागतः ।
कथान्ते तत्र शक्रेण पृष्टस्स पृथिवीपतिः ॥ ८ ॥

शक्रः —

सर्वाणि कर्माणि समाप्य[1] राजन् गृहान्परित्यज्य वनं गतोऽसि ।
तत्त्वां पृच्छामि नहुषस्य पुत्र [2]केनासि तुल्यस्तपसा ययाते ॥ ९ ॥

ययातिः —

नाहं देवमनुष्येषु [3]सगन्धर्वमहर्षिषु ।
आत्मनस्तपसा तुल्यं किञ्चित्पश्यामि वासव ॥ १० ॥

इन्द्रः —

यतोऽवमंस्थाः सदृशान्श्रेयसश्च अल्पीयसश्चापि निजप्रभावात् ।
तस्माल्लोकाश्चान्तवन्तस्तवेमे क्षीणे पुण्ये पतितास्यद्य राजन् ॥ ११ ॥

ययातिः —

सुरर्षिगन्धर्वनरावमानात् क्षयं गता मे यदि शक्रलोकाः ।
इच्छेयं वै सुरलोकाद्विहीनः सतां सकाशे पतितुं देवराज ॥ १२ ॥

इन्द्रः —

सतां सकाशे पतितासि राजंश्च्युतः प्रतिष्ठां यत्र लब्धासि भूयः ।
एवं विदित्वा [4]तु पुनर्ययाते न तेऽवमान्याः सदृशः श्रेयसश्च ॥ १३ ॥

सम्बन्धिनो ज्ञातिसुहृज्जनाश्च क्षीणे वित्ते सन्त्यजन्तीह मर्त्यम् ।
तथा स्वर्गे क्षीणपुण्यं मनुष्यं त्यजन्ति सद्यः सेश्वरा देवसङ्घाः ॥ १४ ॥

---

[1] ममापि [क] [2] केनास्ति [क ग] [3] न गन्धर्व [ग] [4] नहुषमाश्वास्य सर्वान् सतोऽवमेस्थाः सदृशां श्रेयसश्च [क ख ग घ] नाहुषमाश्वा .... .... श्रेयसश्च [घ]

एतस्मिन्नेव काले तु नैमिशे [1]पार्थिवर्षभाः ।
प्रतर्दनो वसुमनाः शिबिरौशीनरो नृपः ॥ १५ ॥

वाजपेयेन यज्ञेन तर्पयन्ति सुरेश्वरम् ।
तेषामध्वरजं धूमं[2] स्वर्गद्वारमुपस्थितम् ॥ १६ ॥

ययातिरुपजिघ्रन्वै तेषां मध्ये पपात ह ।
ततस्ते स्वर्गतो भ्रष्टं दौहित्रा[3] नहुषस्य वै ।[4]
ययातिं तारयामासुः स्वकृतैः पुण्यकर्मभिः ॥ १७ ॥

सद्भिस्सम्मानितस्सोऽपि पार्थिवैर्भूरिदक्षिणैः ।
अभ्यनुज्ञाय दौहित्रान्ययातिर्दिवमास्थितः ॥ १८ ॥

एवं स्वर्गेऽपि देवानां दुःखं पुण्यस्य संक्षयात् ।
अकस्मात्पातनाच्चापि दुःख स्वर्गे महत्तरम् ॥ १९ ॥

इति श्रीमत्पुराणसारे स्वर्गनिन्दाकथनं नाम
सप्तषष्टितमः सर्गः

---

[4] ययातेः पुत्री माधवी । माधव्याः पुत्रः वसुमनाः शिबिः प्रतर्दनश्च ।

[1] पार्थिवास्शुभाः (ग) [2] धर्ममिति मातृकासु । [3] दौहित्रं (क ख ग घ) दौहित्रं (घ)

## अष्टषष्टितमोऽध्यायः

[ यशोनाशात्स्वर्गच्युतिनिरूपणे इन्द्रद्युम्नेतिहासः ]

सुमतिः —

[1]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

अस्ति खलु राजर्षिरिन्द्रद्युम्नो नाम। कीर्तिस्तस्य व्युच्छिन्नेति सहसा त्रिदिवा[2]त्पातितः[3]। स मार्कण्डेयमुपातिष्ठदब्रवीच्च। प्रत्यभिजानाति मां भवानिति। मार्कण्डेयोऽब्रवीत्। नाभिजानामि भवन्तमहमिति। अस्ति हिमवति प्राकारकर्णो नामोलूकः। स यदि जानीयात्। स तत्र जगाम यत्र बभूवोलूकः। अथैनं स राजर्षिः पर्यपृच्छत्। प्रत्यभिजानाति मां भवानिति। स मुहूर्तं ध्यात्वाऽब्रवीन्नाभिजानामि भवन्तमिति। स पुनस्तमुलूकमब्रवीत्। अस्ति कश्चिद्भवतश्चिरजात इति। स एवमुक्तोऽब्रवीत्। अस्ति खल्विन्द्रद्युम्नसरो नाम[4]। [5]तस्मिन्नालिकजङ्घो नाम बकः प्रतिवसति सोऽस्मत्तश्चिरजात इति। तत इन्द्रद्युम्नस्तत्सरोऽगच्छद्यत्रासौ नाडीकजङ्घो नाम बको बभूव। तञ्चाब्रवीत्। प्रत्यभिजाति मां भवानिति। स मुहूर्तं ध्यात्वाऽब्रवीत् नाभिजानामि भवन्तमिन्द्रद्युम्नं राजानमिति। ततस्स पृष्टवानस्ति कश्चिदन्यो भवतश्चिरजात इति। सोऽब्रवीत्। [6]अस्ति खल्वत्र भैरवसरस्यकूपारो नाम कच्छपः। स मत्तश्चिरजात इति। स बकस्तमकूपारं विज्ञापयामास। अथ भवानिन्द्रद्युम्नं राजानं प्रत्यभिजानातीति। स मुहूर्तं ध्यात्वा बाष्पपूर्णनयनः उद्विग्नहृदयो वेपमानः प्राञ्जलिरब्रवीत्। किमहमेनं न प्रत्यभिजानामि[7]।

---

[1] अस्याध्यायस्य कथासंग्रहः महाभारतात्कृतः म.भ. अरण्यपर्व अ. १९१

[5] नाडीजङ्घ इति महाभारते दृश्यते। नालीकजङ्घ इति 'ग'मातृकायां दृश्यमानः पाठः साधुरिति भाति। यतः बकानां जङ्घाः नालीकसदृशाः।

---

[2] विच्छिन्ता [क] [3] पतितः [ग] [4] नालीकजङ्घो नाम [ग]

[6] अस्ति खल्विहैव [क ख घ]

[1]अयं ह्यनेन सहस्रकृत्वः पूर्वमग्निचितिषु यूपा निहिताः[2]। सरश्चेदमस्य दक्षिणादत्ताभिर्गोभिरत्र क्रममाणाभिः [3]कीर्तितं कृतम्। अत्राहं प्रतिवसामीति। अथैतत्कच्छपेनोदाहृतं श्रुत्वा समनन्तरं देवलोकाद्देवरथः प्रादुरासीत्। वाचश्चाश्रूयन्त इन्द्रद्युम्न प्रस्तुतस्ते स्वर्गः। यथोचितं स्थानमभिप्रपद्यस्व कीर्तिमानव्यग्रो याहीति।

दिवः स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः।
यावत्स शब्दो भवति तावत्स्वर्गे महीयते। ॥ १ ॥

एतत्कृत्वासाविन्द्रद्युम्नो देवयानेन यथोचितस्थानं प्राप। तस्मात्सत्यपि पुण्ये पतनात् दुःखं स्वर्गे।

अन्योन्यातिशयाद्दुःखमन्योन्याभिभवेच्छया।
धर्मक्षयाच्च [4]देवानां स्वर्गे दुःखमवस्थितम् ॥ २ ॥

इत्येवमादिभिर्दुःखैर्यस्माद्व्याप्तं चराचरम्।
निरयादिमनुष्यान्तं तस्मात्सर्वं परित्यजेत् ॥ ३ ॥

एवं संसारचक्रेऽस्मिञ्जन्तवो घटियन्त्रवत्।
भ्राम्यन्ते प्राकृतैर्बन्धैर्बद्धा न स्ववशाः पितः ॥ ४ ॥

इति श्रीमत्पुराणसारे यशोनाशात्सहसा पतनं नाम
अष्टषष्टितमोऽध्यायः

---

[1] इह ह्यनेनेति महाभारतपाठः साधुः।

[2] चितिषूपनिहित इति मातृकापाठः असमञ्जस इति भाति।

[3] महाभारते कीर्तितमिति नास्ति।

---

[4] दुःखानां (क ख घ)

## एकोनसप्ततितमोऽध्यायः

[ वासनाधीनजन्मनिरूपणम् ]

### अन्तकालकृतभावनानुसारं पुनर्जन्मग्रहण· प्रतिपादनम्

सुमतिः —

नास्ति तात सुखं किञ्चिदत्र दुःखशताकुले ।
पुण्यं वा कुर्वतः कर्म पापं वा द्विजसत्तम ॥ १ ॥

यः स्मरेन्मनसा रुद्रं प्राणान्ते सकृदप्यसौ ।
स याति शिवसायुज्यं समुद्धृत्य कुलद्वयम् ॥ २ ॥

जन्मान्तरसहस्रेषु यत्पापं पूर्वसञ्चितम् ।
[1]नाशयेत्तानि सर्वाणि देवः कालतनुः शिवः
वासुदेवोऽपि भगवानर्जुनायेदमब्रवीत् । ॥ ३ ॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ४ ॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ ५ ॥

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

### पुनर्जन्मसाधने भरतकथानकम्

सुमतिः —

अत्र ते कथयिष्यामि पुण्यचारित्रमुत्तमम् ।

---

[1] पापबाहुल्यस्य एकैकशः ग्रहणात् बहुवचनं योजनीयम् ।

[1]शालिग्रामे महाभागो भगवन्यतमानसः ।
उवास सुचिरं कालं भरतः पृथिवीपतिः ॥ ७ ॥
अहिंसादिष्वशेषेषु गुणेषु गुणिनां वरः ।
अवाप परमां काष्ठां मनसश्चापि संयमे ॥ ८ ॥
यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।
कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम् ॥ ९ ॥
नान्यज्जगाद [2]विप्रेन्द्राः किञ्चित्स्वप्नान्तरेष्वपि ।
एतत्परं तदर्थं च विना नान्यदचिन्तयत् ॥ १० ॥
समित्पुष्पकुशादानं चक्रे देवक्रियाकृते ।
नान्यानि चक्रे कर्माणि निस्सङ्गो योगतत्परः ॥ ११ ॥

### कृष्णभक्तस्य भरतस्य स्नानवेलायां हरिणपोतदर्शनम्

जगाम सोऽभिषेकार्थमेकदा [3]गण्डकीं नदीम् ।
सस्नौ तत्र तदा चक्रे स्नानस्यानन्तरक्रियाम् ॥ १२ ॥
अथाजगाम तत्तीर्थं जलं पातुं पिपासिता ।
आसन्नप्रसवा ब्रह्मन्नेकैव हरिणी वनात् ॥ १३ ॥
ततस्समभवत्तत्र पीतप्राये जले तदा ।
सिंहस्य नादस्सुमहान्सर्वप्राणिभयङ्करः ॥ १४ ॥
ततस्सा सहसा त्रासादाप्लुता निम्नगातटात् ।
अत्युच्चारोहणेनास्या नद्यां गर्भः पपात ह ॥ १५ ॥

---

[1] शालग्रामे इति विष्णुपुराणे । इयं कथा विष्णुपुराणात्समुद्धृता ।
वि.पु. अं.२ अ. १३

---

[2] विप्रेन्द्रः (ख ग घ) [3] गण्डकां (ग)

जग्राह स नृपो गर्भात्पतितं मृगपोतकम् ।
गर्भप्रच्युतिदुःखेन प्रोत्तुङ्गक्रमणेन च ।
तत्रैव सापि हरिणी पपात च ममार च ॥ १६ ॥

भरतस्य हरिणशावकासक्तिः

हरिणीं तां विलोक्याथ विपन्नां नृपतापसः ।
मृगपोतं समादाय पुनराश्रममागतः ॥ १७ ॥

चकारानुदिनं चासौ मृगपोतस्य वै नृपः ।
पोषणं पुष्पमाणश्च स तेन ववृधे [1]वने ॥ १८ ॥
तस्य तस्मिन्मृगे दूरसमीप[2]परिवर्तिनि ।
आसीच्चेतस्समासक्तं न ययावन्यतो द्विजः ॥ १९ ॥

विमुक्तराज्यतनयः प्रोज्झिताशेषबान्धवः ।
ममत्वं स चकारोच्चैः तस्मिन् हरिणबालके ॥ २० ॥
किं वृकैर्भक्षितो व्याघ्रैः किं सिंहेन निपातितः ।
चिरायमाणे [3]निष्क्रान्तस्यासीदिति [ह] मानसम् ॥ २१ ॥

विषाणाग्रेण मद्बाहुकण्डूयनपरो हि सः ।
क्षेमेणाभ्यागतोऽरण्यादपि मां सुखयिष्यति ॥ २२ ॥
एवं चिरगते तस्मिन् सञ्चक्रे मानसं मुनिः ।
प्रीतः प्रसन्नवदनः पार्श्वस्थे चाभवन्मृगे ॥ २३ ॥

समाधिभङ्गस्तस्यासीन्ममत्वापहतात्मनः ।
सन्त्यक्तराज्यभोगर्द्धि[4]स्वजनस्यापि भूपतेः ॥ २४ ॥

---

[3] निष्क्रान्ते तस्यासीदिति वि.पु. पाठः । [4] सन्त्यज्य राज्यभोगादिस्वजने-त्यादि मातृकासु लेखनदोषः स्यात् । ऊर्ध्वं प्रदत्तः वि.पु. पाठः अं.२ अ.१३

---

[1] मुने [ग] [2] तरवर्तिनि [ख घ] [4] राज्यभोगाद्धि [ग]

चपले चपलं तस्मिन् दूरगं दूरगामिनि ।
मृगपोतेऽभवच्चित्तं स्थैर्यचित्तस्य भूपतेः ॥ २५ ॥

### अन्तकाले हरिणध्यानरतस्य भरतस्य पुनर्जन्मनि हरिणजन्मप्राप्तिः

कालेनागच्छता सोऽथ[1]कालं चक्रे महीपतिः ।
पितेव [2]सास्रं पुत्रेण मृगपोतेन वीक्षितः ॥ २६ ॥

मृगमेव तदाऽद्राक्षीत्त्यजन्प्राणानसावपि ।
तन्मयत्वेन विप्रेन्द्र नान्यत्किञ्चिदचिन्तयत् । ॥ २७ ॥

ततश्च तत्कालकृतां भावनां प्राप्य तादृशीम् ।
[3]जम्बूमार्गे महारण्ये जज्ञे जातिस्मरो मृगः ॥ २८ ॥

तस्मात्सर्वेषु भावेषु नान्यचेता हरिं स्मरेत् ।

### हरिणजन्मनि राज्ञो जातिस्मरणम् । पुनश्च तद्देहत्यागेन द्विजजन्मग्रहणम् ।

पिता —

जातिस्मरो मृगो भूत्वा पुनः किं कृतवानसौ ॥ २९ ॥

सुमतिः —

जातिस्मरत्वादुद्विग्नः संसारस्य द्विजोत्तमाः ।
विहाय मातरं भूयः [4]शालिग्राममुपेयिवान् ॥ ३० ॥

शुष्कैस्तृणैस्तदा पर्णैः स कुर्वन्नात्मपोषणम् ।
मृगत्वहेतुभूतस्य कर्मणो निष्कृतिं ययौ ॥ ३१ ॥

---

[1] मरणं प्राप्तः । [3] जम्बूमार्गे गङ्गातीरविशेष इति विष्णुचित्तीये ।

---

[2] सास्रं (ख घ) शास्त्रं (ग) [4] सालग्राम (ख घ)

[1]तत्र [2]चोत्सृष्टदेहोऽसौ जज्ञे जातिस्मरो द्विजः ।
सदाचारवतां शुद्धे योगिनां प्रवरे कुले ॥ ३२ ॥

सर्वविज्ञानसम्पन्नः सर्वशास्त्रार्थतत्त्ववित् ।

## जातिस्मरस्य द्विजस्य जडरूपेणावस्थानम्

अपश्यत्स च विप्रेन्द्रः स्वात्मानं प्रकृतेः परम् ॥ ३३ ॥

आत्मनोऽधिगतज्ञानो देवादीनि महामुने ।
सर्वभूतान्यभेदेन ददर्श स तदात्मनः ॥ ३४ ॥

न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम् ।
न चकार च कर्माणि शास्त्राणि जगृहे न च ॥ ३५ ॥

उक्तोऽपि बहुशः किञ्चिज्जडं वाक्यमभाषत ।
तदप्यसंस्कारगुणं ग्राम्यवाक्योक्तिसंश्रितम् । ॥ ३६ ॥

अपध्वस्तवपुस्सोऽथ मलिनाम्बरधृग्द्विजः ।
क्लिन्नदन्तान्तरस्सर्वैः परिभूतस्स नागरैः ॥ ३७ ॥

[3]सम्मानना परां हानिं योगर्द्धेः कुरुते ततः ।
जनेनावमतो योगी योगसिद्धिं च विन्दति ॥ ३८ ॥

तस्माच्चरेत वै योगी सतां धर्ममदूषयन् ।
जना यथावमन्येरन् गच्छेयुर्नैव सङ्गतिम् ॥ ३९ ॥

हिरण्यगर्भवचनं विचिन्त्येत्थं महामतिः ।
आत्मानं दर्शयामास जडोन्मत्ताकृतिं जने[4] ॥ ४० ॥

---

[1] अग्निपुराणे इयं कथा वर्तते । अ.पु. अ. १९०

[3] हिरण्यगर्भोक्तयोगशास्त्रवचनमेवैतच्छ्लोकद्वयम् । [4] जनसमूहे इति ।

---

[2] चोच्छ्रष्ट (क ख ग घ)

### क्षत्तुरादेशेन जडकृतं सौवीरनृपतेः शिबिकावहनम्

एतादृशमसंस्कारं विप्राकृतिविचेष्टितम्[1] ।
क्षत्ता सौवीरराजस्य [2]विष्टियोग्यममन्यत
उवाह शिबिकां तस्य [3]क्षत्तुर्वचनचोदितः ॥ ४१ ॥

नृणां विष्टिगृहीतानामन्येषां सोऽपि मध्यगः ।
जातिस्मरोऽसौ पापस्य [4]क्षयकामादुवाह ताम् ॥ ४२ ॥

ययौ जडगतिस्सोऽथ [5]युगमात्रावलोकनम् ।
कुर्वन्मतिमतां श्रेष्ठस्ते त्वन्ये त्वरितं ययुः ॥ ४३ ॥

विलोक्य नृपतिस्सोऽपि विषमां शिबिकागतिम् ।
किमेतदित्याह समं गम्यतां शिबिकावहाः ॥ ४४ ॥

भूपतेर्वदतस्तस्य श्रुत्वेत्थं बहुशो वचः ।
शिबिकोद्वाहकाः प्रोचुरयं यातीत्यसत्वरम् ॥ ४५ ॥

### आत्मस्वरूपज्ञानविषये जडराज्ञोस्सम्भाषणम्

राजा —

किं श्रान्तोऽस्यल्पमध्वानं त्वयोढा शिबिका मम ।
किमायाससहो न त्वं पीवानसि निरीक्ष्यसे ॥ ४६ ॥

ब्राह्मणः —

नाहं पीवा न चैवाढा शिबिका भवतो मया ।
न श्रान्तोऽस्मि न चायासः सोढव्योऽस्ति महीपते ॥ ४७ ॥

---

[1] केवलं वेषेणैव विप्राकृतियुक्तम् । [2] विष्टिः निर्वेतनदास्यम् ।
[3] क्षत्ता–शूद्रात्क्षत्रियायां जातः, सारथिः ।
[5] मृगमात्रावलोकनमिति वि.पु.पाठः साधुः ।

---



[4] क्षयकामः (ग)

राजा —

प्रत्यक्षं [1]दृश्यसे पीवा अद्यापि शिबिका [2]त्वयि ।
श्रमश्च भारोद्वहने भवत्येव हि देहिनाम् ॥ ४८ ॥

ब्राह्मणः —

अहं च त्वं तथान्ये च [3]भूतैरुह्याम पार्थिव ।
[4]गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम् ॥ ४९ ॥

कर्मलभ्या गुणा ह्येते सत्वाद्याः पृथिवीपते ।
अविद्यासञ्चितं कर्म तच्चाशेषेषु जन्तुषु ॥ ५० ॥

## आत्मस्वरूपम्

आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्युपचयो नास्य एकस्याखिलजन्तुषु ॥ ५१ ॥

यदा नोपचयस्तस्य नैवास्त्यपचयस्तथा ।
तदा पीवानसीत्येवं कया युक्त्या त्वयेरितम् ॥ ५२ ॥

यदा पुंसः पृथग्भावः प्राकृतैः कारणैर्नृप ।
[5]सोढव्यस्तु तदायासः कथं वा नृपते मया ।
यद्द्व्या शिबिका चेयं तद्रूपो भूतसंग्रहः ॥ ५३ ॥

सुमतिः —

एवमुक्त्वाऽभवन्मौनी स वहन् शिबिकां द्विजः ।
सोऽपि राजाऽवतीर्योर्व्यां तत्पादौ जगृहे त्वर ॥ ५४ ॥

---

[4] सत्वरजस्तमोरूपगुणप्रवाहेण भूतप्रपञ्चः यातीति । स च जीवेषु अविद्यासञ्चितकर्माधीनः । [5] सोढव्यस्तिति विष्णुपुराणपाठः समीचीनः ।

---

[1] दृश्यते (क) [2] त्वया (क) [3] भूतैरूह्याम (क ख घ) [5] सोढाप्यस्मि (क ग घ)

भो भो विसृज्य शिबिकां प्रसादं कुरु मे द्विज ।
कथ्यतां को भवानत्र छन्नरूपधरः स्थितः ॥ ५५ ॥

ब्राह्मणः —

श्रूयतां कोऽहमित्येतद्वक्तुं भूप न शक्यते ।
उपभोगनिमित्तं च सर्वत्रागमनक्रिया ॥ ५६ ॥

[1]सुखदुःखोपभोगौ तु [2]तौ देहाभ्युपपायिनौ ।
धर्माधर्मावुभौ भोक्तुं जन्तुर्देहादिमिच्छति ॥ ५७ ॥

राजा —

धर्माधर्मौ न सन्देहः सर्वकार्येषु कारणम् ।
उपभोगनिमित्तं च [3]देहाद्देहान्तरागमः ॥ ५८ ॥

यस्त्वेतद्भवता प्रोक्तं कोऽहमित्येतदात्मनः ।
वक्तुं न शक्यते श्रोतुं तन्ममेच्छा प्रवर्तते ॥ ५९ ॥

योऽस्ति सोऽहमिति ब्रह्मन् कथं वक्तुं न शक्यते ।

ब्राह्मणः —

जिह्वाऽब्रवीदहमिति दन्तोष्ठौ तालु किं नृप ।
एते नाहं यतस्सर्वे वाङ्निष्पादनहेतवः ॥ ६० ॥

किं हेतुभिर्वदत्येषा वागेवाहमिति स्वयम् ।
तदा पीवानसीत्येतद्वक्तुमित्थं न शक्यते ॥ ६१ ॥

पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः ।
ततोऽहमिति कुत्रैकां संज्ञां राजन्करोम्यहम् ॥ ६२ ॥

---

[1] सुखदुःखोपभोगौ तु तौ देहाद्युपपादकौ । विष्णुपुराणम् ।

---

[2] तौ सन्देशाभ्युपादकौ (क ख घ) [3] देहदेशान्तरागमः (ग)

यथान्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
त देषोऽहमयं [1]चान्यो वक्तुमेतदपीष्यते ॥ ६३ ॥

यदा समस्तभूतेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान्सोऽहमित्येतद्विफलं वचः ॥ ६४ ॥

त्वं राजा शिबिका चेयं वयं वाहाः पुरस्सराः ।
अयञ्च भवतो लोको न [2]सदेतन्नृपोच्यते[3] ॥ ६५ ॥

सुमतिः —

[4]निशम्य तस्येति वचः परमार्थसमन्वितम् ।
प्रश्रयावनतो भूत्वा तमाह नृपतिर्द्विजम् ॥ ६६ ॥

राजा —

भगवन् यत्त्वया प्रोक्तं परमार्थमिदं वचः ।
श्रुते तस्मिन्भ्रमन्तीव मानसो मम वृत्तयः ॥ ६७ ॥

तन्मम[5] प्रणताय त्वं यच्छ्रेयः [6]प्रथमं द्विज ।
तद्वदाखिलविज्ञानजलवीच्युदधिर्भवान् ।[7] ॥ ६८ ॥

ब्राह्मणः —

### आत्मनः पारमार्थिकरूपविवरणम्

परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ।
एको व्यापी समश्शुद्धो निर्गुणः प्रकृतेः परः ।
जन्मवृद्ध्यादिरहितः आत्मा सर्वगतोऽव्ययः ॥ ६९ ॥

---

[2] राजत्वादि भावः असत् । समस्तभूतावस्थित आत्मा एक एव सदित्यर्थः ।
[3] वि.पुराणम् अ. १४ [5] मह्यमित्यर्थः ।
[7] अनेन रूपकेण सकलविज्ञानज्ञातृत्वं तस्मिन् प्रकटितं भवति ।

---

[1] चान्यैः (क) [2] सन्देहो (ग) [6] प्रणतं (क)

सितनीलादिभेदेन [1]यदेकं दृश्यते जगत् ।
[2]भ्रान्तिदृष्टिभिरात्मापि तथैकस्सन्पृथक्पृथक् ॥ ७० ॥

[3]एकस्समस्तं यदिहास्ति किञ्चित्
तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं [4]च सर्वं, स च सर्वमेतद्
आत्मस्वरूपं त्यज भेदमोहम् ॥ ७१ ॥

इतीरितस्तेन स राजवर्यः
[5]त्यक्त्वात्मदेहं परमार्थदृष्टिः ।
स चाऽपि जातिस्मरणाप्तबोध-
स्तत्रैव जन्मन्यपवर्गमाप[6] ॥ ७२ ॥

एवमेतज्जगत्सर्वं रागमोहसमन्वितम् ।
दुःखैराकुलितं मत्वा निर्मलं परमं व्रजेत् ॥ ७३ ॥

उद्धरेदात्मनात्मानं मज्जमानं यथाम्भसि ।
भोगनद्यां सवेगेन ज्ञानवृक्षं समाश्रयेत् ।
ज्ञानेन परमं ज्ञात्वा शिवमूर्तिमवाप्नुयात् ॥ ७४ ॥

इति श्रीमत्पुराणसारे वासनाधीनजन्मनिरूपणं नाम
एकोनसप्ततितमोऽध्यायः

---

[2] यथैकं .... .... .... नभः । वि.पु. पाठः ।
[4] 'स च त्वं' वि.पु. पाठः । [5] 'तत्याज देहं' वि.पु. पाठः ।
[6] अपवर्गः फलप्राप्तिः मोक्षः । पुण्यसञ्चयार्थं जन्मान्तरं विनैव तेन मोक्षोऽप्रापि ।

---

[2] भ्रान्त (ग) [3] एतत्स (ग)

## सप्ततितमोऽध्यायः

[ कर्मनिन्दानिरूपणम् ]

### धर्मानुष्ठाननिष्ठस्य जैगीषव्यस्य देवलाश्रमे वासः

सुमतिः —

[1]ब्राह्मणो देवलो नाम यज्ञशीलोऽभवत्पुरा ।
कर्मणा मनसा वाचा समः सर्वेषु जन्तुषु
देवान्वै पूजयन्नित्यमतिथींश्च द्विजैस्सह । ॥ १ ॥

देवलस्याश्रमे तात न्यवसच्च महातपाः
जैगीषव्यो मुनिः श्रीमान्योगयुक्तो दृढव्रतः । ॥ २ ॥

[2]स तत्र वसमानन्तु जैगीषव्यं स देवलः
प्रत्यहं दर्शयन्नेव न व्ययुज्यत धर्मतः । ॥ ३ ॥

एवं तयोश्च वसतोः [3]दीर्घकालो व्यतिक्रमत्
आहारकाले मतिमान् परिव्राण्नियतेन्द्रियः ।
उपातिष्ठत धर्मज्ञः जैगीषव्योऽथ देवलम् ॥ ४ ॥

स दृष्ट्वा भिक्षुरूपेण प्राप्तं तं तु महामुनिम् ।
गौरव परमं चक्रे प्रीतिं च परमां तदा ॥ ५ ॥

देवलस्तु यथाशक्ति पूजयामास धर्मवित् ।
न [4]चायमल्पशो भिक्षुरभ्यभाषत किञ्चन ॥ ६ ॥

---

[1] इयं कथा महाभारते विद्यते । म.भा. शल्यपर्व (तीर्थयात्रोपपर्व) अ.४९

[2] वसमानः दर्शयन्निति च आत्मनेपदान्तं णिजन्तं च आर्षं रूपम् ।

[4] अलस इति म.भा. । अलसश्च योगयुक्तत्वात् । अल्पशोऽपि नाभ्यभाषतेति ज्ञेयम् ।

---

[3] दीर्घकालं व्यतिक्रमः (क ख ग घ)

## देवलेन जैगीषव्यस्य योगमहिमदर्शनम्

एवं विगणयन्नेव स जगाम महोदधिम् ।
जैगीषव्यं ततोऽपश्यद्गतं प्रागेव सागरम् ॥ ७ ॥

ततस्स विस्मितश्चिन्त्यं जगमाथासितो मुनिः[1] ।
कृतजप्याह्निकः श्रीमानाश्रमं च जगाम ह ॥ ८ ॥

आश्रमं प्रविशन्नेव जैगीषव्यमपश्यत ।
दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजम् ॥ ९ ॥

मया दृष्टस्समुद्रे च आश्रमे च कथं त्वयम् ।
जिज्ञासार्थं ततो भिक्षोर्जैगीषव्यस्य देवलः ॥ १० ॥

उत्पपाताश्रमात्तस्मादन्तरिक्षं कुतूहलात् ।
जैगीषव्यञ्च खे सिद्धैः स्तूयमानमपश्यत ॥ ११ ॥

अग्निष्टोमादिभिर्यज्ञैर्यजन्ते ये तपोधनाः ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ १२ ॥

[2]मित्रावरुणयोः स्थाने रुद्राणां ब्रह्मसत्रिणाम् ।
पतिव्रतानां लोके च सोऽन्वपश्यत्ततो मुनिः ।
नान्वपश्यत योगस्थमन्तर्हितमथासितम्[3] ॥ १३ ॥

अचिन्तयन्प्रभावञ्च जैगीषव्यस्य योगजम् ।
अन्वपृच्छत्तदा सिद्धाञ्जैगीषव्यं[4] स देवलः ॥ १४ ॥

---

[1] असितो मुनिः देवलः असित देवल इति चास्य नाम ।

[2] वसिष्ठकुलश्रेष्ठौ । अतयोः पुत्रौ अगस्त्यो वसिष्ठश्च । [3] जैगीषव्यः कदाचिद्योगप्रभाववशादन्तर्हितो बभूव । [4] जैगीषव्य वृत्तान्तमिति ज्ञेयम् ।

जैगीषव्यो गतो लोके शाश्वतं ब्रह्मणोऽक्षयम् ।
न देवल गतिस्तत्र तव गन्तुं तपोधन ॥ १५ ॥

तेषां तद्वचनं श्रुत्वा सिद्धानां देवलस्तदा ।
आनूपूर्व्येण सर्वांस्तांल्लोकानवततार ह ॥ १६ ॥

आश्रमं प्रविशन्नेव जैगीषव्यं ददर्श ह ।
ततोऽब्रवीन्महात्मानं जैगीषव्यं स देवलः ॥ १७ ॥

## संसारबन्धनान्मोक्तुं देवलस्येच्छा

देवलः —

नानाशापाशयुक्तेऽस्मिन् शोकमोहमहाग्रहे ।
तापत्रयोर्मिमकरे काममीने मदोरगे ॥ १८ ॥

विषयाम्भसि विद्वेषमहावर्त्ते महार्णवे ।
निमज्जतो न वै पारं कदाचिदपि पश्यतः ॥ १९ ॥

श्रान्तस्य मम दीनस्य जीर्णस्य च भवे भवे ।
भूतानि चोद्वेजयतो जन्तोः पीडां प्रकुर्वतः ॥ २० ॥

जातस्य म्रियतः शश्वत्पुनर्गर्भमुपेयुषः ।
[1]अपत्या (गार) भार्यार्थपुत्रमित्राद्यलाभतः ॥ २१ ॥

तथा मानावमानाभ्यां परितापोद्भवेन च ।
आध्यात्मिकादिना चैव दुःखमेवोपगच्छतः ॥ २२ ॥

का गतिः किन्नु कृत्वाहं तरेयमशुभास्पदम् ।
[2]भवजम्बालगर्भं तदनाद्यज्ञानसम्भवम् ॥ २३ ॥

---

[2] भव संसारः स एव जम्बालः, कर्दमः पङ्कः ।

---

[1] अपत्यङ्गिर (क) अपत्यमिर (ख ग घ)

## मोक्षावाप्तये ज्ञानस्य परमकारणत्वप्रतिपादनम्

जैगीषव्यः —

एतदज्ञानतिमिरं ज्ञानाञ्जनशलाकया ।
मनोनेत्रगतं नृणां प्रभयैवापनीयते ॥ २४ ॥

ज्ञानमेव परं विद्धि ज्ञानमेव परं धनम् ।
ज्ञानी सर्वमवाप्नोति ज्ञानमेव परं सुखम् ॥ २५ ॥

ज्ञानादात्यन्तिकी शुद्धिरिष्यते [1]न ततः क्वचित् ।
अतस्त्वं ज्ञानपदवीमधिरोह यतात्मवान् ॥ २६ ॥

तेन [2]दुःखाकरं क्षिप्रं तरिष्यसि भवार्णवम् ।
अनात्मन्यात्मविज्ञानं मूलं [3]भवतरोर्मुने ॥ २७ ॥

[4]हित्वा तदात्मविज्ञानाद्योगी निर्वाणमृच्छति ।
ज्ञानमेवाक्षयं सत्यमन्यत्सर्वं [5]मृषात्मकम्
एवं ज्ञात्वा परं मुक्त्वा परं योगी प्रपद्यते ॥ २८ ॥

देवलः —

अध्यात्मनिरतस्येह त्वरते मे मनो मुने ।
अध्यात्मविषयां वाणीं श्रोतुं श्रुतिविदां वर ॥ २९ ॥

## अध्यात्मज्ञाननिरूपणम्

जैगीषव्यः —

तव सर्वं प्रवक्ष्यामि यद्भूयः श्रोतुमिच्छसि ।
गोपनीयं सदा सद्भिः शृणुष्वेकमना मुने ॥ ३० ॥

---

1 नान्यतः [ग] 2 दुःखकरं [क] 3 भवति ते [ग] 4 हित्वान्तरात्म [ग]
5 मुदास्रतम् [ग]

अध्यात्मं तद्धि यद्ज्ञानमात्मानमधितिष्ठति ।
अध्यात्मविद्या विदुषां प्रक्रियैव महामुने ॥ २१ ॥

योगी युञ्जीत सततं योगेनात्मानमात्मनि ।
संसारविषवृक्षस्य योगो हि परमौषधम् ॥ २२ ॥

योगासिना[1] ततच्छिन्धि [2]गहनं [3]कर्मसंज्ञितम् ।
विधिना चोदितं कर्म न त्यजेथाः कथञ्चन ॥ २३ ॥

आसनं स्वस्तिकाद्येषु त्वं तेष्वन्यतमं व्रज ।
विविक्तसेवी लब्धाशी भवेथास्त्वमतन्द्रितः ॥ २४ ॥

विषयेभ्यस्समाहृत्य शनैरेवेन्द्रियाणि च
आत्मानं दर्शयित्वाथ मनस्तत्र निवेशय ॥ २५ ॥

महदादिविशेषान्तं नेति नेति [4]व्यपोह्य च ।
[5]तत्त्वस्वभावं [6]सन्दृश्य शाश्वते तु मनो नय ॥ २६ ॥

अध्यात्मशास्त्रनिरतो निर्ममस्त्वं सदा भव ।
आत्मानममलं शुद्धं सदैवात्मनि भावय ॥ २७ ॥

शुभाश्रयं परं ब्रह्म कृत्वा तत्र स्थितिं कुरु ।
शुभाश्रये परिष्वक्तं मनः कृत्वा सुखी भवेत् ॥ २८ ॥

सर्वावरणनिर्मुक्तमात्मतत्त्वं परात्परम् ।
सुखसेतुं परं विद्धि प्रतिष्ठां चामृतस्य च ॥ २९ ॥

[7]यदेतदुक्तममलमात्मानं परमं विभुः ।
परस्य ब्रह्मणो रूपं तस्य तत्परमं पदम् ॥ ४० ॥

---

[2] गहनं काननम् ।

---

[1] तमश्छिन्धि [ग] [3] कर्मसंज्ञिकम् [ख घ] [4] विमोह्य [क] [5] तत् स्वभावं [ग]
[6] सन्दर्श्य [क] [7] यदेतद्युक्तमखिल (क ख घ)

इत्येवं कथिता ब्रह्मन्नध्यात्मविषया मतिः ।
न कस्मैचिदिदं ब्रूयान्नामित्राय कदाचन ॥ ४१ ॥

## गार्हस्थ्यसंन्यासयोर्ग्रहणविषये देवलस्य विचिकित्सा मोक्षधर्मस्वीकृतिश्च

सुमतिः —

[1]तस्य तद्वचनं श्रुत्वा देवलो विगतस्पृहः ।
मोक्षधर्मं [2]समास्थातुमकरोन्मतिमुत्तमाम् ॥ ४२ ॥

संन्यासे कृतबुद्धिं तं भूतानि पितृभिस्सह ।
सर्वे दृष्ट्वा प्ररुरुदुरस्मान् स [3]विजहिष्यति ॥ ४३ ॥

तेषां वै रुदितं श्रुत्वा दुःखार्तानां स देवलः ।
दिशो दश व्याहरतो मोक्षं त्यक्तुं मनो दधे ॥ ४४ ॥

ततस्तु फलमूलानि [4]पतितानि च सुव्रत ।
पुष्पाण्योषधयश्चैव रोरूयन्ते सहस्रशः ॥ ४५ ॥

पुनर्नो देवलः क्षुद्रो नूनं छेत्स्यति दुर्मतिः ।
अभयं सर्वसत्त्वेभ्यो यो दत्वा नावबुध्यते ॥ ४६ ॥

ततो भूयो व्यगणयद्बुद्ध्या स मुनिसत्तमः ।
मोक्षे [5]गार्हस्थ्यधर्मेऽपि किन्नु श्रेयस्करं भवेत् ॥ ४७ ॥

इति सञ्चिन्त्य बहुधा देवलो मुनिसत्तमाः ।
त्यक्त्वा गार्हस्थ्यधर्मं च मोक्षधर्ममरोचयत् ॥ ४८ ॥

---

[1] शल्यपर्वणि अध्यायः ४९ । [4] पवित्राणि इति म.भा. पाठः

---

[2] समासाद्य (क ख घ) [3] विषुयिष्यति (ग) [5] शास्त्रार्थधर्मे च (ग)

प्राप्तवान् परमं योगं परां सिद्धिञ्च देवलः ।
[1]याताहमपि यास्यामि किं यज्ञैः किं जपेन मे ॥ ४९ ॥

त्वत्तोऽनुज्ञामवाप्यैव निर्द्वन्द्वो निष्प्रतिग्रहः ।
प्रयतिष्ये [2]यथा मुक्तस्तथा यास्यामि निर्वृतिम् ॥ ५० ॥

जानतापि मया तात कामार्थौ न प्रकाशितौ ।
ययोस्त्वयं प्रवृत्तस्तु लोकः [3]किमनुवर्ण्यते ॥ ५१ ॥

कामिनो वर्णय[4]न्कामान् लोभं लुब्धस्य वर्णयन् ।
नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन् ॥ ५२ ॥

एवमुक्त्वा स पितरं परित्यक्तपरिग्रहः ।
प्राप सिद्धिं परां प्राज्ञः तत्कालोपात्तसम्मतिः ॥ ५३ ॥

सोऽपि तस्य पिता वाक्यं श्रुत्वा पुत्रस्य धीमतः ।
वानप्रस्थं समास्थाय [5]चतुर्थाश्रममभ्यगात् ।
समस्तदुःखनिर्मुक्तः शिवमूर्तिमवाप्तवान् ॥ ५४ ॥

यः पठेदिदमाख्यानं नियमेन समाहितः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ५५ ॥

अध्येतव्यमिदं नित्यं विप्रैर्वैराग्यसिद्धये ।
श्रोतव्यञ्च द्विजश्रेष्ठाः महापातकनाशनम् ॥ ५६ ॥

इति श्रीमत्पुराणसारे यशोनाशात्सहसा पतनं नाम
अष्टषष्टितमोऽध्यायः

---

[5] चतुर्थ आश्रमः संन्यासः ।

---

[1] तानाह उपयास्यामि [ग] [2] यथा मुक्तस्तथा यातमहनिर्वृतिम् [ग]
[3] किमनुपश्यते [ग] [4] कालान् [ग]

## एकसप्ततितमोऽध्यायः

[ आत्मज्ञाननिरूपणम् ]

### ज्ञानावाप्तिविषये मुनीनां जिज्ञासा

मुनयः —

भवता सर्वमाख्यातं सङ्क्षेपाद्विस्तरादपि ।
त्वं हि नारायणात्साक्षात्कृष्णद्वैपायनात्प्रभो ।
अवाप्ताखिलविज्ञानस्तस्मात्पृच्छामहे पुनः ॥ १ ॥

तद्वदाशेषसंसारदुःखनाशमनुत्तमम् ।
ज्ञानं ब्रह्मैकविषयं येन पश्याम तत्परम् ॥ २ ॥

अथ [1]सूतः स्वमाचार्यं स्मृत्वा शम्भुं जगद्गुरुम् ।
सर्वविद्यामयीं वाचमपि विघ्नविनायकम् ।
वक्तुमारभते सूतः सर्ववेदार्थसंग्रहम् ॥ ३ ॥

### सूतेन शिवज्ञाननिरूपणम्

सूतः —

यूयं लोकहिते युक्ताः सारासारविवेकिनः ।
मैत्र्या करुणया युक्ताः कुमतीनप्युपेक्षकाः ॥ ४ ॥

वृद्धसेवादिसम्पन्नाः प्राज्ञा मानविवर्जिताः ।
ऋजवो मृदवः स्वच्छाः सर्वद्वन्द्वविवर्जिताः ॥ ५ ॥

संसारविषवृक्षस्य मूलच्छेदनतत्पराः ।
तस्माद्वःकथयिष्यामि शिवज्ञानं सुखप्रदम् ॥ ६ ॥

### शिवज्ञानविवरणम्

ज्ञानयज्ञात्परो यज्ञो नास्ति विप्राः श्रुतौ स्मृतौ ।
ज्ञानं बहुविधं प्रोक्तं वेदार्थज्ञानपारगैः ॥ ७ ॥

---

[1] स्वकसमाचार्यः [ग]

स्वरूपमेकं विज्ञानं शिवस्य परमात्मनः ।
तदेव माया [1]तत्कार्यं भेदेन बहुधा भवेत् । ॥ ८ ॥

## ईश्वरज्ञाननिरूपणम्

मायाकारेण सम्बद्धं [2]शिवशक्त्योः जडस्य तु ।
ज्ञानमीश्वरसंज्ञं च नियन्तृ जगतो भवेत् ॥ ९ ॥

## जीवज्ञाननिरूपणम्

शक्तेरविद्याकारेण [3]सम्बद्धं जीवसंज्ञितम् ।
जीवसंज्ञं तु [4]विज्ञानं द्विधा लोके व्यवस्थितम् ॥ १० ॥

स्थूलसूक्ष्मशरीराभ्यामविच्छिन्नस्वरूपतः ।
[5]सप्रचाराश्रयं चित्ते जीवरूपप्रकाशकम् ॥ ११ ॥

ज्ञातृत्वहेतुर्जीवस्य दुःखित्वादेश्च कारणम् ।

## प्रमाणादिज्ञाननिरूपणम्

प्रमाणभ्रान्ति[6]सन्देहाद्याकारेण मुनीश्वराः ॥ १२ ॥

बहुरूपं भवेच्चित्तं कालकर्मविपाकतः ।

## प्रमाणज्ञानस्वरूपम्

अदुष्टकरणोत्पन्नं विज्ञानं मुनिपुङ्गवाः ।
[7]प्रमाणज्ञानमित्युक्तं मुनिभिः सूक्ष्मदर्शिभिः ॥ १३ ॥

## भ्रान्तिज्ञानस्वरूपम्

दुष्टकारणसञ्जातं भ्रान्तिज्ञानं प्रचक्षते ।

## सन्देहज्ञानस्वरूपम्

कोटिद्वयावलम्बि स्यात्संदेहज्ञानमास्तिकाः ॥ १४ ॥

---

[1] तत्कार्यभेदेन बहुधा भवेत् (ग) तत्कार्यभेदेन बहुधा मतैः (ख ग घ) [2] जडशक्त्योः शिवस्य तु (क ख घ) [3] सम्बन्धं इति सर्वमातृकासु । [4] विज्ञातं (क ख घ) [5] सहरूपाश्रयं चित्तं (ग) [6] सम्बाध [क ख घ] [7] प्रमाणज्ञानमुम्पन्नं [क ख घ]

### निश्चयज्ञानस्वरूपम्

इत्थमेवेदमित्येवं रूपं यत्स्मरणं बुधाः ।
स एव निश्चयः प्रोक्तः सम्यग्दर्शनतत्परैः ॥ १५ ॥

### अभावज्ञानस्वरूपम्

तत्स्यादभावविज्ञानं यदन्यानुपलब्धिजम् ।

### प्रत्यक्षज्ञानस्वरूपम्

इन्द्रियोत्पन्नविज्ञानं प्रत्यक्षं परिभाष्यते
व्याप्तिजन्यपरिज्ञानमनुमान[1]मुदीर्यते । ॥ १६ ॥

### उपमानज्ञानस्वरूपम्

सादृश्यहेतुजं ज्ञानमुपमानमुदाहृतम् ॥ १७ ॥

### अर्थापत्तिज्ञानस्वरूपम्

अर्थापत्तिरिति प्रोक्तं विप्रा अनुपपत्तिजम्

### शाब्दज्ञानस्वरूपम्

तात्पर्योपेत[2]शब्दोत्थं ज्ञानं शाब्दमुदाहृतम् ॥ १८ ॥
पदानां समुदायस्तु भवेद्वाक्यं द्विजोत्तमाः ।
[3]प्रधानं गुणभूतं च द्विविधं वाक्यमीरितम् ॥ १९ ॥
तात्पर्यं तु द्विधा विप्राः प्रोक्तं वाक्यविशारदैः ।
महातात्पर्यमेकं स्यादवान्तरमथेतरम् ॥ २० ॥
[4]महातात्पर्यशेषं स्यादवान्तरसमाह्वयम् ।
वेदान्तानां महावाक्यं प्रत्यग् ब्रह्मैकतार्थगम् ॥ २१ ॥
भूमानन्दशिवप्राप्तिसाधनं परिकीर्तितम् ।
[5]प्रत्यक्षादिप्रमाणानि सर्वाणि ब्राह्मणोत्तमाः ॥ २२ ॥

---

1 मपीष्यते [क ख घ] 2 शब्दार्थं [ग] 3 पादानां (ग) 4 महातात्पर्यदोष [ग]
5 प्रत्यक्षाणि (ग)

कर्तव्यविषयं वाक्यमनात्मविषयाणि तु ।
[1]परमार्थैकनिष्ठत्वात्प्रत्यक्षादात्मवस्तुनः ॥ २३ ॥
अतः प्रत्यक्षपूर्वैस्तु प्रमाणैरखिलैरपि ।
प्रत्यग्भूतः शिवो ज्ञातुं न शक्यः सर्वजन्तुभिः ॥ २४ ॥

नास्ति ज्ञानात्परं किञ्चित्पवित्रं पापनाशनम् ।
तत्सदाभ्यासयोगेन शनैरात्मनि विन्दति ॥ २५ ॥

## संक्षेपतः ज्ञानोत्पत्तिकारणनिरूपणम्

सूतः —

समासेन प्रवक्ष्यामि ज्ञानोत्पत्तेस्तु कारणम् ।
विना येन शिवज्ञानं न जायेत कथञ्चन ॥ २६ ॥

मुमुक्षुरतिसन्तुष्टः सिद्ध्यत्येवं गतिर्मम ।
इति निश्चयबुद्धिस्तु प्रतिबन्धनिवृत्तये ॥ २७ ॥
देवतास्सकला नित्यं प्रार्थयेन्मतिमुत्तमाम् ।
शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ २८ ॥

नमोऽस्तु ब्रह्मणे वायो नमोऽस्तु [2]तव शोभन
त्वमेव साक्षाद्ब्रह्मासि त्वां वदिष्यामि शङ्करम् । ॥ २९ ॥

ऋतं च सत्यं चाहं त्वां वदिष्यमि विशेषतः
तन्मामवतु कल्याणं तद्वक्तारं च शोभनम् । ॥ ३० ॥

मां भूयो [3]मम वक्तार [4]मव चावतु शोभनम्
शान्तिः शान्तिः पुनश्शान्तिः दोषत्रयनिवृत्तये । ॥ ३१ ॥

कृत्वैवं [5]प्रार्थनामात्मज्ञानार्थं पुनरास्तिकाः

---

[1] परागर्थैकनिष्ठा [ख ग घ] [2] भव [क] [3] मामवक्तारं [क घ] [4] तवि चायातु [ग]
[5] प्रार्थनामात्य [क ग]

जपेन्नित्यं [1]गुरोर्लब्धं मन्त्रं [2]यश्छन्दसामिति ।
मे गोपायेति पर्यन्तमत्यन्तश्रद्धया सह ॥ ३२ ॥

सङ्कोचो देहयात्रायां यदि ज्ञानार्थिनो भवेत् ।
[3]उपक्षीणा भवेद्बुद्धिस्तस्य तत्र न संशयः ॥ ३३ ॥

अतः [4]सङ्कोचहानाय विद्यार्थं तु दिने दिने ।
आज्येनानेन चोभाभ्यामावहन्तीति मन्त्रतः ॥ ३४ ॥

जुहुयाच्छ्रद्धया सार्द्धं ब्रह्मचारी गृही वनी ।
भिक्षुकस्तु जपेन्मन्त्रमनग्निः श्रद्धया सह ॥ ३५ ॥

नित्यमाचार्यशुश्रूषां प्रकुर्याद्भक्तिपूर्वकम् ।
वेदान्तश्रवणं कुर्यान्मननं च समाहितः ॥ ३६ ॥

नित्यं लिङ्गे महादेवं पूजयेद्भक्तिपूर्वकम् ।
शान्तो दान्तो भवेन्नित्यं विरक्तो भिक्षुको भवेत् ॥ ३७ ॥

शीतोष्णसुखदुःखेषु तथा मानावमानयोः ।
सहिष्णुश्च भवेन्नित्यं तथैकाग्रमना भवेत् ॥ ३८ ॥

कर्तव्यमिति विध्युक्तं कुर्यात्काम[5]विवर्जितम् ।
विशुद्धमन्नं भुञ्जीत चित्तशुद्ध्यर्थमात्मनः ॥ ३९ ॥

वर्णाश्रमादिहीनानां कुर्यात्सेवां न मानवः ।
सहवासं न तैः कुर्यात्सहपङ्क्तौ तु भोजनम्[6] ॥ ४० ॥

सहैव गमनं सख्यं सहसम्बन्धमेव च ।
[7]मनुष्याणां [8]तथान्येषां तथान्येषां च लाञ्छनम् ॥ ४१ ॥

---

[1] गुरोस्सकाशादिति । [2] यश्छन्दसामृषभो विश्वरूपः इत्यादि तैत्तिरीयोपनिषद् १.४.१ [6] न कुर्यादित्यर्थः । [8] अन्येषां सहसंबन्धं अन्येषां लाञ्छनं चेति ।

---

[3] परीक्षीणा (ग) [4] सङ्कोचहीनाय (क) [5] विवर्जितः (ग) [5] [7] देवानाश्च मनुष्याणां [ग]

न कुर्यान्मोहतो वापि यदि कुर्यात्पतत्यधः ।
श्रौतस्मार्तसमाचारे नाधिकारी च लाञ्छितः ॥ ४२ ॥

लाञ्छिताश्च न सम्भाष्या न स्पृश्याश्च कथञ्चन ।
[1]न दर्शयेत्तु तान्राजा देशाच्छीघ्रं प्रवासयेत् ॥ ४३ ॥

अकुर्वन्नपि विध्युक्तं निषिद्धं परिवर्जयेत् ।
निषिद्धपरिहारेण विहिते लभते [2]मतिम् ॥ ४४ ॥

सत्याद्धर्माच्च कुशलाद्भसनोद्धूलनादपि ।
त्रिपुण्ड्रधारणाच्चैव स्वाध्यायाध्ययनादपि ॥ ४५ ॥

दैवाच्च पित्र्यात्कार्याच्च [3]मातापित्रादिपूजनात् ।
तथान्येभ्यश्च [4]धर्मेभ्यो नित्येभ्यश्च तथैव च ॥ ४६ ॥

चोदितेभ्यो मुमुक्षुश्चेत्सदा न प्रच्युतो भवेत् ।
नित्यं ज्ञानार्थिभिर्ज्ञानसाधनानि मनीषिभिः ।
सम्पाद्यानि महायासाद्योगाङ्गानि मुनीश्वराः ॥ ४७ ॥

ज्ञानं वेदान्तविज्ञानं ब्रह्मात्मैकत्वगोचरम् ।
[5]तदेतद्भ्रान्तचित्तस्य संसारविनिवर्तकम् ॥ ४८ ॥

इत्थं गुरूपदिष्टार्थः सङ्ग्रहेण मयोदितः ।
मदुक्तार्थेषु विश्वासं कुरुध्वं मुनिपुङ्गवाः ॥ ४९ ॥

इति श्रीमत्पुराणसारे ज्ञानभेदकथनं नाम
एकसप्ततितमोऽध्यायः

---

[1] न पश्येदिति अथवा प्रजाभ्यः न दर्शयेदिति ।

---

[1] न दर्शनार्येस्तत्राजा (क घ) दर्शनीया (ख) [2] मतिः (ग) [3] पित्र्या च (क)
[4] कर्मभ्यो (क घ) [5] तदेवाभ्रान्तिसिद्धयर्थं (ग)

## द्विसप्ततितमोऽध्यायः

[ अष्टाङ्गयोगनिरूपणम् ]

### योगगुणवर्णनं तद्भेदाश्च

सूतः —

[1]योगा[2]त्सञ्जायते ज्ञानं येनात्मानं प्रपश्यति[3] ।
योगाग्निर्दहति क्षिप्रमशेषं पापसञ्चयम् ॥ १ ॥

प्रसन्नं जायते ज्ञानं तेन निर्वाणसिद्धिदम् ।
योगज्ञानाभियुक्तस्य प्रसीदति महेश्वरः ॥ २ ॥

परेण ब्रह्मणा सार्धं एकत्वं यद्द्विजोत्तमाः ।
स एव योगो विज्ञेयः किमन्यैर्योगलक्षणैः ॥ ३ ॥

वदन्ति पञ्चधा केचिद्योगं योगविदां वराः ।
[4]प्रथमं मन्त्रयोगश्च स्पर्शयोगो द्वितीयकः ॥ ४ ॥

भावयोगस्तृतीयः स्यादभावाख्यश्चतुर्थकः ।
सर्वोत्तमो महायोगः पञ्चमः परिकीर्तितः ॥ ५ ॥

### मन्त्रादियोगपञ्चकनिरूपणम्

ध्यानयुक्तो जपाभ्यासो मन्त्रयोगः प्रकीर्तितः ।
नाडीशुद्ध्यादिमार्गेण रेचकादिक्रमेण च[5] ।

---

[1] कूर्मपुराणादस्याध्यायस्य विषयभागः स्वीकृत इति भासते । बहुत्र श्लोकाः तस्माद्भिन्ना अपि तात्पर्ये सादृश्यमति। कू.पु.ईश्वरगीतायां साङ्गयोगवर्णनम् । अ.११ । [3] ज्ञानाद्योगः प्रवर्तते इति कौर्मे । [4] कूर्मपुराणे अभावयोगमहायोगविति द्वावेव योगौ । [5] रेचके नासातः वायुमोचनम् । कुम्भके वायोः तत्रैव स्थिरीकरणम् ।

---

[2] सम्पद्यते (ग)

कुम्भकावस्थितं [1]ज्ञानं स्पर्शयोगे विधीयते ॥ ६ ॥

मन्त्रस्पर्शविनिर्मुक्तः परं ब्रह्म समाश्रितः ।
भावयोगस्समाख्यातश्चित्तशुद्धिप्रदायकः ॥ ७ ॥

शून्यं सर्वनिरालम्बं स्वरूपं यत्र चिन्त्यते ।
अभावयोगः स प्रोक्तश्चित्तनिर्वाणकारणः ॥ ८ ॥

यत्र [2]पश्यामि चात्मानं नित्यानन्दं निरञ्जनम् ।
शिवैक्यं स महायोगो [3]भाषितः परमेश्वरः ॥ ९ ॥

संयोगो [4]योग इत्युक्तो जीवात्मपरमात्मनोः ।
स एवैको महायोगः सर्वशास्त्रेषु गीयते ॥ १० ॥

ये चान्ये योगिनां योगाः श्रूयन्ते [5]ग्रन्थविस्तरे ।
सर्वे ते [6]ब्रह्मयोगस्य कलां नार्हन्ति षोडशीम् ॥ ११ ॥

## योगाङ्गानां निरूपणम्

अथातः सम्प्रवक्ष्यामि योगस्याङ्गानि सुव्रताः ।
[7]यमश्च नियमश्चैव तथा चैवासनं बुधाः ॥ १२ ॥

प्राणायामस्तथा विप्राः प्रत्याहारश्च धारणा ।
ध्यानं समाधिरित्युक्तान्यष्टाङ्गानि मुनीश्वराः ॥ १३ ॥

---

[1] मातृकासु यद्यपि ज्ञानमपि पठ्यते, अत्र ध्यानमित्येव सूक्तमिति भाति ।
[2] पश्यति इति कौर्मे । [6] महायोग एव ब्रह्मयोगः ।
[7] योगाङ्गवर्णने ग्रन्थकृता जाबालदर्शनोपनिषदाहृता मुख्यतया इति भाति ।

---

[3] भावितः [ग] [4] जीव [ग] [5] ग्रन्थविस्तरैः [ग]

## यमनिरूपणम्

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ।
क्षमा धृति[1]र्मिताहारः [2]शान्तिश्चेति यमा दश[3] ॥ १४ ॥

## अहिंसालक्षणम्

कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।
अक्लेशजननं प्रोक्तमहिंसात्वेन योगिभिः ॥ १५ ॥

[4]आत्मा सर्वमनुच्छेद्यमदाह्यमिति या मतिः ।
सा चाहिंसा परा प्रोक्ता विप्रा वेदान्तवेदिभिः । ॥ १६ ॥

## सत्यलक्षणम्

सर्वं सत्यं परं ब्रह्म न चान्यदिति या मतिः ।
तत्सत्यं परमं ब्रह्म वेदान्तज्ञानभावितैः[5] ॥ १७ ॥

## अस्तेयलक्षणम्

अन्यदीये तृणे रत्ने काञ्चने मौक्तिकेऽपि वा ।
मनसापि निवृत्तिर्या तदस्तेयं विदुर्बुधाः ॥ १८ ॥

## ब्रह्मचर्यलक्षणम्

ब्रह्मचर्याश्रमस्थस्य यतेरारण्यवासिनः[6] ।
सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते ॥ १९ ॥

---

[1] मिताहार इति जाबालदर्शनोपनिषद् ।

[3] अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाः संक्षेपतः प्रोक्ताः चित्तशुद्धिप्रदा नृणाम् ॥
—इति गरुडाग्निलिङ्गपुराणेषु

[5] प्रोक्तमिति ज्ञेयम् ।

[4] आत्मा सर्वगतोऽच्छेद्यो न ग्राह्य इति मे मतिः इति जाबालदर्शनोपनिषद् ।

---

[1] निराहार इति सर्वमातृकापाठो न युज्यते । [2] शौच (ग) [6] वासिनाम् [ख घ]

ऋतावृतौ स्वादरेषु सङ्गोऽन्यत्र च वर्जनम् ।
ब्रह्मचर्यं तु तत्प्रोक्तं गृहस्थाश्रमवासिनाम् ॥ २० ॥
ब्रह्मभावे मनश्चारो ब्रह्मचर्यं परं तथा ।

## दयालक्षणम्

स्वात्मवत्सर्वभूतेषु कायेन मनसा गिरा ।
अनुग्रहो दया सैव प्रोक्ता वेदान्तवेदिभिः ॥ २१ ॥

## आर्जवलक्षणम्

पुत्रे मित्रे कलत्रे च रिपौ स्वात्मनि सन्ततम् ।
ऐक्यरूप्यं सदा यत्तदार्जवं परिकीर्तितम् ॥ २२ ॥

## क्षमालक्षणम्

कायादौ बन्धुभिर्वापि शत्रुभिर्वापि पीडिते ।
बुद्धिक्षोभनिवृत्तिः स्यात्सा क्षमा परिकीर्तिता ॥ २३ ॥

## धृतिलक्षणम्

[1]वेदनादेव निर्मोक्षः संसारस्य च नान्यथा ।
इति विज्ञाननिष्पत्तिः धृतिः प्रोक्ता मनीषिभिः ॥ २४ ॥

## मिताहारलक्षणम्

अल्पं [2]मृष्टाशनं यत्तु मिताहारस्स कीर्तितः ।

## मनः शौचनिरूपणम्–शान्तिः

स्वदेहमलनिर्मोक्षं मृज्जलाभ्यां [3]मतं तथा ।
यत्तच्छौचं भवेद्बाह्यं मानसं मननं विदुः[4] ॥ २५ ॥

---

[1] वेदनं ज्ञानम् । [4] मानसं मननं शान्तिकारकं स्यात् ।

---

[2] तृष्णाशनं [ग] [3] मुनीश्वराः [ग]

## नियमभेदनिरूपणम्

[1] तपस्सन्तोषमास्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च [2]जपो व्रतम् ।
एते च नियमाः प्रोक्ताः दश तान्वच्मि सुव्रताः ॥ २६ ॥

## नियमेषु तपोलक्षणम्

[3]विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः ।
शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः ॥ २७ ॥

## सन्तोषलक्षणम्

यदृच्छालाभतो नित्यं प्रीतिर्या जायते नृणाम् ।[4]
तं सन्तोषं विदुः प्राज्ञाः सर्वदा सुखलक्षणम् ॥ २८ ॥

## आस्तिक्यलक्षणम्

मम धर्मेषु विश्वासः यस्तदास्तिक्यमुच्यते ।

## दानलक्षणम्

[5]मयार्जितान्यनन्तानि ह्यन्यद्वा यत्प्रदीयते ।
क [6] x x x श्रद्धया युक्त दानमेतदुदाहृतम् ॥ २९ ॥

## ईश्वरपूजनलक्षणम्

रागाद्यपेतहृदयं वागदुष्टानृतादिना ।
हिंसादिरहितः काय एतदीश्वरपूजनम् ॥ ३० ॥

---

[1] जाबालदर्शनोपनिषदि एवं नियमनिरूपणं दृश्यते । [3] वेदोक्तेन प्रकारेण जा-दर्शनोपनिषद् । [5] न्यायार्जितधनं श्रान्तं इति जा-दर्शनोपनिषदि ।

---

[2] तपो (क ख घ) [4] एतदनन्तरं पञ्चपङ्क्तयः (क ख घ) मातृकासु न सन्ति ।
[6] ग-मातृकायां अक्षरनाशः ।

## सिद्धान्तश्रवणलक्षणम्

सत्यं ज्ञानमनन्तं च परानन्दं [1]ध्रुवं परम्[2] ।
प्रत्यगित्यवगन्तव्यं वेदान्तश्रवणं बुधाः ॥ ३१ ॥

सिद्धान्तश्रवणं प्राहुः द्विजानां मुनिपुङ्गवाः ।
शूद्राणां च विरक्तानां तथा स्त्रीणां द्विजोत्तमाः ।
सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधाः ॥ ३२ ॥

## ह्रीलक्षणम्

वेदलौकिकमार्गेषु कुत्सितं कर्म यद्भवेत् ।
तस्मिन्भवति या लज्जा ह्रीस्तु सैवेति कीर्तिता ॥ ३३ ॥

## मतिलक्षणम्

वैदिकेषु च सर्वेषु श्रद्धा या सा मतिर्भवेत् ।

## जपलक्षणम्

विधिनोक्तेन मार्गेण मन्त्राभ्यासो जपः स्मृतः ।

## व्रतलक्षणम्

धर्मार्थमात्मशुद्ध्यर्थमुपायग्रहणं व्रतम् ॥ ३४ ॥

## आसनभेदनिरूपणम्

[3]सूतः —

[4]स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा ।
भद्रं मुक्तासनं चैव मयूरासनमेव च
सुखासनमिति प्रोक्तमासनं नवमं बुधाः ॥ ३५ ॥

---

[2] ध्रुवं परमिति जा-दर्शनोपनिषद् पाठः । [3] एतत्पदं प्रक्षिप्तं स्यात् ।
[4] जा दर्शनोपनिषदि तृतीयः खण्डः (उपनिषद्वाक्यकोषे) ।

---

[1] धृतिमिति मातृकापाठः

## आसनेषु स्वस्तिकासनलक्षणम्

जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायस्सुखासीनः स्वस्तिकं तत्प्रचक्षते ॥ ३६ ॥

## गोमुखासनलक्षणम्

सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत्[1] ।
दक्षिणेऽपि तथा सव्यं गोमुखं तत्प्रचक्षते ॥ ३७ ॥

## पद्मासनलक्षणम्

[2]अङ्गुष्ठावपि गृह्णीयाद्धस्ताभ्यां व्युत्क्रमेण तु ।
ऊर्वोरुपरि विप्रेन्द्रा कृत्वा पादतलद्वयम् ।
पद्मासनं भवेदेतत्पापरोगभयापहम्[3] ॥ ३८ ॥

## वीरासनलक्षणम्

एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितम् ।
इतरस्मिंस्तथा चोरुं वीरासनमुदाहृतम् ॥ ३९ ॥

## भद्रासनलक्षणम्

गुल्फौ च वृषणस्याधः सीवन्याः[4] पार्श्वयोः क्षिपेत् ।
पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः ।
भद्रासनं भवेदेतद्विषभोगविनाशनम् ॥ ४० ॥

## मुक्तासनलक्षणम्

निपीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु सव्यतः ।
सव्यं दक्षिणगुल्फेन मुक्तासनमुदाहृतम् ॥ ४१ ॥

---

[1] निवेशयेदित्यर्थः । [2] अङ्गुष्ठावधीति जा-दर्शनोपनिषत् । [3] पादरोगभयापहमित्यपि स्यात् ।
[4] लिङ्गमपयः सूत्रम् । लिङ्गमात् गुह्यपर्यन्तं सीवनम् ॥

## मयूरासनलक्षणम्

[1]कूर्पराग्रे मुनिश्रेष्ठ निक्षिपेन्नाभिपार्श्वयोः ।
भूम्यां पाणितलद्वन्द्वं निक्षिप्यैकाग्रमानसः ॥ ४२ ॥
समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः ।
मयूरासनमेतत्स्यात्सर्वपापप्रणाशनम् ॥ ४३ ॥

## सुखासनलक्षणम्

येन केन प्रकारेण सुखं धैर्यं च जायते ।
तत्सुखासनमित्युक्तमशक्तस्तत्समाचरेत् ।
आसनं विजितं येन जितं तेन जगत्त्रयम्[2] ॥ ४४ ॥

## प्राणायामलक्षणम्–तत्र नाडीस्थानसंख्याकथनम्

सूतः —

[3]प्राणायाममथेदानीं प्रवक्ष्यामि विशेषतः ।
नाडीशुद्धिं पुरा कृत्वा प्राणायामं समभ्यसेत् ॥ ४५ ॥
शरीरं तावदेतत्स्याच्छण्णवत्यङ्गुलात्मकम् ।
मनुष्याणां मुनिश्रेष्ठाः स्वाङ्गुलीभिरिति स्थितिः ॥ ४६ ॥
देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् ।
त्रिकोणं मनुजानान्तु सत्यमुक्तं मुनीश्वराः[4] ॥ ४७ ॥
[5]गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः ।
देहमध्यमिदं प्राहुः शारीरकविदो जनाः[6] ॥ ४८ ॥

---

[2] क्रमप्राप्तस्य सिंहासनस्य विवरणं न दृश्यतेऽत्र । [3] जा-दर्शनोपनिषद् सं.४ ।
[4] जा-दर्शनोपनिषदि साङ्कृतेः संबोधनं श्रूयते । [5] शारदातिलकानुसारतः दृश्यते । शा.ति. पटलः २५ [6] शारीरकं शरीररचनाशास्त्रम् ।

---

[1] कोर्पराग्रे (ख घ)

[1]कन्दस्थानं मनुष्याणां देहमध्यं नवाङ्गुलम् ।
चतुरङ्गुलमायामविस्ताराभ्यां द्विजोत्तमाः ॥ ४९ ॥

कुक्कुटाण्डवदाकारं भूषितं तु त्वगादिभिः ।
तन्मध्ये नाभिचक्रं [2]तद् द्वादशारमवस्थितम् ॥ ५० ॥

चक्रेऽस्मिन्भ्रमते जीवः पुण्यपापप्रचोदितः ।
तन्तुपञ्जरमध्यस्था यथा भ्रमति यूथिका ॥ ५१ ॥

जीवस्य मूले चक्रेऽस्मिन्नथ प्राणैश्चरत्यसौ ।
प्राणरूढो भवेज्जीवः सर्वदेहेषु सर्वदा ॥ ५२ ॥

तस्योद्‌र्ध्वं कुण्डलिस्थानं नाभेस्तिर्यगधोद्‌र्ध्वतः ।
अष्टप्रकृतिरूपासावष्टधा कुटिलीकृता ॥ ५३ ॥

मुखेनैव सदावेष्ट्या ब्रह्मरन्ध्रमवस्थिता ।
कन्दमध्ये स्थिता नाडी सुषुम्नेति प्रकीर्तिता ॥ ५४ ॥

तिष्ठन्ति परितस्तस्या नाड्यो हि मुनिसत्तमाः ।
आवृत्य देहं सम्प्राप्ता यथा कौशातकीफलम् ॥ ५५ ॥

[3]अधोमुखाः स्थिताः काश्चित्काश्चिदूर्ध्वमुखाः पराः ।
तिर्यग्गताः स्त्वसंख्यातास्तत्र लक्षत्रयाधिकाः ॥ ५६ ॥

नाड्योऽर्धलक्षसंख्याकाः प्रधानास्समुदीरिताः ।
द्विसप्ततिसहस्राणि तासां [4]मुख्याश्चतुर्दश ।[5] ॥ ५७ ॥

---

[5] मुख्याश्चतुर्दशेति ज्ञा दर्शनोपदिषद् ।

---

[1] गुद (ग) [2] तु (ख घ) [3] यथा सुखासरा (क)

[4] तासामित्येव सर्वमातृकापाठः ।

[1]सुषुम्ना पिङ्गलेडा च कुहूः पूषा यशस्विनी ।[2]
विश्वोदरा हस्तिजिह्वा [3]वारणालम्बुसा तथा ॥ ५८ ॥
सरस्वती [4]शङ्खिनी च गान्धारी च यशस्विनी ।
तासां मुख्यतमास्तिस्रस्तासामेकोत्तमोत्तमा । ॥ ५९ ॥
ब्रह्मनाडीति सा प्रोक्ता सुषुम्ना विश्वधारिणी ।
पृष्ठमध्यस्थितेनास्थ्ना सह मूर्ध्नि स्थिता सदा[5] ॥ ६० ॥
इडा तस्याः स्थिता सव्ये दक्षिणे पिङ्गला स्मृता ।
[6]चरन्ति तासु नाडीषु दश प्राणादिवायवः ॥ ६१ ॥

## प्राणादिवायूनां नामानि

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ॥ ६२ ॥

## प्राणस्थानम्

आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यमे ।
प्राणसंज्ञोऽनिलो नित्यं वर्तते मुनिपुङ्गवाः ॥ ६३ ॥

## अपानस्थानम्

अपानो वर्तते नित्यं गुदमेढ्रोरुजानुषु ।
उदरे [7]वंक्षणे कट्यां नाभौ जङ्घे च सुव्रताः ॥ ६४ ॥

---

[2] तपस्विनी । [3] वरुणा । [4] शङ्खिनी ।
[5] पृष्ठमध्यस्थितेनास्थ्ना वीणादण्डेन सुव्रत । सह मस्तकपर्यन्तं सुषुम्ना सुप्रतिष्ठिता इति चत्वारः पाठा अपि जा-दर्शनोपनिषदि । अत्र मूर्ध्नि स्थिता सुषुम्नेति ज्ञेयम् । [6] शारदातिलकटीकानुसारि दृश्यते । (शा.ति.राघवभट्टः)
[7] वंक्षणं, ऊरुसन्धिः ।

---

[1] सुमना (ग) [4] शङ्खिनीति सर्वमातृकासु ।

अपानः कर्षति प्राणान्प्राणोऽपानं च कर्षति ।
हकारेण बहिर्याति सकारेण विशत्यधः ॥ ६५ ॥

[1]हंस हंसेत्यतो मन्त्रं जीवो जपति सर्वदा ।
शतानि षड्दिवा रात्रौ सहस्राण्येकविंशतिम् ।
एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा ॥ ६६ ॥

[2]अजपा नाम गायत्री योगिनां [3]मोक्षदा सदा ।
अस्याः सङ्कल्पमात्रेण नरः पापैः प्रमुच्यते ॥ ६७ ॥

## व्यानस्थानम्

व्यानः श्रोत्राक्षिमध्ये च[4] भ्रूकट्यङ्गुष्ठयोरपि ।
घ्राणे गले स्पिजो देशे वर्तते मुनिपुङ्गवाः ॥ ६८ ॥

## उदानस्थानम्

उदानस्सर्वसन्धिस्थः विज्ञेयः पादहस्तयोः ।

## समानस्थानम्

समानस्सर्वगात्रेषु सर्वं व्याप्य व्यवस्थितः ॥ ६९ ॥
नागादिवायवः पञ्च [5]गत्यादिषु च संस्थिताः ।

## प्राणादिवायूनां कर्माणि

निःश्वासोच्छ्वासखासाश्च प्राणकर्मेति कीर्तितम् ॥ ७० ॥
अपानवायोः कर्मैतद्विण्मूत्रादिविसर्जनम् ।
हानोपादानचेष्टादि व्यानकर्मेति चेष्यते ॥ ७१ ॥

---

[1] एतत्संख्यामध्यगो भागः ध्यानबिन्दूपनिषदनुसारी शारदातिलकानुसारी च दृश्यते । [4] कुकुद्भ्याङ्गुष्ठयोरपि । प्राणस्थाने गले चैव । जा-दर्श-नोपनिषद् । [5] त्वगस्थ्यादिषु—जा-दर्शनोपनिषद् ।

---

[2] अजपानाममायावी योगिनां (क ख घ) अजपानाम गायत्री (ग) [3] मोहना (क)

उदानकर्म तत्प्रोक्तं देहस्योन्नयनादिकम् ।
[1]पोषणादि समानस्य शरीरे कर्म कीर्तितम् ॥ ७२ ॥

उद्गारादिगुणो यस्तु नागकर्मेति चेरितम्[2] ।
निमीलनादि कूर्मस्य [3]क्षुतं स्यात्कृकरस्य च ॥ ७३ ॥

देवदत्तस्य विप्रेन्द्रास्तन्द्रीकर्म प्रकीर्तितम् ।
धनञ्जयस्य शोभादि कर्म प्रोक्तं मुनीश्वराः ॥ ७४ ॥

## नाडीशुद्धिप्रकारनिरूपणम्

ज्ञात्वैव नाडीसंस्थानं वायूनां स्थानकर्म च ।
विधिनोक्तेन मार्गेण नाडीशुद्धिं समाचरेत् ॥ ७५ ॥

विध्युक्तकर्मसंयुक्तः शान्तस्सत्यपरायणः ।
आरुह्य चासनं रूढं प्राङ्मुखोदङ्मुखोऽपि वा ॥ ७६ ॥

समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ।
नासाग्रे [4]शशभृद्बिम्बे बिन्दुमध्ये तुरीयकम् ॥ ७७ ॥

[5]एवं तममृतं पश्येन्नेत्राभ्यां सुसमाहितः ।
[6]इडया प्राणमाकृष्य पूरयित्वोदरस्थितम् ॥ ७८ ॥

ततोऽग्निं देहमध्यस्थं ध्यायन्ज्वालावलीयुतम् ।
रेफं च बिन्दुसंयुक्तमग्निमण्डलसंयुतम् ॥ ७९ ॥

ध्यायन्विरेचयेत्पश्चान्मन्दं पिङ्गलया बुधः ।
पुनः पिङ्गलयाऽऽपूर्य घ्राणं दक्षिणतस्सुधीः ।
पुनर्विरेचयेद्धीमानिडया च शनैश्शनैः ॥ ८० ॥

---

[2] क्षुधा तु कृकरस्य चेति जाबालदर्शने । [5] इडयेति जाबालीये ।

---

[1] शोषणादि (क ख ग) [2] चेष्टितम् (क ख घ) [3] शत्रुत्रद्वेषि बिन्दुमध्ये तुरीयसम् (क घ) [4]न्दुमध्ये (ग) [5] श्रवन्त (क ख ग) [6] जडयेति मातृकासु ।

षट्कृत्वश्चाचरेन्नित्यं रहस्येवं त्रिसन्धिषु ।
नाडीशुद्धिमवाप्नोति पृथक्चिह्नोपलक्षितम् ॥ ८१ ॥

## शुद्धनाडीलक्षणम्

शरीरलघुतादीप्तिर्वह्नेर्जठरवर्तिनः ।
नादाभिव्यक्तिरित्येतच्चिह्नं तत्सिद्धिसूचनम् ॥ ८२ ॥
यावदेतानि सम्पश्येत्तावदेवं समाचरेत् ।

## प्राणायामप्रकारनिरूपणम्

प्राणायाममथेदानीं प्रवक्ष्यामि विशेषतः ॥ ८३ ॥
प्राणापानसमायोगः प्राणायाम इतीरितः ।
स एव द्विविधः प्रोक्तः सगर्भोऽगर्भ एव च ॥ ८४ ॥
सगर्भमाहुस्सजपमगर्भमजपं बुधाः ।
उत्तमाधममध्यत्वात्त्रिधासौ प्रतिपादितः ॥ ८५ ॥

## मध्यमोत्तमाधमप्राणायामलक्षणम्

मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रकः ।
मध्यमः प्राणसंरोधः षड्विंशन्मात्रिकोत्तमः ॥ ८६ ॥
प्रस्वेदजनको यस्तु प्राणायामस्तु सोऽधमः ।
कम्पनान्मध्यमः प्रोक्त उत्थानं चोत्तमो भवेत् ॥ ८७ ॥
प्राणायामस्त्रिधा प्रोक्तो रेचपूरककुम्भकैः ।
रेचकोऽजस्रनिःश्वासात्पूरकः सन्निरोधकः ।
साम्येन संस्थितिर्या सा कुम्भकः परिगीयते ॥ ८८ ॥
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसम्भवः ।
सम्भवत्युत्तमे विप्राः प्राणायामे सुखी भवेत् ॥ ८९ ॥

## प्राणायामफलनिरूपणम्

नित्यमेवं प्रकुर्वीत प्राणायामांस्तु षोडश ।
ब्रह्महत्यादिभिर्दोषैर्मुच्यते मासमात्रतः ॥ ९० ॥

षण्मासाभ्यासतो विप्रो [1]वेदनेच्छामवाप्नुयात् ।
वत्सराद्ब्रह्मविद्वान् स्यात्तस्माद्विद्वान्समभ्यसेत् ॥ ९१ ॥

प्राणायामैकनिष्ठस्य न किञ्चिदपि दुर्लभम् ।
तस्मात्सर्वप्रयत्नेन प्राणायामं सदाभ्यसेत् ॥ ९२ ॥

## प्रत्याहारलक्षणम्

इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥ ९३ ॥

यद्यत्पश्यति तत्सर्वं पश्येदात्मानमात्मनि[2] ।
प्रत्याहारः स च प्रोक्तो योगविद्भिर्महात्मभिः ।
एवमभ्यस्यतस्तस्य न किञ्चिदपि दुर्लभम् ॥ ९४ ॥

## धारणालक्षणम्

[3]यमादिगुणयुक्तस्य मनसः स्थिति[4]रात्मनि ।
धारणेत्युच्यते सद्भिः शास्त्रतात्पर्यवेदिभिः ॥ ९५ ॥

हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वतमस्तके ।
एवमादिषु देशेषु धारणा चित्तबन्धनम् ॥ ९६ ॥

---

[1] वेदनं ज्ञानं तत्रेच्छावान् भवति । [3] अयं योगविवरणात्मको भागः अग्निपुराणमनुसृत्य वर्तते ।

---

[2] मात्मना [ख घ] [4] रात्मसु [क ख घ]

## सभेदं ध्यानलक्षणम् । तत्र सगुणध्यानम्

प्रत्ययान्तरनिर्मुक्तः प्रवाहो ध्यानमुच्यते ।
ध्यानं तद्द्विविधं प्रोक्तं सगुणं निर्गुणं तथा ॥ ९७ ॥

वासुदेवं द्विजश्रेष्ठाश्चिह्नितं भूषणायुधैः ।
मनसाऽऽलोक्य देवेशं सर्वभूतहृदि स्थितम् ।
सोऽहमात्मेति विज्ञानं सगुणध्यानमुच्यते ॥ ९८ ॥

## निर्गुणध्यानलक्षणम्

एकं ज्योतिर्मयं शुद्धं सर्वगं व्योमवद्दृढम् ।
आनन्दममरं नित्यं सर्वदृक्सर्वतःशिरः ॥ ९९ ॥

ब्रह्म[1] ब्रह्ममयोऽहं स्यामिति यद्वेदनं भवेत् ।
तदेव ब्रह्मविज्ञानमिति ब्रह्मविदो विदुः ॥ १०० ॥

## समाधिलक्षणम्

समाधिस्समतावस्था जीवात्मपरमात्मनोः ।
ब्रह्मण्यवस्थितिर्या सा समाधिः प्रत्यगात्मनः ॥ १०१ ॥

ध्यायेद्यथा यथात्मानं तत्समाधिस्तथा तथा ।

## यमादीनां फलनिरूपणम्

रागद्वेषनिवृत्तिश्च वीर्यवृद्ध्यादयो यमात् ।
आसनस्य जयादेव सर्वद्वन्द्वजयो[2] यमात् । ॥ १०२ ॥

देहेन्द्रियाणामुत्कर्षः सौमनस्यं सुखोदयः ।
भवन्ति नियमात्सिद्ध्यै योगिनां मुनिपुङ्गवाः ॥ १०३ ॥

---

[2] सुखदुःखादिरूपद्वन्द्वम् ।

---

[1] स्वब्रह्ममयः [ग]

प्राणायामाद्भवेत्क्षिप्रं सर्वपापपरिक्षयः ।
सर्वेन्द्रियवशीकारः प्रत्याहारेण जायते ॥ १०४ ॥

मानसे परमं स्थैर्यं [1]धारणायाः प्रवर्तते ।
ध्यानेनैश्वर्यसम्प्राप्तिरैश्वर्यं च गुणाष्टकम्[2] ॥ १०५ ॥

समाधिना सदा योगी प्रज्ञावृद्धिमवाप्नुयात्[3] ।

## योगान्तरायोपसर्गनिरूपणम्

एवमभ्यस्यतो योगमष्टाङ्गं ज्ञानसाधनम् ।
[4]तदन्तराया नश्यन्ति गजाः सिंहभयादिव ॥ १०६ ॥

प्रनष्टेष्वन्तरायेषु [5]द्विजाः परमयोगिनः ।
उपसर्गाः प्रवर्तन्ते सर्वे तेऽसिद्धिसूचकाः[6] ॥ १०७ ॥

प्रातिभः श्रावणो वार्ता वेदनं दर्शनं रसः[7] ।
षट् चोपसर्गा योगस्य परित्यागेन सिद्धयः ॥ १०८ ॥

रसायनानि सर्वाणि कलास्सर्वास्स विन्दति ।
नानासुरेन्द्रकन्याश्च प्रणिपत्य नयन्ति च ॥ १०९ ॥

महामहोदधेर्यद्वज्जायन्ते [8]विप्रुषोऽम्भसः ।
योगैश्वर्योदधेस्तद्वद्विप्रुषः प्रातिभादयः ॥ ११० ॥

---

[1] धारणायाः कारणेन [2] अणिमादिगुणैश्वर्यं मुक्तिर्ध्यानप्रयोजनम् । इत्यग्निपुराणे । [3] वेदादिसर्वशास्त्रं च स्वयमेव प्रवर्तते । इत्यग्निपुराणे ।
[4] अन्तराया विघ्नाः । [5] द्विजा इति सम्बोधनम् । [6] असिद्धिसूचकाः व्युत्थाने सिद्धिरूपाः । तदुक्तं योगसूत्रे ' ततः प्रातिभश्रावणवेदनादर्शनास्वादवार्ता जायन्ते ते समाधावुपसर्गाः व्युत्थाने सिद्धयः ' इति लि.पु. अ.९ व्याख्या शिवतोषिणी । [7] रसः एव स्वादः [8] विप्रुषो जलबिन्दवः

प्रातिभादिषु तुच्छेषु गुणेष्वासक्तचेतसः ।
न भवे[1]त्सर्वमैश्वर्यमक्षयं सर्वकामिकम् ॥ १११ ॥

## गुणभोगत्यागेन योगशक्त्यवाप्तिकथनम्

तस्माद्गुणांश्च भोगांश्च देवासुरमहीभृताम् ।
तृणवद्यस्त्यजेत्सर्वान् स योगबलमाप्नुयात् ॥ ११२ ॥

एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः ।
क्रमाद्वेदान्तविज्ञानं [2]विजायेत न संशयः ॥ ११३ ॥

यथैव वागुरां छित्वा बलवन्तो मृगा द्विजाः[3] ।
प्राप्नुवन्त्यमलं मार्गं विमुक्तास्सर्वबन्धनैः ॥ ११४ ॥

[4]योगाच्छित्वा[5] तथा दोषान् योगी याति परं पदम् ।
अबला मृगपश्वाद्या वागुरासु यथा परे ।
विनश्यन्नपि सन्देहस्तद्वद्योगबलादृते ॥ ११५ ॥

अल्पकश्च यथा विप्राः वह्निः शाम्यति दुर्बलः ।
आक्रान्तः [6]पीडनैः स्थूलैस्तद्वद् योगबलं द्विजाः ॥ ११६ ॥

स एव च यथा विप्राः वह्निर्जातबलः पुनः ।
समीरणयुतः कृत्स्नां दहेच्च पृथिवीमपि ॥ ११७ ॥

तद्वद्योगबलाद्योगी दीप्ततेजा महाबलः ।
अन्तकाल इवादित्यः कृत्स्नं संशोषयेज्जगत् ॥ ११८ ॥

---

[3] द्विजा इति सम्बोधनम् । [5] अयं विपरिवर्तितः पाठः अर्थानुगुणम् ।
[6] स्थूलानि पीडनानि योगविघ्नकराणि ।

---

[1] त्परमैश्वर्यमजय्यं (घ) [2] विज्ञायेत (क ख घ) [4] योगांल्छित्वा तदा (क ख ग घ)

दुर्बलश्च यथा विप्राः स्रोतसा ह्रियते नरः ।
बलहीनस्तथा योगे विषयै[1]र्जायते न सः[2] ॥ ११९ ॥

तदेव च यथा स्रोतो विष्टम्भयति वारणः[3] ।
तद्वद्योगबलं लब्ध्वा रुणद्धि विषयान्बहून् ॥ १२० ॥

न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः ।
ईहते मुनिशार्दूल योगिनोऽमिततेजसः ॥ १२१ ॥

[4]आत्मनां च सहस्राणि बहूनि मुनिपुङ्गवाः ।
योगी कुर्याद्बलं प्राप्य तैश्च सर्वां महीं चरेत् ॥ १२२ ॥

प्राप्नुयाद्विषयांश्चैव पुनश्चोग्रं [5]तपश्चरेत् ।
संक्षिपेच्च पुनस्तांश्च सूर्यस्तेजोगणानिव ॥ १२३ ॥

अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः ।
युक्तस्सम्यक्तथा योगी सिद्धिं प्राप्नोत्यसंशयम्[6] ॥ १२४ ॥

इति श्रीमत्पुराणसारे अष्टाङ्गयोगकथनं नाम
द्विसप्ततितमोऽध्यायः

---

[2] विषयैराहृतः योगः योगो न भवेदित्यर्थः । योगी अवशः विषयैर्ह्रियत इति साध्वासीत् । परन्तु सर्वत्रमातृकासु 'योंग' इत्येव पदं पठ्यते ।

[3] हस्ती

---

[1] जीर्यते (क) ह्रियतेऽवशः (ग) [4] आत्मानं (ग) [5] तपश्च सः (क ख घ)

[6] असंशयः (ग)

## त्रिसप्ततितमोऽध्यायः

[ मुक्तिभेदकथनम् , तत्स्वरूपञ्च । तत्र सायुज्यमुक्तिः ]

मुक्तिर्नानाविधा प्रोक्ता सायुज्यादिप्रभेदतः ।
तत्र सायुज्यरूपाया मुक्तेः साक्षात्तु साधनम् ॥ १ ॥

[1]सम्यग् ज्ञानं तु [2]धर्मोक्तं न तयोश्च [3]समुच्चयः ।
आत्मरूपा हि सा मुक्तिर्विज्ञेया मुनिपुङ्गवाः ॥ २ ॥

न [4]कार्यरूपा सा वक्तुं [5]शक्या मुक्तिः कथञ्चन ।
तत्र द्रव्यतया नैव स्थिता भवितुमर्हति ॥ ३ ॥

कार्यरूपेण नैवात्मा परिणामं कदाचन ।
सहते परिणामिं वाऽकूटस्थ इति हि श्रुतिः ॥ ४ ॥

गुणरूपतया मुक्तिर्न स्थिता सा परात्मनि ।
निर्गुणत्वात्सदात्मायं निर्गुणं प्राह हि श्रुतिः ॥ ५ ॥

न क्रियारूपतश्चापि स्थिता मुक्तिः परात्मनि ।
[6]अक्रियात्वात्परात्मानं प्राह वेदोऽ[7]क्रियं खलु ॥ ६ ॥

अन्येनापि च रूपेण न स्थिता मुक्तिरात्मनि ।
[8]आत्मनो नैव मुक्तेश्च सम्बन्धः खलु विद्यते ॥ ७ ॥

असङ्गत्वात्परात्मानमसङ्गं प्राह हि श्रुतिः ।
अतस्साक्षात्परा मुक्तिः [9]स्वानुभूतैव केवलम्
[10]न प्राप्या कर्मणा सा तु [11]नित्यं प्राप्ता हि सात्मनः ॥ ८ ॥

---

1 समज्ञानं (क ख घ) 2 धर्मोत्थं [क ख घ] 3 समुच्छ्रयः [क ख घ]
4 कार्यरूपं (क ख घ) 5 शक्ता [ग] 6 परिणाम [क ख घ] 7 छ्रियं [क ख घ]
8 आत्मतो [क ख घ] 9 स्वात्मभूतैव [क ख घ] 10 अप्राप्य [क ख घ]
11 नित्या [क ख छ]

## सालोक्यादिमुक्तिनिवरणम्

मुक्तिस्सालोक्यसारूप्यसामीप्याख्या मुनीश्वराः ।
साध्यते क्रियया साक्षान्न ज्ञानेनैव केवलम् ॥ ९ ॥

## क्रियासाध्यमुक्तेः नश्वरत्वप्रतिपादनम्

मुक्तयः क्रियया साध्या नश्वरा हि न संशयः ।
क्रियासाध्यस्य [1]कुड्यादेर्नश्वरत्वं प्रतीयते ॥ १० ॥

## सायुज्यमुक्तेः श्लाघनम्

तस्मादुक्तप्रकारेण मुक्तिस्सायुज्यरूपिणी ।
ज्ञानलभ्या क्रियामात्रान्न लभ्या न समुच्चयात् ॥ ११ ॥

## ज्ञानक्रिययोर्विरोधान्मुक्तेरप्राप्तिकथनम्

[2]ज्ञानं न [3]कारकं किञ्चित्क्रिया कारकरूपिणी ।
अतः क्रियाया ज्ञानेन विरोधादेव सर्वदा ॥ १२ ॥

समुच्चयो न युज्येत कुतस्तेन परा गतिः ।
ऐहिकामुष्मिका विप्रा मुक्तयस्सर्वदेहिनाम् ॥ १३ ॥
कर्मणैव हि सिध्यन्ति न ज्ञानेन विरोधतः[4] ।

## ज्ञानिनः कर्मबन्धाभावप्रतिपादनम्

कर्तारं कर्म बध्नाति खलु वेदविदां वराः ॥ १४ ॥

---

[1] कुड्यम् भित्तिः । [3] ज्ञानान्न इति 'ग'मतृकायम् । परन्तु सङ्गतोऽर्थः न लभ्यते । अतः तदेव किञ्चिद्विपरिवृत्य स्वीकृतम् ।

[4] ज्ञानेन साकं विरोधाभावे सति कर्मणः मुक्तिप्रदत्वमस्ति ।

---

[2] कालेन (रु ख घ)

यत्किञ्चित्कुरुते कर्म ज्ञानवान्साध्वसाधु वा ।
सर्वं नारायणे न्यस्य कुर्वन्नपि न लिप्यते[1] ॥ १५ ॥

निश्चयात्मकविज्ञानसाक्षिणां ब्रह्मवित्तमाः ।
[2]चिद्रूपमात्मना पश्यन्कथं बध्येत कर्मणा ॥ १६ ॥

अनियोज्यमकर्त्तारमभोक्तारं परामृतम् ।
आत्मानमात्मना पश्यन् कथं बध्येत कर्मणा ॥ १७ ॥

इति श्रीमत्पुराणसारे मुक्तिभेदकथनं नाम
त्रिसप्ततितमोऽध्यायः

---

[2] चिद्रूपं ज्ञानस्वरूपम् ।

---

[1] लिप्यते (क)

## चतुस्सप्ततितमोऽध्यायः

[ स्वकार्यसाधनपाटवे विप्रलुब्धकसंवादः । द्विजेन मृगयारतस्य लुब्धकस्य दर्शनम् ]

[1]सूतः —

श्रूयते च द्विजश्रेष्ठाः संवादो विप्रलुब्धयोः ।
आत्रेयो ब्राह्मणः कश्चिद्वेदाभ्यासरतोऽभवत् ॥ १ ॥

[2]वसत्यविरतं प्राज्ञस्त्रयीत्रिषवणे[3] रतः ।
नाम्ना संयमनः पूर्वमेकस्मिन्दिवसे नदीम् ॥ २ ॥

धर्मारण्यं गतः स्नातुं तदा भागीरथीं शुभाम् ।
तत्रासन्नं महायूथं हरिणानां विचक्षणः ॥ ३ ॥

लुब्धो [4]विष्ठरको नाम धनुष्पाणिः कृतान्तवत् ।
आययौ तं जिघांसुस्तु तस्थौ संयोज्य सायकम् ॥ ४ ॥

ततस्संयमनो विप्रो दृष्ट्वा तं मृगयारतम् ।
वारयामास मा भद्र जीवघातमिमं कुरु ॥ ५ ॥

### लुब्धकेन प्राणिवधे आत्मनो निष्कलङ्कत्वसमर्थनम्

एतच्छ्रुत्वा ततो व्याधः स्मितपूर्वमिदं वचः ।
उवाच नाहं हिंसामि पृथग्जीवं द्विजोत्तम ॥ ६ ॥

---

[1] अस्याध्यायस्यात्रत्यविषयः वराहपुराणात्सङ्गृहीतः । व.पु. अ.५

[2] तपस्यभिरत इति व.पु. । [3] त्रीणि सवनानि प्रातर्मध्यन्दिनसायमिति । तेषां समाहारः । त्रिषवणस्नानं आहिताग्नीनां गृहस्थानां नियतम् । त्रयीत्रिषवणं त्रय्याः वेदसमूहस्य रक्षणार्थं करणीये, आचारे प्रोक्तं त्रिषवणमिति ज्ञेयम् । [4] निष्ठुरक इति व.पु.

कः केन हन्यते जन्तुर्जन्तुः कः केन रक्ष्यते ।
हन्ति रक्षति चैवात्मा ह्यसत्साधु [1]समाचरन् ॥ ७ ॥

परमात्मा स्वयं भूतैः क्रीडत्यर्भकवत्स्वयम् ।
[2]कृता मायावली मन्त्रैः तद्वदेतन्न संशयः ॥ ८ ॥

अहङ्कारस्सदा ब्रह्मन् न विधेयो मुमुक्षुभिः[3] ।
[4]परात्मना प्रणीतं च जगदेतद्विचेष्टितम् ॥ ९ ॥

तत्राहमिति यः शब्दः स साधुत्वं न गच्छति ।
इत्याकर्ण्य स विप्रेन्द्रो लुब्धं संयमनस्तदा ।
सस्मितेनाब्रवीद्वाक्यमिदमिष्टकरं द्विजः ॥ १० ॥

किमेतदुच्यते भद्र प्रत्यक्षं हेतुमद्वचः ।

## स्वकार्यसाधकानां स्वार्थपरतां प्रति लुब्धकगोमायुकथानकम्

स्वकार्यलुब्धो धर्मान्वै भाषसे हि यथारुचि ॥ ११ ॥

[5]पुरा सुदुःखिताः केचित्तनयं वैदिशे पुरे[6] ।
मृतं बालमुपादाय श्मशानाभिमुखाः स्थिताः ॥ १२ ॥

---

[2] कृत्वा मृदावली वर्म इति 'क'वर्णं इति 'घ'मातृकायां च दृश्यते । अन्यत्र सर्वत्रास्पष्टम् । अतः वराहपुराणपाठः स्वीकृतः । कृत्वा मृदावलीवर्णं इति वा समीचीनतया पठ्येत । वराहपुराणपाठोऽपि न सुस्पष्टः ।

[3] मुमुक्षुभिरिति व.पु. [5] एतदनन्तरं महाभारतात्सङ्गृहीतम् । म.भा. शान्तिपर्व अ.१४९ [6] स्वयकार्यलुब्धानां वाचः स्वाभिप्रायानुसारिण्य इति ब्राह्मणेन गृध्रजम्बुकसंवाददृष्टान्तप्रदानम् ।

---

[1] समाचर (क ख घ) [4] परमात्मप्रणीतं (ग)

अङ्कनाङ्कं समाक्रम्य रुरुदुर्भूतले तदा ।

## स्वार्थसाधने गृध्रस्य हेतूक्तयः

तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् ॥ १३ ॥
अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥ १४ ॥
न पुनर्जीवते कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ १५ ॥
सर्वेण खलु मर्तव्यं जीवलोके प्रसूयता ।
कृतान्तविहिते मार्गे को मृतं जीवयिष्यति ॥ १६ ॥
[1]दिशान्तोपरते काले अस्तं गच्छति भास्करे ।
गम्यतां स्वमधिष्ठानं सुतस्नेहो विसृज्यताम् ॥ १७ ॥
इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव हि ।
समानीतानि कालेन किन्तु ते जातबान्धवाः ॥ १८ ॥
सम्पश्यत जगत्सर्वं सुखदुःखैरधिष्ठितम्
संयोगो विप्रयोगश्च पर्यायेणैव लभ्यते ॥ १९ ॥
गृहीत्वा येऽनुगृह्णन्ति अनुयान्ति च ये मृतान् ।
तेऽप्यायुषः प्रमाणेन स्वेन गच्छन्ति जन्तवः ॥ २० ॥
ततो गृध्रवचः श्रुत्वा विक्रोशन्तस्ततो भृशम् ।
बान्धवास्त्वभ्यधावन्त पुत्रमुत्सृज्य भूतले ॥ २१ ॥
निराशा जीविते तस्मिन्मार्गमारुह्य धिष्ठिताः[2] ।
[3]ध्वांक्षरूक्षविवर्णस्तु बिलान्निःसृत्य जम्बुकः ॥ २२ ॥

---

[2] अधिष्ठिताः । [3] ध्वांक्षः काकः, तद्वन्मसृणत्वरहितो विवर्णश्च ।

---

[1] दशान्तोपरते (ग) देशा .... .... (घ)

[1]गच्छमानांस्तु तानाह निर्घृणाः खलु मानवाः ।

## स्वार्थसाधने जम्बुकस्य हेतूक्तयः

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत मा भयम् ।
देशकालविभेदेन फलभेदोऽस्ति कर्मणाम् ॥ २३ ॥

[2]बहुरूपो मुहूर्तश्च जीवेदपि कदाचन ।
श्मशाने पुत्रमुत्सृज्य कस्माद्गच्छथ निर्घृणाः ॥ २४ ॥

न वोऽस्त्यस्मिन्सुतेस्नेहो बाले मधुरभाषिणि ।
[3]यस्य भाषितमात्रेण प्रसादमुपगच्छथ ।
[4]न पश्यथ, सुतस्नेहो यादृशः पशुपक्षिणाम् ॥ २५ ॥

तेषां पुत्राभिरामाणामिह लोके परत्र च ।
न गुणो दृश्यते कश्चित्प्रजास्सन्तारयन्ति च ॥ २६ ॥

क्षीणस्याथाभिशस्तस्य श्मशानाभिमुखस्य च ।
बान्धवा यत्र तिष्ठन्ति तत्रान्यो नावतिष्ठते ॥ २७ ॥

अहो [5]कुलकरं बालं स्नातं माल्यविभूषितम् ।
त्यक्त्वा कथं गच्छथेमं पद्मलोलायतेक्षणम् ॥ २८ ॥

जम्बुकस्य वचः श्रुत्वा कृपणं [6]परिदेविताः ।
न्यवर्तन्त ततस्सर्वे बालार्थे ते हि मानुषाः ॥ २९ ॥

---

[1] आर्षमात्मनेपदम् । [2] मुहूर्तानां बहुरूपत्वात्तत्तत्कालेषु फलभेददर्शनं तु सामान्यम् । [4] न पश्यथेति महाभारतपाठः स्वीकृतः ।

---

[3] तस्य (क ख घ) [4] न वप्यग्रं (क ख ग) न वप्यभ्रं [5] कुलाङ्कुरं बालं हृतमाल्यविभूषणम् (ग) [6] परिदेवयन् (ग)

## दिवैव बालशवभक्षणार्थिना गृध्रेण पुनरपि स्वदौष्ट्यप्रदर्शनम्

गृध्रः —

अहो धिक् सुनृशंसेन जम्बुकेनाल्पमेधसा ।
क्षुद्रेणोक्ता हीनसत्वा मानुषाः किं निवर्तथ ॥ ३० ॥

पञ्चभूतपरित्यक्तं शुष्कं काष्ठत्वमागतम् ।
कस्माच्छोचथ निश्चेष्टमात्मानं किं न शोचथ ॥ ३१ ॥

[1]यथाकृता च भूतेभ्यः प्राप्यते [2]सुखदुःखिता ।
गृहीत्वा जायते जन्तुः दुःखानि च सुखानि च ॥ ३२ ॥

न कर्मणा पितुः पुत्रः पिता वा पुत्रकर्मणा[3] ।
मार्गेणान्येन गच्छन्ति[4] बद्धास्सुकृतदुष्कृतैः ॥ ३३ ॥

धर्मं चरत यत्नेन तथाऽधर्मान्निवर्तथ ।
यत्करोति शुभं कर्म तथाऽधर्मं सुदारुणम् ।
तत्कर्तैव समश्नाति बान्धवानां किमत्र वै ॥ ३४ ॥

[5]किं करिष्यथ शोचित्वा मृतं किमनुशोचथ ।
सर्वस्य हि प्रभुः कालो धर्मस्य समदर्शनः ॥ ३५ ॥

यौवनस्थांश्च बालांश्च वृद्धान्गर्भगतानपि ।
प्राज्ञान्वा यदि वा मूढान् सधनान्निर्धनानपि ।

---

[1] यथाकृता सुखदुःखिता स्वकर्मानुगुण्येन जीवः सुखं वा दुःखं वा अनुभवति ।
[3] पुत्रस्य पितुर्वा फलभोक्तृतायां परस्परयोः कर्मफलं हेतुर्न भवति । रक्त-सम्बन्धः केवलं देहस्य । पुण्यपापे स्वस्यैव । [5] किं करिष्यथेति महाभारतपाठः स्वीकृतः ।

---

[2] दुःखिदुःखिताः (ग) [4] बुधा (क) [5] वारिष्यथध्वं (क ख ग घ)

सर्वानाविशते मृत्युरेवं भूतमिदं जगत् ॥ ३६ ॥
शोकं त्यजत दैन्यं च सुतस्नेहं विमुञ्चत ।
[1]त्यज्यतामयमाकाशे ततः शीघ्रं निवर्तथ ॥ ३७ ॥

## जम्बुकेन स्वपक्षप्रतिपादनम्

जम्बुकः —

अहो मन्दीकृतः स्नेहः गृध्रेणेहाल्पबुद्धिना ।
सुतस्नेहाभिभूतानां युष्माकं शोचतां भृशम् ॥ ३८ ॥

यद्गच्छति जनश्चायं स्नेहमुत्सृज्य दुस्त्यजम् ।
ब्रह्महत्याश्वमेधाभ्यां नापरं पुण्यपापयोः ॥ ३९ ॥

अद्य शोकं विजानीत मानुषाणां महीतले ।
स्नेहं हि करुणं दृष्ट्वा ममाप्यश्रूण्यथागमन् ॥ ४० ॥

अनिर्वेदः सदा कार्यो निर्वेदाद्धि कुतस्सुखम् ।
प्रयत्नात् प्राप्यते ह्यर्थः कस्माद्गच्छथ निर्दयाः ॥ ४१ ॥

आत्ममांसोपमं पुत्रं शरीरार्धमयीं तनुम् ।
पितॄणां वंशकर्तारं वने त्यक्त्वा क यास्यथ ॥ ४२ ॥

अथवास्तं गते सूर्ये सन्ध्याकाल उपस्थिते ।
ततो नेष्यथ वा पुत्रं इहस्थं वा करिष्यथ ॥ ४३ ॥

## दुष्टगृध्रेण कुयुक्तिप्रदर्शनम्

गृध्रः —

अद्य वर्षसहस्रं मे साग्रं जातस्य मानुषाः ।
न च पश्यामि जीवन्तं मृतं स्त्रीपुंनपुंसकम् ॥ ४४ ॥

मृता गर्भेषु जायन्ते जातमात्रा म्रियन्ति च ।
विक्रमन्तो म्रियन्ते च यौवनस्थास्तथा परे ॥ ४५ ॥

---

[1] आकाले त्यागो नाम दाहाद्यकरणेनैव निर्गतिकशवरूपतापादनम् ।

अनित्यानि च भाग्यानि चतुष्पात्पक्षिणामपि ।
जङ्गमाजङ्गमानां वाप्यायुरग्रेऽवतिष्ठति ॥ ४६ ॥

इष्टदारवियुक्ताश्च पुत्रशोकान्विताास्तथा ।
दह्यमानास्तु शोकेन गृहं गच्छन्ति नित्यशः ॥ ४७ ॥

निरर्थको ह्ययं स्नेहो निष्फलश्च परिश्रमः ।
न चक्षुर्भ्यां न कर्णाभ्यां संशृणोति समीक्षते ॥ ४८ ॥

त्यज्यतां काष्ठभूतोऽयं मृग्यतां जाम्बुकं वचः ।
मोक्षधर्माश्रितैर्वाक्यैर्हेतुमद्भिरनिष्टुरैः ।
मयोक्ता गच्छथ क्षिप्रं स्वं स्वमेव निकेतनम् ॥ ४९ ॥

जम्बुकः —

इमं कनकवर्णाभं भूषणैस्समलङ्कृतम् ।
गृध्रवाक्यात्कथं पुत्रं त्यजध्वं पितृपिण्डदम् ॥ ५० ॥

न स्नेहस्य विरोधोक्तिः प्रलापरुदितस्य च ।
मृतस्यास्य परित्यागात्तापो वो भवति ध्रुवम् ॥ ५१ ॥

[1]श्रूयते शम्बुके शूद्रे हते ब्राह्मणबालकः ।
जीवितो धर्ममासाद्य रामात्सत्यपराक्रमात् ॥ ५२ ॥

तथा श्वेतस्य राजर्षेर्बालो दिष्टान्तमागतः ।
[2]श्वेतेन धर्मनित्येन मृतस्सञ्जीवितः पुनः ॥ ५३ ॥

---

[1] इयं शम्बुककथा रामायणोत्तरकाण्डे द्रष्टव्या । सर्गाः ७३-७६

---

[2] स्वैन धर्मनिमित्तेन [क]

[1]प्रादुरासीन्मृतः पुत्रः सृञ्जयस्याद्भुतश्रियः ।
दत्तः प्रसन्नेन तथा नारदेन महर्षिणा ॥ ५४ ॥

तथा कश्चिद्भवेत्सिद्धो मुनिर्वा देवतापि वा ।
कृपणानामनुक्रोशं कुर्याद्वा रुदतामिह ॥ ५५ ॥

यत्नो हि सततं कार्यस्ततो दैवेन युज्यते ।
दैवं पुरुषकारं च कृतान्तो नोपपद्यते ॥ ५६ ॥

स्थीयतां यावदादित्यः किं वा क्रव्यादभाषितैः ।

गृध्रः —

अश्रुपातपरिक्लिन्नपाणिस्पर्शनपीडितः ॥ ५७ ॥

धर्मराजनियोगाच्च दीर्घनिद्राप्रवेशितः ।
नैष जम्बुकवाक्येन पुनः प्राप्नोति जीवितम् ॥ ५८ ॥

मृतस्योसृष्टदेहस्य पुनर्देहो न विद्यते ।
न वै मूर्तिप्रदानेन जम्बुकानां शतैरपि ।
न सञ्जीवयितुं शक्यो बालो वर्षशतैरपि ॥ ५९ ॥

अथ रुद्रः कुमारो वा ब्रह्मा वा विष्णुरेव वा ।
वरमस्मै प्रयच्छन्ति यतो जीवेदयं पुनः ॥ ६० ॥

नैष बाष्पविमोक्षेण न चाश्वासात्कृतेन वै[2]
न दीर्घरुदितेनेह पुनर्जीवं गमिष्यति ॥ ६१ ॥

अहं च [3]क्रोष्टुरेषोऽपि यूयं चैवास्य बान्धवाः ।
धर्माधर्मौ गृहीत्वेह सर्वे वर्तामहेऽध्वनि ॥ ६२ ॥

---

[1] इयं कथा महाभारते शान्तिपर्वणि द्रष्टव्या । शान्तिपर्वणि राजधर्मानुशासन-पर्व अध्यायः ३१

[2] न वा श्वासकृते न च इति महाभारतपाठः । [3] क्रोष्टुकश्चैवेति म.भा.

त्यज्यतामेष निःस्नेहः शून्यः काष्ठत्वमागतः ।

संयमनः —

[1]गृध्रो [2]नास्तमितेत्याह गतोऽस्तमिति जम्बुकः ।
मृतं पुत्रं परीजग्मुः ऊचतुस्तौ क्षुधान्वितौ ॥ ६३ ॥

स्वकार्यदक्षौ तौ व्याध गृध्रो जम्बुक एव च ।
क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः ॥ ६४ ॥

तयोर्विज्ञानविदुषः द्वयोर्मृगपतत्रिणोः ।
वाक्यैरमृतकल्पैर्हि प्रतिष्ठन्ते व्रजन्ति च ॥ ६५ ॥

शोकदैन्यसमाविष्टा रुदन्तस्तस्थिरे सदा ।
स्वकार्यकुशलाभ्यां ते सम्भ्राम्यन्ते च नैपुणात् ॥ ६६ ॥

यथा तयोर्विवदतोराहारमभिकाङ्क्षिणोः ।
बान्धवानां स्थितानां च उपातिष्ठत शङ्करः ॥ ६७ ॥

ततस्तानाह मनुजान्वरदोऽस्मीति शूलधृक् ।
ते प्रत्यूचुरिदं वाक्यं दुःखिताः प्रणताः स्थिताः ॥ ६८ ॥

एकपुत्रविहीनानां सर्वेषां जीवितार्थिनाम् ।
पुत्रस्य नो जीवादानाज्जीवितं दातुमर्हसि ॥ ६९ ॥

एवमुक्तस्स भगवान् पाणिपूर्णेन वारिणा ।
जीवं [2]तस्मै कुमाराय प्रादाद्वर्षशतस्य वै ॥ ७० ॥

---

इतेत्याह इत्यत्र सन्धिरार्षः ।

---

[1] संयमाम्यनगृध्रेण नास्तमित्याह जम्बुकः [ग]

तथा गोमायुगृध्राभ्यामददात्क्षुद्विनाशनम् ।
वरं पिनाकी भगवान्सर्वभूतहिते रतः ॥ ७१ ॥

ततः प्रणम्य देवेशं श्रेयोहर्षसमन्विताः ।
विविशुः पुत्रमादाय नगरं हृष्टमानसाः ॥ ७२ ॥

एषा बुद्धिस्समस्तानां स्वकार्यार्थं प्रतिष्ठिता ।
भवानपि स्वकार्यार्थं ब्रूते [1]धर्मं सनातनम् ॥ ७३ ॥

इति श्रीमत्पुराणसारे संयमनलुब्धकसंवादो नाम
चतुस्सप्ततितमोऽध्यायः

---

[1] सर्वं (ग)

## पञ्चसप्ततितमोऽध्यायः

[ धर्मार्थकाममोक्षनिरूपणाध्यायः ]

### जन्मानुरोधेन कर्म कुर्वतः पापाभावकथनम्

एतच्छ्रुत्वा पुनर्विप्रं लुब्धकः प्राह धर्मवित् ।
पिण्डग्रहणधर्मेण यद्यस्य विहितं व्रतम् ॥ १ ॥

### धर्मार्थकामानां स्थानतारतम्यम्

धर्मो विप्र गुरुः प्रोक्तः मध्यमो ह्यर्थ उच्यते ।
[1]कामो यवीयानिति च प्रवदन्ति मनीषिणः ॥ २ ॥

### धर्मस्य महत्त्वम्

[2]धर्मेण धर्षयंस्तीक्ष्णाः धर्मलोकाः प्रतिष्ठिताः ।
धर्मेण देवा दिवि च धर्मे चार्थः समाहितः ।
[3]तस्माद्धर्म[4]प्रधानेन भवितव्यं यतात्मना ॥ ३ ॥

### अर्थमहत्त्वम्

[5]कृषिगोरक्षवाणिज्यशिल्पानि विविधानि च ।
अर्थ इत्येव सर्वेषां कर्मणामप्युपक्रमः
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । ॥ ४ ॥

जटाजिनधराश्शान्ताः पङ्कदिग्धा जितेन्द्रियाः

---

[1] अयं भागः महाभारतात्सङ्गृहीतः । म.भा. शान्तिपर्वणि आपद्धर्मपर्व अ.१६१ । [2] 'धर्मेणैवर्षयस्तीर्णाः धर्मे' इति महाभारतपाठः साधुः परिभाति । [3] अयं महाभारतपाठः ।

---

[1] धर्मेण दर्शयं स्तीक्ष्णा धर्मे [क] धर्मेण धर्शयन् [क ग] [4] धर्मप्रयत्नेन भवेतव्यं यतात्मवान् [क ख ग घ] [5] केचित् गो [क ख ग घ]

मुण्डा[1]निस्तन्त[2]वश्चापि वसन्त्यर्थार्थिनः पृथक् । ॥ ५ ॥

काषायवसनाश्चान्ये श्मश्रुला ह्रीसुसंयुताः
विद्वांसश्चैव दान्ताश्च मुक्तास्सर्वपरिग्रहैः । ॥ ६ ॥

उद्भूतार्थं हि पुरुषं [3]विशिष्टतरयोनयः[4]
ब्राह्मणमिव भूतानि सन्ततं पर्युपासते । ॥ ७ ॥

न ऋतेऽर्थेन वर्तेते धर्मकामाविति श्रुतिः
विषहेतार्थवान्धर्ममाराधयितुमुत्तमम् ।
कामं च चरितुं शक्तो दुष्प्रापमकृतात्मभिः ॥ ८ ॥

अर्थसिद्ध्याभिनिर्वृत्तावुभावेतौ भविष्यतः ।
अर्थस्यावयवावेतौ धर्मकामाविति स्थितिः ॥ ९ ॥

आसीनश्च शयानश्च विचरन्नपि च स्थितः ।
अर्थयोगं दृढं कुर्याद्योगैरुच्चावचैरपि ॥ १० ॥

तस्मिंस्तु वै सुनिर्वृत्ते दुर्लभे परमप्रिये ।
इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः ॥ ११ ॥

योऽर्थो धर्मेण संयुक्तो धर्मश्चार्थेन संयुतः ।
मध्विवामृतसंस्पृष्टं तस्मादेतौ समाविह ॥ १२ ॥

[5]अनार्थस्य न धर्मोऽस्ति तथार्थोऽधर्मिणः कुतः ।
अर्थधर्मप्रधानेन सेव्यः कामो यतात्मना ।
इत्येव केचिदिच्छन्ति मुनिश्रेष्ठा विमोहिताः ॥ १३ ॥

---

[1] निस्तन्तव इति महाभारतपाठः । [4] महाभारतपाठः ‘ विशिष्टतरयोनय इति । [5] ‘ अनर्थस्य न कामोऽस्ति ’ इति महाभारतम् ।

---

[2] निस्तम्बवश्चापि [क ख ग घ] [3] विसृष्टनरयोनयः [क ख ग घ]

## कामस्य महत्त्वम्

नाकामः काममत्यर्थं नाकामो धर्ममृच्छति ।
नाकामः कामयानोऽस्ति तस्मात्कामो विशिष्यते ॥ १४ ॥

कामेन युक्ता[1]ऋषयस्तपस्येव समास्थिताः ।
पलाशशाकमूलाश्च वायुभक्षास्समाहिताः ॥ १५ ॥

वेदोपवेदेष्वपरे युक्ताः स्वाध्यायतत्पराः ।
श्राद्धे यज्ञक्रियायां च तथा दाने प्रतिग्रहे ॥ १६ ॥

वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा ।
देशधर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥ १७ ॥

समुद्रं चाविशन्त्येते नराः कामेन संयुताः ।
कामो हि विविधाकारः सर्वं कामेन सन्ततम् ॥ १८ ॥

[2]नास्ति नासीन्न भविता[3] नूनं कामादृते परम् ।
एतत्सारं मुनिश्रेष्ठ धर्मार्थावत्र संस्थितौ[4] ॥ १९ ॥

नवनीतं यथा दध्नस्तथा कामोऽर्थधर्मतः ।
श्रेयस्तैलं च पिण्याकाद्घृतं श्रेय उदश्वितः ॥ २० ॥

श्रेयः पुष्पफलं काष्ठात्कामो धर्मार्थयोर्वरः ।
[5]पुष्पतो मध्विव [6]परं कामात्सञ्जायते सुखम् ॥ २१ ॥

---

[3] महाभारते 'नास्ति नासीन्नाभविष्यदिति । अत्र तदनुसारेण विपरिवर्तितः पाठः । [4] संश्रिताविति महाभारते । [5] मोक्षधर्मपर्वणः सारांश इव केचिच्छ्लोकाः दृश्यन्ते । अ.२४३ [6] रसः इति महाभारते ।

---

[1] ह्यषयः (घ) [2] नास्ति तासां (क ख ग घ)

इत्येवं ब्रुवते केचित्कामनिष्ठापरा द्विज ।
[1]धर्मादर्थाच्च कामाच्च [2]वेदाः शंसन्ति सुव्रत ।
निवृत्तिलक्षणो धर्मो विशिष्टस्सर्वसम्मतः ॥ २२ ॥

मोक्षधर्मेषु निरतः लघ्वाहारो जितेन्द्रियः
प्राप्नोति ब्रह्मणः स्थानं पुनरावृत्तिवर्जितम् ॥ २३ ॥

अर्थाः खलु समृद्धा हि गाढं दुःखं विजानताम् ।
[3]असमृद्धास्त्वपि सदा मोहयन्ति विचक्षणान्[4] ॥ २४ ॥

कामबन्धनमेवेह नान्यदस्तीह बन्धनम् ।
कामबन्धविमुक्तो हि ब्रह्मभूयाय कल्पते ॥ २५ ॥

यो वै न पापे निरतो न पुण्ये
नार्थे न धर्मे मनुजो न कामे ।
विमुक्तदोषः समफल्गुसारो[5]
विमुच्यते दुःखसुखात्स सिद्धः ॥ २६ ॥

## विष्टरकव्याधस्य मुक्तिप्राप्तिः

सूतः —

एवमुक्ते तु व्याधेन ब्राह्मणे मुनिपुङ्गवाः ।
पुष्पवृष्टिरथाकाशात्पपातोरसि तस्य हि ॥ २७ ॥

विमानानि च मुख्यानि कामगनि महान्ति च ।
बहूनि रत्नमुख्यानि ददर्श ब्राह्मणोत्तमाः ॥ २८ ॥

---

[2] वेदास्तु एवमिति ज्ञेयम्। [3] आये दुःखं व्यये दुःखं धिगार्था कष्टसंश्रया इत्युक्तिं स्मारयति श्लोकोऽयम्। यतः समृद्धावसमृद्धावपि अर्थाश्रयं दुःखं समानमेव । [3] अविचक्षणान् । म.भा. [5] फल्गु निस्सारं वस्तु सारं तु गुणसमृद्धम् ।

---

[1] धर्माधर्माच्च (क ख ग)

तेषु विष्टरकं लुब्धं सर्वेषु समवस्थितम् ।
ददर्श ब्राह्मणस्तत्र कामरूपिणमुत्तमम् ॥ २९ ॥
अद्वैतवासनासिद्धं योगाद्बहुशरीरकम् ।
दृष्ट्वा [1]विप्रो मुदा युक्तः प्रययौ निजमाश्रमम् ॥ ३० ॥
एवं ज्ञानवतः कर्म कुर्वतोऽपि शुभाशुभम् ।
भवेन्मुक्तिर्मुनिश्रेष्ठा नात्र कार्या विचारणा ॥ ३१ ॥
तस्माद्विज्ञाननो मुक्तिः नान्यथा [2]मुनिपुङ्गवाः ।
न तुल्यं वेदनेनास्ति विप्राः किञ्चिज्जगत्त्रये ।
वेदनेन समं साक्षाद्वेदनं केवलं खलु ॥ ३२ ॥
यथा ब्राह्मणतुल्यस्तु मानवो नैव विद्यते ।
तथा वेदनतुल्यं तु न [3]किञ्चिदपि विद्यते ॥ ३३ ॥
यथा यज्ञसमं कर्म न किञ्चिदपि विद्यते ।
तथा वेदनतुल्यं तु न किञ्चिदपि विद्यते ॥ ३४ ॥
यथा गङ्गासमा नास्ति नदी लोकत्रयेऽपि च ।
तथा वेदनतुल्यं तु न किञ्चिदपि विद्यते ॥ ३५ ॥
[4]ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्पगः ।
वेदनेनैव पापेभ्यो मुच्यते न हि संशयः ॥ ३६ ॥
विज्ञानस्य बलेनैव किन्न कुर्याद्धि मानवः ।

**ज्ञानिसङ्गेन पाषण्डिनः पापनिवृत्तिविषये कथा**

पुरा पूर्वकृतैः पापैः पाषण्डः कश्चिदल्पवित् ।
वेदवादरतान्हत्वा मनुष्यान् दृष्टिगोचरान् ॥ ३७ ॥

---

[4] महापातकमध्ये गणितानि चत्वारि पातकानि ।

---

[1] युक्तो [क ख घ] [2] कर्मकोटिभिः [ग] [3] किञ्चिदिह [ख ग घ]

यज्ञशालासहस्रं च स दग्ध्वा दृष्टिगोचरम् ।
देवताप्रतिमाः क्रोधादुत्पाट्य निजमातरम्[1] ॥ ३८ ॥

मत्तमोहेन तीर्थानि दूषयित्वा महाबलः ।
घोरान्यन्यानि पापानि चकारातीव निर्घृणः ॥ ३९ ॥

उवास सुचिरं कालं कुर्वन्पापानि सङ्घशः[2] ।
एकदा तु महायोगी शान्तचित्तो जितेन्द्रियः ॥ ४० ॥

कश्चिद्विज्ञानसम्पन्नः क्षुधार्तः क्षुन्निवृत्तये ।
भिक्षामादाय तस्यैव भुक्तवानोदनं गृहे ॥ ४१ ॥

तस्य सर्वाणि पापानि प्रदग्धानि क्षणेन तु ।
यथा दावानले क्षिप्तं तूलं दग्धं[3] क्षणेन तु ॥ ४२ ॥

तेन पाषण्डिनो बुद्धिर्जाता शुद्धा क्षणात्तदा ।
तत्प्रसादेन पाषण्डी विमुक्तोऽभवदास्तिकः ॥ ४३ ॥

[4]ब्रह्मविज्ञानिसंस्पर्शाद्विमुक्ता बहवो जनाः ।

## परमाद्वैतविज्ञानिनः प्रशंसा

परमाद्वैतविज्ञानी यत्र यत्र स्थितो द्विजाः ।
तत्र सन्निहिता मुक्तिर्नात्र कार्या विचारणा ॥ ४४ ॥

परमाद्वैतनिष्ठस्य शान्तस्य शिवयोगिनः ।
समं नाहं प्रपश्यामि त्रिकालेषु जगत्त्रये ॥ ४५ ॥

---

[1] निजमातरं हत्वाऽथवा सङ्कटेषु पातयित्वेत्याद्यूहम् । [2] न केवलं एकस्मिन्काले एकमेव पातकम् । अपि तु एकस्मिन्काल एव बहुपापानि ।

[3] दग्धं भवति भवेद्वेति वाक्यशेषः ।

---

[4] ब्रह्मविज्ञानिनः स्पर्शात् (ग)

परमाद्वैतविज्ञानी ब्रह्मणाराध्यते सदा ।
नारायणेन रुद्रेण तथा त्वन्यैर्विशेषतः ॥ ४६ ॥

परमाद्वैतनिष्ठस्य विज्ञानात्परयोगिनः ।
शुश्रूषा [1]सिद्धविद्याया साधनं न हि संशयः[2] ॥ ४७ ॥

वेदोदितमहाऽद्वैतपरिज्ञानस्य वैभवम् ।
नैव शक्यं मया वक्तुं तस्मादेवोपरम्यते ॥ ४८ ॥

[3]कथितमखिलदुःखध्वंसकं वस्समस्तं
परमशिव[4]सुखात्मप्रापकं सद्य एव ।
विगतसकलदोषाः वेदवेदान्तनिष्ठाः
[5]हृदयकुहरनिष्ठं कर्तुमर्हन्ति चेतः ॥ ४९ ॥

इति श्रीमत्पुराणसारे धर्मार्थकाममोक्षस्याधिक्यकथनं नाम
पञ्चसप्ततितमोऽध्यायः

---

[2] परयोगिनः शुश्रूषासिद्धविद्याया एव साधनम् ।

---

[1] शुद्धविद्याया (ग) [3] कुपित (क ख घ) [4] सुखात्मा (क ख घ)
[5] हृदयकुहरनिष्ठः ( क ख ग घ)

## षट्सप्ततितमोऽध्यायः

[ ब्रह्मजिज्ञासाप्रकरणम् ]

### श्रुत्यनुग्राहकस्य तर्कस्यैव प्रामाण्यप्रतिपादनम्

सूतः —

वक्ष्यामि परमं गुह्यं सर्ववेदार्थसङ्ग्रहम् ।
ब्रह्मैकमेव जिज्ञास्यं न ततोऽन्यत्तु किञ्चन ॥ १ ॥

मायामात्रमिदं सर्वमित्याह हि पुरा श्रुतिः ।
दृश्यत्वा[1]द्विमतं मिथ्या शुक्तिकारजतादिवत् ॥ २ ॥

[2]ततोऽलीकं जगद्धेतुर्मायैव हि न संशयः ।
ब्रह्मणः कारणत्वस्य शक्तिर्निर्वाहिका तु या ।
सा माया दुर्निरूप्यैव सदसद्रूपतस्सदा ॥ ३ ॥

दुर्घटत्वमविद्याया भूषणं न तु दूषणम् ।
कार्यरूपं जगत्सर्व[3]मनित्यं सततं खलु ॥ ४ ॥

अतो मायमयी सृष्टि[4]रसत्यासत्यमितीरितम् ।
कार्यस्यैव ह्यनित्यत्वं वर्णयन्तीह केचन ।
न तद्युक्तमकार्यस्याप्यनित्यत्वप्रसिद्धितः ॥ ५ ॥

अकार्यस्य घटादीनां प्रागभावस्य जन्तुभिः ।
दृष्टमेवं ह्यनित्यत्वं नादृष्टं पण्डितोत्तमाः ॥ ६ ॥

भावरूपस्य कार्यत्वमनित्यत्वे प्रयोजनम् ।
अपि सर्वस्य नित्यत्वे ह्यनात्मत्वं प्रयोजकम् ॥ ७ ॥

---

[1] द्धि मतिर्मिथ्या (ग)  [2] ततमेकं जगद्धेतु (ग)  [3] अनन्तं (क ख घ)
[4] र्महत्या सत्यमीरितम् (क ख घ)

[1]दिक्कालाकाश[2]रूपाणां न नित्यत्वमनात्मनाम् ।
श्रुतयो नित्यतामेषां प्रवदन्तीह सादरम् ॥ ८ ॥

श्रुत्यनुग्राहकस्तर्को न स्वतन्त्र इति स्थितिः ।
द्रष्टृसाम्येन वेदज्ञाः खलु तर्कोऽर्थसाधकः ॥ ९ ॥

श्रुतिरन्यानपेक्षा हि द्विजेन्द्रा अर्थसाधिका ।
प्रत्यक्षादिप्रमाणानां सर्वेषां पण्डितोत्तमाः ॥ १० ॥

अगम्यं ब्रह्म धर्मश्च तौ हि श्रुत्यैकगोचरौ ।
अन्तरेण श्रुतिं बोद्धुं यतन्तेऽतीन्द्रियं पदम्
ते करेणापि माधुर्यं जानन्त्येव सुनिश्चितम् ॥ ११ ॥

## श्रुत्यनुग्राहकतर्कप्रामाण्यकथने पाषण्डसङ्गरकथा

पुरा कश्चिन्महामूर्खः [3]सङ्गरो नाम बाडवः[4] ।
[5]पूर्वजन्मकृतामापऽद्वेदश्रद्धाविवर्जितः ॥ १२ ॥

तर्कशास्त्ररतः साक्षाद्ब्रह्मातीन्द्रियमव्ययम् ।
धर्माधर्मौ च तर्केण केवलेन मुनीश्वराः ॥ १३ ॥

अक्लेशेन परिज्ञातुमकरोद्यत्नमुत्तमम् ।
तर्को नानाविधस्तस्य [6]प्रतिभातो मुनीश्वराः ॥ १४ ॥

तेन [7]मोहावृतरस्साक्षा[8]त्सङ्गरो मुनिसत्तमाः ।
चकार दीक्षां पाषण्डे मार्गे दीक्षापुरस्सरम् ॥ १५ ॥

---

[4] बाडवो ब्राह्मणः । [5] पूर्वजन्मकृतात्पापादिति युक्तं स्यात् ।
[7] मोहश्चात्र कुतर्कपरिगृहीतस्वपक्षप्रतिपादनादिमूलः अहङ्कारविशेषः ।

---

[1] दक्काला (क) [2] पूर्वाणां (ग) [3] संगिरो (घ) [6] प्रतिघातो (घ)
[8] संगिरो (घ)

पुनस्तर्कप्रतिष्ठाना[1]न्मायया तस्य मोहितः ।
चकार दीक्षां पाषण्डविशेषेषु यथारुचि ॥ १५ ॥

पुनस्तर्कप्रतिष्ठानान्मायया तस्य मोहितः ।
त्यक्त्वा तमपि मार्गं च चचार च यथारुचि ॥ १६ ॥

पुनर्मोहावृतस्साक्षात्स्वसारं मातरं तथा ।
गत्वा ममार कालेन सङ्गरस्साहसी द्विजाः ॥ १७ ॥

पापिनः सङ्गरस्य यमयातनानुभवः

अत्युग्रा[2]श्चातिसन्नद्धा यमदूता भयङ्कराः ।
सङ्गरं तु समादाय शीघ्रं विप्रा यमं ययुः ॥ १८ ॥

यमस्तं सङ्गरं क्रुद्धो विलोक्यातिभयङ्करम् ।
यथाशक्ति भटा एष पीड्यतां [3]मम सन्निधौ[4] ॥ १९ ॥

इति प्राह यमस्सोऽपि [5]सङ्गरो यमकिङ्करैः ।
अतीव पीडितो विप्रा अभवच्चाविचेष्टितः ॥ २० ॥

पुनश्च [6]तीक्ष्णया वाचा यमः प्राह सुदारुणम् ।
भिद्यतां सङ्गरो दुष्टश्छिद्यतां भिद्यतामयम् ॥ २१ ॥
अन्यैर्नानाविधैः क्रूरैरुपायैः पीड्यतामिति ।

---

[2] अतिसन्निद्या इति 'घ'प्रतौ, अन्यत्र चासङ्गतः पाठः दृश्यते । अतः 'अतिसन्नद्धा' इति किञ्चित्परिवर्त्य पठितम् ।

[4] 'यमसन्निधौ' इति मातृकापाठः । स चासम्बद्धः ।

---

[1] त्सङ्गरोऽत्र न मोहितः (क) ष्ठानां मायया परिमोहितः (क) स्सगिरो वनमोहितः (ख)
[3] मम (ख) [5] संगिरो (ख घ) [6] भीक्ष्णया (ख)

सङ्गरो यमदूतैश्च क्रमेण नरकार्णवे ।
यन्त्रैर्नानाविधैरन्यैरुपायैरतिदारुणैः ॥ २३ ॥
अतीव पीडितो विप्रा अभवत्कोटिवत्सरम् ।

## शिवभक्तदर्शनेन सङ्गरस्य नरकान्मोक्षः

पुरा कृतमहापुण्यपरिपाकबलेन च ।
अकस्माच्च [1]शतानन्दश्शम्भुक्तस्समागतः[2] ॥ २४ ॥
स पुनः पीड्यमानं तं विलोक्य करुणाबलात् ।
प्राहों नमः शिवायेति मन्त्रमाद्यं षडक्षरम् ॥ २५ ॥
[3]तदेव नरकस्साक्षात्स्वर्गलोकोऽभवद्द्विजाः ।

## सङ्गरस्य दुःखहेतुनिरूपणम्

यमोऽथ सङ्गरं विप्रास्समाहूयेदमब्रवीत् ॥ २६ ॥
विनैव वेदं तर्कस्य केवलस्य परिग्रहात् ।
त्वया भुक्तं महद्दुःखमप्रसह्यमनेकशः ॥ २७ ॥
षडक्षरमहामन्त्रश्रवणादेव केवलम् ।
दुःखादस्माद्विनिर्मुक्तस्त्वं महारौरवादितः ॥ २८ ॥

---

[2] ब्रह्ममानसकन्यायाः दिवोदासभगिन्याः अहल्यायाः गौतमस्य च पुत्रः जनकस्य राज्ञः पुरोहितः शतानन्दः । परन्त्वयं शिवभक्तः शतानन्दः क इति न ज्ञायते ।

---

[1] सदानन्दः (क) [3] स एक (क घ)

ब्राह्मण्यं प्राप्य वेदस्य विदित्वा [1]वैभवं पुनः ।
तदुक्तं धर्ममास्थाय पुनर्वेदान्तवाक्यजम् ।
ब्रह्मज्ञानमवाप्याशु विमुक्तो भवबन्धनात् ॥ २९ ॥

इति श्रीमत्पुराणसारे मायाप्रतिपादनं नाम
षट्सप्ततितमोऽध्यायः

1 भवेत्पुनः (क ख घ)

## सप्तसप्ततितमोऽध्यायः

[ षडक्षरमाहात्म्यवर्णनम् ]

### षडक्षरमाहात्म्यविषये यमसकाशे सङ्गिरस्य प्रश्नः

[1]सङ्गरः —

भगवन्निदमाश्चर्यं नरकार्णवतारकम् ।
षडक्षरस्य माहात्म्यं वद वैवस्वत प्रभो ॥ १ ॥

तस्य तद्वचनं श्रुत्वा भगवान् कर्मराट्[2] तदा ।
प्राह गम्भीरया वाचा शिवमन्त्रस्य वैभवम् ॥ २ ॥

### सनन्दनेन शिवमात्म्यदर्शनम्

यमः —

[3]ब्रह्मसूनुर्महातेजा जगत्सदसदात्मकम् ।[4]
सनन्दनाग्रजो योगी पश्यन्दिव्येन चक्षुषा ॥ ३ ॥

शेषनागं महाकायं सोऽपश्यद्यमुनाह्रदे ।
[5]दृष्ट्वाहीनाञ्च राजानं सहस्रशिरसं कविम् ॥ ४ ॥

त्वमाश्चर्यशरीरोऽसि [6]मान्यो धन्यश्च मे ततः ।
एको हि त्वं तु कालिन्द्या ह्रदे चरसि निर्भयः ॥ ५ ॥

सोऽप्येवमाह [7]तं वाग्मी किमाश्चर्यं मुने वद ।
आश्चर्यभूता कालिन्दी [8]सा हि धन्या महानदी ॥ ६ ॥

---

[2] कर्मराट् यमः । [3] हरिवंशे धन्याश्चर्याख्याने विष्णुपर्वणि एतत्सदृशी कथा दृश्यते । अस्याः आधारस्तत्रत्यः स्यात् ।

[4] सदासदात्मकं जगत् ।

---

[1] संगिरः (ख घ) [5] दृष्ट्वाह सौ हि (क ख) दृष्ट्वाह सोऽहिराजानं (घ)

[6] नान्यो धन्यस्य (घ) [7] नासीति (ग) [8] सोऽव्याधन्या (घ)

[1]कौतुकात्तां समभ्येत्य धन्यासि त्वमथाब्रवीत् ।
नित्यमाश्चर्यभूता हि नक्राहिझषसङ्कुला ॥ ७ ॥

प्रत्याह यमुना चेदं [2]सैवमुक्ता स्वरूपिणी ।
नाहं श्लाघ्या न चाश्चर्या [3]धन्येयं स्वर्धुनी विभो ।
यस्यां [4]मत्सदृशा [5]नद्यो विनंक्ष्यन्ति समागताः ॥ ८ ॥

[6]पुरा सिन्धुं समासाद्य अगस्त्यो भगवानृषिः ।
नृत्यन्तमिव चोर्मीभिर्वल्गन्तमिव वायुना ॥ ९ ॥

हसन्तमिव फेनौघैः स्खलन्तं कन्दरेषु च ।
नानाग्रहसमाकीर्णं नानाद्विजगणायुतम्[7] ।
समुद्रमपिबत्क्रुद्धः सर्वलोकस्य पश्यतः ॥ १० ॥

पीयमानं समुद्रं तु दृष्ट्वा [8]देवाश्च विस्मिताः ।
तुष्टवुर्विविधैर्वाक्यैरिदं चैवाब्रुव[9]न्वचः ॥ ११ ॥

पूरयस्व [10]महाभाग समुद्रं लोकभावन ।[11]
यस्त्वया सलिलं पीतं तदस्मिन्पुनरुत्सृज ॥ १२ ॥

एवमुक्तः प्रत्युवाच देवांस्तान्मुनिपुङ्गवः ।
जीर्णं तोयं मया तद्धि उपयोऽन्यः प्रचिन्त्यताम् ॥ १३ ॥

---

[1] कौतुकात्त्वमिति पाठः समीचीनो न भाति । [3] धन्योऽयमिति मातृकापाठः न युज्यते । [6] महाभारतस्थोऽयं भागः वनपर्व अ.१०४,१०५, १०९ [7] द्विजगणान्वितमिति महाभारते। अत्र आ समन्तायुतं व्याप्तं पक्षिसङ्घैरिति ज्ञेयम् । [11] अयं पाठः महाभारतस्थः ।

---

[2] सैवमुक्तिः (ग) [4] मत्सविना (क) [5] बह्वयो [ग] [8] देवास्स (क ख घ)
[9] न्नरः [क ख घ] [10] महाभागो ......... भावनः [क ख ग घ]

एतच्छ्रुत्वा तु वचनं [1]सुरा जग्मुर्यथासुखम् ।
ततश्च बहुकालेन गङ्गा त्रिपथगामिनी ॥ १४ ॥
भगीरथस्य तपसा प्रियार्थं च दिवौकसाम् ।
पूरयामास तोयेन समुद्रं वरुणालयम् ॥ १५ ॥
स्वर्गारोहणनिःश्रेणी गङ्गा चाश्चर्यवत्यपि ।
गत्वाहेदमथैनां च गङ्गां त्रिपथगामिनीम् ॥ १६ ॥
आश्चर्यभूता भूतानां धन्यासि त्वं सरिद्वरे ।
मातेव पासि भूतानि सर्वाण्यपि हि सर्वदा ॥ १७ ॥
सर्वकामप्रदे देवि [2]श्रेयोवृद्धिकरी सताम् ।
जह्नुराजसुता वासि सगरात्मजपावनी ॥ १८ ॥
साप्याह तमृषिं नाहं धन्या नाश्चर्यवत्युत ।
श्लाघ्यश्चाश्चर्यभूतोऽयं [3]हिमवान् सरितां पिता ॥ १९ ॥
स चोवाच तथैवाद्रिराजानं वनवासिनम् ।
श्लाघ्यश्चाश्चर्यभूतोऽसि शैलराज महामते ॥ २० ॥
सोऽप्यब्रवीन्मुने नाहं धन्यश्चाश्चर्यवांस्तथा ।
धन्या भूर्जगदाधारभूतेयं भूतभावनी ॥ २१ ॥
स [4]गां गत्वाप्युवाचेदं विभुर्विश्वंभरां ततः ।
धन्या त्वं पर्वताधारे सर्वाश्चर्योपबृंहिता ॥ २२ ॥
सा तमाह महाब्रह्मन्[6]नाहमेवं यथात्थ माम् ।
यतोऽपामप्रमेयाणां नौरिवोर्ध्वमहं स्थिता ॥ २३ ॥

---

[1] महाभारतपाठः 'विप्रा' इत्यसङ्गतम् । [4] गां भूमिमित्यर्थः ।

---

[2] श्रियो (क ख घ) [3] शैसराजमहामाते (क ख घ) [6] धन्यास्ते सागराः (ग)

उपागम्याथ तानाह समुद्रान्स तपोनिधिः ।
यूयं धन्यास्तदाश्चर्यरूपिणो जलधीश्वराः ॥ २४ ॥

तमूचुस्ते रसात्मनो यथात्थ न तथा वयम् ।
श्लाघ्यश्चाश्चर्यभूतात्मा पर्जन्यो[1] धर्मभूर्हि सः[2] ॥ २५ ॥

प्रशशंसाथ पर्जन्यं कौतुकाविष्टमानसः ।
धन्यश्चाश्चर्यभूतस्त्वं मेघो भूत्वेह वर्षसि ॥ २६ ॥

स उवाच न [2]धन्योऽहं धन्या नक्षत्रमातरः ।
याभिर्दृष्टस्तु वर्षामि [3]जलैरापूरयन्महीम् ॥ २७ ॥

सोऽब्रवीदथ तां गत्वा [4]महाभागास्तु तारकाः ।
धन्या भवत्यो मान्याश्च [5]त्रयाणां जगतामपि ॥ २८ ॥

[6]तमाहुस्ता न धन्यास्तु न स्वच्छन्दास्तु कर्हिचित् ।
आश्चर्यवांस्तदा धन्यस्सोमोऽस्माकं प्रभुस्सदा ॥ २९ ॥

ततस्तमुपगम्यासौ बभाषेदं सुविस्मितः ।
सोमाश्चर्यस्वरूपोऽसि धन्यस्त्वं भो द्विजाधिप[7] ॥ ३० ॥

एवमुक्तोऽब्रवीत्सोमो नाहं धन्यो न चात्मवान् ।
मत्तो ज्यायान्निधिर्धाम्नां सर्वाश्चर्यमयो रविः ॥ ३१ ॥

स उपेत्याथ चादित्यं भक्त्या तं प्रशशंस ह ।
प्रशस्यमानस्सोऽप्याह [7]ब्रह्मर्षिं विश्वसम्भवः ॥ ३२ ॥

---

[2] सः प्रशशंसेत्युत्तरेणान्वयः । [7] द्विजानां अधिप इत्येतावन्मात्रम् ।

---

[1] धन्य भूर्दिशः (क) [2] धन्योऽस्थ (क घ) [3] जीवैर्वा (क ख घ)
[4] वाम्बाधारा (घ) [5] ग्रहाणां (ग) [6] मामाहु (ग) [7] ब्रह्मन्स्त्वं (ग)

नाहं तथा मुनिश्रेष्ठ भाषसे मां यथाधुना ।
धन्याश्च पितृरूपास्ते ये देवा तर्पयन्ति माम् ॥ ३३ ॥

सनत्कुमारस्स सुरान्पितृरूपानथाब्रवीत् ।
धन्या यूयं [2]तदाश्चर्यं विग्रहाः परमेश्वराः ॥ ३४ ॥

इत्युक्तास्ते सहोचुस्तं [2]ना(पि) धन्या न चेश्वराः ।
अग्निर्हि परमोत्साहः नानाश्चर्यस्वरूपवान् ॥ ३५ ॥

हव्यकव्यवहं सोऽथ प्रत्युवाच यमक्षयम् ।
साध्यस्त्वमग्ने भर्ता च देवानां विश्वकृद्विभुः ॥ ३६ ॥

स चाह तमनिन्द्यात्मा नाहमेवं परन्तप ।
धन्या यज्ञाः [3]फलोदग्रा जगदानन्दकारिणः ॥ ३७ ॥

सोऽब्रवीच्च ततो यज्ञा यूयं श्रेष्ठास्ततोऽब्रुवन् ।
दीक्षितश्चाश्रयोऽस्माकं धन्यश्चाश्चर्यमूर्तिमान् ॥ ३८ ॥

स गत्वा [4]धर्ममप्याह यजमानमकल्मषम् ।
धन्यस्त्वमपि पूज्यश्च यज्ञधर्माश्रयस्सदा ॥ ३९ ॥

पितेवाऽत्र त्वमेवैको भूतानां प्रीणनाद्विभुः ।
स एवमुक्तस्तेनार्यो जगादेदं सुभाषितम् ॥ ४० ॥

शासितारोऽत्र नो वेदास्ते धनुर्वेदपञ्चमाः ।
सर्वार्थदर्शिनो नित्यं जगदुत्पत्तिहेतवः ॥ ४१ ॥

---

[2] ना साधन्या इति सर्वमातृका पाठेऽर्थो न प्रतिभाति । [3] फलदायिनः फलपूर्णाः यज्ञाः । यज्ञाद्भवति पर्जन्यः इत्यादिवाक्यैः यज्ञानां जगदानन्ददायकत्वं निश्चितम् । [4] धर्मस्वरूपं यजमानम् ।

---

[1] वदा (क)

पप्रच्छ स ततो वेदांश्छन्दब्रह्मैकविग्रहान् ।
पुराणस्मृत्यलङ्कारान्सषडङ्गपदक्रमान् ॥ ४२ ॥
धन्या भवन्तः पुण्याश्च ज्ञानाश्चर्यप्रकाशकाः ।
तेनेत्युक्ता तमूचुस्ते [1]ब्रह्मास्येभ्यो वयं किल ॥ ४३ ॥
आविर्भूतास्ततश्चासौ धन्यश्चाश्चर्यवान्प्रभुः ।
स तदोपेत्य धातारं प्रणिपत्येदमब्रवीत् ॥ ४४ ॥
वेदाश्चर्यविधिस्त्वेको भवान्धन्योऽसि शाश्वत ।
स तेनोक्तस्तमाहेदं मा मैवं वद पुत्रक ।

## ब्रह्मणा विष्ण्वाधिक्यप्रतिपादनम्

विष्णुर्धन्यश्च पूज्यश्च स्रष्टा देवो ममाप्यसौ ॥ ४५ ॥
आश्चर्यभूतो जगतां जगदादिस्सनातनः ।
सर्वैश्वर्यगुणोपेतो [2]ह्यमेयोऽद्भुतविक्रमः ॥ ४६ ॥
अतीतकल्पावसाने तमोभूतं जगत्त्रयम् ।
आसीदेकार्णवं सर्वं न देवाद्या न चर्षयः ॥ ४७ ॥
तदा वै न रविर्नाग्निर्नवायुर्न च चन्द्रमाः ।
नैवान्तरिक्षं नैवोर्वीशेषं भवति किञ्चन ॥ ४८ ॥
तत्र नारायणो देवो निर्जने कलशोदधौ ।
आस्तीर्य शेषशयनं सुष्वाप पुरुषोत्तमः ॥ ४९ ॥

---

[1] चत्वारोऽपि वेदा ब्रह्मणः मुखेभ्यो निर्गता इति पौराणिकी प्रथा ।

[2] मातुं योग्यं मेयम् । न मेय इति केनापि मातुमसमर्थः । तादृशो महानथ वा अणीयान् । अणोरणीयान् महतो महीयान् इति श्रवणात् ।

[3] कलशोदधिः क्षीरसमुद्रः ।

---

[4] निरवलवः (क ख घ)

अहमागत्य तं देशमुत्थाप्य च सनातनम् ।
अवोचं मधुरं वाक्यं मायया तस्य मोहितः ॥ ५० ॥

अस्मिन्नेकार्णवे घोरे निर्जने तमसा वृते ।
एकाकी को भवान्शेते ब्रूहि त्वं पुरुषर्षभ ॥ ५१ ॥

सोऽपि मद्वचनं श्रुत्वा विहस्य गरुडध्वजः ।
अब्रवीन्मां स देवेशो मेघगम्भीरनिःस्वनः ॥ ५२ ॥

महायोगीश्वरं मां त्वं जानीहि पुरुषोत्तमम् ।
मयि पश्य जगत्कृत्स्नं त्वं च लोकपितामहम् ॥ ५३ ॥

जानन्नपि महायोगिन्को भवानिति भाषते[1] ।

## ब्रह्मणः स्वोत्तमतारूपभ्रमनिरसनम्

तस्य तद्वचनं श्रुत्वा प्रहस्यावोचमव्ययम् ॥ ५४ ॥

अहं धाता विधाता च स्वयम्भूः प्रपितामहः ।
मय्येवं संस्थितं विश्वं [2]ब्रह्माहं विश्वतोमुखः ॥ ५५ ॥

प्रविश्य लोकान्पश्यैता[3]न्ममान्तस्त्वं सुरोत्तम ।
श्रुत्वा वाचं स भगवान्विष्णुस्सत्यपराक्रमः ।
अनुज्ञाप्याथ योगेन प्रविष्टो विग्रहं मम ॥ ५६ ॥

त्रैलोक्यमेतत्सकलं सदेवासुरमानुषम् ।
उदरे मम देहस्य दृष्ट्वा विस्मयमागतः ॥ ५७ ॥

ततश्च मम वक्त्राच्च निष्क्रम्य गरुडध्वजः ।
अजातशत्रुर्भगवान्मामवोचदिदं वचः ॥ ५८ ॥

---

[1] भवानिति भवद्योगेन योजनीयम् ।

---

[2] विश्वेषां (ग) [3] मिमान्तरत्वं (ग)

भवानप्येवमेवाद्य शाश्वतं मम चोदरम् ।
प्रविश्य लोकान्पश्यैतानपि त्वं पुरुषर्षभ ॥ ५९ ॥

ततश्च श्रीपतेः कुक्षिं प्रविष्टोऽहं मुनीश्वर ।
[1]अपश्यं च महीं कृत्स्नां काननैरुपशोभिताम् ॥ ६० ॥

सपर्वतवनद्वीपां निम्नगाशतसङ्कुलाम् ।
शक्रादींश्च ततोऽपश्यं[2] कृत्स्नान् देवगणांस्तथा ॥ ६१ ॥

गन्धर्वाप्सरसो यक्षानृषींश्चैव [3]तपोधनान् ।
दैत्यदानवसङ्घांश्च [4]ये चान्ये सुरशत्रवः ॥ ६२ ॥

यच्च किञ्चिन्मया लोके दृष्टं स्थावरजङ्गमम् ।
[5]तदपश्यमहं सर्वं तस्य कुक्षौ महात्मनः ॥ ६३ ॥

पर्यटित्वा तथा [6]गांवा प्रापश्यं हृदयं हरेः ।
न हि पश्यामि तस्याहमन्तं पश्यामि कर्हिचित् ॥ ६४ ॥

सततं पर्यटित्वाहं चिन्तयंश्च तदा स्थितः ।[7]
तेन द्वाराणि सर्वाणि पिहितानि महात्मना ॥ ६५ ॥

ततस्तमेव शरणं गतोऽस्मि विधिवत्तदा ।
वरेण्यं वरदं देवं मनसा कर्मणैव च ॥ ६६ ॥

पर्यटित्वा तु तत्रैव नान्यं द्वारं च लब्धवान् ।
तत्र योगबलेनाहं वायुवेगेन निःसृतः ॥ ६७ ॥

---

[1] स्कान्दे एतत्संवादिनः श्लोकाः विद्यन्ते । स्कां.पु. वैष्णवखण्डः, पुरुषोमत्त माहात्म्यम् अ.३ [6] मां वेति सर्वमातृकापाठो नान्वेति तत्स्थाने गां वेति पदं निवेशितम् ।

---

[2] ब्रह्मन् देवगणांस्तथा (ग) [3] तपोधन (क ख घ) [4] सर्वान् लोकान् तदास्थितम् (ग)
[5] एतदारभ्य पङ्क्तित्रयं 'ग' प्रतौ नास्ति ।

प्रयातेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितः ।
दृष्ट्वा पारमिकं तस्य प्रभावममितौजसः ॥ ६८ ॥

अचिन्त्यं महदाश्चर्यं प्रभावममितौजसम् ।
[1]नारायणं जगद्योनिं पृष्टवानहमच्युतम् ॥ ६९ ॥

यदि प्रसादं देव त्वं प्रकरोषि ममाच्युत ।
केषु केषु मया ज्ञेयः स्थानेषु त्वमधोक्षज ॥ ७० ॥

देवलोके नृलोके वा पाताले [2]चान्यतोऽपि वा ।
सम्भूतयो यास्तु भवान् तरिष्यति वदेश नः ॥ ७१ ॥

## विष्णोरवतारनिरूपणपुरस्सरं महिमवर्णनम्

श्रीभगवान् —

यन्मां त्वं पृच्छसि ब्रह्मन्नवताराश्रितं परम् ।
तत्ते सम्यक्प्रवक्ष्यामि निबोध मम [3]सुव्रत ॥ ७२ ॥

मम प्रकृत्या संयोगः स्वेच्छया संप्रवर्तते ।
देवेषु नृषु तिर्यक्षु स्थावरेषु चरेषु च ।
ममावताराः कार्यार्थं [4]जगतश्चोपकारणे ॥ ७३ ॥

यदा यदा हि धर्मस्य ग्लानिस्समुपजायते ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७४ ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ७५ ॥

---

[1] एतदादिभूतो विषयसङ्ग्रहः महाभारतस्थः । म.भा. शान्तिपर्व अ.३३९
[3] मम वाक्यं शृण्वित्यर्थः ।

---

[2] स्वान्यतो (क घ) [4] जगतश्चापकारण (ग)

पूर्वोत्पन्नेषु भूतेषु नृदेवादिषु चाप्यहम् ।
अनुप्रविश्य धर्मस्य करोमि परिपालनम् ॥ ७६ ॥
देवत्वे देवताचेष्टा तिर्यक्त्वे मम तामसी ।
इच्छया मानुषत्वेऽपि विचरामि [1]नृचेष्टया ॥ ७७ ॥
यद्वै धर्मोपकाराय यच्च दुष्टनिबर्हणम् ।
चरितं मानुषादीनां तद्वै जानीष्व मत्कृतम् ॥ ७८ ॥

## धर्मोद्धारार्थं विष्णोरवतारग्रहणनिरूपणम्

मत्स्येन भूत्वा पातालात्तव[2] वेदास्समुद्धृताः ।
[3]मधुकैटभाभ्यां तु [4]हृता वेदास्स[5]शिरसो मया[6] ॥ ७९ ॥
[7]त्वमप्यद्य महाभाग मदङ्कमलोद्भव ।
एकार्णवं च यदितं[8] ब्रह्मन्पश्यस्यशेषतः ।

## यज्ञवराहमूर्तिवर्णनम्

अस्मिन्वसुमतीं देवीं मग्नां पातालमागताम् ॥ ८० ॥
वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः[9] ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥ ८१ ॥

---

[2] तव त्वदर्थमिति ब्रह्माणं प्रति विष्णूक्तिः । [6] इयं पङ्क्तिः मातृकासु अस्पष्टार्था दृश्यते । अतः वेदास्सशिरस इति उपनिषदादीनङ्गीकुर्वन् एवं विपरिवर्तिता । [8] इतं प्राप्तमितिज्ञेयम् । इण् गताविति गतं, ज्ञातमिति वा । [9] जुहुमुख इति ब्रह्माण्डपुराणम् । प्रक्रियापादः ९, अ.५ चितिः चिता इति पदद्वयं प्रसिद्धम् । चितिमुख इति ह्रस्वेकारं रूपं साधु । दीर्घं त्वार्षम् ।

---

[1] यदिच्छया (ग) [3] मधुकैटभाभ्यां तु तदा वेदशिरसा मया (क) [4] त्वया (ख ग)
[5] सिरसा (घ) मधु .... भूत दत्ता च शिरस × × × । [6] द्भवान् (घ)
[7] त्वमपुत्र .... .... मदं शात .... .... (ग)

अहोरात्रेक्षणो दिव्यो [1]वेदाङ्गः श्रुतिभूषणः ।
[2]छायापत्नीसहायो वै [3]मणिशृङ्ग इवोच्छ्रितः ॥ ८२ ॥

आज्यनासः स्रुवस्तुण्डः सामघोषस्वनो महान् ।
प्राग्वंशकायो द्युतिमान् [4]नानादीक्षाभिरन्वितः ॥ ८३ ॥

[5]उपाकर्मौष्ठरुचिरः प्रवर्ग्यावर्तभूषणः ।
भूत्वा यज्ञवराहोऽहमिति ब्रह्मन् रसातलात् ।
पृथिवीमुद्धरिष्यामि स्थापयिष्यामि च स्थितौ ॥ ८४ ॥

हिरण्याक्षं च दुर्वृत्तं कश्यपस्यात्मसम्भवम् ।
तेनैव घातयिष्यामि रूपेणाहं [6]प्रजापते ॥ ८५ ॥

[7]उत्पाद्य पृथिवीं सम्यक्स्थापयित्वा यथा पुरा ।
[8]सृष्टिं ततः करिष्यामि त्वामादिश्य जगत्पते ॥ ८६ ॥

ततः सृज्य स्वरूपोऽह[9]ममरादिविभेदतः ।
स्थापयिष्यामि लोकांश्च भूर्लोकादीनशेषतः ॥ ८७ ॥

अतिरौद्रं महाकायं दानवानां भयङ्करम् ।
नृसिंहरूपं कृत्वाहं घातयिष्यामि तं रिपुम्[10] ॥ ८८ ॥

क्षीराब्धौ कूर्मरूपोऽहं देवानां [11]कमलोद्भव ।
मन्दरं धारयिष्यामि पृष्ठेनामृतमन्थने ॥ ८९ ॥

---

[2] मायापत्नीति (ब्रह्माण्डपु. अ.५) अयमेव साधुपाठ इति मन्ये ।
[3] ब्रह्मोक्तिक्रमविक्रम इति मातृकासु ।। मणिशृङ्गेत्यादिपाठः वायुमत्स्यपुराणस्थः। गिरिशृङ्ग इवेति ब्रह्माण्डपुराणम् । [7] उद्धृत्येति ज्ञेयम् [10] त्रिवक्षितो हिरण्यकशिपुः । [11] देवानां मध्ये, देवानां कृते इति वा ज्ञेयम् ।

---

[1] वेदाङ्गं श्रुतिभूषणम् (घ) [4] न वा दीक्षाभिरन्वितः (घ) [5] उताकर्मौ (घ)
[6] प्रजायते (घ) [8] सृष्टं (क) [9] ममरारि (क)

[1]चकर्ष नागराजानं दैत्यमध्ये परेण च[2] ।
उपर्याक्रान्तवांश्छैलं ब्रह्मरूपेण चैव तु ॥ ९० ॥

तथाऽपरेण रूपेण यन्न दृष्टं सुरासुरैः ।
तेजसा नागराजानमुपबृंहितवानहम् ॥ ९१ ॥

ततो धन्वन्तरिर्देवः श्वेताम्बरधरस्स्वयम् ।
बिभ्रन्कमण्डलुं पूर्णममृतेन समुत्थितः[3] ॥ ९२ ॥

ततस्ते जगृहुर्दैत्याः धन्वन्तरिकरे स्थितम् ।
कमण्डलुं महावीर्या यत्रास्ते तद्द्विजा[4]मृतम् ॥ ९३ ॥

मायया[5] मोहयित्वा तानहं स्त्रीरूपसंस्थितः ।
दानवेभ्यस्तदादाय देवेभ्यः प्रददाम्यहम् ॥ ९४ ॥

स हरिष्यति देवानां यज्ञभागं यदा बलिः ।
तदाहं वामनो भूत्वा गत्वा तस्य महाध्वरम् ।
वञ्चयित्वाऽसुरपतिं [6]कृत्वा चैव [7]महातनुम्[8] ॥ ९५ ॥

गङ्गामुत्पादयिष्यामि करिष्यामि त्रिविष्टपम् ।
[9]बलिं चैव करिष्यामि [10]पातालतलवासिनम् ॥ ९६ ॥

दग्धुकामस्य देवस्य पुरा त्रीणि त्रिशूलिनः ।
त्रिपुरं घातयिष्यामि बाणो भूत्वा महाहवे ॥ ९७ ॥

---

[2] नागराजेन, ब्रह्मरूपेण शैलमाक्रान्तवान् इति साधु स्यात् । मातृकासु स्पष्टतया अर्थो न लभ्यते । समासान्तमार्षं रूपम् ।

[3] ममृतं समुपस्थितम् इति मातृकापाठे अन्वयः दुःसाध्यः ।

[4] सन्धिरार्षः । [8] महातनुः त्रैविक्रमं रूपम् ।

---

[1] न कर्षं (क घ) [5] लोभयित्वा (क) [6] श्रुत्वा (क घ ख)



[7] महतनुः (क ख घ) [9] बलिश्चाहं (ग) [10] पातालान्तर (ग)

तत्रैव च महायुद्धे [1]वर्तमानेऽतिदारुणे ।
वृषरूपं महत्कृत्वा [2]सीदमानं महारथम् ।
उद्धरामि महाप्राणं[3] त्रैलोक्यं (चा)थ रूपिणम् ॥ ९८ ॥

अत्रेर्दत्वा वरञ्चैव तस्य पुत्रत्वमागतः ।
दत्तात्रेयो भविष्यामि हरिष्यामि महासुरान् ॥ ९९ ॥

सत्वानामुपकाराय [4]प्रधानपुरुषोत्तमः ।
दर्शयिष्यामि लोकेषु कापिलं रूपमस्थितः ॥ १०० ॥

धर्मसंस्थापनार्थाय नरनारायणावृषी ।
भूत्वात्मोपशमोपेतः[5] चरिष्यामि परन्तप ॥ १०१ ॥

ऋषिभिः प्रार्थितो ब्रह्मन् [6]पृथोरूपं भजाम्यहम् ।[7]
कार्तवीर्यादयो ये च चतुर्दश [8]महीक्षितः ।
भविष्यन्ति मदंशेन त्रेतायां चक्रवर्तिनः ॥ १०२ ॥

ततश्च भार्गवो रामः गृहीतपरशुर्द्विजः ।
भूत्वा [9]क्षत्रियहीनां वै करिष्यामि वसुन्धराम् ॥ १०३ ॥

पुनश्च राघवो रामः भूत्वा दशरथात्मजः ।
बद्ध्वा महोदधिं कर्ता राक्षसानां कुलक्षयम् ॥ १०४ ॥

---

[1] त्रिपुरादेव शङ्करेण नारायणास्त्रं परिकल्पितमिति पौराणिकी कथा ।
[7] पृथुः विष्णोरंशजः । उत्पत्तिकाल एव सकवचधनुष्कः बभूव । स च भूमेः प्रथमः सम्राट् ।

---

[1] वर्तमाने च [ग] [2] सीदमाने [ग] [3] अत्र ग्रन्थपातः [क खघ] मातृकासु । 'ग' मातृकायां महाप्राण ×थ ' इति । त्रैलोक्यरूपिणम् [क]
[4] प्रधानपुरुषान्तरम् (क ख घ) [5] चेतां [क ख घ] [6] वृद्धो [क] [7] महीक्षितम् [क]
[9] क्षत्रियदीनां (क)

अष्टाविंशतिमे प्राप्ते द्वापरे [1]कंसमुच्छ्रितम् ।
केशिनं धेनुकं चैव शकुनिं पूतनां तथा ॥ १०५ ॥
अरिष्टं च हनिष्यामि मुरं नरकमेव च ।
निशुम्भं च हयग्रीवं तथान्यानसुरेश्वरान्
हनिष्यामि च दुर्वृत्तांल्लोकानां हितकाम्यया ॥ १०६ ॥
प्रवर्षति च देवेन्द्रे [2]मखभङ्गविरोधिते ।
गोवर्धनं गिरिवरं धारयिष्यामि बाहुना ॥ १०७ ॥
[3]भाराक्रान्तामिमामुर्वीं धनञ्जयसहायवान् ।
[4]घातयित्वा भूमिपालांल्लब्धीकर्तास्मि सत्तम ॥ १०८ ॥
प्राप्ते कलियुगे [5]कृत्स्नमुपसंहृत्य वै लयम् ।
द्वारकां [6]प्लावयित्वाहमुत्स्रक्ष्यामि मनुष्यताम् ॥ १०९ ॥
द्वितीयो यो ममांशस्तु [7]रामोऽनन्तस्स लाङ्गली ।
सोऽपि [8](सन्त्यज्य) वपुर्धां रसातलमुपैष्यति ॥ ११० ॥
ततः कलियुगे घोरे सम्प्राप्ते च [9]समुद्भवे ।
शुद्धोदनसुतो बुद्धो [10]भविष्यति विमत्सरः ॥ १११ ॥
बौद्धधर्ममुपासृत्य करिष्ये धर्म[11]देशनम् ।
वर्णसङ्करतां प्राप्ते लोकेऽस्मिं[12](न्द)स्युतां गते ॥ ११२ ॥

---

[8] से॰यज्येति मातृकापाठः असाधुः । अतः सन्त्यज्येति विपरिवृत्य निवेशितं पदम् ।

---

[1] कंसुमुच्छ्रितः [क] [2] महार × गविरोधिते [न] [3] धाराक्रीताममामुर्वी [क]
[4] घाटयित्वा [क] [5] कृत्स्नादुपसंहृत्य वै जयम् [क] [6] पालयित्वा [ग]
[7] त्वं तं सुलाङ्गली [क] लाङ्गुली [ख] [8] समुद्भव [क] समुद्भवः [ग]
[9] भविष्यामि [क] [10] दर्शनम् [ख] [11] न्दस्युतां [क ख ग घ]

ततोऽहं [1]सम्भविष्यामि [2]ब्राह्मणो हरिपिङ्गलः ।
कल्की विष्णुयशःपुत्रो याज्ञवल्क्यपुरोहितः ।
म्लेच्छानुत्सादयिष्यामि गृहीतास्त्रः कृतायुधः ॥ ११३ ॥

स्थापयिष्यामि मर्यादाश्चातुर्वर्ण्ये यथोदिताः ।
कल्किरूपं परित्यज्य दिवमेष्याम्यहं पुनः ॥ ११४ ॥

सङ्कर्षणात्मकश्चैव कल्पान्ते च रसातलात् ।
समुत्तस्थे तदा रुद्रः कालाग्निरिति यस्स्मृतः ॥ ११५ ॥

ततः क्षयं नयिष्यामि जगत्स्थावरजङ्गमम् ।
भूयश्चैव तपिष्यामि जगदेकार्णवीकृते ।
स्वद्रूपश्च ततो भूत्वा जगत्स्रक्ष्याम्यहं पुनः ॥ ११६ ॥

एवं सर्वेषु कल्पेषु सर्वमन्वन्तरेषु च ।
ममावताराश्शतशो भविष्यन्ति जगद्धिताः ॥ ११७ ॥

यद्दृश्यं यच्च वै स्पृश्यं [3]यद्ज्ञेयं [4](श)स्यते च यत् ।
[5]यच्छ्राव्यं यच्च मन्तव्यं बोद्धव्यं च ममांशतः ॥ ११८ ॥

यत्तु बुद्धेः परतरमनाख्येयमनौपमम् ।
तदहं ब्रह्म निर्द्वन्द्वं यद्वै पश्यन्ति सूरयः ॥ ११९ ॥

देवदेवादिदेवेन विष्णुना प्रभविष्णुना ।
रहस्यं मे समाख्यातं तवापि कथितं मया ॥ १२० ॥

यत्र किञ्चिज्जगत्पूर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं तेन [6]व्याप्तं द्विजोत्तम ॥ १२१ ॥

---

[1] प्रभ [क ग घ] [2] ब्रह्मणो [ख] [3] यथेयं [क] यद्देयं [ख] [4] च स्यते [क ख ग घ]
[5] यच्छ्राव्यं [क] [6] प्राप्तं [क ग घ]

धर्मार्थकाममोक्षाणां यद्यदिच्छति मानवः ।
तत्तद्ददाति गोविन्दो भक्त्या तु परितोषितः ॥ १२२ ॥

माहात्म्ये संस्मृते यस्य सद्यः पापक्षयो भवेत् ।
मुक्तिश्च नरकाद्विष्णोर्नामसङ्कीर्तनादपि ॥ १२३ ॥

## विष्णुनामसङ्कीर्तनान्मोक्षप्राप्तिकथने पुष्करेण स्वानुभवविवरणम्

पुरा यमपुरं प्राप्तः पुष्करो नाम वै द्विजः ।
निजानुष्ठानकृद्ब्रह्मन्विष्ण्वाराधनतत्परः ॥ १२४ ॥

तमायान्तं यमो दृष्ट्वाऽपूजयद्धीतमानसः ।
परिगृह्य च तां पूजामवदत्तं महामुने ॥ १२५ ॥

भगवन्नरकान्सर्वान्द्रष्टुमिच्छामि [1]तानहम् ।
पापिनो येषु पच्यन्ते यातनादेहसंस्थिताः ॥ १२६ ॥

वैवस्वतस्ततस्तस्मै पुष्कराय महात्मने ।
नरकान्दर्शयामास शतशोऽथ सहस्रशः
तान्दृष्ट्वा दुःखितस्तत्र विस्मितो वाक्यमब्रवीत् । ॥ १२७ ॥

नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी
तथापि नरके घोरे पतन्तीत्येतदद्भुतम् । ॥ १२८ ॥

किमत्र बहुभिर्मन्त्रैः किं तत्र बहुभिर्व्रतैः
नमो नारायणायेति मन्त्रस्सर्वार्थसाधकः । ॥ १२९ ॥

स्वपन्नारायणं देवं भुञ्जन्नारायणं तथा
गच्छन्नारायणं विप्रात्तिष्ठञ्जाग्रन् सनातनम् । ॥ १३० ॥

---

1 [illegible] [ग]

उन्मिषन्निमिषन्[1]वापि नमो नारायणेति यः ।
जपेन्मन्त्रं परं भक्त्या स याति परमां गतिम् ॥ १३१ ॥

इत्युक्त्वा पुष्करोऽप्याह कृपया दीनवत्सलः ।
कृष्णाच्युत जगन्नाथ हरे विष्णो जनार्दन ।
पाहि सर्वानिमानत्र नरके यातनागतान् ॥ १३२ ॥

[2]श्रुत्वा नामानि तत्रस्था हरेर्नामानि ते द्विजाः ।
[3]नारका नरकान्मुक्तास्सद्य एव महामुने ॥ १३३ ॥

तस्मादाश्चर्यभूतोऽसौ विष्णुस्सर्वगतोऽव्ययः ।
ततस्स कौतुकाविष्टो ययौ विष्णुं जनार्दनम् ॥ १३४ ॥

सनत्कुमारः क्षीराब्धौ सेव्यमानं महर्षिभिः ।
भोगिभोगासनासीनं चतुर्बाहुं सनातनम् ॥ १३५ ॥

प्रणम्याह स तं मूर्ध्ना क्षीरोदतनया[4]सखम् ।
विनयावनतो धीमानिदं वचनमब्रवीत् ॥ १३६ ॥

आश्चर्यवान्भवानेको धन्यश्च जगतां पतिः ।
न किञ्चिदन्यत्पश्यामि भूतं यद्भवता समम् ॥ १३७ ॥

त्वत्तस्सर्वमिदं जातं जगत्स्थावरजङ्गमम् ।
त्वय्येव लयमायाति विश्वात्मन्गरुडध्वज ॥ १३८ ॥

## विष्णुना शिवमाहात्म्यवर्णनम्

एवमुक्तस्स तेनाह वासुदेवो जगद्गुरुः ।
ब्रह्मर्षे न वयं धन्या न चाश्चर्याणि सन्ति नः ॥ १३९ ॥

---

[2] श्रुत्वा चोक्तानि इति युक्तमासीत् । अथवा नामानि तत्रापि विशिष्य हरेर्नामानि न अन्यस्य कस्यापि देवस्येति युक्त्या ज्ञेयम् ।

---

[1] श्चेति (क) [3] नारकान्त [4] बहम् (क) [5] नराश्चर्याणि (क)

सर्वाश्चर्यमयो देवो महात्मा पार्वतीपतिः ।
स एवानुपमाश्चर्यप्रणतार्तिहरो हरः ॥ १४० ॥
तस्मात्परतरं नास्ति ज्ञानं ज्ञेयात्सनातनात् ।
सर्वाकारो निराकारो जगत्कर्ता वृषध्वजः ॥ १४१ ॥
जातोऽहमस्य वामाङ्गे ब्रह्मा चैवास्य दक्षिणे ।
मुखेभ्यश्चतुरो वेदास्साङ्गोपाङ्गाश्च कृत्स्नशः ॥ १४२ ॥
ब्रह्मादयस्तथा देवाः पितरोऽथ महर्षयः ।
पूजयन्ति सदा तात शिवं सिद्धाश्च चारणाः ॥ १४३ ॥
रूपं न शक्यते तस्य संस्थानं वा कथञ्चन ।
निर्देष्टुं प्राणिभिः कैश्चि[1]त्प्रष्टुं वा प्राकृतात्मभिः[2]
तस्याभिधानमन्त्रोऽयमीश्वरस्य षडक्षरः ॥ १४४ ॥
बहुत्वेऽपि हि मन्त्राणां सर्वज्ञेन शिवेन यत्
प्रणीतममलं मन्त्रं [3]न तेन सदृशं क्वचित् । ॥ १४५ ॥
सप्तकोटिमहामन्त्रैरुपमन्त्रैरनेकधा
मन्त्रः षडक्षरो भिन्नस्सूत्रवृत्यात्मना [4]यथा । ॥ १४६ ॥
किं तस्य बहुभिर्मन्त्रैश्शास्त्रैर्वा बहुविस्तरैः ।
यस्योंं नमः शिवायेति मन्त्रोऽयं हृदि संस्थितः ॥ १४७ ॥
तेनाधीनं [5]श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनों नमः शिवायेति मन्त्राभ्यासः स्थिरीकृतः ॥ १४८ ॥
नमस्कारादिसंयुक्तं शिवायेत्यक्षरत्रयम् ।
जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम् ॥ १४९ ॥

---

[2] प्राकृतात्मानः । मन्दबुद्धयः । आत्मज्ञानहीनाः ।

---

[1] द्रष्टुं (क) [3] मन्त्रेण सदृशः क्वचित् (क) [4] नो (क) [5] शतं (क)

अन्त्यजो[1] वाऽधमो वापि मूर्खो वा पण्डितोऽपि वा ।
पञ्चाक्षरजपे निष्ठो मुच्यते भवबन्धनात् ॥ १५० ॥
शिवेन सिद्धो मन्त्रोऽयं मन्त्रस्सर्वार्थसाधकः ।
आश्चर्याणां च सर्वेषामयमेव परो मुने ॥ १५१ ॥
नास्त्यस्मादन्यदाश्चर्यं सत्यं सत्यं मयोदितम् ।

यमः —

सनत्कुमारस्तच्छ्रुत्वा वाक्यं तत्त्वार्थसंयुतम्
अभूदेकाग्रहृदयः शिवमन्त्रे षडक्षरे ॥ १५२ ॥
दृष्टवांस्तेन सर्वेशं शिवं साक्षान्मुनीश्वराः ।
एवमन्येऽपि बहवः शिवमन्त्रपरायणाः ।
विमुक्तास्सर्वपापेभ्यः सिद्धिं परमिकां गताः ॥ १५३ ॥
तस्मात्त्वमद्यप्रभृति वेदमार्गपरायणः ।
जप पञ्चाक्षरं मन्त्रं परां [2]गतिमवाप्स्यसि ॥ १५४ ॥
इत्युक्त्वा स यमः श्रीमान्प्रेषयामास तं पुनः ।
[3]सोऽपि जन्म समासाद्य ब्राह्मणानां कुले शुभे ।
वेदमार्गपरो भूत्वा परां गतिमवाप्तवान् ॥ १५५ ॥
अतो वेदविरुद्धा ये[4] तर्का मोहाय ते नृणाम् ।
वेदानुग्राहकस्तर्कः स तर्कः परिकीर्तितः ॥ १५६ ॥
तस्मात्सर्वं परित्यज्य वेदमेकं समाश्रयेत् ।
वेदान्तवाक्यज्ञानेन साङ्ख्ययोगयुतेन तु ।
प्राप्यते तत्परं स्थानममलं मुनिपुङ्गवाः ॥ १५७ ॥

इति श्रीमत्पुराणसारे षडक्षरमाहात्म्यं नाम
सप्तसप्ततितमोऽध्यायः

---

[1] जा (ख) [2] सिद्धि (ग) [3] सापि (क) [4] कर्ता (क) [5] आश्चर्यकथनं (ग)

## [1]अष्टसप्ततितमोऽध्यायः

[ अरिष्टसूचनम् ]

योगं रसायनं चैव कालं ज्ञात्वा समाचरेत् ।
[2]तस्याज्ञाने वृथा सर्वं क्लेश एवावशिष्यते ॥ १ ॥

कालज्ञानमहं तस्मात्त्वस्याख्यानि परस्य च ।

### एकसंवत्सरायुस्सूचनचिह्नानि

देवमार्गं ध्रुवं शुक्रं सोमच्छायामरुन्धतीम् ।
यो न पश्येन्न जीवेत्स नरस्संवत्सरात्परम् ॥ २ ॥

सन्ध्ययोरुपरिष्टाद्यः पश्ये[3]द्धूमं स्वमूर्धजम् ।
पञ्चाहं चेद्भवेत्तस्य मरणं त्वेकवत्सरात् ॥ ३ ॥

श्रोत्रद्वयेऽपि हस्ताभ्यां पिहिते देहवर्तिनः ।
[4]वह्नेर्गर्जितमस्यापि नास्ति चेद्वत्सरान्मृतिः ॥ ४ ॥

स्थैर्यं चाकस्मिकं यस्य कार्श्यं चाकस्मिकं भवेत् ।
अतिक्रोधोऽतिशान्तिर्वा नाशस्तस्यापि वत्सरात् ॥ ५ ॥

विण्मूत्रक्षुट्तृषाश्चैव युगपत्सम्भवन्ति चेत् ।
तन्मासे तत्तिथौ वर्षे मृत्युस्तस्यापि विद्यते ॥ ६ ॥

---

[1] अस्याध्यास्य विषयसंग्रहः मार्कण्डेय, वायु, लिङ्गस्कान्दकाशीखण्डेभ्य कृतः । मा.पु. अ.४०, वा.पु. अ.१९, लि.पु. अ.९१, स्का.का.खं. अ.४२ [2] तस्याज्ञाते इति मातृकासु ... ज्ञाने इति युक्तम् ।

[4] देहौष्ण्यसम्भवं घोषमित्यर्थः ।

---

[3] द्धर्मं (क) [5] तन्मासेन (क)

गन्धर्वनगरं पश्येद्वृक्षाग्रे यदि कुत्रचित् ।
यदि वाकस्मिकं वापि स्वदेहं कृष्णपिङ्गलम् ।
संवत्सरात्परं तस्य मरणं परिकीर्तितम् ॥ ७ ॥

गृध्रैश्च काकगोमायुखरोष्ट्रै रासभैस्तथा ।
शरीरं भक्ष्यते यस्य मरणं तस्य वत्सरात् ॥ ८ ॥

अथवा वस्त्रमात्मानं कज्जलं यस्तु पश्यति ।
सोऽपि याति यमस्थानमर्वागब्दान्न संशयः ॥ ९ ॥

त्रिरात्रं वहते यस्य वायुरेकपुटे स्थितः ।
मासा[1]न्द्वादश तस्यायुः प्रवदन्ति विपश्चितः ॥ १० ॥

पवनः पिङ्गलामार्गे वहते यस्य षोडश ।
[2]दिना द्वादश हीने तु वर्षान्ते तस्य संक्षयः ॥ ११ ॥

कराङ्गुष्ठस्य [3]मूले तु मर्म यस्य न चेष्टते ।
स भवेद्वत्सरे पूर्णे [4]क्षयगामी न संशयः ॥ १२ ॥

## दशमासायुस्सूचनचिह्नानि

अरश्मिमन्तमादित्यं रश्मिवन्तं च पावकम् ।
पश्यन्वैकादशान्मासानूर्ध्वं मर्त्यो[5] न जीवति ॥ १३ ॥

[6]यस्य सप्तदशाहानि पिङ्गलायां समीरणः ।
[7]तस्यैकादशके मासे [8]षड्दिनैर्वा क्षयो भवेत् ॥ १४ ॥

---

[2] दिनानीत्यर्थः । [6] तस्येति मातृकासु । यस्येति योग्यम् ।
[7] 'ग' मातृकायां अस्याः पङ्क्तेः स्थाने 'स एकादश मासायुरिति कालविदो विदुः ।' इति पाठो दृश्यते । [8] षड्भिनेन्वै हयो भवेत् इति इतर-

---

[1] द्वादशकस्या (क) [3] हीने (क) [4] क्षयमासीन्न (क) [5] हि (क)

मणिबन्धोदरे मर्म यस्य किञ्चिन्न चेष्टते ।
स भवेद्वत्सरे पूर्णे [1]क्षयमाप्नोत्यसंशयः ॥ १५ ॥

[2]वमेन्मूत्रपुरीषं वा [3]सुवर्णं रजतं तथा ।
प्रत्यक्षमथवा स्वप्ने दश मासान्स जीवति ॥ १६ ॥

अष्टादश दिने यस्य वहते दक्षिणानिलः[4] ।
स द्वादशदिनैरूनान्दश मासान्हि जीवति ॥ १७ ॥

यस्य न स्पन्दते किञ्चिन्मर्म कूर्पर[5]संस्थितम् ।
स शुष्कं दशमे मासे पश्यत्याशुस्सरोवरम् ॥ १८ ॥

नरः पश्यति यः स्वप्ने पतितं चन्द्रमण्डलम् ।
राहुग्रस्तं तु वा [6]हंसं दशमासान्स जीवति ॥ १९ ॥

## नवमासायुस्सूचनचिह्नानि

पश्येत्प्रेतपिशाचादीन्गन्धर्वनगराणि च ।
[7]सुवर्णवर्णान्वृक्षांश्च नवमासान्स जीवति
कक्षस्य स्फुरणे जीवेन्मासान्नव नरो[8] ध्रुवम् ॥ २० ॥

---

मातृकासु पाठोऽयं अशुद्धो दृश्यते । षड्दिनैर्वा क्षयो भवेदिति परिवर्तितं रूपमत्र प्रदत्तम् ।

[1] 'क्षयमासीन्न' इति मातृकासु दृश्यमानः पाठो न युक्तः । अतः क्षयमाप्नोत्यसंशय इति मूलभावाविरोधेन परिवर्तनं कृतम् ।

[2] वायुपुराणे करीषमिति पठितम् । [4] दक्षिणनासिकागतो वायुः ।

[6] हंसः सूर्यः । [7] सुवर्णवर्णेति मार्कण्डेयपुराणपाठः । मातृकासु सवर्णवर्णेति अस्पष्टार्थकः । [8] 'मासान्नरवरो' इति मातृकासु पाठः अक्षरव्यत्ययेन लिखितः स्यात् । 'नव नरो' इति युक्तं भवेदिति विपरिवर्तितम् ।

---

[3] शत्रुवर्णं (क ख ग), [5] संजितम् (क ख ग)

## अष्टमासायुस्सूचनचिह्नानि

स्थूलः कृशः कृशः स्थूलो योऽकस्मादेव जायते ।
प्रकृतिश्च[1] निवर्तेत तस्यायुश्चा[2]ष्टमासिकम् ॥ २१ ॥

अह्नामेकेन विंशत्या पवनः पिङ्गला[3]गतः ।
कथयत्यष्टमे मासे निश्चितं मरणं नृणाम् ॥ २२ ॥

विनष्टं [4]स्पन्दनं यस्य स्कन्ध[5]संस्थस्य मर्मणि ।
मृत्युस्तस्याष्टमे मासे न केनापि निवार्यते ॥ २३ ॥

## सप्तमासायुस्सूचनचिह्नानि

स्वपदं खण्डितं यस्य अग्रतः पृष्ठतोऽपि वा ।
[6]पङ्के वा पांसुले वापि सप्तमासान्स जीवति ॥ २४ ॥

विनष्टं स्फुरणं यस्य धमन्योरिह कर्मणि ।
अपि [7]कालभृतो देही सप्तमासान्स जीवति ॥ २५ ॥

## षण्मासायुस्सूचनचिह्नानि

कपोतगृध्रकोलूकवायसा वापि मूर्धनि ।
क्रव्यादो [8]वा खगो लीनः[9] षण्मासायुःप्रदर्शकः ॥ २६ ॥

न शृणोति श्रुतेर्घोषं [10]कृष्णं दुर्गन्धि शोणितम् ।
पीडा पाणितले [11]शूलं जिह्वामूले तु दारुणम् ॥ २७ ॥

---

[1] निवर्तेतेति मार्कण्डेयपुराणपाठः गृहीतः । मा.पु. अ.४० [9] नील इति मार्कण्डेयपुराणे ।

---

[2] समासि (क) [3] गमः (क ख घ) [4] सन्दनं (क) [5] सङ्गस्य मर्मणि (क घ) संज्ञस्य (ख) कर्मण (ग) [6] पङ्के पापां सुधे वापि (क) [7] वावमृ (ग)
[8] वायसेनापि (क) वायसो यस्य मूर्धनि (ग) [9] व्या (क) [10] कुश्रं (क) [11] यस्य (क)

[1]वर्धन्ते नैव रोमाणि सूर्यं च चन्द्रं च नेक्षते ।
षण्मासात्स क्षयं याति [2]सत्यमीश्वरभाषितम् ॥ २८ ॥

अति[3]रक्तिरतिप्रज्ञा अप्रज्ञा वाऽद्युतिस्तथा ।
प्रकृतेर्विक्रिया चैव षण्मासान्मृत्युलक्षणम् ॥ २९ ॥

आकाशात्पतितं भानुमिन्दुं चातपवर्जितम् ।
यः पश्येत्तस्य मृत्युस्स्या[4]दर्वागर्धाच्च वत्सरात्[5] ॥ ३० ॥

नक्षत्र[6]मञ्जनाभं स्या[7]च्छुष्कं यस्योष्ठतालुकम्[8] ।
तस्याप्यब्दार्धभावी स्यान्मृत्युर्नास्त्यत्र संशयः ॥ ३१ ॥

अङ्गुलिद्वयमध्ये तु यदि दृश्येत चन्द्रमाः ।
तदाङ्गुलित्रयं पश्येत्स चाप्यब्दार्धमृत्युभाक् ॥ ३२ ॥

काकगृध्रविलीनाङ्गो रक्तगात्रानुलेपनः ।
[9]तैलाभ्यक्तोऽतिभीतिश्च [10]मुण्डितो रक्तवस्त्रभाक् ॥ ३३ ॥

खरमारुह्य वेगेन दक्षिणां दिशमाव्रजेत् ।
यत्यात्मा दृश्यते स्वप्ने मृत्युस्तस्यार्धवत्सरात् ॥ ३४ ॥

यदि वा [11]सुषिरान्तेषु घण्टानादः श्रुतो भवेत् ।
गच्छन्तं गगने पश्येत्कृकलासं निरूपणम्[10] ।
तस्य मृत्युर्भवेदर्वागब्दार्धान्नात्र संशयः । ॥ ३५ ॥

---

[5] अर्वागर्धादिति उत्तरत्र दृश्यमानपाठबलात्स्वीकृतं पदम् । [8] मातृकासु सुरभान्तेषु इति ग-मातृकायां सुरतान्तेषु इत्यपि पश्यते । सत्वसाधुपाठः इति अत्र किञ्चिद्विपरिवर्तितम् । [1)] अस्य पदस्यार्थो न स्पष्टः ।

---

[1] वर्ज्यन्ते (क) [2] तस्य ई (क) [3] रिक्त (क) [4] गेवाच्च (क ख ग घ)
[6] मण्डला (क) [7] च्छिद्रं [क ख ग घ) [9] तैलाभ्यङ्गो [क] [10] मुण्डिता [क]

यस्य विंशत्यहोरात्रं वहते [1]पिङ्गलोऽनिलः ।
गच्छते यमसंस्थानं षण्मासान्ते न संशयः ॥ ३६ ॥

स्पन्दनं न हि यस्यास्ति कण्ठमूलस्य मर्मणि ।
षण्मासान्तं समासाद्य यमस्य सदनं व्रजेत् ॥ ३७ ॥

[2]गच्छेद्वायसपङ्क्तीभिः पांसुवर्षेण वा पुनः ।
स्वच्छायां विकृतां पश्येच्चतुः पञ्च च जीवति ॥ ३८ ॥

## पञ्चमासायुस्सूचनचिह्नानि

त्रयोविंशत्यहोरात्रं सिरा यस्य[3] प्रवर्तिता ।
तस्यायुः कथ्यते पञ्च मासाः षड्दिनवर्जिताः ॥ ३९ ॥

यस्य न स्फुरणं किञ्चिद्विद्यते [4]स्तनमर्मणि ।
अवश्यं पञ्चमे मासे मृत्युस्तस्यापि विद्यते ॥ ४० ॥

यः स्वप्ने लोहपीठस्थो लोहिताम्बरभूषितः ।
रक्तचन्दनलिप्ताङ्गः पञ्च मासान्स जीवति ॥ ४१ ॥

## चतुर्मासायुस्सूचनचिह्नानि

चतुर्विंशतिमह्नां तु पञ्चविंशति वा[5] [6]समः ।
वहते हि [7]चतुर्मासं त्रिमासं तस्य जीवितम् ॥ ४२ ॥

---

[1] पिङ्गलानाड्यां इत्यर्थः । चतुः पञ्च तत्संख्याकमासानिति, लिं.पु.टीकायां शिवतोषिण्याम् । [3] सुरो यस्येति मातृकासु अस्पष्टार्थकः पाठः । सिरा रक्तवाहिनी । [5] समानवायुरेव समशब्दाभिहितः स्यात् । यतः उत्तरत्रापि नाभिसम्बद्धदुश्चिह्नस्य निरूपणात् । खग इति ग्रहणे वायुरित्यर्थः । [6] चतुर्मासं त्रिमासं वेति ज्ञेयम् ।

---

[2] पश्ये [क] [4] स्तनकर्मणि [क] स्तेनकर्मणि [ख] [6] खगः (ख ग घ)

स्पन्दनं दृश्यते यस्य न किञ्चिन्नाभिमर्मणि ।
स जीवेच्चतुरो मासानपि रोगशतावृतः ॥ ४३ ॥

## त्रिमासायुस्सूचनचिह्नानि

आपीड्यमानयोर्नैव नेत्रयोर्यदि पश्यति
खद्योतद्युतिवत्तस्य त्रिमासान्मृत्युरुच्यते ॥ ४४ ॥

लोहदण्डदरं कृष्णं ह्रस्व[1]तीक्ष्णपरिच्छदम् ।
स्वप्नेऽपि पश्यतस्तस्य त्रिमासान्मरणं भवेत् ॥ ४५ ॥

अनभ्रे विद्युतं पश्येद्दक्षिणां दिशमाश्रिताम् ।
उदके धनुरैन्द्रं वा द्वित्रिमासान्स जीवति ॥ ४६ ॥

स्पन्दते वृषणौ यस्य न किञ्चिदपि[2] पीडितौ[3] ।
तृतीये मासि सोऽवश्यं यमस्थानं गमिष्यति ॥ ४७ ॥

## द्विमासायुस्सूचनचिह्नानि

षड्विंशतिदिनानां तु सप्तविंशति[4] वा खगः ।
वहते यस्य तस्यायुर्द्विमासं चैकमासिकम् ॥ ४८ ॥

यस्य न स्पन्दते किञ्चित्पीडिते लिङ्गमर्मणि ।
तदा मासद्वयस्यान्ते जायते यमदर्शनम् । ॥ ४९ ॥

यः पश्येत्सागरं शुष्कं [4]गङ्गामपि सरस्वतीम् ।
जलस्थानानि चान्यानि द्वौ मासौ तस्य जीवितम् ॥ ५० ॥

## एकमासायुस्प्रदर्शनचिह्नानि

दर्पणे वा जले वापि परेषां चापि चक्षुषि ।

---

[3] पीडितैरिति पाठे पीडनकर्मभिरिति ज्ञेयम् । [4] प्रातिपदिकमात्रावस्थानमार्षम् ।

---

[1] दीर्घ [क] [2] पीडितैः (क ख घ) [4] रागामपि [क]

घृते वाप्यथ तैले वा नेक्षते स्वात्मनस्तनुम्।
यः पश्येदशिरस्कं वा मासादूर्ध्वं न जीवति ॥ ५१ ॥

इन्द्रियाणि न गृह्णन्ति स्वकीयान्विषयान्यदि।
मासान्ते मरणं तस्य भविष्यति न संशयः ॥ ५२ ॥

प्रस्खलेच्च शिरो यस्य दिवा [1]उल्कापि दृश्यते।
[2]उदकेधनुरैन्द्रं वा सोऽपि [3]मासं न जीवति ॥ ५३ ॥

यस्य जानुगतं मर्म न किञ्चिदपि चेष्टते।
मासान्ते मरणं तस्य न केनापि च लङ्घ्यते ॥ ५४ ॥

यः स्वप्ने पतितं वृक्षात्प्रासादात्पर्वतादपि।
अन्धकूपे तथा जाले [4]मासमेकं न जीवति ॥ ५५ ॥

## मासार्धायुस्सूचनचिह्नानि

वसागन्धस्तु वा देहः शवगन्धस्तु वा भवेत्।
निम्बगन्धस्तु वातीव मासार्धेन विनश्यति ॥ ५६ ॥

नाभिस्थानं गुदं यस्य कम्पते तालुका मुहुः।
छागगन्धि शरीरं स्यात्पक्षमेकं हि जीवति ॥ ५७ ॥

अष्टाविंशत्यहोरात्रं वहते पिङ्गला यदा।
[5]पौष्णकालं समारभ्य पक्षान्ते मरणं तदा ॥ ५८ ॥

तैलं पिबति यः स्वप्ने यस्य तैलमयं शिरः।
तैलाभ्यक्तशरीरस्तु पक्षमेकं हि जीवति ॥ ५९ ॥

भूमौ छिद्रमकस्माद्यः स्वच्छायायां तथैव च।
सोऽपि याति यमस्थानमर्धमासान्न संशयः ॥ ६० ॥

---

[1] विसन्धित्वमार्षम् [4] पश्यतीति क्रियापदमध्याहर्य्यम् [5] पौष्णं रेवतिनक्षत्रम्

---

[2] उदक्चेन्द्र (क) [3] मासेन (क)

रवौ छिद्रं हि यः पश्येद्[1]रविं दीप्तिविवर्जितम् ।
सूर्यांशुर्यस्य शीतस्स्यादुष्णश्चन्द्रांशुरेव च ।
सोऽपि याति यमस्थानमर्धमासान्न संशयः ॥ ६१ ॥

## दशदिनायुस्सूचनचिह्नानि

यस्य वै स्नातमात्रस्य[2] पूर्वं शुष्यत्युरो भृशम्[3] ।
पिबतश्च जले शोषो भुक्त्वा च धृतिनाशनम् ।
सदा कम्पो भवेद्यस्य दशाहं सोऽपि जीवति ॥ ६२ ॥

नव विंशत्यहोरात्रं वहते यस्य पिङ्गला ।
दशाहाज्जीवितं तस्य जायते पौष्णयोगतः ॥ ६३ ॥

अनिमित्तं च बाधिर्यं श्रवणे चक्षुषोरपि[4] ।
हिक्का च निद्रा चाकाले दशरात्रं स जीवति ॥ ६४ ॥

## सप्तदिनायुस्सूचनचिह्नानि

शीर्णनाभि यथा चक्रं छिद्रं सोमं स पश्यति ।
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् ॥ ६५ ॥

यश्चापि हन्यते दुःखैर्भूतैः रात्रावथो दिवा ।
विना रोगं गलन्नेत्रः सप्ताहाद्व्रजति ध्रुवम् ॥ ६६ ॥

नासाग्रं रसनाग्रं च भ्रूमध्यं चोष्ठ[5]संपुटम् ।
यो न पश्येत्पुरो दृष्टं[6] सप्तरात्रं स जीवति ॥ ६७ ॥

---

[1] रविदीप्तिविवर्जितमिति मातृकापाठः । [3] हृदयं पीड्यते भृशम् । वा.पु. हृत्पादमवशुष्यते, (मा.पु.) एतौ पाठौ स्पष्टार्थौ इति भावयामि । 'पूर्वं शुष्यत्युरो भृशम्' इति पाठः युक्तः ।

[4] चक्षुषोः अनिमित्तं काणत्वम् । [6] वस्त्विति ज्ञेयम् ।

---

[2] पूर्वं शुष्यत्युरो भृशम् (क) [5] संपुटम् (क ग)

शवगन्धमुपाघ्राति [1]सुरभिं प्राप्य यो नरः ।

## षड्दिनायुस्सूचनचिह्नानि

देवतायतनस्थस्तु षड्रात्रेण स मृत्युभाक् । ॥ ६८ ॥

## पञ्चदिनायुस्सूचनचिह्नानि

पादाऽर्धस्फुरणे पञ्चदिनैर्याति यमालयम् ।
निकृन्ततीव मर्माणि शरीरं शोषयन्ति च ।
भिन्नो यस्य वहेद्वायुः पञ्चरात्रं स जीवति ॥ ६९ ॥

वायुना पीडितस्यापि सिक्तस्य पयसा मुहुः ।
देहे यस्य न रोमाञ्चः पञ्चरात्रं स जीवति ॥ ७० ॥

निर्देषे स्फुरणं पादे यदूर्ध्वं च मुहुर्मुहुः ।
कालस्यामन्त्रणं तस्य पञ्चाहान्नियतं [2]क्षयः ॥ ७१ ॥

## त्रिदिनायुस्सूचनचिह्नानि

स्वच्छाया विकृताकारा यस्य पादान्तकर्षणम् ।
अनिमित्तं च वाङ्नाशो जीवितं दिवसत्रयम् ॥ ७२ ॥

जिह्वा [3]तृष्णा मुखं रक्तं [4]गात्रभङ्गो मनोभ्रमः ।
[5]कुहरस्थः स्वरो यस्य स जीवेद्दिवसत्रयम् ॥ ७३ ॥

## द्विदिनैकदिनायुस्सूचनचिह्नानि

दृष्टिहीनो द्व्यहं जीवेद्गुल्फस्यास्फुरणे दिनम् ।

---

[1] सुरभिः सुगन्धयुक्तं वस्तु । [5] कुहरे गर्ते यथा । यस्य स्वर एव नोद्भियते बहिस्तादृशः ।

---

[2] क्षयम् (क) [3] कृष्ण (क) [4] मन्तरङ्गो (क)

## अल्पायुस्सूचनचिह्नानि

हृत्कम्पे यामयुग्मं स्याद्यामं कण्ठनिरोधतः ।
[1]तालुकाकम्पने [2]प्राणशतं जीवति मानवः ॥ ७४ ॥

## सद्यो मरणसूचनचिह्नानि

स्वच्छायामुत्तरस्थायां दक्षिणे यस्तु पश्यति ।
सद्य एव भवेत्तस्य विनाशो नात्र संशयः ॥ ७५ ॥

यस्यान्नं भुज्यमानं तु कदाचिद्भुज्यते [3]स्त्रिया ।
पश्येद्भोजनकाले यः [4]खमध्ये वृषवाहनम् ॥ ७६ ॥

प्रकीर्णकेशां नग्नां वा स्त्रियं वा पाश[5]धारिणीम् ।
अन्यं वा दण्डिनं पश्येत्सोऽपि सद्यो मरिष्यति ॥ ७७ ॥

भुज्यमानं यदात्मीयमन्नं [6]गृध्रेण भुज्यते ।
यस्य तस्यापि मृत्युस्स्या[7]त्सद्य एव न संशयः ॥ ७८ ॥

रोगार्तभूतमर्त्यानामौषधं यत्र रिक्तवत् ।
दृश्यते सद्य एव स्यान्मृत्युरत्र न संशयः ॥ ७९ ॥

संज्ञालोपो [8]निरुष्णत्वं सद्यो मृत्युनिदर्शनम् ।
[9]चित्रं कृष्णं स्वकं वासः स्वप्ने पश्यति यः पुमान् ॥ ८० ॥

[10]नग्नं वा श्रमणं तस्य गृहे मृत्युरुपस्थितः ।
आमस्तकतलं यस्तु निमग्नं पङ्कसागरे ।
स्वप्ने पश्यत्यथात्मानं स सद्यो म्रियते नरः ॥ ८१ ॥

---

[2] प्राणः उच्छ्वासनिश्वासौ । तावत्पर्यन्तं जीवतीति ज्ञेयम् ।

[6] निरुष्मत्वं इति मातृकासु ।

---

[1] तालुकः (क घ) [3] स्त्वया (क) [4] स्वमध्ये (क) [5] धारिणम् (ख ग घ) [6] सुप्ते (ग)
[7] त्सदा (क) [9] चक्रं (क) नवं (ख ग) [10] अग्रे वा श्रवणं (क) अग्रं तनं वा श्रमणं (ग)

करालैर्विकृतैः कृष्णैः पुरुषैरुद्यतायुधैः ।
[1]पाषाणै[2]स्ताडितः स्वप्ने सद्यो मृत्युं व्रजेन्नरः ॥ ८२ ॥

सूर्योदये यस्य [3]शिवा क्रोशन्ती याति सम्मुखम् ।
यस्य वै भुक्तमात्रस्य हृदयं पीड्यते क्षुधा ।
जायते दन्तघर्षश्च स गतायुर्न संशयः ॥ ८३ ॥

उष्ट्ररासभयानेन स्वप्ने यो दक्षिणां दिशम् ।
प्रयाति तं च जानीयात्सद्योमृत्युं मुनीश्वराः ॥ ८४ ॥

[4]ऋक्षवानरयुक्तेन रथेनाशां च दक्षिणाम् ।
गायन्नथ व्रजेत्स्वप्ने विंद्यान्मृत्युरुपस्थितम् ॥ ८५ ॥

कृष्णाम्बरधरा श्यामा गायन्ती चाप्यथाङ्गना ।
यो नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥ ८६ ॥

स्वप्नेऽग्निं प्रविशेद्यस्तु न च निष्क्रमते पुनः ।
जलप्रवेशादथवा तदन्तं तस्य जीवितम् ॥ ८७ ॥

संभिन्नो मारुतो यस्य मर्मस्थानानि कृन्तति ।
अद्भिः स्पृष्टो न हृष्येच्च मृत्युस्तस्य गृहं गतः ॥ ८८ ॥

भूयो भूयस्त्रसेद्यस्तु रात्रौ वा यदि वा दिवा ।
दीपगन्धं च नाघ्राति विंद्यान्मृत्युमुपस्थितम् ॥ ८९ ॥

रात्रौ चेन्द्रधनुः पश्येद्दिवा नक्षत्रमण्डलम् ।
परनेत्रेषु चात्मानं यो न पश्येन्न जीवति ॥ ९० ॥

---

[5] शिवा जम्बुकी । क्रोशं ना याति, क्रोशं नायाति इति मातृकासु ।
क्रोशन्ति याति इति मा.पु. पाठः स्वीकृतः ।

---

[1] पाषण्डैः स्नपितः (ग)[2] स्तारितः (क) [3] रुजवागरयुक्तेन (क) रुक्षवानरयुक्तेन (ख)

[1]श्वभ्रे यो निपतेत्स्वप्ने द्वारं चास्य [2]पिधीयते ।
न चोत्तिष्ठति यश्चात्र तदन्तं तस्य जीवितम् ॥ ९१ ॥

दिवा वा यदि वा रात्रौ प्रत्यक्षं [3]योऽभिहन्यते[4] ।
हन्तारं च न पश्येच्च तं गतायुषमादिशेत् ॥ ९२ ॥

[5]मुक्तकेशं[6] हसन्गायन्नृत्यन् गच्छति दक्षिणाम् ।
दिशं स्वप्नेषु मृत्युस्स्यादीदृशस्वप्नदर्शिनः ॥ ९३ ॥

नाभौ वा हृदये यस्य सुषिरं यस्य भाषते ।
यस्याङ्गचुर्ण्णं भवेन्मूत्रं तस्य मृत्युरुपस्थितः ॥ ९४ ॥

श्वेताभूतास्तथाश्वेता [7]श्वेता श्वेततरा अपि ।
वहन्ति याम्यदेशे यं तस्य मृत्युरुपस्थितः ॥ ९५ ॥

हृदयं कम्पते यस्य निर्निमित्तं पुनः पुनः ।
विह्वलत्वं च तृष्णा च सोऽपि सद्यो मरिष्यति ॥ ९६ ॥

द्वे चापि परमेऽरिष्टे एकीभूते [8]परं भवेत् ।
प्रत्यक्षेणानुमानेन तथौपम्यौ[9]पदेशतः ॥ ९७ ॥

परीक्ष्यास्ते द्विजश्रेष्ठाः स्वे परे चैव सर्वदा ।
जानीयान्निश्चितं कालं लक्षणैरेवमादिभिः ॥ ९८ ॥

इति श्रीमत्पुराणसारे अरिष्टनिरूपणं नाम
अष्टसप्ततितमोऽध्यायः

---

[1] श्वभ्रः—गर्तः । [4] योऽभिरिति लि.पु. पाठः स्वीकृतः ।
[5] मुक्तकेशमिति क्रियाविशेषणम् । [8] परं मरणम् । लि.पु. अ.९१

---

[2] विधीयते (क घ) [3] सोऽभि [6] मुक्तकेशः (क ग घ) [7] अश्वा (क ख ग)
[9] पमानि च [क], पमान च (घ)

## एकोनाशीतितमोऽध्यायः

[ कालवञ्चनप्रकरणम् ]

### तत्र अरिष्टनिवारणोपायकथनम्

अरिष्टं सूचितं दृष्ट्वा तस्मिन्काल उपस्थिते[1] ।
त्यक्त्वा भयं विषादं च उद्यच्छे[2]द्बुद्धिमान्नरः ॥ १ ॥

तत्स्वभावं तदाऽऽलोक्य [3]काले यावत्पुरागतम् ।
पूर्वाह्णे चापराह्णे च मध्याह्णे चापि तद्दिने ॥ २ ॥

यत्र वा रजनीभागे तदरिष्टं निरीक्षितम् ।
तत्रैव तावद्युञ्जीत यावत्प्राप्तं हि तद्दिनम् ॥ ३ ॥

ततश्चाहनि वात्मानं योजयेत्परमात्मनि ।
[4]जयेत मृत्युयोगेन तत्परेणान्तरात्मना ॥ ४ ॥

तीर्थस्नानेन दानेन तपसा सुहुतेन वा ।
जपेन ध्यानयोगेन जायते काल[5]वञ्चना ॥ ५ ॥

अथ वारिष्टमालोक्य मरणे समुपस्थिते ।

### अरिष्टनिवारणार्थं वाराणसीवासप्रशंसनम्

अविमुक्ते[6]श्वरं गत्वा वाराणस्यां [7]सुशोभनम् ।
येन केनापि वा देहं सन्त्यजन्मुच्यते नरः ॥ ६ ॥

---

अस्याध्यायस्य विषयसंग्रहः प्रायो लिङ्गमार्कण्डेयपुराणाभ्यां संगृहीतः ।
लि.पु. अ.९१ मा.पु. अध्यायः ४० ।

[1] उपस्थिते तस्मिन् काले सूचितमरिष्टं इति अन्वयः । [3] कालो यावद्द्विपाकदः इति मा.पु.पाठः युक्त एव । [7] सुशोभने इति कादि मातृकासु

---

[2] द्बुद्धिमीश्वरः (क) [4] क्षयेत (ख ग) [5] वञ्चनम् (ग) [6] श्व (क)

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये [1]वर्णसङ्कराः ।
स्त्रियो म्लेच्छाश्च ये चान्ये [2]सङ्कीर्णाः पापयोनयः ॥ ७ ॥
कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ।
क्षेत्रेऽस्मिन्निधनं प्राप्तास्ते यान्ति परमां गतिम् ॥ ८ ॥
[3]मृतानां तु पुनर्जन्म न भूयो भवसागरे ।
तस्मात्सर्वप्रयत्नेन वाराणस्यां वसेन्नरः ॥ ९ ॥
उत्तमं सर्वतीर्थानां स्नानानामुत्तमं च यत् ।
सर्वेषामेव भूतानां संसारार्णवतारकम् ॥ १० ॥
पञ्चक्रोशं चतुर्दिक्षु क्षेत्रं पुण्यमनुत्तमम् ।
अविमुक्तेश्वरो नित्यमवसच्च सहाम्बया ॥ ११ ॥
सर्वगत्वाच्च सर्वत्वात् सर्वात्मा सदसन्मयः ।
मुक्तिं ददाति परमां देवदेवस्त्रिलोचनः ॥ १२ ॥
यत्र योगस्ततो ज्ञानं मुक्तिरेकेन जन्मना ।
यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः ॥ १३ ॥
व्याचष्टे तारकं ब्रह्म अविमुक्ते द्विजोत्तमाः ।
[4]रंस्यते योगिभिस्तत्र क्षेत्रेऽस्मिन् मुनिपुङ्गवाः ॥ १४ ॥
ब्रह्मा देवर्षिभिस्सार्धं विष्णुश्चापि दिवाकरः ।

---

असङ्गतः पाठः । अतः सुशोभनमिति परिवर्तितम् । लिङ्गपुराणस्थः 'तु शोधनम्' इति युक्तः पाठः ।

[1] वनसंस्थिता इति मातृकापाठः असाधुरिति भाति । अत्र प्रदत्तः मत्स्यपुराण-पाठः । म.पु. वाराणसीक्षेत्रमाहात्म्यम् । [2] स्वर्गिण इति मातृकासु असङ्गतं दृश्यते । सङ्कीर्णा इति मत्स्यपुराणपाठः ।

---

[3] मृतायां (क) [4] रंस्यन्ते योगिन (ग)

देवराजस्तथा शक्रो ये चान्येऽपि [1]दिवौकसः ।
उपासते महात्मानस्तत्रैव हि मुनीश्वराः ॥ १५ ॥

अन्येऽपि योगिनो दिव्याश्छन्नरूपा महाव्रताः ।
अनन्यमनसो भूत्वा निवसन्ति सदा द्विजाः ॥ १६ ॥

## मोक्षदानां सप्तपुरीणां नामानि

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥ १७ ॥

निवसन्ति च ये जाता मृता वा तत्र ये नराः ।
न ते यमस्य सदनं यान्ति दुष्कृतिनोऽपि वा ॥ १८ ॥

## पुण्यतीर्थनाममहिमवर्णनम्

प्रयागो नैमिषं पुण्यं [3]श्रीशैलादिर्हिमालयः ।
केदारं भद्रकर्णं च गया पुष्करमेव च ॥ १९ ॥

कुरुक्षेत्रं रुद्रकोटिर्नर्मदामृतकेश्वरम्[4] ।
शालग्रामं च [5]कुम्रं च कोकामुखमनुत्तमम्[6] ॥ २० ॥

प्रभासं विषयेशानं गोकर्णं चन्द्रकर्णिकम् ।
पञ्चाम्रं हेमकूटं च रामेश्वरपृथूदके ॥ २१ ॥

एतानि पुण्यतीर्थानि ये सेवन्ते सुसंयताः ।
प्रयास्यन्ति परं स्थानं वाराणस्यां यथा मृताः ॥ २२ ॥

---

[2] हरिद्वारसमीपस्था नगरी । [6] कुम्रम् । इदं कुब्जाम्रमिति स्यात् । तस्य पुराणान्तरेषु क्षेत्रत्वेन प्रसिद्धेः ।

---

[1] दिवाकरः (क) [3] श्रीशैलादिहिमालयम् (क) [4] केसरम् (क ख घ) [5] कुब्जाम्रं (ग)

## वाराणसीमहिमवर्णनं, गङ्गाप्रशंसनं च

ये स्मरन्ति [1]सदा काशीं विन्दन्ति च पुरीमिमाम् ।
तेषां विनश्यति क्षिप्रं इहामुत्र च पातकम् ॥ २३ ॥

वाराणस्यां विशेषेण गङ्गा त्रिपथगा नदी ।
प्रविष्टा नाशयेत्पापं जन्मान्तरशतैः कृतम् ॥ २४ ॥

समुद्रास्सप्त चैवात्र सर्वा नद्यस्सरांसि च ।
भगीरथी[2] समेष्यन्ति सर्वतीर्थानि कृत्स्नशः ॥ २५ ॥

पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
प्रविशन्ति सदाभ्येत्य पुण्यां पर्वसु पर्वसु ॥ २६ ॥

तेनेह लभते त्यक्त्वा देहं दिव्यामृतं परम् ।
असंख्यातानि पापानि ज्ञानतोऽज्ञानतोऽपि वा ॥ २७ ॥

कृतानि नाशयत्[3]येष देवदेवो महेश्वरः ।
सर्वाणि पुण्यतीर्थानि सर्वानिष्टहराणि तु ॥ २८ ॥

जप्त्वा मृत्युञ्जयं वापि जुहुयादयुतत्रयम् ।
तिलैराज्यप्लुतैर्वापि स कुर्यात्कालवञ्चनम् ॥ २९ ॥

आशिषो वापि गृह्णीयाद् [4]विद्वद्भ्यः श्रद्धया युतः ।
मृत्युरोगप्रतीकार[5]समर्था हि द्विजाशिषः ॥ ३० ॥

एवं यो वर्तते योगी सम्यग्योगे व्यवस्थितः ।
प्राप्नोति ब्रह्मनिलयं [6]परमे परमात्मनि ॥ ३१ ॥

---

[1] यदा (क) [2] समेष्येति (क) [3] त्येषां (क) [4] निजेभ्यः (क) [5] स्समस्ता (क)
[6] परमेश्वर (क)

अक्षीणकर्मबन्धस्तु ज्ञात्वा मृत्युमरिष्टतः[1] ।
[2]उत्क्रान्तिकाले संस्मृत्य पुनर्योगित्वमृच्छति ॥ ३२ ॥

तस्मादसिद्धयोगेन सिद्धयोगेन वा पुनः ।
ज्ञेयान्यरिष्टा[3]नि यथा संसारे न च सीदति ॥ ३३ ॥

वेदे श्रेष्ठास्सर्वयज्ञ[4]क्रियास्स्युः
यज्ञाज्जप्यं[5] ज्ञानमायुश्च जप्यात् ।
ज्ञानाद् ध्यानं सर्वसङ्गव्यपेतं
[6]तस्मिन्प्राप्ते शास्त्रतत्त्वोपलब्धिः ॥ ३४ ॥

समाहितो ब्रह्मपरोऽप्रमादी
शुचिस्तथैकान्तरतिर्जितेन्द्रियः ।
समाप्नुयाद्योगमिमं महात्मा
मुक्तिं समाप्नोति तत[7]स्स्वयोगतः ॥ ३५ ॥

इति श्रीमत्पुराणसारे कालवञ्चनोपायकथनं नाम
एकोनाशीतितमोऽध्यायः

---

[1] अरिष्टतः अरिष्टसूचनचिह्नैरिति । [2] उत्क्रान्तिकालः जीवोत्क्रमणसमयः ।

---

[3] न्यथा संस्कारेण च सीदति (क) [4] यज्ञाः क्रियाः ( ) [5] कोलमायुश्च (क)
[6] तस्मिन्काले शाश्वतस्योपलब्धिः (क) [7] स्त्वयोगतः (ग)

# अशीतितमोऽध्यायः

[ [1]ब्रह्मस्वरूपवर्णनम्[2] ]

सूतः —

अथ ते मुनयश्शान्तास्तपसा ब्रह्मवादिनः ।
पप्रच्छुस्तं महात्मानं सूतं पौराणिकोत्तमम् ॥ १ ॥

ऋषयः —

[3]एतत्परं ब्रह्म शिवं यज्ज्ञानेनाधिगम्यते ।
स्वरूपं कीदृशं तस्य तत्त्वतो वक्तुमर्हसि ॥ २ ॥

[4]न ह्यन्यो विद्यते [5]वेत्ता त्वामृते रोमहर्षण ।
सोऽपि सूतस्स्वतसिद्धः स्वरूपानथ वाङ्मयान्[6] ॥ ३ ॥

उत्थाय स्वगुरुं व्यासं दध्यौ सर्वहिते रतम् ।
तस्मिन्नवसरे व्यासस्तत्रैवाविरभूत्स्वयम् ॥ ४ ॥

तं दृष्ट्वा वेदविद्वांसं नीलमेघसमद्युतिम् ।
व्यासं कमलपत्राक्षं [7]प्रणेमुर्द्विजपुङ्गवाः ॥ ५ ॥

पपात दण्डवद्भूमौ दृष्ट्वासौ रोमहर्षणः ।
प्रणम्य शिरसा भूमौ प्राञ्जलिः [8]पार्श्वतोऽवसत् ॥ ६ ॥

---

[2] अस्याध्यायस्य पञ्चमश्लोकादारभ्य प्रायः कूर्मपुराणतः विषयसंग्रहः कृत इति भाति । कू.पु. ईश्वरगीता । [6] सर्वेषामपि शास्त्राणां तत्तच्छात्राधिष्ठिता काचन देवता भवति । वाङ्मयरूपाणां शास्त्राणां किमपि स्वरूपमुद्दिष्टं दृश्यते ।

---

[1] रुद्रज्ञाननिरूपणम् (ख) [3] एतत्परतरं (ग) [4] न ह्यर्थं (क) [5] चिन्ता (ग)
[7] प्रणमे द्विज [क ख घ] [8] पार्श्वगो [ग]

पृष्टास्तेऽनामयं विप्रा शौनकाद्या महर्षयः ।
समाश्वास्यासनं तस्मै तद्योग्यं समुकल्पयन् ॥ ७ ॥

ततश्च सूतस्स्वगुरुं प्रणम्याह महामुनिम् ।

सूतः —

इमे हि मुनयश्शुद्धास्सत्यधर्मपरायणाः ॥ ८ ॥

तत्त्वार्थश्रवणे चैषामस्ति श्रद्धा महत्तरा ।
तद्ब्रह्म परमं वक्तुं मुनीनां नित्यमर्हसि ॥ ९ ॥

श्रुत्वा सूतस्य वचनं मुनिस्सत्यवतीसुतः ।
प्रणम्य शिरसा रुद्रं ज्ञानं प्राह सुखान्वितम् ॥ १० ॥

यदुक्तं देवदेवेन विष्णुना कूर्मरूपिणा ।
पृष्टेन मुनिभिः पूर्वं शक्रेणामृतमन्थने ॥ ११ ॥

## परब्रह्मजिज्ञासूनां मुनीनां सन्निधौ विष्णोराविर्भावः

व्यासः —

वक्ष्ये देवो महादेवः पृष्टो योगीश्वरैः पुरा ।
सनत्कुमारप्रमुखैस्साश्चर्यं यदभाषत ॥ १२ ॥

सनत्कुमारस्सनकस्तथैव च सनन्दनः ।
अङ्गिरा रुद्रसहितो भृगुः परमधर्मवित् ॥ १३ ॥

कणादः कपिलो [1]योगी वामदेवो [2]महाबलः ।
[3]अत्रिर्वसिष्ठो भगवान्सर्वे संयतमानसाः ॥ १४ ॥

---

[1] योगीति स्थाने 'गर्गो' इति कू.पु. ईश्वरगीता । [2] महामुनिरिति–कू.पु.
[3] अत्रिस्थाने शुक्र इति कू.पु. ।

परस्परं विचार्यैतत्संशयाविष्टचेतसः ।
तपस्तेपुस्ततो घोरं पुण्ये बदरिकाश्रमे ॥ १४ ॥

अपश्यंस्ते महाभागमृषिं धर्मपरं शुभम् ।
नारायणमनाद्यन्तं नरेण सहितं तदा ॥ १५ ॥

संस्तूय विविधैः स्तोत्रैस्सर्ववेदसमुद्भवैः ।
प्रणेमुर्भक्तिसंयुक्ता योगिनां योगवित्तमाः ॥ १६ ॥

विज्ञाय वाञ्छितं तेषां भगवानपि सर्ववित् ।
प्राह गम्भीरया वाचा किमर्थं तप्यते तपः ॥ १७ ॥

अब्रुवन् हृष्टमनसो विश्वात्मानं [1]सनादयः ।
[2]तस्मान्नारायणं देवमागतं सिद्धिसूचकम् ॥ १८ ॥

वयं संशयमापन्नास्सर्वे वै ब्रह्मवादिनः ।
भवन्तमेकं शरणं प्रपन्नाः [3]पुरुषोत्तमम् ॥ १९ ॥

त्वं हि तद्वेत्सि भगवान्सर्वज्ञो भगवानपि ।
न ह्यन्यो विद्यते वेत्ता त्वामृते परमेश्वर ॥ २० ॥

किं तत्परतरं ब्रह्म सर्वं नो वक्तुमर्हसि ।
एवमुक्त्वा तु मुनयः प्रापश्यन्पुरुषोत्तमम् ।
[4]विहाय तापसं रूपं प्रस्थितं स्वेन तेजसा ॥ २१ ॥

विभ्राजमानं विमलं प्रभामण्डलमण्डितम् ।
श्रीवत्सवक्षसं देवं तप्तजाम्बूनदप्रभम् ॥ २२ ॥

---

[1] सनातनमिति कू.पु. [2] साक्षान्नारायणं कू.पु. पाठः समीची दृश्यते । नी

---

[3] पुरुषोत्तमाः (क ख घ) [4] विज्ञाय (क)

शङ्खचक्रगदापाणिं शार्ङ्गहस्तं श्रिया युतम् ।
न [1]दृष्टस्तत्क्षणादेव [2]नरस्तस्यैव तेजसा ।[3]

ऋषीणां पुरः शिवस्य साक्षात्कारः

तदन्तरं महादेवः शशाङ्काङ्कितशेखरः ॥ २३ ॥
ब्रह्मविष्णुमहेशानैरुपास्यो गुणमूर्तिभिः ।
प्रसादाभिमुखो रुद्रः प्रादुरासीन्महेश्वरः ॥ २४ ॥
निरीक्ष्य ते जगन्नाथं त्रिणेत्रं चन्द्रभूषणम् ।
तुष्टुवुर्हृष्टमनसो भक्त्या तं परमेश्वरम् ॥ २५ ॥
स तैः स्तुतो महादेव[4]स्त्र्यम्बको भक्तवत्सलः ।
समालिङ्ग्य हृषिकेशं प्राह गम्भीरया गिरा ॥ २६ ॥
किमर्थं पुण्डरीकाक्ष मुनीन्द्रा ब्रह्मवादिनः ।
इमं समागता देशं किं वा कार्यं [4]मयाच्युत ॥ २७ ॥
आकर्ण्य तस्य तद्वाक्यं देवदेवो जनार्दनः ।
[5]आह देवो महादेवं प्रसादाभिमुखं स्थितम् ॥ २८ ॥
इमे हि मुनयो देव तपसा क्षीणकल्मषाः ।
अभ्यागतानां शरणं सम्यग्दर्शन[6]काङ्क्षिणम् ॥ २९ ॥
[7]यदि प्रसन्नो भगवान् मुनीनां भावितात्मनाम् ।
सन्निधौ मम तद्ज्ञानं दिव्यं वक्तुमिहार्हसि ॥ ३० ॥
एवमुक्तो हृषीकेशः प्रोवाच मुनिपुङ्गवान् ।
द्रष्टुमर्हथ विश्वेशं प्रत्यक्षं पुरतः स्थितम् ॥ ३१ ॥

---

[3] कूर्मपुराणेऽपि न दृष्टः .... ... नरः इत्येव पाठः । स तु युज्यते ।
[5] आदिदेव इति युक्तं भवेदत्र ।

---

[1] दृष्टाः (क) [2] वरः (क) [4] ममा (क) [6] कांक्षिताः (क) [7] इति (क)

निशम्य विष्णोर्वचनं प्रणम्य वृषभध्वजम् ।
सनत्कुमारप्रमुखाः पृच्छन्ति स्म महेश्वरम् ॥ ३२ ॥

### शिववैभववर्णनम्

अथास्मिन्नन्तरे दिव्यमासनं विमलं शुभम् ।
किमप्यचिन्त्यं गगनादीश्वरार्हं[1] समुद्बभौ ॥ ३३ ॥

तत्रास[2]साद योगात्मा विष्णुना सह [3]विश्ववित् ।
तेजसा पूरयन्विश्वं भाति देवो महेश्वरः ॥ ३४ ॥

[4]तं देवा दिवि देवेश शङ्करं ब्रह्मवादिनः ।
विभ्राजमाने विमले तस्मिन्ददृशुरासने ॥ ३५ ॥

यं प्रपश्यन्ति योगस्थाः स्वात्मन्यात्मानमीश्वरम् ।
अनन्यतेजसं शान्तं शिवं ददृशिरे किल ॥ ३६ ॥

यतः प्रसूतिर्भूतानां यस्मिंश्चैतत्प्रलीयते ।
तमासनस्थं भूतानामीशं ददृशिरे किल ॥ ३७ ॥

यदन्तरा सर्वमेतद्यतोऽभिन्नमिदं जगत् ।
सवासुदेवमीशानामीशं ददृशिरे परम् ।
[5]तुष्टुवुर्हृष्टमनसः सर्वलोकपितामहम् ॥ ३८ ॥

---

[1] र्थम् कू.पु. । [3] विश्वकृत् कू.पु. । [4] ततो देवाधिदेवेशम् कू.पु. । अयं पाठस्समीचीनः । मातृकापाठे तु 'दिवि देवेन' इति दृश्यते । तत्र कूर्मपुराणपाठबला'द्देवेश' इति विपरिवर्त्य पठनं योग्यमिति परिवर्तितपाठ एव प्रदत्तोऽस्ति । [5] अथ इत्यध्याहार्थम् ।

---

[2] नादयोगा (क)

## सर्वदेवकृतशिवस्तुतिः

जय देव जगन्नाथ जय[2]देव जनार्दन ।
जय विष्णो हृषीकेश नारायणपरायण ॥ ३९ ॥

जय [2]रुद्र पुराणात्मन् जय देव हरे हर ।
आदिदेव जगन्नाथ जय शङ्कर भावन ॥ ४० ॥

जयकौस्तुभदीप्ताङ्ग जय भस्मविराजित ।
जय चक्रगदापाणे जय [3]शूलपिनाकधृक् ॥ ४१ ॥

जय मौक्तिकदीप्ताङ्ग जय नागविभूषण ।
एवं स्तुतो महादेवस्त्र्यम्बको भक्तवत्सलः ॥ ४२ ॥

प्रोवाच सत्त्वं भगवान् मुनीनां परमेश्वरः ।
निरीक्ष्य पुण्डरीकाक्षं स्वात्मयोनिमनुत्तमम् ॥ ४३ ॥

## शिवेन परमात्मतत्त्वनिरूपणम्

अवाच्यमेव तद्ब्रह्म यत्तद्गुह्यं सनातनम् ।
यन्न देवा विजानन्ति [3]यतन्तो यद्द्विजातयः ।
अप्रमेयमनाद्यन्तं गोपनीयं प्रयत्नतः ॥ ४४ ॥

यस्माद्धि जायते विश्वं यत्रैव प्रविलीयते ।
[4]स आत्मा केवल[5]स्सत्यः शान्तस्सूक्ष्मस्सनातनः ॥ ४५ ॥

अस्ति सर्वान्तरस्साक्षी चिन्मात्रस्तमसः परः ।
सोऽन्तर्यामी स पुरुषः स प्राणः परमेश्वरः ॥ ४६ ॥

---

[5] यतन्तोऽपि इति कू.पु. । सर्वान्तर इति कू.पु. पाठः । सर्वात्मम इति पाठस्तु नातीव युक्तः । [6] तमस इति कू.पु. पाठः । मातृकाणां तमस इति पाठः नातीव मनोज्ञः ।

---

[1] रुद्र (ग) [2] देव (क ख ग) [3] शूलिन् कपर्दिने (ग) [4] सर्वात्मा (क) [5] स्वच्छः (ग)

परः पराणां परमः परमात्मात्मसंज्ञितः ।
रूपवर्णादिनिर्देशविशेषेण विवर्जितः ॥ ४७ ॥

अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मनः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥ ४८ ॥

तद्ब्रह्म परमं नित्यमहमक्षरमव्ययम् ।
नायं पृथ्वी न सलिलं न तेजः पवनो नभः ॥ ४९ ॥

न कर्ता न च भोक्ता च न च प्रकृतिरात्मिका ।
न माया नैव च प्राणः [1]चैतन्यं परमार्थतः ॥ ५० ॥

केचिच्चैतन्यसंबन्धं देहमात्रं विमोहिताः ।
आत्मेत्याहुस्तथैवान्ये चेतनानीन्द्रियाणि च ॥ ५१ ॥

मन इत्यपरे प्राहुः प्राण इत्यपरे जनाः ।
क्षणप्रध्वंसि विज्ञानं केचिच्छून्यं तथा परे ॥ ५२ ॥

अणुमात्रतयाऽऽत्मानं केचिदस्तीति नामतः ।
प्रवदन्ति विमोहेन देहमात्रं तु केचन ॥ ५३ ॥

नाणुमात्रो न देहेन समो व्यापी पुमान्न च ।
कोऽप्यन्तर इति भ्रान्त्या प्रवदन्ति च केचन ॥ ५४ ॥

देशतः कालतश्चापि व्यापीत्याहुरथापरे ।
व्यापिनो बहवश्चेति प्रवदन्ति स्वभावतः ॥ ५५ ॥

आत्मनामपरे भ्रान्त्या [2]ज्ञानानन्दादयो गुणाः ।
इत्याहुः केचिदज्ञानानादृद्रव्य[3]मेवात्मकः स्थितः ॥ ५६ ॥

---

[1] न चैव, कू.पु. पाठः ।

---



[2] भ्रान्त्या (क ख घ) [3] बोधात्मकः स्थितिः (ग)

देशतः कालतश्चापि वस्तुतश्च पुमानयम् ।
परिच्छेदविनिर्मुक्तः सच्चिदानन्दलक्षणः ॥ ५७ ॥
अयं हि वेदसिद्धान्तः संसारस्य निवर्तकः ।
इतोऽन्यथा तु [1]ये भ्रान्तास्ते सर्वे न हि संशयः ॥ ५८ ॥
देवैश्च मुनिभिश्चान्यैः [2]प्राज्ञैस्तेऽभिहिता अपि ।
कथं वेदविरुद्धोऽर्थः कथ्यते तत्कृपालुभिः ॥ ५९ ॥
वस्तुगत्या तथा भ्रान्त्या वेदमार्गविरोधिनः
नास्तिक्यविनिवृत्यर्थं केवलं तैरपि द्विजाः । ॥ ६० ॥
मन्दबुद्ध्यनुसारेण कथितास्ते न तत्त्वतः
वेदेन मुनयश्चान्ये सर्वज्ञा अतिनिर्मलाः । ॥ ६१ ॥
अतीव शुद्ध[3]चित्तानां वक्तव्यं परमार्थकम् ।
रजस्तमोऽभिभूतानां कथं तैरभिभाष्यते ॥ ६२ ॥
क्रमेण सम्यग्ज्ञानस्य मन्दबुद्धिमपेक्ष्य च ।
[4]अवृत्तास्सर्वसिद्धान्ता अधिकारिविशेषतः ॥ ६३ ॥
अतः प्रसन्नचित्तस्तु श्रद्धधानस्सुनिश्चलः ।
आत्मानं [5]वेदसंसिद्धं गृह्णीयादपरं त्यजेत् ॥ ६४ ॥
[6]अनाख्यमनभिव्यक्तं सच्चिदानन्दरूपकम् ।
सर्वाधारं स्वप्रकाशमेकं तु द्वैतवर्जितम् ।
ऋतमात्मा परं ब्रह्म सत्यमित्याह हि श्रुतिः ॥ ६५ ॥

इति श्रीमत्पुराणसारे ईश्वरगीतासु स्वरूपनिरूपणं नाम
अशीतितमोऽध्यायः

---

[1] ये सिद्धान्ताः ते सर्वे भ्रान्तस्वरूपा इति । [4] प्रवृत्ता इति रूपं युक्तं स्यात् ।
[5] वेदसंसिद्धता वैदिकज्ञानाग्रगण्यत्वम् । अपरं मोक्षम् ।

---

[2] सर्वेत्वा इति निर्मलाः (क) [3] विद्यानां (क) [6] अनाख्यानमभि (क)

## एकाशीतितमोऽध्यायः

### शिवज्ञाननिरूपणम्

ईश्वरः —

अस्ति [1]वेदकृतस्सिद्धस्साक्षी सर्वस्य सर्वदा ।
संसारार्णवमग्नानां साक्षात्संसारमोचकः ॥ १ ॥

सर्वेषां तु मनस्तेन प्रेरितं नियमेन तु ।
विषये गच्छति, प्राणा चेष्टन्ते, [2]वाग्वदत्यपि ।
चक्षुः पश्यति रूपाणि, श्रोत्रं शब्दं शृणोत्यसौ ॥ २ ॥

अन्यानि यानि सर्वाणि तेनैव प्रेरितानि तु ।
[3]स्वं स्वं विषयमुद्दिश्य प्रवर्तन्ते निरन्तरम् ॥ ३ ॥

प्रवर्तकत्वं [4]चाप्यस्य मायया न स्वभावतः ।
नामरूपस्य निर्माता तदेव ब्रह्म शाश्वतम् ॥ ४ ॥

अमृतं च तदेवैतत्स आत्मा सर्वदेहिनाम् ।
ततोऽन्यन्न परं किञ्चिन्नापरं [5]नास्ति किञ्चन ॥ ५ ॥

स एव सर्वरूपेण विभाति न विभाति च ।
[6]यथा मृत्स्वविकारेषु तत्तद्रूपेण संस्थिता ।
तथा सर्वत्रगस्साक्षी तत्तद्रूपेण संस्थितः ॥ ६ ॥

यथा वा सर्वगं व्योम स्वाकारेणैव संस्थितम् ।
तथा सर्वात्मकस्साक्षी साक्षिरूपेण संस्थितः ॥ ७ ॥

---

[6] मृदो विकारभूतेषु घटादिषु घटाद्याकारेणैव मृदोऽवस्थानम् ।

---



[1] देवव्रतः [क] [2] वा यतत्यपि [ग] [3] स्वयं [क] [4] वाप्यस्य [क] [5] नास्ति (क)

[1]घटाकाशादिभेदेन विभिन्नोऽप्यविभागवान् ।
महादेवो विभागेनाविभागेन च भासते ॥ ८ ॥

येन केनापि रूपेण यद्यद्भाति न भाति च ।
तेन तेनैव रूपेण शिव एवावभासते ॥ ९ ॥

अजरश्चामरश्चैव व्यक्ताव्यक्तापदेशवान् ।
व्यापकस्सद्गुणः सूक्ष्मः सर्वभूतगुणाश्रयः ॥ १० ॥

यदा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् ।
ज्ञानात्मानं तथा विन्द्यात्पुरुषस्सर्वजन्तुषु ॥ ११ ॥

कूटस्थो निर्गुणो व्यापी चैतन्यात्मा स्वभावतः ।
दृश्यते ह्यर्थरूपेण [2]पुरुषं भ्रान्तिदृष्टिभिः ॥ १२ ॥

यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः ।
[3]रक्तिमाद्युपधानेन तद्वत्परमपूरुषः ॥ १३ ॥

स्वतश्चलनशून्योऽपि जले चलति भास्करः ।
तथापि [4]चलहीनोऽपि शरीरे चलतीश्वरः ॥ १४ ॥

एकोऽपि द्यौ यथा भाति चन्द्रस्तद्वद्द्वयं पुमान् ।
ब्रह्मादिस्तम्बभेदेन भाति चैकोऽपि सत्तमाः ॥ १५ ॥

घटकुड्यादयो भावा भूतानि [5]विविधानि च ।
सर्वं ब्रह्मातिरेकेण नास्ति ब्रह्मैव तत्सदा ॥ १६ ॥

---

[2] पुरुषैर्ज्ञानदृष्टिभिः इति कू.पु. । [3] रक्तिकाद्युपधानेन इति कू.पु. ।
[4] चलहीनत्वं चलनहीनत्वम् । तथा चलनहीनोऽपि इति युक्तमासीत् ।

---

[1] घोटकीशादि (क ख घ) [5] भुवनानि (क)

एक[1]स्स भिद्यते[2] शक्त्या मायया न स्वभावतः ।
भेदो व्यक्तस्वभावेन [3]स च मायासमाश्रयः ॥ १७ ॥

[4]यथा हि धूमसम्पर्कान्नाकाशो मलिनो भवेत् ।
अन्तःकरणजैर्भावैरात्मा तद्वन्न लिप्यते ॥ १८ ॥

[5]यथा स्वप्रभया भाति केवलः [6]परमार्थतः ।
उपाधिहीनो विमलस्तथैवात्मा प्रकाशते ॥ १९ ॥

ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ।
अर्थस्वरूपमेवाज्ञाः पश्यन्त्यन्ये कुदृष्टयः ॥ २० ॥

तस्मादात्माक्षरश्शुद्धो नित्यस्सर्वत्रगोऽव्ययः ।
कूटस्थो निर्गुणो व्यापी चैतन्यात्मा स्वभावतः ॥ २१ ॥

एवमात्माहमव्यक्तो मायावी परमेश्वरः ।
कीर्तितस्सर्ववेदेषु सर्वात्मा सर्वतोमुखः ॥ २२ ॥

सर्वकामस्सर्वरसः सर्वगन्धोऽक्षरोऽमरः ।
सर्वतः पाणिपादोऽहमन्तर्यामी सनातनः ॥ २३ ॥

वेदाहं सर्वमेवेदं न मां जानाति कश्चन ।
अहं हि सर्वभूतानामन्तस्तिष्ठामि सर्वगः ॥ २४ ॥

मां सर्वसाक्षिणं लोके न जानन्ति मुनीश्वराः ।
नाहं तपोभिर्विविधैर्न दानेन न चेज्यया ।
शक्यो हि पुरुषैर्ज्ञातुमृते भक्तिमनुत्तमाम् ॥ २५ ॥

---

[2] 'एकः सन्तिष्ठते' इति कूर्मपुराणपाठः । [3] सा च मायात्मसंश्रया इति कू.पुराणपाठः । [4] यथा स्वप्रभया भाति केवलः स्फटिकोपलः । कूर्मपुराणस्थोऽयं पाठः सङ्गत इति भाति ।

---

[1] स्तन्निद्यते (ख) [4] तथापि (क) [6] परमार्थताम् (क)

मां पश्यन्तीह विद्वांसो धार्मिका वेदवादिनः ।
तेषां सन्निहितो नित्यं ये भक्त्या मामुपासते ॥ २६ ॥

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ २७ ॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
संसारहेतुरेवाहं सर्वसंसारवर्जितः ॥ २८ ॥

अहमेव हि संहर्ता स्रष्टाहं परिपालकः ।
एका सर्वान्तरा शक्तिः करोति विविधं जगत् ॥ २९ ॥

पूर्वकल्पप्रपञ्चार्थं संस्कारेणानुरञ्जितम् ।
कालकर्मविपाकेन सत्ववृत्ति[1]समाश्रयम् ॥ ३० ॥

आस्थाय ब्रह्मणो रूपं मन्मयी मयि तिष्ठति ।
अन्या च शक्तिर्विपुला संस्थापयति मे जगत् ॥ ३१ ॥

भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मयः ।
तृतीया महती शक्तिर्निहन्ति सकलं जगत् ॥ ३२ ॥

तामसी मे समाख्याता [2]कालाऽख्या रुद्ररूपिणी ।
अहं हि सर्वशक्तीनां प्रवर्तकनिवर्तकः ॥ ३३ ॥

आधारभूतस्सर्वासां निधानम[3]मृतस्य तु ।
इदं सर्वं जगत्सत्य[4]मिव भातमिति स्वतः ॥ ३४ ॥

कारणव्यतिरेकेण नास्त्येवात्र न संशयः ।
पूर्वपूर्वभवोत्पन्नवासनाया बलेन तु ।
देहेन्द्रियादिसङ्घाते संभ्रान्तिर्जायते [5]दृढम् ॥ ३५ ॥

---

[1] स्तमाश्रये (क) [2] कालोऽस्या (क) [3] वास (ग) [4] मितिहास (ग)
[5] दृढे (क ग)

मया ततमिदं [1]सर्वं प्रधानपुरुषात्मकम् ।
मय्येव संस्थितं विश्वं मया सम्प्रेर्यते जगत् ॥ ३६ ॥

प्रेरयामि जगत्कृत्स्नमेतद्यो वेद सोऽमृतः ।
अरूपं सच्चिदानन्दमद्भुतं परमेश्वरम् ॥ ३७ ॥

नीलकण्ठं प्रभान्तःस्थं ध्यायेन्मां यस्त्वतन्द्रितः ।
एवं ध्यानपरस्साक्षान्मुनिर्ब्रह्मा[2]ऽऽत्मविद्यया ॥ ३८ ॥

भूतयोनिं समस्तस्य साक्षिणं तमसः परम् ।
गच्छत्येव न सन्देहः सत्यमुक्तं मयानघाः ॥ ३९ ॥

[3]इत्थमुक्तं समासेन सारात्सारतरं बुधाः ।
प्राधान्येन परं तत्त्वं वेदमार्गैकगोचरम् ॥ ४० ॥

इति श्रीमत्पुराणसारे ईश्वरगीतासु ब्रह्मणस्सर्वात्मत्वप्रतिपादनं नाम एकाशीतितमोऽध्यायः

---

[1] विश्वं (ग) [2] त्वविद्यया (ग) [3] इद (ग)

# द्व्यशीतितमोऽध्यायः

[ ब्रह्मविज्ञानम् ]

ईश्वरः —

[1]अन्यद्गुह्यतमं ज्ञानं वक्ष्ये ब्राह्मणपुङ्गवाः ।
येनासौ तरते जन्तुर्घोरं संसारसागरम् ॥ १ ॥

अहं [2]ब्रह्मा यतश्शान्तः शाश्वतो[3] नित्य अव्ययः ।
एकाकी भगवानुक्तः केवलः परमेश्वरः ॥ २ ॥

यो मामेवं विजानाति बीजिनं पितरं प्रभुम् ।
स धीरस्सर्वलोकेषु न मोहमधिगच्छति ॥ ३ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
[4]स्वात्मन्यवस्थितं शान्तं यः पश्यति स पश्यति ॥ ४ ॥

## जीवन्मुक्तस्वरूपम्

यथास्थितमिदं यस्य व्यवहारवतोऽपि च ।
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ ५ ॥

यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ६ ॥

रागद्वेषमलादीनामनुरूपं चलन्नपि ।
योऽन्तर्व्योमवदत्रस्तः स जीवन्मुक्त उच्यते ॥ ७ ॥

---

[1] प्रायः अस्याध्यायस्य विषयसंग्रहः कूर्मपुराणात् संगृहीतः कू.पु. ईश्वरगीता। अध्यायः ८ । [3] निर्मल इति कू.पु. [4] विनश्यत्स्वविनश्यन्तम् कू.पु.

---

[1] ब्रह्ममयः (ग)

[1]मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः ।
निर्वैरस्सर्वभूतेषु यस्स मामेति सुव्रत ॥ ८ ॥

## शिवविभूतियोगवर्णनम्

अहमात्मा सर्वगतः सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ ९ ॥
[2]मया विना महादेवः पुराणे हरिरव्ययः ।
योगिना[3]मप्यहं शम्भुः स्त्रीणां देवी गिरिन्द्रजा ॥ १० ॥
आदित्यानामहं विष्णुः वसूनामस्मि पावकः ।
रुद्राणां शङ्करश्चाहं गरुडः पततामहम् ॥ ११ ॥
ऐरावतो गजेन्द्राणां रामश्शस्त्रभृतामहम् ।
उच्चैःश्रवास्तुरङ्गाणां ज्योतिषां रविरंशुमान् ॥ १२ ॥
मरीचिर्मरुतामस्मि भूतानामन्त एव च ।
वेदानां सामवेदोऽस्मि वित्तेशो यक्षरक्षसाम् ॥ १३ ॥
सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ।
हिरण्यगर्भो देवानां मन्त्राणां प्रणवस्त्रिवृत् ॥ १४ ॥
प्रजापतीनां दक्षोऽहं धातूनामस्मि काञ्चनम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ १५ ॥
महर्षीणां [4]भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ १६ ॥

---

[1] प्रायोऽत्र श्रीमद्भगवद्गीतोपनिषदाधारः स्वीकृतोऽस्ति । [2]मायाविनामहं देवः पुराणो हरिरव्ययः इति कू.पु.पाठः साधुः । अथ वा मायाविनां महादेव इति परिवर्तनीयं तदा शम्भुरिति पदेन द्विरुक्तिर्भवेत् । [3] मस्म्यहं कू.पु. ।

---

[4] प्रभुः (ग)

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
ऋषीणां च वसिष्ठोऽहं देवानां च शतक्रतुः ॥ १७ ॥
शिल्पिनां विश्वकर्माहं प्रह्लादस्त्वमरद्विषाम्[1] ।
मुनीनामप्यहं व्यासो गणानां च विनायकः ॥ १८ ॥
गन्धर्वाणां चित्ररथो नराणां च नराधिपः ।
इन्द्रियाणां मनश्चास्मि धेनूनामस्मि कामधुक् ॥ १९ ॥
नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ।
ब्रह्मण्यानां बलिरहं मन्त्रोऽस्मि विजिगीषताम् ॥ २० ॥
अहं युगानां च कृतं नक्षत्राणां तथाभिजित्[2] ।
किंपुरुषाणां च हनूमान् वर्णानां प्रथमोऽनघाः ॥ २१ ॥
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ।
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमस्सं[यम]ता[महम्] ॥ २२ ॥
वीराणां वीरभद्रोऽहं सिद्धानां कपिलो मुनिः ।
पर्वतानामहं मेरुः नक्षत्राणां च चन्द्रमाः ।
वज्रं प्रहरणानां च व्रतानां सत्यमस्म्यहम् ॥ २३ ॥
[3]झषाणां[4] मकरश्चास्मि स्रोतसामस्मि जाह्नवी ।
मृगाणां च मृगेन्द्रोऽहं वादः प्रवदतामहम् ॥ २४ ॥

---

[1] केवलं राक्षसजातिग्रहणमत्र । [2] उत्तराषाढायाः शेषपञ्चदशदण्डाः श्रवणायाः प्रथमदण्डचतुष्टयं एतदून विंशतिदण्डात्मकमभिजित् ।
[4] सर्वमातृकास्तु ऋक्षाणामिति । परन्तु अर्थानुसन्धानेन झषाणामिति भगवद्गीतापाठ एव युक्त इति स एव प्रदत्तः ।

---

[3] ऋक्षाणां (क ख ग घ)

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृति क्षमा ॥ २५ ॥

बृहत्साम तथा साम्नां गायत्री च्छन्दसामहम् ।
मासानां मार्गशीर्षोऽहं ऋतूनां कुसुमाकर ॥ २६ ॥

सूक्तानां पौरुषं सूक्तं ज्येष्ठं साम च सामसु ।
सर्ववेदार्थविदुषां मनुः स्वायम्भुवोऽस्म्यहम् ॥ २७ ॥

ब्रह्मावर्त्तं च देशानां क्षेत्राणामविमुक्तकम्[1] ।
विद्यानामात्मविद्याहं[2] ज्ञानानामैश्वरं[3] पदम् ॥ २८ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मिं गुह्यानां कवीनामुशनाः कवि ॥ २९ ॥

पुरोधसां च मुख्यं मां [4]वित्त विप्रा बृहस्पतिम् ।
भूतानामस्म्यहं व्योम [5]मर्त्यानां मृत्युरेव च ॥ ३० ॥

[6]शास्त्राणामस्म्यहं माया कालः कलयतामहम् ।
[7]गतीनां मुक्तिरेवाहं [8]परेषां परमेश्वर ॥ ३१ ॥

यच्चान्यदपि लोकेऽस्मिन्सर्वं तेजोबला[9]धिकम् ।
तत्सर्वं प्रतिजानी[10](ध्वं) मम तेजोविजृम्भितम् ॥ ३२ ॥

---

[1] अविमुक्त च काशीक्षेत्रमिति पौराणिकाः । [2] आत्मविद्या ब्रह्मविद्यापर-नामधेया । [3] ईश्वरस्य सर्वशास्त्रबोधकत्व यतः शास्त्रेषु 'सर्वज्ञ ईश्वर' इत्यादिना साधितम् अतः ऐश्वरं ज्ञानप्राप्तिहेतुभूत पदमिति निश्चयः ।
[5] तत्त्वानामिति कू.पु. । [6] पाशानामस्म्यहं इति कू.पु.पाठ एव युक्तोऽत्र ।
[7] यतः परमा गतिः कांक्षिता मुक्तिनाम्नी ।
[8] परेषां श्रेष्ठानामित्यर्थः ।

---

[4] वेत्ति (क ख घ) दिकत् (क) [10] त्वं (क ख ग घ)

नान्तोऽस्मि मम दिव्यानां विभूतीनां मुनीश्वराः ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ३३ ॥

यदा त्वहं देवयोनौ वर्ते मुनिकुलोद्वहाः ।
तदाहं देववच्चेष्टामाचरामि मुनीश्वराः ॥ ३४ ॥

यदा गन्धर्वयोनौ तु वर्तेऽहं मुनिपुङ्गवाः ।
तदा गन्धर्ववच्चेष्टास्सर्वाश्चैव मुनीश्वराः ॥ ३५ ॥

नागयोनौ यदा चैव तदा वर्ते च नागवत् ।
यक्षराक्षसयौनौ तु तथावृत्तश्चराम्यहम् ॥ ३६ ॥

यदा मानुष्ययोनौ तु तदा मानुष्यवत् स्थितः ।
यच्चान्यदपि लोकेऽस्मिन्सत्वं तेजो बला[1]धिकम्
तत्सर्वं प्रतिजानीध्वं मम तेजोविजृंभितम् । ॥ ३७ ॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां मुनीश्वराः ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ३८ ॥

अहं हि सर्वं न च किञ्चिदन्यत्
[2]निरूपणायामनिरूपणाय ।
इयं हि वेदस्य परा हि निष्ठा
ममानुभूतिश्च न [3]संशयश्च ॥ ३९ ॥

[4]अहं सदाधश्च तथाहमूर्ध्वं
अहं पुरस्तादहमेव पश्चात् ।

---

[2] निरूपणासृष्टिः अनिरूपणा नाशः । [4] एतदनन्तरं सूतसंहिता ब्रह्मगीता (यज्ञवैभवखण्डः अ.५) इत्याभ्यां संगृहीतो दृश्यतेऽयं भागः ।
(आनन्दाश्रमः, पूना १८९३)

---

[1] दिकम् (क ख घ) [3] संशयश्च (क ख घ)

अहं च संव्ये[1]तरमास्तिकास्तथा
अहं सदैवोत्तरतोऽन्तरालम् ॥ ४० ॥

परोक्षरूपेण सुसंस्थितोऽहं
संसाररूपेण सुसंस्थितोऽहम् ।
प्रमाणरूपेण सुसंस्थितोऽहं
[2]प्रमेयरूपेण सुसंस्थितोऽहम्[3] ॥ ४१ ॥

---

[1] त्तरमासकास्तथा (ग) [2] प्रमातृ (ग)

[3] पतिस्वरूपेण तथा च भर्तुः
क्रियास्वरूपेण फलस्य चाहम्
(पुण्य) प्रभेदेन सुसंस्थितोऽहम्
सुखप्रता × × रवि × × भेदनैश्च
मर्त्यप्रभेदेन तथा च तिर्य
भेदेन कीटस्य च वृक्षभेदैः
गुल्मप्रभेदेन संसु स्थितोऽहम्
वनप्रभेदेन ,,
नदप्रभेदेन ,,
समुद्रभेदेन ,,
अभ्रप्रभेदेन ,,
नक्षत्रभेदेन ,,
ग्रहप्रभेदेन तथा च विद्यु
द्विभेदनेनैव च यक्षभेदैः
रक्षः प्रभेदेन .... ....
गन्धर्वसिद्धोरगलोकभेदैः
अणुप्रभेदेन
तथा पुनर्ग्रामगृहादिभेदैः
मठप्रभेदेन
कूट
प्राम्राभदेनद

प्राकारभेदेन
पुरप्रभेदेन
भूपालभेदेन
शब्दादिभेदेन
प्राणप्रभेदेन
रूप ,,
रस ,,
गन्धप्रभेदेन
मनः ,,
पृथ्वी ,,
अहं ,,
वित्त ,,
घात ,,
जागृत् ,,
स्वप्न ,,
सूक्ष्मादिभेदेन
तुरीय ,,
दृश्यप्रभेदेन
साक्षि ,,
नानाप्रकारेण सुसंस्थितोऽहम्

अत्र कानिचन पदानि अन्यासु मातृकासु यद्यपि दृश्यन्ते तथापि विस्पष्टवाचनार्थं अत्र 'ग' मातृकायाः समस्तोऽपि पाठः प्रदत्तः ।

कर्तृस्वरूपेण सुसंस्थितोऽहं
क्रियास्वरूपेण सुसंस्थितोऽहम् ।
[1]पुण्यप्रभेदेन सुसंस्थितोऽहं
पापप्रभेदेन सुसंस्थितोऽहम् ॥ ४२ ॥

सुखप्रभेदेन सुसंस्थितोऽहं
दुःखप्रभेदेन सुसंस्थितोऽहम् ।
[2]व्रतप्रभेदेन सुसंस्थितोऽहम्
[3]देहप्रभेदेन सुसंस्थितोऽहम् ॥ ४३ ॥

मर्त्यप्रभेदेन सुसंस्थितोऽहं
तिर्यक्प्रभेदेन सुसंस्थितोऽहम् ।
कीटप्रभेदेन सुसंस्थितोऽहं
वृक्षप्रभेदेन सुसंस्थितोऽहम् । ॥ ४४ ॥

गुल्मप्रभेदेन सुसंस्थितोऽहं
लताप्रभेदेन सुसंस्थितोऽहम् ।
तृणप्रभेदेन सुसंस्थितोऽहं
घटप्रभेदेन सुसंस्थितोऽहम् ॥ ४५ ॥

मठप्रभेदेन सुसंस्थितोऽहं
अन्नप्रभेदेन सुसंस्थितोऽहम् ।
नदीप्रभेदेन सुसंस्थितोऽहं
[4]नदप्रभेदेन सुसंस्थितोऽहम् ॥ ४६ ॥

---

[1] एतयोः पङ्क्त्योः स्थाने 'ग' मातृकायां पुण्यप्रभेदेन सुसंस्थितोऽहं पापप्रभेदेन सुसंस्थितोऽहमिति पङ्क्तिद्वयं दृश्यते । [2] सूतसंहितायां ब्रह्मप्रभेदेनेति । [3] नदश्च

समुद्रभेदेन सुसंस्थितोऽहं
तटाकभेदेन सुसंस्थितोऽहम् ।
अभ्रप्रभेदेन सुसंस्थितोऽहं
नक्षत्ररूपेण सुसंस्थितोऽहम् ॥ ४७ ॥

यक्षप्रभेदेन सुसंस्थितोऽहं
रक्षः प्रभेदेन सुसंस्थितोऽहम् ।
गन्धर्वभेदेन सुसंस्थितोऽहं
सिद्धप्रभेदेन सुसंस्थितोऽहम् ॥ ४८ ॥

ग्रहप्रभेदेन सुसंस्थितोऽहं
विद्युत्प्रभेदेन सुसंस्थितोऽहम् ।
देहप्रभेदेन सुसंस्थितोऽहं
देहिप्रभेदेन सुसंस्थितोऽहम् ॥ ४९ ॥

ग्रामप्रभेदेन सुसंस्थितोऽहं
गृहप्रभेदेन सुसंस्थितोऽहम् ।
अण्डप्रभेदेन सुसंस्थितोऽहं
लोकप्रभेदेन सुसंस्थितोऽहम् ॥ ५० ॥

वपुः प्रभेदेन सुसंस्थितोऽहं
कूटप्रभेदेन सुसंस्थितोऽहम् ।
प्राकारभेदेन सुसंस्थितोऽहं
प्रासादभेदेन सुसंस्थितोऽहम् ॥ ५१ ॥

चित्तप्रभेदेन सुसंस्थितोऽहं
बुद्धिप्रभेदेन सुसंस्थितोऽहम् ।
श्रोत्रप्रभेदेन सुसंस्थितोऽहं
पादादिभेदेन सुसंस्थितोऽहम् ॥ ५२ ॥

तुष्टिप्रभेदेन सुसंस्थितोऽहं
अहंप्रभेदेन सुसंस्थितोऽहम् ।
चित्तप्रभेदेन सुसंस्थितोऽहं
सङ्घातभेदेन सुसंस्थितोऽहम् ॥ ५३ ॥

जन्मादिभेदेन सुसंस्थितोऽहं
जाग्रत्प्रभेदेन सुसंस्थितोऽहम् ।
स्वप्नप्रभेदेन सुसंस्थितोऽहं
सुषुप्तिभेदेन सुसंस्थितोऽहम् ॥ ५४ ॥

तुरीयभेदेन सुसंस्थितोऽहं
दृश्यप्रभेदेन सुसंस्थितोऽहम् ।
द्रष्टृप्रभेदेन सुसंस्थितोऽहं
साक्षिप्रभेदेन सुसंस्थितोऽहम् ॥ ५५ ॥

नाना प्रभेदेन सुसंस्थितोऽहं
सर्वप्रभेदेन सुसंस्थितोऽहम् । ॥ ५६ ॥

अस्ति नास्ति वचनेन भाषितं
भाति शब्दपरिभाषितं तथा ।
[1]नामहीनपरिभाषितं च मे
मौनमेव न हि संशयः क्वचित् ॥ ५७ ॥

[2]संख्यानं परमाणूनां कालेन क्रियते मया ।
न तथापि विभूतीनां [3]सृजतोऽण्डानि कोटिशः ॥ ५८ ॥

---

[1] भानहीनपरिभाषितमिति सूतसंहिता पाठ एव योग्य इति भाति ।

---

[2] संख्यानां (क) [3] ना सृज्यन्चेऽपि (क)

आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्तिनः ।
तेषां पतिरहं देवः स्मृतः पशुपतिर्बुधैः ॥ ५९ ॥
मायापाशेन बध्नामि पशूनेतान्सलीलया[1] ।
मामेव मोचकं प्राहुः पशूनां वेदवादिनः ॥ ६० ॥
ततस्सर्वं परित्यज्य मनसो [2]मलकारणम् ।
यथा[3]भावेन रूपेण शिवं [4]पश्येत्सुनिश्चलः ॥ ६१ ॥
क्रिमिकीटपतङ्गेभ्यः पशवः प्रज्ञयाधिकाः ।
पश्वादिभ्यो नराः प्रोक्तास्तेषु केचन कोविदाः ॥ ६२ ॥
अन्ये च तारतम्येन पण्डिता उत्तरोत्तरम् ।
यूयं सत्त्वोत्कटाः प्राज्ञाः सर्वेषामपि [5]संमताः ॥ ६३ ॥
युष्मद्ब्रह्मा [6]महाप्राज्ञस्तस्मात्प्राज्ञो जनार्दनः ।
जनार्दनादपि प्राज्ञः शङ्करो गुरुमूर्तिषु ॥ ६४ ॥
ततः प्राज्ञतमस्साक्षाच्छिवस्साम्बस्सनातनः ।
स एव साक्षाद्धर्मज्ञः ततोऽन्यो नास्ति कश्चन । ॥ ६५ ॥
तस्माद्भ्रांतिमिमां त्यक्त्वा ब्रह्म सर्वं विलोकयेत् ।
आयासस्तावदत्यल्पः फलं मुक्तिरिहैव तु ।
तथापि परमाद्वैतं नैव वाञ्छन्ति मानवाः ॥ ६६ ॥
कदाचिदपि चित्तस्य भयं किञ्चिन्न विद्यते ।
[7]तथापि परमाद्वैतं नैव वाञ्छन्ति मानवाः ॥ ६७ ॥

---

[1] स्वलीलयेति युक्तो भाति । [7] अनयोः पङ्क्त्योः स्थाने 'ग' मातृकायां 'चतुर्मुखोऽपि चाद्वैतं बभाषे स्वागमेषु च' । इति वर्तते ।

---

[2] मत (क ख घ) [3] भूतेन (ग) [4] पश्य सु (क ख घ) [5] सत्तमाः (ग)
[6] धिभावज्ञ (ग)

नारायणोऽपि चाद्वैतं बभाषेष्वागमेषु च ।
तथापि परमाद्वैतं नैव वाञ्छन्ति मानवाः ॥ ६८ ॥

अहं चावोचमद्वैतं मदुक्तेष्वागमेषु च ।
तथापि परमाद्वैतं नैव वाञ्छन्ति मानवाः ॥ ६९ ॥

अन्ये च योगिनस्सर्वे प्राहुरद्वैतमात्मनः ।
तथापि परमाद्वैतं नैव वाञ्छन्ति मानवाः ॥ ७० ॥

द्वैतमेव हि सर्वत्र प्रवदन्ति च केचन ।
न ते मनुष्याः कीटाश्च पतङ्गाश्च मृगा हि ते ॥ ७१ ॥

[1]सविशेषेण सर्वं तु यः पश्यति महेश्वरम् ।
स एव साक्षाद्विज्ञानी स शिवस्स तु दुर्लभः ॥ ७२ ॥

[2]वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ ७३ ॥

ये[3] यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
ज्ञानयोगेन मां तस्माद्यजेत परमेश्वरम् ॥ ७४ ॥

तदेतत्परमं व्यक्तं तद्विष्णोः परमं पदम् ।
[4]यच्च सर्वमिदं प्रोतमेतच्चैवाखिलं जगत् ।
तदेवेदं जगत्कृत्स्नं तद्विज्ञाय विमुच्यते ॥ ७५ ॥

---

[2] कूर्मपुराणे ईश्वरगीतायां पशुपाशविमोक्षप्रकरणे श्लोकावेतौ दृश्येते ।
[4] तत्र सर्वमिदं प्रोतमोतं चैवाखिलं जगत् इति कूर्मपुराणपाठस्समीचीनइति भाति ।

---

[1] सर्वंशेषेण (क) [3] ये मथा (ख ग घ)

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ॥ ७६ ॥

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं [1]तमसः परस्तात् ।
त विज्ञाय परिमुह्येन्न विद्वान्नित्यानन्दी भवति ब्रह्म[2]रूपः ॥७७॥

यस्मात्परं नापरमस्ति किञ्चिद्
यज्ज्योतिषां ज्योतिषिकं दिविस्थम् ।
तदेवमात्मानं मन्यमानोऽथ विद्वा-
न्नात्मानन्दी भवति ब्रह्मभूतः ॥ ७८ ॥

तद्विज्ञाने(न) परिपश्यन्ति धीराः
विभ्राजमानं विमलं व्योमधाम ।
ततस्ततः परिपश्यन्ति धीरा
आत्मन्यात्मानमनु[3]भूयानुभूय ॥ ॥ ७९ ॥

सर्वाननशिरोग्रीवसर्वभूतगुहाशयः ।
सर्वव्यापी स भगवान् तस्मादन्यन्न विद्यते ॥ ८० ॥

इत्येतदैश्वरं ज्ञानमुक्तं वो मुनिपुङ्गवाः ।
गोपनीयं विशेषेण योगिनामपि दुर्लभम् ॥ ८१ ॥

न च विद्या न चाविद्या न[4] जगच्च न चापरम् ।
ब्रह्मैव केवलं शुद्धं विद्यते तत्त्वदर्शिने ॥ ८२ ॥

अतः परमनिर्वाणनिष्ठस्य परयोगिनः ।
यथा यथावभासोऽयं शिव एव न चापरे ॥ ८३ ॥

---

[3] 'य साक्षात्' इति कू.पु. पाठः ।

---

[1] तपसः (ख) [2] भूतः (क) [4] जगन्न चराचरम् (ग)

[1]अथाहमेव वेदानामर्थस्सर्वज्ञ ईश्वरः ।
तथैव कथितोऽस्माभिः सत्यमेव न संशयः ।
इतः परं न वक्तव्यं विद्यते मुनिपुङ्गवाः ॥ ८४ ॥

इति श्रीमत्पुराणसारे विभूतिकथनं नाम
द्व्यशीतितमोऽध्यायः

---

[1] यथार्थं (ग)

## ऽयशीतितमोऽध्यायः

[ शिवविश्वरूपवर्णनम् ]

### शिवदर्शनम्

[1]एतावदुक्त्वा भगवान्योगिनां परमेश्वरः ।
ननर्त परमं [2]नित्यमैश्वरं सम्प्रदर्शयन् ॥ १ ॥

तं ते ददृशुरीशानं तेजसां परमं निधिम् ।
नृत्यमानं महादेवं विष्णुना [3]गगनेऽमले ॥ २ ॥

[4]यं विदुर्योगतत्त्वज्ञा योगिनो यतमानसाः ।
तमीशं सर्वभूतानामाकाशे ददृशुः किल ॥ ३ ॥

यस्य मायामयं सर्वं येनेदं प्रेर्यते जगत् ।
नृत्यमानस्स्वयं विप्रैः विश्वेशः खलु दृश्यते ॥ ४ ॥

यत्पादपङ्कजं स्मृत्वा पुरुषोऽ[5]ज्ञानजं भयम् ।
जहाति नृत्यमानं तं भूतेशं ददृशुः किल ॥ ५ ॥

[6]यं विनिद्राजितश्वासाः शान्ता भक्तिसमन्विताः ।
ज्योतिर्मयं प्रपश्यन्ति स योगी दृश्यते किल ॥ ६ ॥

---

कूर्मपुराणोत्तरार्धस्य पञ्चमाध्यायतः एकादशाध्यायपर्यन्तं संगृहीत इव दृश्यते। अत्रत्यो भागः । [2] भावमिति कूर्मपुराणपाठः युक्तः । [4] एतदारभ्य सूर्यस्येव मरीचयः इत्यन्तो भागः 'ग' मातृकायां लुप्तः ।

[6] केचिन्निद्राजितश्वासा इति कूर्मपुराणम् ।

---

[3] गमने मले (क) [5] ज्ञानसम्भवम् ( )

[1]योऽज्ञानान्मोचयेत्क्षिप्रं प्रसन्नो भक्तवत्सलः ।
[2]तमेव मोचकं रुद्रमाकाशे ददृशुः [3]परे ॥ ७ ॥
सहस्रशिरसं देवं सहस्रचरणाकृतिम् ।
सहस्रबाहुं जटिलं चन्द्रार्धकृतशेखरम् ॥ ८ ॥
वसानं चर्म वैयाघ्रं शूलासक्तमहाकरम् ।
दण्डपाणिं त्रयीनेत्रं सूर्यसोमाग्निलोचनम् ॥ ९ ॥
ब्रह्माण्डं तेजसा स्वेन सर्वमावृत्य [4]तिष्ठति ।
दंष्ट्राकरालदुर्धर्षं सूर्यकोटिसमप्रभम् ॥ १० ॥
सृजन्तमनलज्वालं[5] दहन्तमखिलं जगत् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ ११ ॥
दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ १२ ॥
नृत्यन्तं ददृशुर्देवं विश्वकर्माणमीश्वरम् ।
महायोगं महादेवं देवानामपि देवतम् ॥ १३ ॥
पशूनां पतिमीशानं [6]ज्योतिषां ज्योतिरव्ययम् ।
पिनाकिनं विशालाक्षं भेषजं भवरोगिणाम् ॥ १४ ॥
कालात्मानं [7]कलात्मानं कालकालं महेश्वरम् ।
उमापतिं विरूपाक्षं [8]योगानन्दं परं पशुम् ॥ १५ ॥

---

[1] योऽज्ञानान्मुच्यते विप्रम् ........ मुच्यते क्षिप्रमित्यपि मातृकापाठः न युज्यतेऽत्र । योऽज्ञानान्मोचयेत्क्षिप्रमिति कू.पु.पाठस्समीचीनः । उपरिदत्तः कूर्मपुराणपाठः । [2] 'तमेवम्' इति कूपु. पाठः । [3] 'परम्' इति कू.पु. पाठः । [4] विष्ठितम् इति कू.पु. पाठः । [5] ज्वाला इति युक्तं स्यात् । [7] कालकालम् इति कू.पु.पाठः । [8] योगानन्दमयंपदम् इति कू.पु.पाठः ।
[6] 'आनन्दम्' इति कू.पु. पाठः ।

ज्ञानवैराग्यनिलयं ज्ञानयोगं सनातनम् ।
शाश्वतैश्वर्यविभवं धर्माधारं दुरासदम् ॥ १६ ॥

महेन्द्रोपेन्द्रनमितं महर्षिगणसेवितम् ।
आधेयं सर्वशक्तीनां महायोगीश्वरेश्वरम् ॥ १७ ॥

योगानां परमं ब्रह्म योगिनां योगदायिनम् ।
योगिनां हृदि तिष्ठन्तं योगमायासमावृतम् ॥ १८ ॥

[1]ततो नु जगतां योनिं नारायणमनामयम् ।
[2]ऐश्वरेणैक्यमापन्नमपश्यन् ब्रह्मवादिनः ॥ १९ ॥

## परमेश्वरस्य विश्वरूपदर्शनम्

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यन्देवदेवस्य शरीरे मुनिसत्तमाः ॥ २० ॥

तस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् ।
लोकपाला भुजेष्वासन्नग्निरस्यामजायत ॥ २१ ॥

आदित्याश्चैव साध्याश्च वसवोऽथाखिला अपि ।
मरुतश्च सहेन्द्रेण विश्वेदेवास्तथैव च ॥ २२ ॥

बभूवुश्चैव यज्ञाश्च गन्धर्वोरगराक्षसाः ।
नेत्राभ्यां नासिकाभ्यां च श्रोत्राभ्यां च सहस्रशः ॥ २३ ॥

प्रादुरासन्महारौद्राः सधूमाः पावकार्चिषः ।
रोमकूपेषु च तथा सूर्यस्येव मरीचयः ॥ २४ ॥

दृष्ट्वा तदैश्वरं रूपं रुद्रनारायणात्मकम् ।
कृतार्थं मेनिरे सन्तः स्वात्मानं ब्रह्मवादिनः ॥ २५ ॥

---

[1] क्षणेन इति कू.पु. । [2] ईश्वरेणैक्यमापन्नम् इति कू.पु.पाठः ।

## ब्रह्मादिकृता परमेश्वरस्तुतिः

दृष्ट्वा तु रुद्रं जगदीशितारं
तं पद्मनाभाश्रितवामभागम् ।
समस्तुव[1]न्ब्रह्ममयैर्वचोभिः
आनन्दपूर्णाहितलोचनास्ते ॥ २६ ॥

त्वामेवमीशं पुरुषं पुराणं
प्राणेश्वरं रुद्रमनन्तरूपम् ।
नमाम सर्वे हृदि सन्निविष्टं
प्रचेतसं ब्रह्ममयं [2]विचित्रम् ॥ २७ ॥

[3]त्वां पश्यन्ते मुनयो ब्रह्मयोनिं
दान्ताश्शान्ता हृदये रुक्मवर्णम् ।
ध्यात्वाऽऽ[4]त्मस्थममरं स्वे शरीरे
कविं परेभ्यः परमं तत्परं च ॥ २८ ॥

त्वत्तः प्रसूता जगतः प्रसूतिः
सर्वात्मभूस्त्वं [5]परमात्मभूतः ।
अणोरणीयान्महतो महीयान्
त्वामेव सर्वं प्रवदन्ति सन्तः ॥ २९ ॥

हिरण्यगर्भो जगदन्तरात्मा
त्वत्तो हि जातः पुरुषः पुराणः ।

---

[1] ब्रह्म वेदः तन्मयानि वचांसि वैदिकमन्त्रा स्तोत्राणि वा । [2] पवित्रमिति कू.पु. पाठः । [3] पश्यन्ति त्वाम् इति कू.पु. पाठः । [4] त्मस्वप्रचलम् इति कू.पु. पाठः । मातृकासु आत्मस्थामिति दृश्यमानः अपपाठः स्यात् । आत्मस्थमिति युक्तम् । [5] परमाणुभूतः इति इति कू.पु. पाठः ।

[1]अजायमानो [2]भगवान्विसृष्टो
यथाविधानं सकलं [3]ससर्ज ॥ ३० ॥
त्वत्तो वेदास्सकलास्सम्प्रसूताः
त्वय्येवान्ते संस्थितिं ते लभन्ते ।
पश्यामस्त्वां जगतो हेतुभूतं
नृत्यन्तं स्वे हृदये सन्निविष्टम् ॥ ३१ ॥
[4]ब्रह्मैवेदं भ्राम्यते ब्रह्मचक्रं
[5]मायावी त्वं जगतामेकनाथः ।
नमाम त्वां शरणं सम्प्रपन्नाः
[6]संवित्पतिं दिव्यतत्त्वे प्रवृत्तम् ॥ ३२ ॥
पश्यमस्त्वां परमाकाशमध्ये
नृत्यन्तं ते महिमानं स्मरामः ।
सर्वात्मानं बहुधा सन्निविष्टं
ब्रह्मानन्दमनुभूयानुभूय ॥ ३३ ॥
[7]ओङ्कारस्त्वं वाचको मुक्तिबीजे
त्वमक्षरं [8]प्रकृतेर्गूढरूपः ।
तत्त्वां सत्यं प्रवदन्तीह सन्तः
स्वयंप्रभं भवतो यत्स्वरूपम् ॥ ३४ ॥

---

[1] 'सञ्जाय' तति कू.पु. पाठः । [2] भवता निसृष्टो इति कू.पु. पाठः ।
[3] स सद्यः इति कू.पु. पाठः । [4] त्वयैवेदं इति कू.पु. पाटः ।
[6] एतत्पङ्क्तिस्थाने कूर्मपुराणे 'योगात्मानं नृत्यन्तं दिव्यनृत्यम्' इति पाठः ।
[8] प्रकृतौ गूढरूपम् इति कू.पु. पाठः । [9] भव्योम्नः स्वरूप इति 'क' मातृकायां भव्यो यत्स्वरूपमिति 'ग' मातृकायां दृश्यमानः पाठः नार्थं

---

[5] मायोपेतं ज्ञानमोहाकराणाम् (ग) [7] ओङ्कारस्त्वां वाच्यते (क)

स्तुवन्ति त्वां सर्वतः सर्ववेदाः
नमन्ति त्वां सर्वतः क्षीणदोषाः ।
[1]शान्तात्मानः सत्यसन्धं वरिष्ठं
विशन्ति त्वां यतयो ब्रह्मनिष्ठाः ॥ ३५ ॥

एको वेदो बहुशाखो ह्यनन्तः
त्वामेवैकं बोधयत्येकरूपम् ।
[2]वेद्यं त्वां ये शरणं सम्प्रपन्नाः
तेषां मुक्तिः शाश्वती नेतरेषाम् ॥ ३६ ॥

भवानीशोऽनादिमांस्तेजराशिः
ब्रह्मा विष्णुः परमेष्ठी वरिष्ठः[3] ।
आत्मानन्दमनुभूयाविशन्ते
स्वयंज्योति[4]रचला नित्यमुक्ताः ॥ ३७ ॥

एको रुद्रस्त्वं करोषीह [5]नित्य
स्त्वं पालयिष्यस्यखिलं विश्वरूप ।
त्वामेव चान्ते निलयं वदन्ति
नमामस्त्वां शरणं सम्प्रपन्नाः ॥ ३८ ॥

त्वामेकमाहुः कविमेकरुद्रं
[6]प्राणं वहन्तं [7]हरिमग्निमीशम् ।

---

स्फुटयति । अतः भवति इति कूर्मपुराणपाठं सत्स्वरूपमिति 'ग' मातृकपाठं च स्वीकृत्य उपरि पाठ्यं कल्पितम् । [2] वन्द्यमिति कू.पु.पाठः । [3] वरिष्ठः—वरतमः, श्रेष्ठः । अयमेषामितिशयेन वरः अतिशायने इष्ठन् प्रियस्थिरेति वरेष्ठः । [4] विश्वमिति कू.पु.पाठः [5] ब्रह्म गृणन्तं इति कू.पु.पाठः ।

---

[1] शान्तात्मानं (क) [4] रवधो (क) [6] हर (ग)

[1]इन्द्रं मृत्युमनिलं [2]चेकितानं
धातारमादित्य[3]मनेक[4]रूपम् ॥ ३९ ॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषोत्तमोऽसि ॥ ४० ॥

त्वमेव विष्णुश्चतुराननस्त्वं
त्वमेव रुद्रो भगवानपीशः ।
त्वं विश्वनाभिः[5] प्रकृतिः प्रतिष्ठा
सर्वेश्वरस्त्वं परमेश्वरोऽसि ॥ ४१ ॥

त्वामेकमाहुः पुरुषं पुराणम्
आदित्यवर्णं तमसः परस्तात् ।
[6]चिन्मात्रमव्यक्त[7]मचिन्त्यरूपं
[8]त्वं ब्रह्म शून्यं प्रकृतिर्गुणाश्च ॥ ४२ ॥

यदन्तरा सर्वमिदं विभाति
यदव्ययं निर्मलमेकरूपम् ।
किमप्यचिन्त्यं तव रूपमेतत्
तदन्तरा यत्प्रतिभाति तत्त्वम् ॥ ४३ ॥

---

[1] रुद्रं नित्यम् इति कू.पु.पाठः । [2] चेकितानः–द्रष्टा । [4] मचिन्त्यरूपमिति कू.पु.पाठः । [6] चिन्मात्रः चित्संज्ञाने, ज्ञानं ज्ञानमात्रः । [7] अनन्तरूप इति कू.पु.पाठः । [8] त्वम् इति कू.पु.पाठः ।

---

[3] अनेक (ग) [5] विश्वनाथः (ग)

योगेश्वरं रुद्र[1]मनन्तशक्तिं
    [2]परायणं ब्रह्मतनुं पुराणम् ।
नमाम सर्वे शरणार्थिनस्त्वां
    प्रसीद भूतेशपते महेश ॥ ४४ ॥

त्वत्पादपद्मस्मरणादशेष-
    संसारबीजं प्रलयं प्रयाति ।
मनो नियम्य प्रणिधाय कायं
    [3]प्रसादयामो वयमेकमीशम् ॥ ४५ ॥

पश्याम देवांस्तव देव देहे
    सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थ-
    मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ ४६ ॥

अनेकबाहूदरवक्त्रनेत्रं
    पश्यामस्त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
    पश्याम विश्वेश्वर विश्वरूप ।
पश्यामस्त्वां दुर्निरीक्ष्यं समन्तान्
    दीप्तानलार्कद्युतिमप्रमेयम् ॥ ४७ ॥

---

[1] भद्र कू.पु.पाठः । [2] परं अयनं मार्गः । गम्येषु प्राप्तव्येषु श्रेष्ठम् ।
[4] वहुवचनक्रियापदव्यत्ययेनायं भागः ६४ श्लोकपर्यन्तं भगवद्गीताया एवोद्धृतः । भ.गी. अ.११ । पश्याम इत्यत्र मातृकास्त्वेकवचनं दृश्यते । तन्न सङ्गच्छते ।

---

[3] मीड्यम् (ग)

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो (नः)[1] ॥ ४८ ॥

अनादिमध्यान्तमनन्तवीर्यम्
अनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामस्त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ ४९ ॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ ५० ॥

अमी हि त्वां सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ ५१ ॥

रुद्रादित्या वसवो ये च साध्याः
[2]विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।

---

[1] 'नः' इति स्थाने 'म' इति गीतायाम् । [2] विश्वेदेवाः धर्मर्षेः विश्वायां जाताः दश पुत्राः । क्रतुर्दक्षो वसुस्सत्यः कालः कामस्तथैव च । धुनिश्च रोचनश्चैव तथा चैव पुरूरवाः । अर्द्रवाश्च दशैते तु विश्वेदेवाः प्रकीर्तिताः द्युस्थानीयदेवताद्वयम् । अश्विनीकुमाराविति द्विवचनसम्बोध्यौ अश्विनौ । मरुतो देवतासङ्घः । एकविंशतिसंख्याः । पृश्नयाः रुद्रस्य च पुत्राः । उष्मपाश्च उष्णान्नभोजितो देवाः । एषां बहुवचनान्त एव प्रयोगः ।

गन्धर्वयक्षासुरसिद्धसङ्घाः
वीक्ष्यन्ते त्वां विस्मिताश्चैव सर्वे ॥ ५२ ॥

लेलिह्यसे ग्रसमानस्समन्ता-
ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णोः ॥ ५३ ॥

नमो भवायाद्य भवोद्भवाय
कालाय सर्वाय नमोऽस्तु तुभ्यम् ।
नमोऽस्तु रुद्राय कपर्दिने ते
नमो नमो देव नमश्शिवाय ॥ ५४ ॥

संहरस्व पुनर्देव रूपमक्षयमच्युतम् ।
पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छाम शाश्वतम् ॥ ५५ ॥

ततस्स भगवानीशः[1] कपर्दी[2] वृषवाहनः ।
संहृत्य परमं रूपं प्रकृतिस्थो महेश्वरः[3] ॥ ५६ ॥

ते भवं भूतभव्येशं पूर्ववत्समुपस्थितम् ।
दृष्ट्वा नारायणं देवं विस्मिता वाक्यमब्रुवन् ॥ ५७ ॥

भवत्प्रसादादमले परस्मिन्परमेश्वरे ।
अस्माकं जायते भक्तिस्त्वय्येवाव्यभिचारिणी ॥ ५८ ॥

भगवन्भूतभव्येश गोवृषाङ्कितशासन ।
दृष्ट्वा ते परमं रूपं निर्वृताः परमेश्वर ॥ ५९ ॥

---

[1] प्रीति इति कू.पु.पाठः । [2] कपर्द इति जटासमूहः । तद्वान् ।
[3] ऽभवद्भव इति कू.पु.पाठः ।

स तेषां वाक्यमाकर्ण्य योगिनां योगसिद्धिदः ।
प्राह गम्भीरया वाचा समालोक्य च माधवम् ॥ ६० ॥

### परमेश्वरोपदिष्टं वास्तविकं स्वरूपम्

ईश्वरः —

एवं जानीत हे विप्रा ये भक्ता द्रष्टुमागताः ।
एतदेव परं वस्तु नैतस्मात्परमस्ति वै[1] ॥ ६१ ॥

एतदेव विजानीध्वं एतद्वः परमं तपः ।
एत द्वो[2] जन्मनः कृत्यमेतद्व[3]स्तपसो[4] बलम्[5] ॥ ६२ ॥

एष वः पुण्यनिचय एष धर्मस्सनातनः ।
एष वो मोक्षवशग एव मार्ग उदाहृतः ॥ ६३ ॥

एष पुण्यप्रदः साक्षादेष वः कर्मणां फलम् ।
एवमेव प्रशंसन्ति विद्वांसो ब्रह्मवादिनः ॥ ६४ ॥

एषा त्रयी गतिर्विप्रा प्रार्थ्या ब्रह्मविदा सदा ।
एवमेव प्रशंसन्ति साङ्ख्ययोगसमाश्रिताः ॥ ६५ ॥

एष ब्रह्मविदां मार्गः कथितो वेदवादिभिः ।
हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितः ॥ ६६ ॥

[6]अयं सर्वस्य कार्यस्य कर्ताहमधिदैवतम् ।
एतन्मयं मन्मयं च सर्वमेतन्न संशयः ॥ ६७ ॥

[7]अहं सोमस्त्वहं सूर्यः एष निद्रा त्वहं दिनम् ।

---

[5] 'एष वः' इति पाठस्वीकारे माधवः इति ज्ञेयम् । [6] अयं विष्णुः कर्ता सर्वस्येति । [7] अत्र हरिहरयोरैक्यात्म्यं प्रदर्शयति । द्वयोरपि, वस्तुष्वनेकेषु कार्येषु बहुषु तादात्म्यमस्तीति ।

---

[1] वः (क ख ग) [2] एष वः (क) [3] एष वः (क) [4] फलम् (ग)

अहं ज्ञानमहं ज्ञाता अहं मायाहऽमीश्वरः ।
एवमेव विजानीत नात्र कार्या विचारणा ॥ ६८ ॥

अयं नारायणो योऽयमीश्वरो नात्र संशयः ।
नान्तरं ये प्रपश्यन्ति तेषां देयमिदं परम् ॥ ६९ ॥

ममैषा परमा मूर्तिर्नारायणसमाह्वया ।
सर्वभूतात्मभूतस्था शान्ता चाक्षरसंज्ञिता ॥ ७० ॥

ये त्वन्यथा प्रपश्यन्ति लोकभेददृशो जनाः ।
न ते वै मां प्रपश्यन्ति जायन्ते च पुनः पुनः[2] ॥ ७१ ॥

ये त्विमं विष्णुमव्यक्तं वामदेवं महेश्वरम्[1] ।
एकीभावेन पश्यन्ति न तेषां [3]पुनरुद्भवः ॥ ७२ ॥

तस्मादनादिनिधनं विष्णुमात्मानमव्ययम् ।
मामेव सम्प्रपश्यध्वं पूजयध्वं तथैव हि ॥ ७३ ॥

ये त्वन्यथा प्रपश्यन्ति मत्वेमं देवता[4]न्तरम् ।
ते यान्ति नरकान्घोरान्नाहं तेषु व्यवस्थितः[5] ॥ ७४ ॥

मूर्खं वा पण्डितं वापि ब्राह्मणं वा मदाश्रयम् ।
मोचयामि श्वपाकं वा न नारायणनिन्दकम् ॥ ७५ ॥

तस्मादेष महायोगी सद्भक्तैः[6] पुरुषोत्तम ।
अर्चनीयो नमस्कार्यो मत्प्रीतिजननाय हि ॥ ७६ ॥

---

[2] तेषां सामीप्यादिमुक्तिर्नास्ति । पुनस्संसारावतरणमेवेत्यर्थः ।

[5] सर्वस्य चाहं हृदि सन्निविष्ट इत्युक्तेरनुसारं आत्मानं विहाय देवतान्तर-भजकस्य हृदि परमात्मनः सत्त्वं न व्यवस्थितम् ।

---

[1] महेश्वरः (क) [4] विद्यते भवः (ग) [5] नरम् (क) [6] मद्भक्तः (क)

एवमुक्त्वा [1]महादेवः समालिङ्ग्य पृथक् पृथक् ।
अन्तर्हितो भवत्येषां[2] सर्वेषामेव पश्यताम् ॥ ७७ ॥

नारायणोऽपि भगवान् त्यक्त्वा च परमं वपुः ।
नरेण सह जग्राह तापसं रूपमुत्तमम् ॥ ७८ ॥

प्राह गम्भीरया वाचा समालोक्य मुनीश्वरम् ।
लब्धं भवद्भिरमलं प्रसादात्परमेष्ठिनः ।
साक्षादेव महेशस्य ज्ञानं संसारनाशनम् ॥ ७९ ॥

## हरिहरयोरभेदताप्रतिपादनम्

अहं चैव महादेवो नं भिन्नौ परमार्थतः ।
विभज्य स्वेच्छयाऽऽत्मानमन्तर्यामीश्वरः स्थितः ॥ ८० ॥

त्रैलोक्यमखिलं स्रष्टुं सदेवासुरमानुषम् ।
पुरुषः परमोऽव्यक्तो ब्रह्मत्वं समुपागमत् ॥ ८१ ॥

तस्माद्ब्रह्मा महादेवो विष्णुर्विश्वेश्वरः प्रभुः ।
एकस्यैव वशास्तिस्रस्तन्वः कार्यवशात्प्रभो ॥ ८२ ॥

तस्मात्सर्वप्रयत्नेन वन्द्याः पूजाविशेषतः ।
गच्छध्वं विज्वरास्सर्वे [4]विज्ञानं परमेष्ठिनः ॥ ८३ ॥

प्रवर्तयध्वं शिष्येभ्यो धार्मिकेभ्यो मुनीश्वराः ।
इदं भक्ताय शान्ताय धार्मिकायाहिताग्नये ।
विज्ञानमैश्वरं देयं ब्राह्मणाय विशेषतः ॥ ८४ ॥

---

[1] 'वासुदेवमालिङ्ग्य स पिनाकधृक्' इति कू.पु.पाठः अत्र साधुरिति भावयामि मातृकागतः महादेवः समालिङ्ग्येति न वाञ्छितार्थं प्रयच्छति ।

[2] ऽभवच्चैषाम् इति पाठविपरिवर्तनं साध्वत्र ।

---

[3] वंशाः (ग) [4] विहानं (क ख)

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ८५ ॥

एवमुक्त्वा स विश्वात्मा योगिनां योगवित्तमाः ।
नारायणो महायोगी [1]जगाम भवनं स्वकम् ॥ ८६ ॥

तेऽपि देवादिदेवेशं नमस्कृत्य महेश्वरम् ।
नारायणं च भूतादिं स्वानि स्थानानि भेजिरे ॥ ८७ ॥

ईश्वरः परया युक्तः कृपया पुरुषोत्तमः ।
अवोचन्मोचकं [2]दिव्यं हितायाखिलदेहिनाम् ॥ ८८ ॥

विष्णुर्विश्वजगत्कर्ता स्वयम्भूश्च महेश्वरात् ।
प्राप्तवान्परमं गुह्यं ज्ञानं संसारमोचकम् ॥ ८९ ॥

सरस्वत्यै तथा देवः प्रोक्तवानिदमुत्तमम् ।
उक्तं मयापि च प्रोक्तं [3]मैत्रेयायोद्धवाय[4] च ॥ ९० ॥

पितामहोऽपि देवेभ्यः प्रोक्तवानिदमुत्तमम् ।
[5]सनत्कुमारो भगवान् [6]संवर्ताय महामुनिः ।

---

[1] जगामादर्शनं स्वयम् इति कू.पु.पाठः । [2] मैत्रेयः दिवोदासपुत्रस्य मित्रेयुनाम्नः पुत्रः । मित्रेयुः ब्राह्मणः मैत्रेयस्य ब्रह्मक्षत्रियः । आयत्यामसौ भृगुवंशं स्वीचकार । (वायु.. २.३६ ब्र.पु. १३ मत्स्यपु. ५०)

[4] यदुवंशजस्य देवभागस्य पुत्रः । अस्य माता कंसा । बृहस्पतेः सकाशे असौ नीतिशास्त्राध्ययनं कृतवान् । श्रीकृष्णस्य परमसखा (भागवतं ९.२४)

[5] सनत्कुमारः ब्राह्मणः चतुर्षु मानसपुत्रेष्वन्यतमः । (भाग ३-१२-४)

[6] स्वायम्भुमन्वन्तरे अङ्गिरः पुत्रः संवर्तः । स्मृतिकारस्त्वन्यः ।

---

[3] देव्यै (ख ग)

दत्तवानैश्वरं ज्ञानं सोऽपि [1]सत्यव्रताय तु ॥ ९१ ॥
[2]सनन्दनोऽपि योगीन्द्रः [3]पुलहाय महर्षये ।
प्रददौ [4]गौतमायाथ [5]पुलहोऽत्र प्रजापतिः ॥ ९२ ॥
[6]अङ्गिरा वेदविदुषो [7]भरद्वाजाय दत्तवान् ।
[8]जैगीषव्याय कपिलस्ततः[9] पञ्चशिखाय च ॥ ९३ ॥

---

1 श्राद्धदेव इति विख्यातः । मत्स्यावतारे मत्स्यकृपया ज्ञानमवाप्तवानिति कल्पान्तरकथा । 2 सनन्दनः ब्रह्मणः मानसपुत्रेष्वन्यतमः ।

2 पुलहः ब्रह्मणः मानसपुत्रः । ब्रह्मणो नाभ्याः उत्पन्नः व्यानवायोरुत्पन्न इत्यपि भागवते (भाग. ४.१.३८) अस्य पत्नी दक्षकन्या क्षमा । पुत्राश्चकर्दमः उर्वरीवान्, सहिष्णुः कनकपीठः तथा पुत्री पीवरीति । (ब्रह्मा.पु.२-१२)

3 दीर्घतमा तथा प्रद्वेस्याः पुत्राः । जन्मान्धः । (महा.भा. आदिपर्व १०४ ऋक्संहिता १-१४०) वैवस्वतमन्वन्तरे सप्तर्षिष्वन्यतमः । अहल्यापति (महा.भा. वनपर्व अ.१८५)

4 असौ पुलस्त्यः स्यात् । पुलहस्यैव द्विरुक्त्यसम्भवात् । 6 ब्रह्मणः मानसपुत्रः । आग्नेय इत्यपि नामान्तरमस्य । ऋग्वेदे ब्रह्ममत्स्य ब्रह्माण्डादिपुराणेषु अस्य विस्तृतः कथाभागोऽस्ति ।

5 अयं ममताबृहस्पत्योः पुत्रः । जन्मानन्तरं उभाभ्यामपि परित्यक्तः मरुद्देवैः संरक्षितः । (म.अनु. अ.१४२)

6 जैगीषव्यः असौ ऋषिः । अस्य पत्नी पर्णा हिमवत्कन्या एकपाटला । अथ वा योगवतीति हरिवंशे(ह.वं.१-१८) असितदेवलनामाऽस्य शिष्यः ।

7 कपिलायाः पुत्रोऽयम् । आसुरेः शिष्यः । पञ्चकोशात्मकस्य ज्ञाताऽयम् । कोशाव्यतिरिक्तस्य ब्रह्मणः शिखात्वेन ज्ञाताऽसौ पञ्चशिखनाम्ना प्रसिद्धः । ब्रह्मनिष्ठः चिरंजीवी च । महा.भा. शां.प. २१८)

पराशरोऽपि [1]भगवान् पिता मे सर्वतत्त्ववित् ।
लेभे तत्परमं ज्ञानं तस्माद्वाल्मीकिराप्तवान् ॥ ९४ ॥

समोवाच [2]पुरा देवः सतीदेहभवाङ्गजः ।
वामदेवो [3]महायोगी रुद्रः किल पिनाकधृक् ॥ ९५ ॥

यदहं लब्धवान् रुद्राद्वामदेवादनुत्तमम् ।
ऊचिवान्वै भवद्भ्यश्च [4]दातव्या धार्मिके जने ॥ ९६ ॥

प्रसादादेव रुद्रस्य प्रभोः कारुणिकस्य च ।
पुराणानां समस्तानामहं कर्ताऽभवं पुरा ॥ ९७ ॥

मत्प्रसादादयं सूतो रुद्रस्याज्ञाबलात्तदा ।
पुराणसंहितावक्ता देशिकश्चाभवद्भृशम् ॥ ९८ ॥

भवन्तोऽपि हि तं देवं [5]विष्णुं गोपतिवाहनम् ।
प्रपद्यध्वं सपत्नीकाः सपुत्राः शरणं ध्रुवम् ॥ ९९ ॥

शिवमस्तु मुनीन्द्राणां नाशिवं तु कदाचन ।
इत्येवमुक्त्वा भगवान्व्यासः सत्यवतीसुतः ।
समाश्वास्य मुनीन्सूतः जगाम च यथा[6]गतम् ॥ १०० ॥

सूतः —

य इदं पठते नित्यं संवादं कृत्तिवाससः ।
सनत्कुमारप्रमुखैः सर्वपापात्प्रमुच्यते ॥ १०१ ॥

---

[1] शक्तेः पुत्रः । अदृश्यन्ती अस्य माता ।
[4] दातव्या इयं पुराणसंहितेति भावः ।

---

[1] सनकात् (क) [2] पुरा देवः (क) [3] महादेवः (ग)
[5] शम्भुं गोपतिवाहनम् (क) .... .... गौवृषवाहनम् (क) [6] यथम् (ख ग)

श्रावयेद्वा द्विजान् शुद्धान्ब्रह्मचर्यपरायणान् ।
यो वा विचारयेदर्थं स याति परमां गतिम् ॥ १०२ ॥

यश्चैतच्छृणुयान्नित्यं भक्तियुक्तो दृढव्रतः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ १०३ ॥

तस्मात्सर्वप्रयत्नेन पठितव्यो मनीषिभिः ।
श्रोतव्यश्चाथ मन्तव्यो विशेषाद्ब्राह्मणैस्सह ॥ १०४ ॥

इति श्रीमत्पुराणसारे ईश्वरगीतासु विश्वरूपदर्शनं नाम
त्र्यशीतितमोऽध्यायः

# चतुरशीतितमोऽध्यायः
[ अनुक्रमणिका ]

## तत्र मुनीनां पुराणसंहितायाश्च प्रशंसनम्

सूतः —

सर्वाण्यपि पुराणानि कथितानि मया पुरा ।
युष्माकं मुनिशार्दूलाः सेतिहासानि कृत्स्नशः ॥ १ ॥

निर्द्वन्द्वा निरहङ्कारा निराशाबन्धना बुधाः ।
विमुक्तास्सर्वपापेभ्यो भवन्तश्शुचयोऽमलाः ॥ २ ॥

[1]अपवर्गे च संन्यासे बुद्धौ च कृतनिश्चयाः ।
यथागमं मुनिश्रेष्ठा विदितास्साधुसंमताः ॥ ३ ॥

तथापि मुनिशार्दूला लोकानां हितकाम्यया ।
पृष्टं भवद्भिस्तत्वार्थं समुद्दिश्य पुनर्द्विजाः ॥ ४ ॥

व्यासप्रसादाच्च मया यथावदभिभाषितम् ।
सर्वेषां च पुराणानां सारमुद्धृत्य यत्नतः ॥ ५ ॥

इदं पुराणमाख्यानं सूक्ष्मार्थप्रतिपादकम् ।
धर्मकामार्थमोक्षार्थं पुरुषार्थाभिधायकम् ॥ ६ ॥

[ अनुक्रमणिकारम्भः ]

पुराणस्यावतरणं प्रथमं [2]परिकीर्तितम् ।
पुराणानुक्रमश्चैव ग्रन्थसङ्ख्योपवर्णनम् ॥ ७ ॥

---

[1] अपवर्गः, फलप्राप्तिः, मोक्षः ।

---

[2] तत्र (क)

व्यासावतरणं चात्र पुराणार्थनिरूपणम् ।
नानापुराणसन्देह अद्वैतप्रतिपादनम् ॥ ८ ॥

ब्रह्माण्डस्य च संभूतिः सृष्टेरुन्मुखता तथा ।
तपश्चरणमाख्यातं देवदेवस्य धीमतः ॥ ९ ॥

दर्शनं तु महेशस्याप्यन्तर्धानं शिवस्य तु ।
प्रजापतीनां सर्गश्च सर्गः कौमारकस्तथा ॥ १० ॥

सर्गः प्राधानिकः पश्चात्प्राकृतो वैकृतस्तथा ।
विमोहो ब्रह्मणश्चाथ संज्ञालाभो हरेस्तथा ॥ ११ ॥

प्रादुर्भावो महेशस्य ललाटात्कथितः पुरा ।
रुद्राणां कथिता सृष्टिः ब्रह्मणः [1]प्रतिपादनम् ॥ १२ ॥

ब्रह्मविष्णोर्विवादश्च लिङ्गाविर्भाव एव च ।
मोहस्तयोश्च कथितो गमनं चोर्ध्वतो ह्यधः ॥ १३ ॥

[2]प्रणवस्य च, माहात्म्यं वेदशाखाप्रवर्तकम् ।
जातीनां निर्णयश्चैव सर्गो मैथुनसम्भवः ॥ १४ ॥

ब्रह्मणश्च दिवारात्रमायुर्वर्षशतं पुनः ।
दिव्यं तु मानुषं वर्षं रौद्रं वैष्णवमेव च ॥ १५ ॥

मन्वन्तराणां कथनं कालसङ्ख्यानिरूपणम् ।
चतुर्युगप्रमाणं च युगधर्मस्य विस्तरः ॥ १६ ॥

संध्यांशकप्रमाणश्च प्रतिसर्गस्तथैव च ।
कलिदोषस्य कथनं कलेस्साधुत्वमेव च ॥ १७ ॥

अरुन्धत्याश्च माहात्म्यं सम्भवो नारदस्य च ।
विशां च धर्मः कथितो जाजल्याख्यानमेव च ॥ १८ ॥

---

[1] प्रतिषेधनम् (ग) [2] पुराणस्यापि (ग)

ततश्च वंशः कथितो राज्ञां सोमार्कसम्भवः ।
राजप्रशंसा च ततो राजधर्मस्य विस्तरः ॥ १९ ॥

धर्मकौन्तेयसंवादो दुष्टशिक्षाफलं तथा ।
विप्रसम्माननफलं तच्छुश्रूषाफलं तथा ॥ २० ॥

विप्राणां धर्मकथनं क्रोधनिन्दा ततः परम् ।
धर्मश्चानुपनीतस्य धर्मो वै ब्रह्मचारिणाम् ॥ २१ ॥

गृहस्थाश्रमधर्मश्च अधिवेदनकारणम् ।
बहुभार्यस्य धर्मश्च पुत्रोत्पादनधर्मता ॥ २२ ॥

नित्यानुष्ठानकथनं सन्ध्योपासनमेव च ।
सावित्र्याश्चैव माहात्म्यं [1]होमो यज्ञनिरूपणम् ॥ २३ ॥

यज्ञप्रशंसा च ततो यज्ञप्रतिनिधिस्तथा ।
दानं च देवपूजा च पञ्चयज्ञविधिस्तथा ॥ २४ ॥

पञ्चयज्ञप्रभावश्चातिथिपूजाप्रशंसनम् ।
भोजनस्य विधिश्चैव [2]सायं सन्ध्या तथैव च ॥ २५ ॥

गर्भाधानविधिश्चैव [3]वृत्या पुत्रविशिष्टता ।
ऋत्वतिक्रमदोषश्च पितॄणां वैभवस्तथा ॥ २६ ॥

[4]श्राद्धकल्पश्च कथितो वानप्रस्थाश्रमस्तथा ।
संन्यासाश्रमधर्मश्च प्रायश्चित्तविधिस्तथा ॥ २७ ॥

कथितो म्लेच्छधर्मश्च चापद्धर्मस्ततः परम् ।
धर्मः साधारणश्चैव सत्यमाहात्म्यमेव च ॥ २८ ॥

---

[1] होमयज्ञ (ग) [2] सन्ध्योपासनमेव च (क) [3] पुत्रोत्पत्तिस्तथैव च (ग)
[4] श्राद्धकाल (क)

अधिकारिविभेदेन [1]देवताभेद एव च ।
मातापित्रोः प्रशंसा च शुश्रूषा च तयोस्तथा ॥ २९ ॥
मातृभक्तिप्रशंसा च माहात्म्यं भार्गवस्य च ।
गाङ्गेयस्य च माहात्म्यं समरे रामभीष्मयोः ॥ ३० ॥
भ्रातृभक्तिश्च कथिता गुरुलक्षणमेव च ।
गुरूणां भेदकथनं माहात्म्यं गुरुशिष्ययोः ॥ ३१ ॥
दीक्षाधिकारिणश्चैव दीक्षाभेदास्तथैव च ।
शिवभक्तेर्विधानं च हरनामप्रशंसनम् ।
श्वेतस्य मृत्योस्संवादः श्वेतार्थे कालनाशनम् ॥ ३२ ॥
विष्णुभक्तेश्च माहात्म्यं शक्तौ भक्तिस्तथैव च ।
दिवाकरे तथा भक्तिः भक्तिश्च गणनायके ॥ ३३ ॥
षडाननस्य माहात्म्यं शास्त्रप्रामाण्यमेव च ।
शीलप्रशंसा च ततः शीलवृत्त्या च वर्तनम् ॥ ३४ ॥
पतिव्रतायाश्चाख्यानं स्त्रीधर्मस्तदनन्तरम् ।
रजस्वलाया वृत्तिश्च सावित्र्याख्यानमुत्तमम् ॥ ३५ ॥
भर्त्रवज्ञानदोषश्च धर्मश्चाग्निप्रवेशने ।
भुवनस्य च विस्तारो द्वीपवर्षप्रकीर्तनम् ॥ ३६ ॥
पर्वतानां च कथनं नदीनां चैव निर्णयः ।
स्थानानि चैव देवानां श्वेतद्वीपोपवर्णनम् ॥ ३७ ॥
श्रैष्ठ्यं भारतवर्षस्य कथितं तदनन्तरम् ।
आयुर्वृद्धिक्षयकृते कर्मणां च निरूपणम् ॥ ३८ ॥

---

[1] श्लेषेण (ख)

पातालानां च कथनं ज्योतिश्चक्रनिरूपणम् ।
महर्लोकादिकथनमण्डावरणसप्तकम् ॥ ३९ ॥

पितापुत्रकसंवादः पिण्डोत्पत्तिनिरूपणम् ।
विष्णुमायाप्रकथनं देहिदुःखनिरूपणम् ॥ ४० ॥

संसारनिन्दाकथनमाशारूपनिरूपणम् ।
नरकस्य कथा मार्गोऽमृताप्यायनमेव च ॥ ४१ ॥

कृतान्तदर्शनं चैव प्रेतराजपुरं तथा ।
नरकाणां स्वरूपञ्च दण्डः कर्मानुसारतः ॥ ४२ ॥

सौम्यमार्गस्य कथनं सुखानुभव एव च ।
स्वर्गस्य च फलं पुण्यं स्वर्गनिन्दा ततः परम् ॥ ४३ ॥

स्वर्गिनारकिणां पुंसां चिह्नं जन्मान्तरेषु च ।
वासनाधीनजननं कर्मनिन्दा ततः परम् ॥ ४४ ॥

[1]मोक्षाकारो ज्ञानभेदो ज्ञानसाधनमेव च ।
अष्टाङ्गयोगश्च ततो योगमाहात्म्यमेव च ॥ ४५ ॥

मुक्तिभेदश्च कथितः संवादो विप्रलुब्धयोः ।
धर्मकामार्थमोक्षाणामन्येभ्यः श्रैष्ठ्यमेव च ॥ ४६ ॥

प्रपञ्चस्य तु मिथ्यात्वमाश्चर्यं च ततः परम् ।
अवतारस्तथा विष्णोश्शिवमन्त्रस्य गौरवम् ॥ ४७ ॥

कालज्ञानं ततः प्रोक्तं कालवञ्चनमेव च ।
पाराशर्यस्य गमनं नरनारायणेक्षणम् ॥ ४८ ॥

---

[1] मोक्षाधिकारो (ख)

गीताश्च विविधाः प्रोक्ता [1]ईश्वरेण प्रकीर्तिताः ।
उक्तमेकत्वमीशस्य विभूतिख्यापनं तथा ॥ ४९ ॥

तत्त्वरूपनिरूपञ्च एकात्मप्रतिपादनम् ।
विभूतिर्देवदेवस्य विश्वरूपं परात्मनः ॥ ५० ॥

शिवनारायणस्यैक्यं नर्तनं शङ्करस्य च ।
स्तुतिश्च देवदेवस्य वरदानोपदेशनम् ॥ ५१ ॥

अन्तर्धानञ्च रुद्रस्य तपश्चर्या [2]त्मकस्य च ।
मुनीनां गमनं चैव व्यासस्य च महात्मनः ॥ ५२ ॥

## पुराणसारस्य ग्राह्यत्वप्रतिपादनम्

एतद्वः कथितं विप्रा सर्ववेदार्थसंग्रहम् ।
कृष्णद्वैपायना[3]द्व्यासाज्ज्ञानं सर्वार्थसाधनम् ॥ ५३ ॥

अष्टादशपुराणेषु कथितो धर्मसंग्रहः ।
वेदवेदाङ्गसम्बन्धं [4]तत्सर्वमिह निर्मितम् ॥ ५४ ॥

लोकवेदविरुद्धं यत्कथ्यते मुनिसत्तमाः ।
न तत्राऽऽस्था [5]हि कर्तव्या विप्रलापो हि स स्मृतः ।
अतिस्नेहेन भवतो मया यत्सम्प्रकाशितम् ॥ ५५ ॥

## ग्रन्थस्य श्लोकसंख्यायाः महत्वस्य च निरूपणम्

इयं तु संहिता ब्राह्मी चतुर्वेदैस्तु संमिता ।
भवन्ति षट्सहस्राणि श्लोकानामत्र संख्यया ॥ ५६ ॥

नाम्ना पुराणसारोऽयं कथितो द्विजसत्तमाः ।
धर्मनैपुणकामानां ज्ञाननैपुणकामिनाम् ॥ ५७ ॥

---

[1] स्तत्पुरुपनिरूपणम् (ग) [2] फलं पुनः (ग) [3] भ्याशात् (ग)
[4] कर्तृत्वमिह (क) [5] पि (क)

इदं पुराणं मुक्त्वैकं नास्त्यन्यत्साधनं परम् ।
इदं पापहरं पुंसामिदमायुष्करं शुभम् ॥ ५८ ॥
धर्मोपबृंहणं चेदं [1]यशस्तुष्ट्यर्थकारकम् ।
पठतां शृण्वतां भक्त्या मनोरथफलप्रदम् ॥ ५९ ॥
एकत्र च पुराणानि सेतिहासानि कृत्स्नशः ।
एकत्र चेदं परममेतदेवातिरिच्यते ॥ ६० ॥
योऽर्थं विचारयेत्सम्यक् सम्प्राप्नोति परं पदम् ।
मुमुक्षूणामिदं शास्त्रमध्येतव्यं[2] विशेषतः ॥ ६२ ॥
श्रोतव्यं चाथ मन्तव्यं वेदार्थपरिबृंहणम् ।
पादं पादार्धमेकं वा श्लोकं श्लोकार्धमेव वा ॥ ६३ ॥
अथवा सर्वमेवेदं देवब्राह्मणसन्निधौ ।
श्रुत्वा यथावद्विप्रेन्द्रान् श्रावये[3]च्छुद्धमानसान् ॥ ६४ ॥
सर्वपापविनिर्मुक्तो ब्रह्मसालोक्यमाप्नुयात् ।

## पुराणश्रवणाधिकारिनिरूपणम्

नैतत्प्रकाशनीयं हि दाम्भिकाय शठाय च ॥ ६५ ॥
नास्तिकायान्यमनसे कुतर्कोपहताय च ।
योऽश्रद्धधाने पुरुषे दद्याद्वा धार्मिकीं कथाम् ॥ ६६ ॥
स प्रेत्य निरयं गत्वा शुनीयोनिं व्रजत्यधः ।

## पुराणपठनादौ कर्तव्यनिरूपणम्

नमस्कृत्वा हरिं विष्णुं जगद्योनिं सनातनम् ॥ ६७ ॥

---

[1] अध्येतव्यं भवतीति ज्ञेयम् ।

---

[1] यशः पुष्ट्यर्थं (ग) [2] द्भक्तिसंयुतान् (ग)

अध्येतव्यमिदं शास्त्रं कृष्णद्वैपायनं तथा ।
इत्येतत्सर्वमाख्यानं ब्रवीमि किमहं द्विजाः ॥ ६८ ॥

इति तस्य वचः श्रुत्वा शौनकाद्याः महर्षयः ।
तुष्टुवुर्हृष्टमनसः सूतं पौराणिकोत्तमम् ॥ ६९ ॥

कृताञ्जलिपुटा भूत्वा संयताः परया मुदा ।

ऋषिकृतं सूतस्तोत्रम्

नमस्ते भगवन् शम्भुप्रसादा[1]दाप्तवेदन ।
नमस्ते वेदवेदाङ्गपद्म[2]षण्डदिवाकर ॥ ७० ॥

अस्माकं भववृक्षस्य कुठाराय नमो नमः ।
नमो विज्ञातदोषाय नमो ज्ञातगुणाय ते ॥ ७१ ॥

मातृभूताय मर्त्यानां व्यासशिष्याय ते नमः ।
धर्मिष्ठाय नमस्तुभ्यं ब्रह्मिष्ठाय नमो नमः ।
समाय सर्वभूतानां सारभूताय ते नमः ॥ ७२ ॥

साक्षात्सत्यपराणां तु सत्यभूताय ते नमः ।
नमो नमो नमस्तुभ्यं पुनर्भूयो नमो नमः ॥ ७३ ॥

पुराकृतेन पुण्येन ईश्वरानुग्रहाद्वयम् ।
त्वत्तः सूत श्रुतेरर्थं श्रुतवन्तो यथातथम् ॥ ७४ ॥

कृतार्थाश्च प्रसन्नाश्च सर्वे विगतसंशयाः ।
त्वया सम्पादितं सर्वं प्रष्टव्यं नास्त्यतः परम् ॥ ७५ ॥

---

[2] षण्डस्समूहः ।

---

[1] वरूमादन (क) [3] तं मुनिभिर्वै (ग)

प्रीतिश्च विपुला यस्मादस्माकं रोमहर्षण ।
सर्वज्ञस्ते विरूपाक्षः प्रसीदतु कृपानिधिः ॥ ७६ ॥

इत्युक्त्वा [3]ते कराभ्यां च पस्पर्शुस्सूतमादरात् ।
पुनश्च सूतस्सर्वज्ञस्तान्मुनीनवलोक्य च ।
प्राह गम्भीरया वाचा भवतां शिवमस्त्विति ॥ ७७ ॥

वेदपद्मनिकरस्य भास्करं
देवदेवसदृशं घृणानिधिम् ।
व्यासमिष्टफलदं गुरुं [नतः]
शोकमोहविषरोगभेषजम् ॥ ७८ ॥

ये वेदवेदान्तजना महाजना
शिवाभिमानाय निरस्तकिल्बिषाः ।
नमामि वाचा शिरसा धिया[1] [च तान्]
भवा[3][ब्धि] रोगस्य निवारकानहम् ॥ ७९ ॥

परस्परस्योपकृतं [4]च सद्भिः
मया च पौराणिककर्मयोगात् ।
अतो गमिष्येऽहमवासकामः
समस्तमेवास्तु शिवं सदा वः ॥ ८० ॥

सुते कृताशिषि गते मुनयस्सुवृत्ताः
यागे च पर्यवसिते महति प्रयागे ।
काले कलौ च विषये करुणायमाने
वाराणसीपरिसरे वसतिं वितेनुः ॥ ८१ ॥

---

[1] नमः (क) [2] याचताम् (क) [3] हि (क) [4] स (क)

शिवमस्तु सर्वजगतः
परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु [1]नाशं
सर्वत्र [2]जनस्सुखी भवतु ॥ ८२ ॥

इति श्रीमत्पुराणसारे[3] अनुक्रमणिकाध्यायो नाम
चतुरशीतितमोऽध्यायः ।[4]

---

[1] शान्तिम् (क) [2] सुखी भवतु लोकः (ग) [3] पुराणादिधर्मावतरणं (ग)

[4] इति श्रीराजाधिराजराजपरमेश्वरस्य पूर्वपश्चिमसमुद्राधिपतेर्भावातिलङ्घि-
राजन्यभुजङ्गस्य श्रीमतो हरिहरमहाराजस्य वसुमतीसाम्राज्यस्य
महामन्त्रिणः मायणनन्दनस्य माधवाचार्यस्य
सरस्वतीभाण्डाराधिकृते सुवनिना
पुराणसारकोशः समाप्तः । —ग



# श्लोकानुक्रमणिका



## अ



[1] पु. सं. पुट संख्या [2] श्लो. सं श्लोकसंख्या

## आ

इ

## ध

य

## र

ष

---